वार्तिकम् अलैवानर्थकेनेति । अत एव संघातेनार्थवतैव । तेन स्त्रिया इतीयङ् इहैव भवति स्त्रियौ परमस्त्रियौ, नेह शस्त्र्यौ शस्त्र्यः । तथा इन्हन्पूषार्यम्णांशौ, सौचेत्यत्र हन् इत्यत्र संघातग्रहणे प्लीहन्ग्रहणं न तेन प्लीहानावित्यादौ सौ चेति नियमाप्रवृत्तेः दीर्घः सिद्ध्यति । उदस्थास्तम्भोरित्यत्र वापदान्तस्येत्यतः पदग्रहणानुवृत्तिपक्षेप्युदेव विशेष्य । अननुवृत्तौ तु न का चित् क्षतिः । उभयथाप्यनर्थकस्याग्रहणान्नेह गर्मुत्स्थास्यति गर्मुत्सुवर्णतृणयोः । ननु शस्त्र्यौ प्लीहानावित्यत्र प्राप्तिरेव नास्ति पदाङ्गाधिकारे तस्य तदुत्तरपदस्यचेति वचनान्न हीदन्तमपि तदुत्तरमिति चेत् । सत्यम् । पदाङ्गाधिकारइति वचनस त्वे तथैव किन्त्वेतद्दूपितं भाष्ये सौत्रेण तदन्तविधिनैव गतार्थत्वात् । अत एव परमश्चासावतिमहांश्चेति विग्रहे परमातिमहानिति सिद्ध्यति वचनाश्रयणे तु नैतन्सिद्ध्येत् । अतिमहच्छब्दस्य महदुत्तरपदत्वेप्यनङ्गत्वात् । परमविशिष्टस्याङ्गत्वेपि महदुत्तरपदत्वाभावात् । सौत्रेण तदन्तविधिना तु सान्तमहत इति दीर्घमुगिल्लक्षणो नुमागमश्चेह सिद्ध्यति । न चेह ग्रहणवतेति निषेधः शङ्क्य । समासमत्ययविधावित्यनेन सह समानविषयः स इत्युक्तत्वात् । एतेन वीतजन्मजरसः परं शुचि ब्रह्मणः पदमुपैतु मिच्छतामिति भारविप्रयोगो व्याख्यातः । अलैवेत्यस्यापवादः पठ्यते भाष्ये, अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्तीति । अन्, राज्ञेत्यर्थवता साम्नेत्यनर्थकेन । इन्, दण्डीत्यर्थवता वाग्मीत्यनर्थकेन। अस्, सुपया इत्यर्थवता सुस्रोतेत्यर्थकेन। मन्, सुशर्मेत्यर्थवता सुप्रथिमेत्यनर्थकेन। तत्रेणःषीध्वमिति सूत्रेङ्ग्रहणेनार्थवद्ग्रहणपरिभाषाया अनित्यत्वज्ञापनात्सिद्धम् । परिवेविषीध्वमित्यत्र हि षीध्वंशब्दस्या-

नर्थकत्वादेवाग्रहणे सिद्धे किं तन्निवृत्त्यर्थेनाग्रग्रहणेनेति दिक्। सूत्रस्योदाहरणान्तराण्याह वार्त्तिककारः। प्रयोजनं सर्वनामाव्ययसंज्ञायाम्। अन्वर्थसंज्ञयाक्षिप्तः संज्ञी सर्वादिभिर्विशेष्यतइति फलितोर्थः। उपपदविधौ भयाढ्यादिग्रहणम्। भयञ्च आढ्यादयश्चेति द्वन्द्वः। तेन खच्प्रकरणे मेघर्त्तिभयेषु कृञ इति सूत्रे वाक्यं भित्वा उपपदेन मेघर्त्ती विशेष्येते भयेन तूपपदम्। यदि तु भयाढ्यशब्दयोर्द्वन्द्वं कृत्वा आदिशब्देन बहुव्रीहिः क्रियेत तदा क्षेमप्रियमद्रैरप्युपपदं विशेष्येत सिद्धान्ते तु क्षेमादय उपपदेन विशेष्यन्ते भयङ्करः अभयङ्करः आढ्यंकरणं स्वाढ्यंकरणम्। ङीप्प्रतिषेधे स्वस्रादिग्रहणम्। स्वसा परमस्वसा। अपरिमाणबिस्तादिग्रहणं च। प्रतिषेधे प्रयोजनमित्यनुवर्त्तते। द्विगुना सन्निधापितमुत्तरपदं बिस्तादिभिर्विशेष्यतइति भावः। द्विबिस्ता द्विपरमबिस्ता। द्व्याचिता द्विपरमाचिता। दितिः। दैत्यः आदित्यः। दित्यदित्यादित्येति सूत्रे ऽदितिग्रहणं न कर्त्तव्यं परमदित्यादिभ्यस्त्वनभिधानान्न भवतीति भावः। रोण्या अण्। रौणीति सूत्रेण चातुरर्थिकः रौणः आजकरोणः सैंहकरोणः। तस्य च। तस्य चेति वक्तव्यम्। उक्तानां वक्ष्यमाणानां च सर्वेषामयं शेषः। तथा चेह सूत्रे स्वंरूपमित्यनुवर्त्ततइति फलितोर्थः। ननु व्यपदेशिवद्भावेन रौण इति सिद्धमिति चेन्न। व्यपदेशिवद्भावो ऽप्रातिपदिकेनेति निषेधादिति भाष्यकाराः। यद्यपि रोणीशब्दो न प्रातिपदिकं तथाप्यप्रातिपदिकेनेत्यत्र वाक्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात्स्त्रीप्रत्ययान्तैरपि व्यपदेशिवद्भावो नास्तीति भावः। यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणमिति हि ङ्याप्सू-

त्रे वक्ष्यते । ननु यदि तस्य चेत्युच्यते स्वरूपग्रहणं चानुवर्त्यते तर्हि व्यपदेशिवद्भावो ऽप्रातिपदिकेनेत्यस्य निर्विषयत्वं स्यादिति चेन्न । सूत्रान्ताट्ठक् दशान्ताड्ड इत्यादौ सावकाशत्वात् । न च तत्रान्तग्रहणसामर्थ्यादेव व्यपदेशिद्भावो न भविष्यतीति वाच्यम् । समासप्रत्ययविधौ प्रतिषेध इत्येतद्वाधेनान्तग्रहणस्य चरितार्थत्वाज्ज्ञापकसिद्धेयं परिभाषा । पूर्वात्सपूर्वादिनिरिति वक्तव्ये पूर्वादिनिः सपूर्वाच्चेति योगविभागश्चेह ज्ञापकः । वस्तुतस्तु भयाढ्यादाविव सूत्रान्ताट्ठक् दशान्ताड्ड इत्यादावपि विशेषणविशेष्यभावव्यत्यासमात्रेण सिद्धे अन्तग्रहणसामर्थ्यमपि सूपपादमिति परिभाषाश्रयणं व्यर्थम् । न चैवं गोकुलमित्यत्र ह्रस्वः स्यादिति वाच्यम् । उपसर्जनं यो गोशब्दस्तदन्तस्य प्रातिपदिकस्य ह्रस्वविधानात् । सन्निधानाच्च प्रातिपदिकं प्रत्येव विशेषणताश्रयणात् । गोशब्दे च तदभावात् । अत एव राजकुमारीपुत्र इत्यत्र न ह्रस्वः । उपसर्जनं यत्स्त्रीप्रत्ययान्तं तदन्तस्य प्रातिपदिकस्येत्यत्रापि सन्निधानाश्रयणात् । एषैव तत्रापि गतिः । न ह्युक्तपरिभाषेह सम्भवति व्यपदेशिवद्भावो ऽप्रातिपदिकेन ग्रहणवतेति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति दिवउत्सूत्रे कैयटहरदत्ताभ्यामुक्तत्वात् । एवं च पूर्वादिनिरिति योगविभागो व्यर्थः । किम्बहुना पूर्वादिनिरित्यत्र तदन्तग्रहणसम्भवात्सपूर्वाच्चेति सूत्रं व्यर्थं व्यपदेशिवद्भावेन सिद्धे तस्येति प्रकृतवार्त्तिकमपि न कर्त्तव्यम् । स्वंरूपमिति तु प्रागेव प्रत्याख्यातमिति दिक् । रथसीताहलेभ्यो यद्विधौ । तद्वहतीति यत् । रथ्यः परमरथ्यः । सीत्यं परमसीत्यं क्षेत्रम् । सीतया सम्मितं संमतमित्यर्थः । नौवयोधर्मेति यत् । हलस्य कर्षो हल्यः

प्राप्नोति । अनार्हीयत्वात् । यद्यपि तमधीष्टइत्यत्र कालादिति वर्तते । तथापि काले संख्येये वर्तमानात् षष्टिशब्दादुत्पत्तिर्न विरुध्यते रमणीयादिभ्यस्त्वनभिधानान्न भवति । परिमाणार्थे तु लुक् दुर्वारः । तथाहि । प्राग्वतेष्ठञिति ठञ् तदर्हतीत्यतः प्राक् तेनक्रीतमित्येवमाद्या येर्थास्तेषु भवति । अर्हत्यर्थेच । ततः परेपि येर्था वर्त्तयतीत्यादय आकालिकडाद्यन्तवचनइत्येवमन्तास्तेष्वपि भवति । एवञ्च ठञ आर्हीयानार्हीयार्थसाधारणत्वेपि परिमाणस्य तदर्हतीत्यत. प्राङ् निर्देशात्तत्रोत्पन्नष्ठञ् आर्हीय एव । न च तदस्येति पुनरुपादानमात्रेणार्हीयत्वमपगच्छति । न हि काको वाश्यतइत्यार्हीयत्वं निवर्त्तते । किञ्च यद्यार्हीयत्वं निवर्त्तेत । तर्हि जीवितपरिमाणादन्यत्रापि लुङ् न स्यात् । द्वौ निष्कौ परिमाणमस्य द्विनिष्कः । न च द्वित्रिपूर्वान्निष्कादिति वचनसामर्थ्यात्स्यादिति वाच्यम् । परिमाणातिरिक्तेष्वार्हीयार्थेषु वचनस्य सावकाशत्वात् । तस्माद्यस्य षष्टिर्जीवितपरिमाणं षष्टिमसौ भूतो भवतीति तमधीष्टोभृत इत्येव द्विषाष्टिकः साधनीयः । तदस्येति तु त्यक्तव्यम् । सोस्येत्यनुवृत्त्यैवेष्टसिद्धेरिति स्थितम् । धर्माञ्चञ्च । धर्मं चरति धार्मिकः । अधर्मं चरति

। अधर्माच्चेत्येतन्न वक्तव्यम्।पदाङ्गाधिकारे तस्य च

च, प्रयोजनम् । इष्टकेषीकामालानाञ्चिततूलभा-

इष्टकचितम् । पक्वेष्टकाचितम् । इषीकतूलेन । मुञ्जेषीकतूले-

। उत्पलमालभारी । इहोत्तरपदाधिकारे प्रयो-

पदशब्द उत्तरपदपर इति कैयटादयः ।

परममहतो द्रव्यस्य परिमा-

। सामानाधिकरण्ये ह्यान्महत इत्या-

ऋतोर्वृद्धिमद्विधावयवानाम् । ऋतुवाचिनः शब्दाद्यो वृद्धिमान् वृद्धिनिमित्तः प्रत्ययस्तद्विधाने अवयवानां पूर्वपदस्येति शेषः । तदन्तविधिरिह वाचनिक एव । शरदः पूर्वो भागः पूर्वशरत् । पूर्वापराधरोत्तरमित्येकदेशिसमासः । तत्र भवं पूर्वशारद । सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् । अवयवादृतोरित्युत्तरपदवृद्धिः । वृद्धिमदिति किम् । प्रावृषेण्य इत्यत्र तदन्तविधिर्मा भूत् । तेन तत्र ऋत्वणेव भवति । पूर्वप्रावृषमिति । अवयवानां किम् । पूर्वस्यां शरदि भवं पौर्वशारदिकमित्यत्राण् न भवति किं तु कालाट्ठञेव भवति । तत्र हि यथाकथञ्चित्कालवाचिनो गृह्यन्ते न तु रूढ्यैवेत्याग्रहः । उत्तरत्र सन्धिवेलाद्यृतुनक्षत्रेभ्य इति विशेषणात् । अत एव सायम्प्रातिकः । पौनःपुनिक इत्यादि सिद्ध्यति । ठञ्विधौ संख्यायाः । द्वे षष्टी परिमाणमस्येति विग्रहे तद्धितार्थेत्यनेन समासे कृते आर्हादिति ठक् न भवति । संख्यायास्तदन्तविधौ सति संख्यान्तादपि ठक्प्रतिषेधात् । तेन प्राग्वतेरिति ठञेव भवति । अध्यर्द्धपूर्वेति लुक्तु न भवति । सोऽस्यांशवस्नभृतय इत्यतः सोऽस्येत्यनुवर्त्तमाने तदस्यपरिमाणमित्यत्र पुनः प्रत्ययार्थस्य समर्थविभक्तेश्च निर्देशात् । पुनर्निर्देशेन हि प्रकृताल्लुकस्त्वद्वाद्विलक्षणमिदमिति सूच्यते । यद्वा । अनुवर्तमानेन सोऽस्येत्यनेन सहितं परिमाणं संख्याया इत्येतत्तावत्प्रत्ययं विधत्ते । ततस्तस्य लुकि कृते पुनस्तदस्यपरिमाणमिति वचनसामर्थ्यात्स्वार्थे तज्जातीयः प्रत्ययः । तस्य विधानसामर्थ्यात् द्विगुनिमित्तत्वाभावाद्वा लुग् न भविष्यति । एतच्च वृत्तिकारमतमाश्रित्योक्तम् । भाष्यकारमते तु तमधीष्ट इति सूत्रेण भूतार्थे प्रत्ययं कृत्वा द्विषाष्टिक इत्यादि साध्यम् । न ह्नाऽध्यर्द्धेति लुक्

प्राप्नोति । अनार्हीयत्वात् । यद्यपि तमधीष्टइत्यत्र काला-दिति वर्त्तते । तथापि काले संख्येये वर्तमानात् षष्टिश-ब्दादुत्पत्तिर्न विरुध्यते रमणीयादिभ्यस्त्वनभिधानान्न भवति । परिमाणार्थे तु लुक् दुर्वारः । तथाहि । प्राग्वतेष्ठञिति ठञ् तदर्हतीत्यतः प्राक् तेनक्रीतमित्येवमाद्या येर्थास्तेषु भवति । अर्ह-त्यर्थेच । ततः परेपि येऽर्था वर्त्तयतीत्यादय आकालिकडाय-न्तवचनइत्येवमन्तास्तेष्वपि भवति । एवञ्च ठञ आर्हीया-नार्हीयार्थसाधारणत्वेपि परिमाणस्य तदर्हतीत्यतः प्राक् नि-र्देशात्तत्रोत्पन्नष्ठञ् आर्हीय एव । न च तदस्येति पुनरुपादा-नमात्रेणार्हीयत्वमपगच्छति । न हि काको वाश्यतइत्यार्हीय-त्वं निवर्त्तते । किञ्च यद्यार्हीयत्वं निवर्त्तेत । तर्हि जीवितप-रिमाणादन्यत्रापि लुक् न स्यात् । द्वौ निष्कौ परिमाणमस्य द्विनिष्कं । न च द्वित्रिपूर्वान्निष्कादिति वचनसामर्थ्यात्स्या-दिति वाच्यम् । परिमाणातिरिक्तेष्वार्हीयार्थेषु वचनस्य सा-वकाशत्वात् । तस्माद्यस्य षष्टिर्जीवितपरिमाणं षष्टिमसौ भूतो भवतीति तमधीष्टोभृत इत्येव द्विषाष्टिकः साधनीयः । तदस्येति तु त्यक्तव्यम् । सोस्येत्यनुवृत्त्यैवेष्टसिद्धेरिति स्थि-तम् । धर्माञ्चञः । धर्मं चरति धार्मिकः । अधर्मं चरति आधर्मिकः । अधर्माच्चेत्येतन्न वक्तव्यम् । पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च, प्रयोजनम् । इष्टकेषीकामालानाञ्चिततूलभा-रिषु । इष्टकचितम् । पक्वेष्टकचितम् । इषीकतूलेन । मुञ्जेषीकतूले-न । मालभारी । उत्पलमालभारी । इहोत्तरपदाधिकारे प्रयो-जनस्योदाहरणात्पदाङ्गेति पदशब्द उत्तरपदपर इति कैयटादयः । अत एव परममहत्परिमाणमित्यत्र परममहतो द्रव्यस्य परिमा-णमिति षष्ठीतत्पुरुषः । सामानाधिकरण्ये ह्यान्महत इत्या-

त्वे रुमादिस्युदयनाचार्यो व्याचख्युः । यत्तु तत्र वर्द्धमानेनोक्तम् । पदाङ्गाधिकारइत्यत्र केवलपदाधिकारो गृह्यते न तूत्तरपदाधिकारः । अन्यथेष्टकेषीकामालानामित्यत्र पुनस्तदन्तविध्युपसंख्यानं व्यर्थं स्यात् । तथा च परममहत्परिमाणमित्यत्र कर्मधारयपक्षेप्यात्वमसक्तिर्नास्त्येवेति,तदेतदनवहिताभिधानम् । इष्टकेषीकेत्यस्य प्रयोजनत्वेनोदाहरणात् । उपसंख्यानान्तरस्य गगनकुसुमायमानत्वात् । तस्मादाचार्योक्तमेव सम्यक् । एतेन सततनैशतमोवृतमन्यतइति भारविप्रयोगे ओजःसहोम्भस्तमसस्तृतीयाया इत्यलुक् कुतो नेत्याशंक्य वर्धमानोक्तरीत्योत्तरपदाधिकारे तदुत्तरपदग्रहणं नास्तीति दुर्घटवृत्तिकारोक्तिरप्यपास्ता । यदप्योजःसह इति सूत्रे हरदत्तेनोक्तम् । ओजःप्रभृतीनामुत्तरपदाक्षिप्तं पूर्वपदं माति विशेष्यत्वादिति, तदपि वार्तिकविरोधादुपेक्ष्यम् । विशेष्यविशेषणभावानिर्णयायैवेहत्यवार्त्तिकानां प्रवृत्तिरिति कैयटवदेव स्वयमपि व्याख्यातत्वात् । भारविप्रयोगस्त्वित्थं समाधेयः । वृतं वृत्तिः नैशतमसो वृतमिति षष्ठीतत्पुरुषः । नपुंसके भावे क्तस्य योगे शेषत्वविवक्षायां षष्ठी । ततः सततं नैशतमसो वृतं यस्मिन्निति बहुव्रीहिः । यद्वा । वृतु वर्तने, घञर्थे कविधानामिति भावे कः । सततं नैशतमसो वृतं वृत्तिर्यस्मिन्निति प्राग्वत् । अङ्गाधिकारे प्रयोजनान्याह । प्रयोजनं महदप्स्वसृनप्तॄणां दीर्घविधौ । महान् । परममहान् । आपस्तिष्ठन्ति । स्वापः । नपूजनादिति समासान्तनिषेध. । नन्वेवमपि द्व्यन्तरुपसर्गेभ्योपईदितीकार· प्राप्नोति । न ह्ययं समासान्तः येन ऋक्पूरित्यप्रत्ययइव निषिध्येत इति चेत्सत्यम् । द्व्यन्तरुपसर्गेभ्य इत्यत्राप इति कृतसमासान्तस्यानुकरणं प्रथमान्तम् । अन्हो ऽदन्तादितिवद्व्यत्ययेन षष्ठ्यर्थे प्र-

यथा । इहत्वं स्वाप इति भाष्यं चास्मिन् व्याख्याने प्रमाणमित्यवधेयम् । स्वसारौ । परमस्वसारौ । नप्तारौ । परमनप्तारौ । पद्युष्मदस्मदस्थ्याद्यनडुहो नुम् । पद्भावः प्रयोजनम् । द्विपदः पश्य । केवलस्योदाहरणं तु पादयतेरप्रत्ययः,पात् । पदः । पदेत्यादि । इह क्वौ लुप्तस्याणिलोपो न स्थानिवत् । उत्तरपदाधिकारे तु पादशब्दो विशेष्य एव । तेन पादस्यपदाज्यातिगोपहतेष्विति पदभावः । पादेनोपहतं पदोपहतमित्यत्रैव भवति । इह तु न दिग्धपादेनोपहतं दिग्धपादोपहतमिति । उत्तरसूत्रेप्येवम् । तेन पद्यत्यतदर्थे, हिमकाषिहतिषुचेति पद्भाव इहैव भवति । पादौ कपतीति पत्काषी । इह तु न, परमपादकाषी । यस्तु परमपत्काषीति प्रयोगः । स परमश्चासौ पत्काषी चेति विग्रहेण समाधेय इति भाष्यकैयटयोः स्थितम् । यूयं वयम्, अतियूयम् अतिवयम् । अस्थ्ना परमास्थ्ना । अनड्वान् परमानड्वान् । सुपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणम् । द्यौः सुद्यौः । पंथाः सुपन्थाः । नपूजनादिति समासान्ताभावः । मन्थाः परममन्थाः । पुमान् परमपुमान् । गौः सुगौः । सखा सुसखा । सखायौ सुसखायौ । चत्वारः परमचत्वारः । अनड्वाहः परमानड्वाहः । त्रयाणां परमत्रयाणाम् । भाष्ये तु परमपन्थाः परमगौरित्युदाहृतम् । तत्र समासान्तापत्तिः । नपूजनादिति निषेधस्तु नास्ति स्वतिभ्यामेवेति वक्ष्यमाणत्वात् । अत एव क्वाचित्कोपमपपाठ इति कैयटः । समासान्तविधेरनित्यतया वा समाधेयम् । यद्वा परमुदाहरणान्तरमित्यर्थः । अपन्था, अगौरित्यत्र नञ्तत्पुरुषात्पयोर्विभाषेति साधुत्वम् । यत्तु परमसखायाविति पठितं भाष्ये । तत्र बहुव्रीहिर्बोध्यः । गौणत्वे ऽपि ह्यनङ्णित्त्वे इष्येते एवास्थ्याद्यनङ्वत् । एतच्च मिद्चोन्त्यादित्यत्र द्वितीया-

श्रितेत्यत्र च स्पष्टम्। अरुणुस्तोवरुण इन्द्रसखा, अग्नेयाहिमरुत्सखेत्यादि प्रयोगाश्चैवमेव सङ्गच्छन्ते। एतेन घिसंज्ञासूत्रे शोभनः सखा अस्य सुसखिरित्युदाहरन् हरदत्तो न्यासकारश्चापास्तः। त्रेस्त्रय इति तु, त्रिशब्दार्थसमवेतसंख्याद्यभिधायिन्यामिपरे इति व्याख्यानाद्गौणे न भवति, प्रियत्रीणाम् अतित्रीणाम्। प्राधान्ये तु स्यादेव, परमत्रयाणामित्याहुः। अत्र व्याख्याने प्रमाणं मृग्यम्। इह पदाङ्गाधिकारइति न कर्त्तव्यम्। तदन्तग्रहणेनैव सकलेष्टसिद्धेरित्युक्तं न विस्मर्त्तव्यम्। प्रत्ययग्रहणे यस्मात्सविहितस्तदादेस्तदन्तस्य ग्रहणम्। इह प्रत्ययाक्षिप्तस्य धातुप्रातिपदिकाद्यवयवकसमुदायस्य प्रत्ययेन विशेषणात्तदन्तविधिर्लभ्यते। अङ्गसंज्ञासूत्रे यस्मात्प्रत्ययविधिस्तदादिप्रत्यये इति योगं विभज्य परिभाषात्वेन व्याख्यानादंशान्तरलाभः। इदं च संज्ञाविधौ न प्रवर्त्तते, सुप्तिङन्तंपदमिति ज्ञापकात्। उत्तरपदाधिकारेपि न प्रवर्त्तते, हृदयस्यहृल्लेखयदण्लासेष्विति सूत्रे लेखग्रहणाज्ज्ञापकादिति वक्ष्यते। अस्यापवादमाह। प्रत्ययग्रहणं चापञ्चम्या इति। यत्र पंचम्यन्तं प्रत्ययस्य विशेषणं तत्र तदन्तग्रहणं नेत्यर्थः। यथा रदाभ्यांनिष्ठात इत्यत्र। तेन दृषत्तीर्णेत्यत्र तॄधातोस्तकारस्य निष्ठान्तप्रत्ययावयवीभूतस्य नत्वं न भवति। इह प्रघट्टके संज्ञाविधावुत्तरपदाधिकारे रदाभ्यां स्यतासिलुटोरित्यादौ च प्रत्ययो विशेष्यतयाश्रीयते, इतरत्र तु विशेषणतयेति फलितोर्थः। तदिदं सकलं सूत्रेणैव सिद्ध्यतीति स्थितम्। सौत्रस्य तदन्तविधेर्बाधनिकमपवादमाह वार्तिककारः। यस्मिन् विधिस्तदादावल्ग्रहणे। अविद्यमानधातुरिवतीयङुवङ् च यथेह भवति। श्रियौ भ्रुवाविति एवमिहापि सिद्ध्यति श्रियः भ्रुव इति। तदन्तविध्यपवादस्तदादिविधि-

तो विशेषणेनैव ॥

१-१-७३

वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥ यस्य समुदायस्यावयवा-नामचां मध्ये प्राथमिकोऽच् वृद्धिसंज्ञकः स वृद्धसंज्ञकः स्यात् । आम्रगुप्तीयः । वृद्धाच्छः । अचामिति जातौ बहुवचनं तेन द्वयो-रपि भवति । शालीयः । एकस्याः च भवति व्यपदेशिवद्भावात् । ङा ब्राह्मणी तस्या अयं ङीयः । वा नामधेयस्य । पौरुषेयं नाम तस्य वृद्धसंज्ञा वा स्यादित्यर्थः । उभयत्रविभाषेयम् । देवद-त्तादीनामप्राप्ते वामनादीनां च प्राप्ते आरम्भात् । दैवदत्तीयाः । दैवदत्ताः । विधाय मूर्तिं कपटेन वामनीमिति श्रीहर्षः । गोत्रो-त्तरपदस्य च । नित्यं वृद्धसंज्ञा वक्तव्येति शेषः । कम्बलचा-रायणीयाः । ओदनपाणिनीयाः । घृतरौढीयाः । कम्बलप्रियस्य चारायणस्य शिष्या इत्यादिरर्थः । पणनं पणः । घञर्थे कविधान-मितिकः । सोस्यास्तीति पणी । पणिनो गोत्रापत्यं पाणिनः । अण् । गाथिविदथिकेशिगणिपणिनश्चेति प्रकृतिभावः । ततो यूनीञ् । पाणिनिः । स्यादेतत् । ण्यक्षत्रियार्षञितो इति सूत्रेणेह इञो लुक् प्राप्नोति । आर्षाद्यून्युत्पन्नत्वादिति चेन्न । आर्षग्रहणेन ऋष्यन्धकेति सूत्रविहितस्य ऋष्यण एव ग्रहणात् । अस्य चौ-त्सर्गिकत्वात् । यद्वा । पणिन्शब्दो यौगिको न तु ऋषौ रूढः । लुग्विधौ तु रूढस्यैव ग्रहणम् । एतच्च शास्त्रान्तएकशेषानिर्दे-शाद्वा भगवतः पाणिनेः सिद्धमिति वार्तिकनिर्देशाद्दाक्षीपुत्रस्य पाणिनेरिति भाष्यकारव्यवहाराच्च निर्णीयते । नन्वेवमपि पाणिनेश्छात्राः पाणिनीया इति न सिध्यति । वृद्धाच्छं बाधित्वा इञश्चेत्यणः प्रसङ्गात् । न च छे विवक्षिते यूनिलुगितीञो लुकि सति नायमिञन्त इति वाच्यम् । प्रत्ययलक्षणेन इञन्त-त्वानपायात् । अत्राहुः । इञश्चेत्यत्र कण्वादिभ्योगोत्रइत्यतो

गोत्रग्रहणमनुवर्त्तते तच्च पूर्वसूत्रएव स्वर्यते । तेनापत्याधिकारादन्यत्वेन प्राप्तं लौकिकं गोत्रं विहाय गोत्राधिकारो गृह्यते स्वरितेनाधिकार इति वचनात् । कण्वादिश्च गर्गाद्यन्तर्गणः । ततो गर्गादिभ्यो यञिति विधीयमानो यञ् पारिभाषिक एव गोत्रे भवति तत्रापत्याधिकारसत्त्वात् । तेन इञश्चेत्यत्रापि पारिभाषिके गोत्रे य इञ् तदन्ताच्छेषेऽणित्यर्थः फलितः । यद्वा । लक्षण प्रतिपदोक्तपरिभाषया कण्वादिसूत्रे यञेव गृह्यते स च पारिभाषिके विहितत्वात्तस्यैव प्रत्यायकः । एवं चार्थाधिकारादिञश्चेत्यत्रापि तथा । पाणिनिरिति तु यूनि इञ् न तु गोत्रे । तेनाणो ऽप्राप्तेर्निर्बाधश्छप्रत्यय इति स्थितम् । रूढस्यापत्य रौढिः । अतइञ् । अनन्तरे गोत्रे वा । न चैवमिञश्चेत्यण् प्रसङ्गः । नद्व्यचः प्राच्यभरतेष्विति निषेधात् । स्यादेतत् । यदि गोत्रोत्तरपदस्य वृद्धसंज्ञा विधीयते । तर्हि पिङ्गलकाण्व्यस्य छात्राः पैङ्गलकाण्वा इत्यत्र वृद्धाच्छः स्यात् । इष्यते तु कण्वादिभ्योगोत्रइत्यण् । सत्यम् । अत एवापरितोषादुक्त वार्त्तिककृता गोत्रान्ताद्वासमस्तवदिति । शैषिकाधिकारे प्राग्दीव्यतोणित्यत्र वा इत्यमतिदेशः कर्त्तव्य इत्यर्थः । अपत्याधिकारादन्यत्वाच्च लौकिकगोत्रग्रहणादोदनपाणिनीया इत्यादि सिद्ध्यतीति भावः । किमविशेषेण, नेत्याह । जिन्हाकात्यहरितकात्यवर्ज्जम् । कतशब्दो गर्गादिः । जिन्हा चपलो, हरितवर्णश्च कात्यः । तस्य छात्रा इत्यर्थे ऽणेव भवति जैन्हाकाताः हारितकाताः ॥ १-१-७४

त्यदादीनि च ॥ एतानि वृद्धसंज्ञानि स्यु । त्यदीयम् । अदसीयम् । इदमीयम् । किमीयम् । त्वादायनि । मादायनिः । उदीचांवृद्धादिति फिञ् । प्रत्ययोत्तरपदयोश्चेति त्वमा-

चादेशौ ॥ १-१-७५

एङ्प्राचां देशे ॥ यस्यचामादिरिति मण्डूकप्लुत्या ऽनुवर्त्तते । एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्याद्देशाभिधाने । एणीपचनीयः । गोनर्दीयः । भोजकटीयः । एङिति किम् । आहिच्छत्रः । कान्यकुब्जः । विधेयसंज्ञासम्बन्धबलेन पृथग्विभक्त्युच्चारणाच्च प्राग्ग्रहणमाचार्यनिर्देशार्थम् । व्यवस्थितविभाषा चेयम् । तेन क्रोडदेवदत्तशब्दयोरप्राग्देशवाचिनोर्न वृद्धसंज्ञा तेन क्रौडो दैवदत्त इत्यणेव भवति । प्राग्देशवाचिनस्तु देवदत्तशब्दस्य भवत्येव वृद्धसंज्ञा । ततः काश्यादित्वाद्वृद्धलक्षणौ ठञ्ञिठौ भवतः । शैषिकेष्विति वक्तव्यम् । सैपुरिकी । सैपुरिका । स्कौनगरिकी । स्कौनगरिका । सेपुरं स्कोनगरं च वाहीकग्रामौ । तत्र वृद्धत्वाद्वाहीकग्रामेभ्यश्चेति ठञ्ञिठौ भवतः शैषिकेष्विति वचनादपत्ये वृद्धलक्षणः फिञ् न । विकारे च नित्यं वृद्धेति मयण् न । तदेवं कुणिमतं भाष्यमतं चानुसृत्य प्राग्ग्रहणमाचार्यनिर्देशार्थमिति व्याख्यातम् । जयादित्यस्तु प्राचि देशे ये सन्ति ते प्राचः पुरुषास्तेषां यो देश स्तदभिधानइति व्याचख्यौ । प्राचामित्यस्य च श्रूयमाणदेशविशेषणत्वे सम्भवति अध्याहर्त्तव्येन मनेनेत्यनेनान्वयो न कल्प्य इति तस्याशयः । अस्मिन् पक्षे वाहीकग्रामे दैवदत्त इत्यत्र क्रौड इत्यत्र वा ऽवृद्धत्वादेव ठञ्ञिठौ न भवत इति स्पष्टम् । किं तु सैपुरिकीत्यादिभाष्योदाहृतं वचनेनैव साधनीयं स्यादिति दिक् । देशइति किम् । गोमती नाम प्राग्देशनदी तत्र भवा मत्स्याः गौमताः । देशग्रहणेन नदी न गृह्यते नदीदेशो ऽग्रामा इति पृथगुपादानालिङ्गात् । प्रागादिदेशविभागस्त्वित्थम् । शरावती नाम न-

दी. उत्तरपूर्वाभिमुखी तस्या दक्षिणपूर्वस्यां दिशि व्यवस्थितो देशः प्राग्देशः । उत्तरापरस्यामुदग्देशः । उक्तञ्च । प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा । विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावतीति ॥ अमरसिंहोप्याह । लोकोयं भारतं वर्षं शरावत्यास्तु यो ऽवधेः । देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तर इति ॥ अमरव्याख्यातारस्तु ऐशानीतो नैर्ऋत्यां पश्चिमाब्धिगामिनी शरावतीति वदन्ति । उभयथापि प्रागुदक्स्वरूपे न विवादः । वाहीकदेशस्तु प्रागुदग्बहिर्भूतः । बहिषष्टिलोपो यञ्चेति व्युत्पादनादिति विवरणम् । तच्चिन्त्यम् । अव्ययात्त्यबिति सूत्रे काश्यादिभ्यष्ठञ्ञिठाविति वार्तिकं व्याचक्षणेन भगवता शाकलनाम्नो ग्रामस्योदीच्यवाहीकोभयरूपताभ्युपगमात् । तत्र हरदत्तादिभिस्तथैवानुवादाच्च । तस्माद्वाहीको देशविशेष इत्येव तत्त्वम् । तथा च कर्णपर्वणि । पञ्चानां सिन्धुषष्ठानामन्तरं ये समाश्रिताः । वाहीका नाम ते देशा न तत्र दिवसं वसेदिति ॥ एतेन धर्मबहिर्भूतत्वाद्वाहीका इत्युक्तं भवति । शतद्रुर्विपाशा इरावती वितस्ता चन्द्रभागेति पञ्च नद्यः, सिन्धुनदस्तु षष्ठः, तन्मध्यदेशो वाहीक इति तद्व्याख्यातारः । व्युत्पत्त्यन्तरं तु तत्रैव दर्शितम् । वहिकश्च वहीकश्च विपाशायां पिशाचकौ । तयोरपत्यं वाहीका नैषा सृष्टिः प्रजापतेरिति ॥ एतच्च विवेचनं वाहीकग्रामेभ्यश्चेत्यादावुपयोक्ष्यतइति सर्वं सुस्थम् ॥

इति श्रीविद्वन्मुकुटरत्नस्य लक्ष्मीधरसूरेः सूनुना भट्टोजिभट्टेन कृते शब्दकौस्तुभे प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् ॥ पादश्चायं प्रथमः समाप्तः ॥

गाङ्कुटादिभ्यो ञ्णिन्ङित्। १-२-१ गाङादेशात्कुटादेश्च परे ऽञ्णितः प्रत्यया ङिद्वत्स्युः ॥ अध्यगीष्ट। विभापाल्लुङ्लृङोरितीङो गाङ्। इह विशेषणार्थ एव हि गाङादेशे ङकार इति गाङ्लिटीति सूत्रे वक्ष्यते। कुटिता। कुटितुम्। अञ्णित्किम्। कोटः। घञ्। चुकोट। व्यचेः कुटादित्वमनसीति वक्तव्यम्। एतच्च पष्ठे लिट्यभ्यासस्येति सूत्रे भाष्ये पठितमपि सन्दर्भशुद्ध्यर्थं वृत्तिकृतेह पठितम्। तुदादिगणे कुटादिभ्यः प्राक् पठितस्य व्यचेः कुटादित्वं वार्तिकेनातिदिश्यते। विचितुम्। विचिता। अनसि किम्। उरुव्यचाः। अत्र हरदत्तः। अनसीति पर्युदासात्कृत्स्वेवेदम्। तेनेह न। विव्याचिथ। अव्याचीत्। अव्यचीत्। के चित्तु प्रसज्यप्रतिषेधमाश्रित्य थलादिष्वपि ङित्त्वमाहुः। तत्तु वाक्यभेदादसमर्थसमासाच्चायुक्तमिति माधवादयः। अथ कथं लिखितुं स्वयमेव लिखिष्यते इति। अत्र दुर्घटादयः, कण्वादिभ्य इत्यत्रेव पष्ठीतत्पुरुषबहुव्रीह्योः सहविवक्षया बहुव्रीहिशेषोयम् कुटादिभ्य इति। तेन लिखेरपि कुटस्यादितयात्र सङ्ग्रह इति। तन्न। शकुनिष्वालेखनइति सौत्रप्रयोगविरोधापत्तेः। रलोव्युपधा, दीश्वरेतोसुनित्यत्र वृत्तिग्रन्थविरोधाच्च। तत्र हि लिखित्वा लेखित्वा लिलिखिपति लिलेखिपति विलेखितुमिति प्रदर्शितम्। तस्मात्संज्ञापूर्वकतया समाधेयमिति हरदत्तः। कथं चुकुटिपनीति सनो ङित्त्वाद्यदन्तादिव तदन्तसद्भावात्। मैवम्। उपदेशग्रहणानुवृत्त्योपदेशे यो ङित्तदन्तादात्मनेपदमिति व्याख्यानात्॥

विज इट्॥ १-२-२ विजेः पर इडादिः प्रत्ययो ङित्स्यात्। उद्विजितुम्। इट् किम्॥ उद्वेजनम्। इह वृद्धिर्यस्येतिसूत्रान्मण्डूकप्लुत्या यस्यादिरित्यनुवर्तते तेनेडादिः प्रत्ययो लभ्यते न तु-

त्तमैकवचनमिद् । तथाहि सति विजिषीयेत्यत्रैव स्यात् । ओ-विजीभयचलनयोरिति विजिरिह गृह्यते न तु पृथग्भावार्थ इ-रित् तस्यानिट्कत्वादिति हरदत्तः । न च क्रादिनियमाल्लिटीट् संभवत्येवेति वाच्यम् । तत्र किन्त्वेन गतार्थत्वादिति तस्य भावः । वस्तुतस्तु नेदं युक्तम् । विवेजिथेति थलीट्सम्भवात् । तत्र च किन्त्वेन गतार्थत्वादिति तस्य भावः । वस्तुतस्तु नेदं युक्तम् । पिन्त्वेन कित्त्वाभावात् । तस्मात्कुटादिसाहचर्यात्तुदादेरेव ग्रहणं न तु जुहोत्यादेरिति बोध्यम् । नन्वेवं रुधादेरपि ङित्त्वाद्विजितेत्याद्युदाहरता माधवेन सह विरोध इति चेत्तर्हि व्याख्यानादेव जुहोत्यादेरग्रहणमित्यस्तु । हरदत्तोक्तिस्तु दुर्घ्रहैवेति दिक् ॥

विभाषोर्णोः ॥1-2-3॥ अस्मादिडादिमत्ययो ङिद्वा स्यात् । ऊर्णुविता ऊर्णविता । इडिति किम् । ऊर्णवनीयम् ॥

सार्वधातुकमपित् ॥1-2-4॥ अपित्सार्वधातुकं ङिद्वत्स्यात् । विनुतः । इह परत्र परशब्दप्रयोगात्कल्प्यमानो वतिः सप्तम्यन्तान्न कल्प्यो ङितीव ङिद्वदिति । तथासति प्रतियोगिनि सप्तमीप्रसङ्गात् ,सार्वधातुकेऽपितीति । पूर्वत्राप्येवमेव अक्ङितीति । इटीति च । सप्तमी स्यात् । श्रूयते तु सर्वत्र प्रथमा । तस्मात्तृतीयान्तादेव वतिर्ङिता तुल्यं ङिद्वदिति । अत एव पचेते इत्यादौ ङितो यत्कार्यमातोङित इतीय् सोपि भवति । नन्वेवं यादम्पतीसमनसा सुनुत इत्यत्र तास्यनुदात्तेन्ङिदिति लसार्वधातुकानुदात्तत्वं स्यादिति चेन्न । उपदेशग्रहणस्योभयसम्बन्धेन ङिदुपदेशाद्वदुपदेशाच्चेति भाष्यभाष्ये व्याख्यातत्वात् । अन्हिङोरिति पर्युदासेनोपदेशे ङकारवतो ग्रहणाद्वा । सप्तम्यन्ताद्वतिरित्येव परः भाष्यवृत्तिग्रन्थस्त्वापातत इत्येष निष्कर्षः । अत्र पिच्च ङिन्न ङिच्च

पिन्न भवतीति वाक्यार्थद्वयं क्ङितिचेति सूत्रे वर्णितमस्माभिः। भाष्ये तु हलश्नः शानजिति सूत्रे स्थितमेतत् ॥

असंयोगाल्लिट् कित् ॥ असंयोगात्परोपिल्लिट् कित् स्यात्। निन्यतुः बिभिदतुः। अपित्किम्। बिभेद। असंयोगात्किम्। सस्रंसे। ङित्त्वे प्रकृते कित्करणं यजादीनां कितीति सम्प्रसारणार्थम्। ईजतुः ईजुः। पूर्वत्रापि कित्त्वं कुतो न कृतमि चेत्, वक्तो वव्य इत्यत्र सम्प्रसारणापत्तेः। जागृतः जाग्रतीत्यत्र गुणापत्तेश्च। ङित्त्वे तु वच्यादीनां कितीत्युक्तेर्न सम्प्रसारणम्। अजाग्रोविचिण्णल्ङित्स्विति पर्युदासान्न गुणः। ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन। कित्त्वस्यावकाशः ईजतुः ईजुः। गुणस्यावकाशः चेतति वर्त्तते ववृधे इत्यत्र पूर्वविप्रतिषेधात्कित्त्वम् ॥

इन्धिभवतिभ्यां च ॥ आभ्यां लिट् कित्स्यात्। समीधे दस्युहन्तमम्, पुत्रईधे अथर्वणः। बभूव। बभूविथ। इन्धेः संयोगार्थं ग्रहणं भवतेस्तु पिदर्थम्। इन्धीत्युच्चारणार्थेनेकारेण निर्देशः। सुद्‌तिथोरिति वत्। नत्विक्श्तिपाविती॰का, नलोपापत्तेः। अत्र वार्तिकम्। इन्धेश्छन्दोविषयत्वाद्भुवोवुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यामिति। अयमर्थः, इन्धेर्भाषायामिजादेश्चेत्यामा भाव्यम्। छन्दसि तु अमन्त्रइति प्रतिषेधाद्यद्यप्याम्नास्ति तथापि छन्दस्युभयथेति लिटः सार्वधातुकत्वे ङित्त्वात्समीधे इति नलोपः। श्नमभावस्त्वार्धधातुकत्वात्। व्यत्ययाद्वाभुवोपि वुड् नित्यत्वादेव गुणवृद्धी बाधिष्यते। न च शब्दान्तरप्राप्त्या वुगनित्य इति वाच्यम्। कृताकृतप्रसङ्गित्वमात्रेणापि लक्ष्यानुरोधान्नित्यत्वस्याश्रयणात्। शब्दान्तरप्राप्त्या स्वरभिन्नस्य प्राप्त्या चानित्यतायाः सिद्धान्ते ब-

हुधा त्यक्तत्वात् । एवैव सूत्रकृतोपि गतिः बभूवेत्यत्र वृद्धेर्निग्लक्षणतया क्ङितिचेति निषेधासम्भवेन वुको नित्यताया एव शरणीकरणीयत्वात् । न च कित्वसामर्थ्यादनिग्लक्षणाया अपि वृद्धेर्निषेध । अह बभूवेत्यत्र णित्वाभावपक्षे तथा थलि चरितार्थत्वात् । अत एव यङ्लुकि णल्थलोर्बभूव बोभूविथेति नित्यत्वाद्वुकि सिद्धम् । न हि तत्र कित्त्वं प्राप्नोति श्तिपा निर्देशात् । तस्मादेतत्सूत्रं न कर्तव्यमिति भाष्ये स्थितम् । अत्र काशिका, श्रन्थिग्रन्थिदम्भिस्वञ्जीनां वक्तव्यमिति । यद्यप्येतदिह सूत्रे भाष्ये नास्ति तथापि मणीवादेर्नेति वत्प्रामाणिकम् । तथा चात एकहल्मध्यइत्येत्वाभ्यासलोपौ प्रति नलोपस्याभीयत्वेनासिद्धौ सत्यां दम्भेश्चेतिवार्तिकमारब्धम् । आभात्सूत्रस्य प्रत्याख्यानाच्छसोरल्लोप इति तपरकरणेनानित्यत्वाद्वा नेदं वार्तिकमावश्यकमिति तु षष्ठे वक्ष्यते । तथा सदेः परस्य लिटीति सूत्रे स्वञ्जेरुपसंख्यानमिति वार्तिकस्य भाष्यकृता परिषस्वजइत्युदाहरणं दत्तम् । प्रयुज्यते च । तस्मिन्दु परिषस्वजइति । एतच्च कित्त्वं निदर्थणपिदर्थ चेति सुधाकरः । अपिदर्थमेवेति न्यासकारात्त्रेयादयः । हरदत्तस्तु सन्दिदेह। वस्तुतस्तु न्यासाद्युक्तमेव ज्यायः इह वृत्तौ पाष्टभाष्ये चापित एवोदाहृतत्वात् । श्रन्थ ग्रन्थ सन्दर्भे श्रेथतुः श्रेथुः । ग्रेथतुः ग्रेथुः। देभतुः देभुः । सस्वजे । सस्वजाते । केचित्तु श्रन्थिग्रन्थिदम्भिस्वञ्जीनां वेति पठन्तः कित्वं विकल्पयन्तीति हरदत्तमाधवौ । तन्मते ददम्भतुः शश्रन्थतुरित्याद्यपि । सुधाकरमते तु णल्यपि श्रेथग्रेथदेभेति । स्यादेःतत् । सर्वमतेषु श्रेथतुर्ग्रन्थतुरित्यादि दुर्लभम्। सस्वजइतिवत्संयुक्तहल्मध्यस्थत्वादिति चेत् । सत्यम् । अत एव एत्वाभ्यासलोपावप्यत्र वक्तव्या·

त्विति हरदत्तः । अत्र मूलं मृग्यम् । तथा सुधाकरमते श्रथिथ, न्थसादिमते श्रन्थिथेति वदतो माधवस्याप्युक्तौ मूलं मृग्यम्। किन्त्वे विप्रतिपत्तावपि थलि चसेटीत्यस्याप्राप्तेरविशेषात् । तथा नलोपस्यासिद्धत्वादेत्वाभाप्तौ वचनमिदं माधवोक्तिरपि शिथिलमूला । अन्येतिप्रागभागे संयोगसत्त्वाद्ग्रन्थेरादेशादित्वाच्चैत्वाप्राप्तेरुद्धटनया नलोपसिद्धत्वासिद्धत्वविचारस्य काकदन्तपरीक्षाप्रायत्वादिति दिक् । कौमाराणां तु सर्वमिदं सूत्रारूढम् । तथा च शर्ववर्मणा सूत्रितम् । अनिदनुबन्धानामगुणेनुषङ्गलोपः । परोक्षायामिन्धिश्रन्थिग्रन्थिदम्भीनामिति । अस्यैकव्यञ्जनमध्येनादेशादेः परोक्षायाम् । थलि च सेटि । तृफलभजत्रपश्रन्थिग्रन्थिदम्भीनां चेति । अत्र निरनुषङ्गैः साहचर्याच्छ्रन्थिथेत्यादीति दुर्गसिंहः । एवं स्थिते दम्भेश्चेति वार्तिकभाष्ययोः सामान्यापेक्षज्ञापकतामाश्रित्य दम्भिप्रभृतीनामन्यत्रोक्त पाणिनीयेपीष्टमिति कथञ्चित्समर्थनीयम् ॥

मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥ गुधकुषक्लिशिभ्यः क्त्वो रलोव्युपधादिति विकल्पे प्राप्ते इतरेभ्यो नक्त्वासेडिति निषेधे प्राप्ते कित्त्वं विधीयते । मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा क्लिशित्वा । उदित्वा । उषित्वा । वसतिक्षुधोरितीट् । यजादित्वात्संप्रसारणम् ॥

१-२-८

रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ॥ एभ्यः संश्च क्त्वा च कितौ स्तः । रुदविदमुषाणां रलोव्युपधादिति विकल्पे प्राप्ते ग्रहेस्तु विध्यर्थमेव । स्वपिप्रच्छयोस्तु सन्नर्थम् । तावतैव चरितार्थत्वादनिट क्त्वः किन्त्वविधानं नियामकं स्यादिति न शङ्कनीयम् । रुदित्वा । रुरुदिषति । विदित्वा । विविदिषति । मुषित्वा । मुमुषिषति । गृहीत्वा । जिघृक्षति । सुप्त्वा। सुषुप्सति।

पृष्ट्वा । पिपृच्छिषति । किस्वाद्ग्रहादीनां सम्प्रसारणं किरश्चपञ्चम्य इति प्रच्छेः सन इट् ॥

इको झल् ॥ इकः परो झलादिः सन् कित्स्यात् । चिचीषति । तुष्टूषति । चिकीर्षति । ननु चिस्तुकृञ्भ्यः सनि कृते गुण बाधित्वाज्झनेति दीर्घोस्तु किं कित्त्वेन । न च पिपविषतीत्यादावपि तथा स्यादिति वाच्यम् । अनुनासिकस्यक्वीति सूत्राज्झलनुवृत्त्या झलादौ सनि दीर्घविधानात् । न चेह गुणमिव ज्ञीप्सतीत्यत्र णिलोपमप्यविशेषादीर्घो बाधेत । किन्त्वे तु सति चिचीषतीत्यादौ कृतार्थो दीर्घो ज्ञीप्सतीत्यत्र परत्वाण्णिलोपेन बाध्यतइति वाच्यम् । येन नाप्राप्तिन्यायेन दीर्घस्य गुणापवादत्वात् । न च पुरस्तादपवादन्यायेन णिलोप एव बाध्य इति भ्रमितव्यम् । उभयापवादतासंभावनायामेव तदवतारात् । इह तु णिलोपेन सह येन नाप्राप्तिविरहात् । न च बाध्यसामान्यचिन्तायां णिलोपबाधो दुर्वार इति वाच्यम् । स्याशर्पा ज्ञीप्स्यमान इति निर्देशालक्ष्यानुरोधाच्चेह बाध्यविशेषचिन्ताया एव युक्तत्वात् । न च कुटादौ गुपुरीषोत्सर्गे धुगतिस्थैर्ययोरिति पाठाज्जुगूषति दुधूषतीत्यत्र कृतार्थो दीर्घः परेण गुणेन बाध्येतेति वाच्यम् । उहनेति वक्तव्ये अज्झनेति प्रत्याहारग्रहणस्य निरवकाशत्वात् । न च गमेरिङादेशस्येति वार्तिक प्रत्याख्यातुं तन्त्रादिना सम्भवव्यभिचाचराभ्यां गमेरचा विशेषयिष्यमाणत्वादज्ग्रहणसार्थक्यं शङ्क्यम् । एव हि उतो दीर्घ इत्युक्त्वा इङ्हनोरिति सूत्रयेत् । इणिकोरादेशस्यापि ग्रहणमिति पक्षेपीङ्हनोरिति ब्रूयात् । हना साहचर्याच्चेधातुरेव ग्रहीष्यते न त्विवर्णान्तः । यथान्यासपाठेपि हनिसाहचर्याल्लुग्विकरणस्यादेशगमेर्ग्रहणसम्भवाच्च ।

तस्माद्दीर्घविधिना गुणबाधात्किं कित्त्वेनेति । उच्यते । च- सरार्थमवश्यमिकोझलिति कर्तव्यम् । योगविभागः किमर्थ इ- ति परमत्रशिष्यते । तत्राज्ग्रहणसामर्थ्यस्य झीप्स्यमान इत्या- देर्ज्ञापकस्य च पर्यालोचनाक्लेशपरिहारार्थं लक्षणैकचक्षुषो बा- ध्यसामान्यचिन्ताभ्रमं वारयितुं योगविभाग इति निष्कर्षः । वार्त्तिकं तु यथाश्रुताभिप्रायकम् । तद्यथा, इकः कित्त्वं गुणो मा भूद्दीर्घारम्भात्कृते भवेत् । अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते ॥ सामर्थ्याद्धि पुनर्भाव्यमृदित्त्वं दीर्घसंश्रयम् । दीर्घा- णां नाकृते दीर्घे णिलोपस्तु प्रयोजनम् ॥ अस्यार्थः । इक उत्त- रस्य सनः कित्त्वं विधीयते गुणो मा भूदित्येतदर्थम् । दूष- यति । दीर्घारम्भादिति । गुणो न भविष्यतीति शेषः । आरम्भवाधाह । कृते भवेदिति । अयं भावः । सनिमीमेत्यत्र मीग्रहणेन मिनोतिमपि ग्राहयित्वा दीर्घः कृतार्थ इति चिचीष- तीत्यादौ कृतेपि दीर्घे गुण स्यात् । दूषयति । अनर्थकं त्वि- ति । मीनातिमिनोतीत्यात्वे कृते गामादाग्रहणेष्वविशेषान्मा- ग्रहणेनैव मिनोतिमीनात्योरपि सिद्धे मीग्रहणं तत्र मास्तु । तथा च दीर्घविधानं न कृतार्थमिति भावः । ह्रस्वार्थमिति । ह्रस्वे- षु दीर्घः प्रवर्त्तताम्, न तु दीर्घेषु । अप्राप्ते शास्त्रमर्थवदिति न्यायात् । ततश्च बुभूषतीत्यादौ गुणः प्रसज्यतएवेत्यर्थः । दूषयति । सामर्थ्यादिति । गुणनिवृत्तिरूपप्रयोजनसद्भावाद्दी- र्घाणां दीर्घैर्भाव्यमेव, मोराजीतिवदिति भावः । न चैवं दी- र्घेण गुणस्येव ऋदित्त्वस्यापि बाधः स्यात्तथा च चिकीर्षतीति न सिध्येदत आह । ऋदित्त्वमिति । यं विधिं प्रतीति न्याया- द् गुण एव बाध्यो न तु ऋदित्त्वमित्यर्थः । ननु तितीर्षतीत्या- दौ तर्हि इत्त्वं बाध्यतां, तत्राह । दीर्घाणामिति । इत्वोत्वयो-

र्हि गुणवृद्धी परत्वाद्बाधिके । ततश्चाज्झनेति दीर्घेण गुणबाधे सत्ये-वैत्वं लभ्यं न तु ततः प्राक् । एवं च, यस्य तु विधेरित्यंशो मूत्वइव दीर्घत्वविशिष्ट इति भावः । एवं प्राप्ते सिद्धान्तमाह, । णिलोपस्त्विति ॥ १-२-१०

हलन्ताच्च ॥ कर्मधारयोऽयम् । अन्तशब्दः समीपे परभूते वर्तमानो विशेषणमपि निपातनात्पूर्वनिपतितः । इक इति पञ्चम्यन्तमपीह षष्ठ्या विपरिणम्यते तत्सापेक्षोऽप्यन्तशब्दो नित्यसापेक्षत्वात्समस्यते । इक्समीपाद्धलः परो झलादिः सन् कित्स्यात् । विभित्सति । इकः किं । यियक्षते । झल् किम् । विवर्धिषते । कथं विप्सतीति, हल्ग्रहणस्य जातिपरत्वात्सिद्धमित्युपपादितं निपातएकाजिति सूत्रे ॥ १-२-११

लिङ्सिचावात्मनेपदेषु ॥ इक्समीपाद्धलः परौ झलादी लिङ् तिङ्परः सिचेत्येतौ कितौ स्तः । भित्सीष्ट । अभित्त । इकः किम् । यसीष्ट अयष्ट । सम्प्रसारणं मा भूत् । आत्मनेपदेष्विति किम् । अस्राक्षीत् । अद्राक्षीत् । अकितीत्युक्तेरम् न स्यात् । सिच एवेदं विशेषणं नतु लिङो ऽसम्भवात् । झलन्तस्यैव लिङः परस्मैपदस्य व्यावर्तितत्वाच्च । हलः किम् । चेषीष्ट । अचेष्ट । झल् किम् । वर्तिषीष्ट । अवर्तिष्ट ॥ १-२-१२

उश्च ॥ ऋवर्णात्परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । कृषीष्ट । अकृत । झलादी किम् । वरिषीष्ट । अवरिष्ट । लिङ्सिचोरितीद् । तङि किम् । अकार्षीत् । ऋ इति वर्णग्रहणं व्याप्तिन्यायात् ॥ १-२-१३

वा गमः ॥ गमेः परौ झलादी लिङ्सिचौ वा कितौ स्तः । सङ्गसीष्ट । सङ्गंसीष्ट । समगत । समगंस्त । कित्त्वपक्षे ऽनुदात्तोपदेशवनतीत्यादिनानुनासिकलोपः ॥

हनः सिच् ॥ १-२-१४ ॥ हन्तेः परः सिच् कित्स्यात् । आहत । आहसाताम् । आहसत । सिचः कित्त्वादनुनासिकलोपः । यद्यपि सिजन्तस्याङ्गस्यात्मनेपदं ङित्परमस्तीत्यनिदितामित्येव सिद्धं तथापि सिजन्तस्योपधालोपो नेति ज्ञापनार्थमिदन्तेनामंस्तेत्यादि सिद्धम् । न चानिदितामिति पर्युदासः शङ्क्यः । सिच इकारस्योच्चारणार्थत्वात् । अन्यथा नुमापत्तेः । न च धातुग्रहणेन तद्व्युदासः । धातुग्रहणमुपदेशे नुम्प्रवृत्त्यर्थमिति कुण्डा हुण्डेत्यादिसिद्धये भाष्य एव वक्ष्यमाणत्वात् । न च तासेर्व्यावृत्तये तत् । तत्रापीकारस्योच्चारणार्थत्वात् । न चैवं मन्ता हन्तेत्यादावात्मनेपदे उपधालोपापत्तिः । आभीयस्य तासेष्टिलोपस्यासिद्धत्वात् । आभात्सूत्रमत्याख्यानपक्षे तु विकरणमयुक्तमुपधात्वमाश्रित्य लोपो नेति सामान्यापेक्षं ज्ञापकमस्तु । अङ्गवृत्तपरिभाषया वा मन्ता हन्तेति साध्यताम् । ननु न्वाहतेत्यत्रातो लोपं व्यावर्तयितुं समानाश्रयत्वमयुक्ता ऽसिद्धतापेक्ष्यते , सा च सिचः कित्त्वं विना न निर्वहतीति कथं ज्ञापकतेति चेन्न । आर्धधातुकोपदेशे यदकारान्तमिति व्याख्यानादेव लोपाप्रवृत्तेः । जयादित्यस्तु सिच्नास्योरिदित्करणमनुनासिकलोपप्रतिषेधार्थमित्याह । तन्मते धातुग्रहणस्य तद्व्यावृत्त्या कृतार्थत्वान्नुम्विधावुपदेशिवद्वचनं मत्ययसिद्ध्यर्थमिति वचनमेव शरणीकरणीयमिति दिक् । यद्यपीह लिङ्सिचाविल्यनुवृत्त्या सिद्धं तथाप्युत्तरार्थमवश्यकर्तव्यं सिज्ग्रहणं स्पष्टत्वार्थमिहैव कृतम् । अन्यथा हि लिङि वधादेशो नित्यः स्थानिवत्सूत्रोक्तरीत्या वधादेशाभावेपि अज्झलादित्वान्न कित्त्वमित्यादि व्युत्पादनीयं स्यात् ॥

यमो गन्धने ॥ सूचनेऽर्थायमेः सिच् कित्स्यात् । उदाय-

त । उदायसाताम् । उदायसत । धातूनामनेकार्थत्वात्सूचनेत्र यमिर्वर्तते । तच्च परदोषाविष्करणम् । आत्मीयमङ्गन इत्यात्मनेपदं धात्वर्थेनोपसङ्ग्रहादकर्मकत्वात् । सिचः किन्त्वादनुनासिकलोपः । गन्धने किम् । उदायंस्त पादम् । आकृष्टवानित्यर्थः । स्वाङ्गकर्मकत्वात्तङ् । उदायंस्त कूपाद्रज्जुम् । उद्धृतवानित्यर्थः । सकर्मकत्वेपि समुदाङ्भ्यो यमोऽग्रन्थइत्यात्मनेपदम् ॥ १-२-१६

विभाषोपयमने ॥ यमेः सिच् किद्वा स्याद्विवाहे । रामः सीतामुपायत उपायंस्त वा । उदवोढेत्यर्थः । उपाद्यमः स्वकरणइति तङ् । गन्धनाङ्गे तूपयमने पूर्वविप्रतिषेधेन नित्यं कित्त्वमिति नवेतिविभाषेति सूत्रे भाष्ये स्थितम् ॥

१-२-१७ स्थाघ्वोरिच्च ॥ अनयोरिदादेशः स्यात्सिच्च कित्स्यात् ॥ उपास्थित । उपास्थिषाताम् । उपास्थिषत । उपान्मन्त्रकरणे अकर्मकाच्चेति तङ् । घो । अदित अधित । घुस्थोरितीह वक्तुं युक्तम् । यद्यपि जयादित्येन वागम इत्यारभ्य पञ्चसूत्र्यामात्मनेपदेष्वित्यनुवर्तितं तथापि निष्फलत्वादुपेक्ष्यम् । तथाहि । गमे परस्मैपदे सिज्नास्ति । अङा बाधात् । लिङ् तु न झलादिः । न चात्मनेपदमेवानुवर्त्य झल्ग्रहणं त्याज्यमिति वाच्यम् । उत्तरसूत्रस्यायानिपातामिति चिण्वदिटि अतिव्याप्त्यापत्तेः । हन्तेस्तु परस्मैपदे वधादेशो नित्यो यमेस्तु यमरमेतीट्सकोः सतोर्झलादि सिच् परस्मैपदे नास्ति । उपयमे तु नित्यमात्मनेपदम् । स्थाघ्वोः परस्मैपदे सिचो लुक् । एवं स्थिते हनः सिच्सूत्रे यदुक्तं वृत्तिकृता आत्मनेपदग्रहणमुत्तरार्थमनुवर्त्ततइति । तदप्यापातरमणीयमेव । तस्माद्यथाव्याख्यानमेव साधु । स्यादेतत् । भाष्यमानस्य सवर्णा-

ग्राहकत्वादिति तपरकरणं व्यर्थम् । सत्यम् । इश्चेत्युक्तेपि लाघवे विशेषाभावादिच्चेत्युक्तमिति तत्त्वम् । भाव्यमानोपि क्व चित्सवर्णान् गृह्णातीति कुशकाशावलम्बनेन तु वार्त्तिकम् । इच्च कस्य तकारेत्वं दीर्घो मा भूदृतेपि सः । अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृत इति ॥ अस्यार्थः । इच्चेति तकारेत्वं कस्य चित् सिद्धये इति प्रश्नः । हेतोरपि सामान्यतः सम्बन्धित्वेनैव विवक्षायां षष्ठी, अन्यथा हेताविति तृतीया स्यात् । अत्र तकारस्येत्वोक्तिरापातत इत्युक्तमेओङ्सूत्रे । यद्वा । तकारेतीति तकारेत् । तपर इति व्याख्येयम् । तथा च भाष्यम् । कस्य हेतोरिकारस्तपरः क्रियतइति । अमूभ्यामित्यादाविव भाव्यमानोप्यान्तरतम्याद्दीर्घो मा भूदित्युत्तरम् । ऋतेपीति । इच्चेत्यंशादृतेपि स्याध्वोरिति कित्त्वे सति घुमास्थेतीत्वेन सिद्धे विधानसामर्थ्यादनन्तरतमोपि ह्रस्वः सिद्धस्तर्कि तपरेणेति पुनः प्रश्नः । अनन्तरे इति । असदृशे आदेशे क्रियमाणे ह्रस्व इव प्लुतोपि स्यात्स मा भूदित्यर्थः । प्लुतश्चेति । विषयविशेषे वाक्यस्य टेरित्यधिकृत्य हि प्लुतो वक्ष्यते । अत एव कुरुनगमन्नित्यादौ स्मृतो, न त्वास्थितेत्यादौ । आटित्वात् । तथा चेष्टापत्तिर्न कार्येति तपरत्वं समर्थितम् । प्राञ्चस्तु अनन्तरे ऽविद्यमानेपि विशेषे, घुमास्थेतीत्वेन सिद्धेपीति यावत् । प्लुतो मा भूदित्येतदर्थं दीर्घः स्यान्मोराजीतिवत् । अस्त्वेवमिति चेन्न । प्रश्नाख्यानादिरूपे विषये प्लुतस्येष्यमाणत्वात् । तदेवं स्थलान्तरे भिन्नकालनिवृत्त्यर्थमपि तपरत्वमिह दीर्घनिवृत्तिद्वारा प्लुतसिद्ध्यर्थं पर्यवस्यतीति व्याचख्युः । अपरे तु यद्यनेन प्लुतो विधीयते तर्हि यत्राष्टमिकस्य विषयस्तत्राप्यनेनैव स्यात् तस्यासिद्धत्वात् । ततश्च पक्षे ऽनुवाददोषः स्यात् । अतो ह्रस्व एव

त । उदायसाताम् । उदायसत । धातूनामनेकार्थत्वात्सूचनेत्र यमिर्वर्तते । तच्च परदोषाविष्करणम् । आङोयमहन इत्यात्मनेपदं धात्वर्थेनोपसङ्ग्रहादकर्मकत्वात् । सिचः किन्त्वादनुनासिकलोपः । गन्धने किम् । उदायंस्त पादम् । आकृष्टवानित्यर्थः । स्वाङ्गकर्मकत्वात्तङ् । उदायंस्त कूपाद्रज्जुम् । उद्धृतवानित्यर्थः । सकर्मकत्वेपि समुदाङ्भ्यो यमोऽग्रन्थइत्यात्मनेपदम् ॥ १-२-१६

विभाषोपयमने ॥ यमेः सिच् किद्वा स्याद्विवाहे । रामः सीतामुपायत उपायंस्त वा । उदवोढेत्यर्थः । उपाद्यमः स्वकरणइति तङ् । गन्धनाङ्गे तूपयमने पूर्वविप्रतिषेधेन नित्यं कित्त्वमिति नवेतिविभाषेति सूत्रे भाष्ये स्थितम् ॥

१-२-१७ स्थाघ्वोरिच्च ॥ अनयोरिदादेशः स्यात्सिच्च कित्स्यात् ॥ उपास्थित । उपास्थिषाताम् । उपास्थिषत । उपान्मन्त्रकरणे अकर्मकाच्चेति तङ् । घो. । अदित अधित । घुस्थोरितीह वक्तुं युक्तम् । यद्यपि जयादित्येन वागम इत्यारभ्य पञ्चसूत्र्यामात्मनेपदेष्वित्यनुवर्तितं तथापि निष्फलत्वादुपेक्ष्यम् । तथाहि । गमे परस्मैपदे सिज्नास्ति । अङा बाधात् । लिङ् तु न झलादिः । न चात्मनेपदमेवानुवर्त्य झल्ग्रहणं त्याज्यमिति वाच्यम् । उत्तरसूत्रस्यायानिषातामिति चिण्वदिटि अतिव्याप्त्यापत्तेः । हन्तेस्तु परस्मैपदे वधादेशो नित्यो यमेस्तु यमरमेतीट्सकोः सतोर्झलादि· सिच् परस्मैपदे नास्ति । उपयमे तु नित्यमात्मनेपदम् । स्थाघ्वोः परस्मैपदे सिचो लुक् । एवं स्थिते हनः सिच्सूत्रे यदुक्तं वृत्तिकृता आत्मनेपदग्रहणमुत्तरार्थमनुवर्त्ततइति । तदप्यापातरमणीयमेव । तस्माद्यथाव्याख्यानमेव साधु । स्यादेतत् । भाव्यमानस्य सवर्णा-

ग्राहकत्वादिति तपरकरणं व्यर्थम् । सत्यम् । इश्चेत्युक्तेपि लाघवे विशेषाभावादिच्चेत्युक्तमिति तत्त्वम् । भाव्यमानोपि क्व चित्सवर्णान् गृह्णातीति कुशकाशावलम्बनेन तु वार्त्तिकम् । इच्च कस्य तकारेत्त्वं दीर्घो मा भूदृतेपि सः । अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृत इति ॥ अस्यार्थः । इच्चेति तकारेत्त्वं कस्य चित् सिद्धये इति प्रश्नः । हेतोरपि सामान्यतः सम्बन्धित्वेनैव विवक्षायां षष्ठी, अन्यथा हेताविति तृतीया स्यात् । अत्र तकारस्येत्त्वोक्तिरापातत इत्युक्तमेओङ्सूत्रे । यद्वा । तकारमेतीति तकारेत् । तपर इति व्याख्येयम् । तथा च भाष्यम् । कस्य हेतोरिकारस्तपरः क्रियतइति । अमूभ्यामित्यादाविव भाव्यमानोप्यान्तरतम्याद्दीर्घो मा भूदित्युत्तरम् । ऋतेपीति । इच्चेत्यंशादृतेपि स्याघ्वोरिति कित्त्वे सति घुमास्थेतीत्वेन सिद्धे विधानसामर्थ्यादनन्तरतमोपि ह्रस्वः सिद्धस्तत्किं तपरेणेति पुनः प्रश्नः । अनन्तरे इति । असदृशे आदेशे क्रियमाणे ह्रस्व इव प्लुतोपि स्यात्स मा भूदित्यर्थः । प्लुतश्चेति । विषयविशेषे वाक्यस्य टेरित्यधिकृत्य हि प्लुतो वक्ष्यते । अत एव कुरूनगमन्नित्यादौ स्मृतो, न त्वास्थितेत्यादौ । अटित्वात् । तथा चेष्टापत्तिर्न कार्येति तपरत्वं समर्थितम् । प्राञ्चस्तु अनन्तरे ऽविद्यमानेपि विशेषे, घुमास्थेतीत्वेन सिद्धेपीति यावत् । प्लुतो मा भूदित्येतदर्थं दीर्घः स्यान्मोराजीतिवत् । अस्त्वेवमिति चेन्न । प्रश्नाख्यानादिरूपे विषये प्लुतस्येष्यमाणत्वात् । तदेवं स्थलान्तरे भिन्नकालनिवृत्त्यर्थमपि तपरत्वमिह दीर्घनिवृत्तिद्वारा प्लुतसिद्ध्यर्थं पर्यवस्यतीति व्याचख्युः । अपरे तु यद्यनेन प्लुतो विधीयते तर्हि यत्राष्टमिकस्य विषयस्तत्राप्यनेनैव स्यात् तस्यासिद्धत्वात् । ततश्च पक्षे ऽनुवाददोषः स्यात् । अतो ह्रस्व एव

भविष्यतीति तपरकरणमत्याख्यानपरश्लेर्थंचरण इति व्याचख्युः। एतच्च मतद्वयमप्ययुक्तम्। अनन्त्यस्यापीत्यादीनां टिसंज्ञाविरहादिहाप्रवृत्तेः। कैयटोपि मतद्वयखण्डनपरतयैव नेयः। न्यासहरदत्तादयस्तु आष्टमिकग्रन्थैर्वृत्त्यादिभिश्च विरोधादुपेक्ष्यः भाष्यं त्वस्मदुक्तव्याख्यानुगुणमेव । यदा विषयस्तदैव प्लुतेन भवितव्यमिति योजनया नेह प्लुतस्य विषयोस्तीति ध्वनितत्वादिति दिक् ॥

न क्त्वा सेट् ॥ सेट् क्त्वा किन्न स्यात्। देवित्वा। सेट् किम्। कृत्वा। क्त्वा किम्। निगृहीतिः। अत्र वार्तिकं, नसेडिति कृतेऽकित्त्वे निष्ठायामवधारणात्। ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः ॥ इत्त्वं कित्संनियोगेन रेण तुल्यं सुधीवनि । वस्वर्थं किदतीदेशाद् गृहीतिः क्त्वा च विग्रहात्॥ अस्यार्थः। पूर्वार्द्धमेको ग्रन्थः। तत्रोत्तरार्धमित्यपकृष्यते । क्त्वाग्रहणं त्यक्त्वा नसेडित्येतावतापि योगेनाकित्त्वे कृते गुधित इत्यादौ निष्ठायां नाकित्त्वम्। कुतः। अवधारणात्। निष्ठाशीङ्ित्यनेन । शीङादिभ्य एव निष्ठा न किदिति नियमादित्यर्थः। विपरीतनियमस्तु लक्ष्यानुरोधान्न व्याख्यास्यते। न चैवं लिटि प्रतिषेधाज्जग्मिवेत्यादावुपधालोपो न स्यादत आह। ज्ञापकादिति। किंत, तत्राह सनीति। शिशयिषतइत्यत्र कित्त्वं वारयितुं क्रियमाणमिकोझलिति झल्ग्रहणं ज्ञापयति आतिदेशिकस्य कित्त्वस्य नायं निषेध इति। ननूत्तरार्थं झल्ग्रहणं स्यात्,अत्याह। इत्त्वमिति । उपास्थायिषातां हरिहरौ भक्तेनेत्यत्र अस्था स आतामिति स्थिते इत्वम्भासङ्चिण्वद्भावश्च । परत्वाच्चिण्वद्भावे कृते युक् च प्राप्तइद्धिश्च । अपवादत्वाद्युकि कृते यकारस्येत्प्रसङ्गः। तं वारयितुं झल्ग्रहणमिति ज्ञापकभङ्गवादिनो म-

मतम् । तन्न । न सेडिति सिचोपि कित्त्वे निषिद्धे तत्संनियोगशिष्टतया इत्त्वस्याप्रवृत्तेः । अत्र दृष्टान्तमाह । रैणेति । शोभना धीवानोस्यां सुधीवेत्यत्रानो बहुव्रीहेरिति ङीपो निषेधे वनोर चेति रेफोपि न भवति, तद्वदित्यर्थः । भाष्ये त्वभ्युपेत्यापि समाहितमित्त्वे कृतेपि वृद्धिर्भविष्यतीति । युक्ता हि आकारस्य वृद्धिर्बाध्यते न त्विकारस्यापीति भावः । जगृभिवानित्यत्र क्वसोः कित्त्वनिषेधं वारयितुं क्त्वाग्रह इति शङ्कते । क्वस्वर्थमिति । रूपमिति । किदतिदेशादिति । औपदेशिकस्य निषेधेप्यातिदेशिकेन सिद्धं, तदनिषेधस्य ज्ञापितत्वादिति भावः । स्यादेतत् । संयोगान्तेष्वातिदेशिककित्त्वाभावादौपदेशिकमेव शरणम् । अञ्जिराञ्जिवानिति यथा । अत्राहुः । आनुपूर्व्यात्सिद्धम् । नलोपे कृते द्विर्वचने एकादेशे च वस्वेकाजितीट् । कृतद्विर्वचनानामेकाचामिति सिद्धान्तात् । न चेदानीं कित्त्वप्रतिषेधः । उपजीव्यविरोधात् । कित्त्वे हि प्रतिषिद्धे नलोपनिवृत्तौ द्विहल्त्वान्नुटि एकाच्त्वाभावादिडेव नावतिष्ठेत । किञ्च क्वसोश्छान्दसत्वादसार्वधातुकत्वे सार्वधातुकमपिदिति ङित्त्वात्सिद्धम् । एवं स्थिते सिद्धान्तमाह । ग्रहीतिरिति । कित्त्वनिवृत्त्यर्थं क्त्वाग्रहणमित्यर्थः । तितुत्रेष्वग्रहादीनामितीट् । कित्त्वात्संप्रसारणम् । एवं कुंसकौटिल्याल्पीभावयोः । निकुच्यिति । कित्त्वान्नलोपः । उपस्निहितिः । कित्त्वान्न गुणः । इदानीं क्त्वाग्रहणं प्रत्याचष्टे । क्त्वाचेति । विग्रहादिति । योगविभागादित्यर्थः । अय भावः । न सेण्निष्ठाशीङित्यादित्रिसूत्रीं पठित्वा पूङः क्त्वा चेत्यत्र योगो विभज्यते । पूङः परा सेण्निष्ठा किन्न स्यात् । ततः क्त्वा च, सेट् किन्नेत्यनुवर्तते पूङ इति निवृत्तम् । एवं चैकं क्त्वाग्रहणं प्रत्याख्यातम् । योगविभागस्तु पू-

वैमैकसूत्रेण सह निमातव्यः ॥

निष्ठाशीङ्स्विदिमिदिक्ष्विदिधृषः ॥ एभ्यः परा सेण्निष्ठा किन्न स्यात्। शयितः शयितवान्। अनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः। शेश्यितः। शेश्यितवान्। एरनेकाच इति यण्। ञिष्विदा स्नेहनमोचनयोः। भ्वादिः। प्रस्वेदितः प्रस्वेदितवान्। यस्तु ष्विदा गात्रप्रक्षरणइति दिवादिरञित् स नेह गृह्यते। ञिद्भिः साहचर्यात्। ञिमिदा स्नेहने। प्रमेदितः। प्रमेदितवान्। ञिक्ष्विदा स्नेहनमोचनयोरिति दिवादिर्गृह्यते न तु ञिक्ष्विदा अव्यक्ते शब्दइति भ्वादिरपि, मिदिना साहचर्यादिति हरदत्तस्तच्चिन्त्यम्। भ्वादिष्वपि मिदेः पठ्यमानत्वात्। तस्मादविशेषादुभयोर्ग्रहणं न्याय्यम्। प्रक्ष्वेदितः। प्रक्ष्वेदितवान्। प्रधर्षितः। प्रधर्षितवान्। सेट् किम्। स्विन्नः स्विन्नवान्। आदितश्चेतीण्निषेधः। विभाषाभावादिकर्मणोरिति पक्षेऽभ्यनुज्ञायते। स कित्त्वप्रतिषेधस्य विषयः ॥

मृषस्तितिक्षायाम्॥सेण्निष्ठा किन्न स्यात्।मर्षितः मर्षितवान्। क्षमायां किम्। अपमृषितं वाक्यम्। अविस्पष्टमित्यर्थः। तितिक्षाग्रहणं ज्ञापकं भीमसेनादिकृतोर्थनिर्देश उदाहरणमात्रं न तु परिसङ्ख्येति ॥

उदुपधाद्भावादिकर्मणोरन्यतरस्याम्॥उकारोपधाद्धातोः परा भावादिकर्मणोर्विहिता सेण् निष्ठा वा किन्न स्यात्। द्युतितम्। द्योतितम्। मुदितं, मोदितं साधुना। प्रद्युतितः। प्रद्योतितः। प्रमुदितः, प्रमोदितस्साधुः। उदुपधात्किम्। किटितम्। खिटितम्। भावेत्यादि किम्। रुचितङ्कार्षापणम्। सेट् किम्। क्रुष्टम्। उदुपधाच्छप इति भाष्यं, शब्विकरणेभ्य एवेष्यतइत्यर्थः। नेह गुधपरिवेष्टने दिवादिः। गुधितम् ॥

पूङः क्त्वा च ॥ पूङः परे सेट्क्त्वानिष्ठे कितौ न स्तः । नित्योयं योगः । विभाषयोर्मध्ये पाठात् । पवितः । पवितवान् । पवित्वा । क्लिशः क्त्वानिष्ठयोः, पूङश्चेतीट् । नक्त्वासेडिति सिद्धे क्त्वाग्रहणं प्रागुक्तरीत्या योगविभागेन तत्प्रत्याख्यानार्थम् । सूत्ररीत्या तूत्तरार्थम् । तथा च भारद्वाजीयाः पठन्ति, नित्यमकित्त्वमिडाद्योः क्त्वाग्रहणमुत्तरार्थमिति । कात्यायनस्तु, इह सेडिति निवर्त्य विकल्पं चानुवर्त्य अनिट एव कित्त्वं विकल्प्य किन्त्वाभावे पवितः पवित्वेत्यादिसिद्धौ किन्त्वपक्षे श्र्युकः किनीतीण्निषेधात् पूतः पूतवानित्यादिसिद्धौ सत्यां पूङश्चेति सूत्रं प्रत्याचख्यौ उत्तरसूत्रे वाग्रहणं च । कित्त्वस्मिन्पक्षे उत्तरत्र सेड्ग्रहणं मण्डूकप्लुत्यानुवर्तनीयमिति क्लेशः । पूर्वक्तं प्रत्याख्यानं त्विदानीं न सङ्गच्छते मृडमृदेति ज्ञापकाद्वा नक्त्वासेडित्यर्थः साधनीयः । न च स्वपिग्रच्छिग्रहणादनिट्कस्याप्यकिन्त्वं स्यादिति वाच्यम् । गत्य सनर्थत्वात् । अन्यथा क्त्वः किन्त्वस्य वैयर्थ्यापत्तेश्चेति दिक् । इदं त्ववधेयम् । पूङः क्त्वेत्यत्र सानुबन्धनिर्देशः स्वार्थो न तु पूञो निवृत्त्यर्थः । ततोटो दुर्लभत्वात् । इड्विधौ पूङ एव निर्दिष्टत्वात् । नापि यङ्लुङ्निवृत्त्यर्थः । इड्विधावननुबन्धनिर्देशेन यङ्लुकि पूङोपीडभावात् । यत्तु यङ्लुग्यार्थधातुकस्येडितीडस्त्येव । न च श्र्युकः कितीतीण्निषेधः । तत्रैकाच इत्यनुवर्तनात् । उक्तं हि यङ्विधौ वार्त्तिककृता, एकाचश्चेदुपग्रहादिति । एवं यङ्लुङ्निवृत्त्यर्थमनुबन्धोच्चारणमिति मतम् । अस्मिन् पक्षे पोपुवितः पोपुवितवानिति निष्ठायां भवति क्त्वायां तु गुणे पोपवित्वेत्येव । नक्त्वासेडिति किन्त्वप्रतिषेधः । न च क्त्वाग्रहणसामर्थ्यात्तस्यापि यङ्लुकि प्रतिषेधः । तस्योत्तरा-

र्थत्वात् । अनुबन्धनिर्देशस्य च निष्ठायां चरितार्थत्वादत एव क्त्वा च विग्रहादिति वार्तिकं सङ्गच्छते । इह किञ्चित्त्र-पोऽतीति न्यायेन प्रकृतेऽप्युपयोगे हि तद्विरुध्येत। अत एव क्त्वा-ग्रहणमुत्तरार्थमिति भारद्वाजीयोक्तिरपि सङ्गच्छतइति दिक् ॥

नोपधात्थफान्ताद्वा ॥ निष्ठेति निवृत्तं चानुकृष्टत्वात् । न-कारोपधात् थान्तात् फान्ताच्च परः सेट् क्त्वा किन्न स्याद्वा । ग्रथित्वा । ग्रन्थित्वा । गुफित्वा । गुम्फित्वा । नोपधात् किम् । रिफ कत्थनादौ, रेफित्वा । इह रलोव्युपधादिति विकल्पोपि न प्रवर्तते। नोपधग्रहणसामर्थ्यात्। ननु तृफतृम्फ हिंसायाम्। अत्रा-द्य ऋकारोपधत्वात् नोपधग्रहणस्य व्यावर्त्योऽस्त्विति चेत्, मैवम्। अर्पित्वा तृफित्वा तृम्फित्वेति त्रैशब्द्यस्य नोपधग्रहणसत्त्वास-त्त्वयोरविशिष्टत्वात् । सति हि तस्मिन् नक्त्वासेडिति प्रवृत्ते ऋदुपधस्यार्फित्वेति भवति । नोपधस्य त्वस्मिन विकल्पे तृ-फित्वा तृम्फित्वेति । असत्यपि नोपधग्रहणे सर्वत्र प्रकृतविकल्प-प्रवृत्तौ सत्यां तदेव रूपत्रयम् ।

वञ्चिलुञ्च्यृतश्च ॥ एभ्यः सेट् क्त्वा न कित् स्याद्वा। वञ्चु गतौ भ्वादि· । वञ्चु प्रलम्भने चुरादिः सोपि गृह्यते चुरादीनामनित्यण्यन्तत्वात् । वचित्वा । वञ्चित्वा । उदितोवेति वेट् । इडभावे तु कित्त्वमस्त्येव वक्त्वा । लुञ्च अपनयने । लुचित्वा लुञ्चित्वा । ऋतेरीयङार्धधातुके वि-कल्पित· । तदभावे ऋतित्वा अर्तित्वा । सूत्रे उच्चारणार्थ इका-रो वञ्चिलुञ्चीति न श्तिप् । नलोपप्रसङ्गात् । ऋदिति धातुरेव गृह्यते । न तु ऋदन्ताः । पूर्वसूत्रेन्तग्रहणेनेह प्रकरणे यत्नं विना तदन्तविधिर्नेति ज्ञापितत्वात् ॥

तृषिमृषिकृशेः काश्यपस्य ॥ एभ्यः सेट् क्त्वा किद्वा स्या-

त् । काश्यपग्रहणं पूजार्थं, वेतिमक्रमात् । नक्त्वासेडिति निषेधे प्राप्ते विकल्पोयम् । तृष पिपासायाम् । तृषित्वा । तर्षित्वा । मृष तितिक्षायाम्, मृषित्वा । मर्षित्वा । कृश तनूकरणे । कृशित्वा । कर्शित्वा । न्यासग्रन्थे तु कृष विलेखनइति क्वाचित्कः प्रमादपाठः । अनिट्त्वात् ॥

रलो व्युपधाद्धलादेः संश्च ॥ उश्च इश्च वी ते उपधे यस्य तस्माद्धलादेरलंतात् परौ क्त्वासनौ सेटौ वा कितौ स्तः । द्युतित्वा द्योतित्वा दिद्युतिषते दिद्योतिषते । द्युतिस्वाप्योरिति संप्रसारणम् । रलः किं, देवित्वा दिदेविषति । व्युपधात् किं, वर्तित्वा विवर्तिषते । हलादेः किम् । एषित्वा । एषिषिषति । इह नित्यमपि द्वित्वं गुणेन बाध्यते ओणेर्ऋदित्करणेन सामान्यत उपधाकार्यस्य द्वित्वात्प्राबल्यज्ञापनात् । सेट् किम् । भुक्त्वा बुभुक्षते । आदिग्रहणं स्पष्टार्थम् । व्युपधस्य हलन्तत्वाव्यभिचारात् ॥

ऊकालोऽज्झ्रस्वदीर्घप्लुतः ॥ ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । ऊ इति त्रयाणां प्रश्लेषेण निर्देशः । तत्र न तावदन्ते मात्रिकः । विभाषा पृष्टप्रतिवचनेहेरिति हेः प्लुतविधानात् । नापि मध्ये । सुपिचेति दीर्घविधानात् । द्विमात्रिकस्तु नान्ते । ओमभ्यादानइति प्लुतविधानात् । परिशेषादेकमात्रद्विमात्रत्रिमात्राणां क्रम सिद्धः । यत्तु, चित्त्रान्पूर्वम्भवेद् ह्रस्वः प्लुतोन्ते सन्धितो मत इति मैत्रेयः । तद्भाष्यादर्शनमयुक्तम् । यतः व्यत्यासे एकमात्रस्य ह्रस्वत्वं त्रिमात्रस्य प्लुतत्वमित्येव दुर्लभमिति भगवतैव दूषितम् । ईचाक्रवर्मणस्येत्यनेनैवहापि सूत्रे केचिद् ई इति प्लुतद्योतिकां लिपिं लिखन्ति । तत्सामादिकं, दीर्घस्यैवौचित्यात् । तदयमर्थः । उश्च ऊश्च उ ३ श्च

वः, वः कालः परिच्छेदको यस्य सोच् क्रमाद्ध्रस्वादिसंज्ञः स्यात् । संज्ञाप्रदेशः ह्रस्वस्य गुणः । हे हरे दीर्घो कितः । पापच्यते । वाक्यस्यटेः प्लुतः । एहि कृष्ण ३ । स्यादेतत् । उकालोच् ह्रस्व इति वाक्यार्थे ह्रस्वेनोकारेणाण्त्वात्सवर्णग्रहः स्यात् । मैवम् । एवं सति ह्रस्वसंज्ञा न विद्ध्यात् । अच्संज्ञयैव सिद्धेः । तस्मात्संज्ञारम्भसामर्थ्यान्नेह सवर्णग्रहः । महासंज्ञाया अन्वर्थत्वाच्च कालशब्दसामर्थ्याच्च । उरजित्युक्तेपि यथाश्रुते ऽज्ग्रहण व्यर्थम् । उकारस्याच्त्वाव्यभिचारात् । तेन सामर्थ्यादुसदृश इत्यर्थः । सादृश्य च न स्थानत । असम्भवात् । न यत्नतः । अव्यभिचारात् । परिशेषात्कालत एवेति सिद्धे कालग्रहणं गृह्यमाणेनैव परिच्छेदलाभार्थम् । ह्रस्वनद्याप इत्यादिलिङ्गाच्च । यदि हि लुमत्संज्ञानां लोपसंज्ञेव दीर्घप्लुतसंज्ञयोर्ह्रस्वसंज्ञा व्यापिका तर्हि किं नद्याब्ग्रहणेन । न च नियमार्थः सः । विध्यर्थत्वे लाघवादिति दिक् । यद्वा । अशब्दसंज्ञेत्यनुवर्त्य सप्तम्या विपरिणमय्य शब्दसंज्ञायां सवर्णग्रहणं नेति व्याख्येयम् । न चैवमुदात्तादिसंज्ञाविधावच्शब्दो न सवर्णं गृह्णीयादिति वाच्यम् । वाक्यस्यटेः प्लुत उदात्त इति लिङ्गेनाशब्दसंज्ञायामित्यस्यानित्यत्वात् ॥

अचश्च ॥ यत्र ह्रस्वो दीर्घः प्लुत इति शब्दैरज्विधीयते तत्राच इति पदं पूरणीयम् । इकोगुणवृद्धीत्यनेन तुल्यमेतत् । न त्वलोन्त्यस्य शेषोपवादो वा । तेन शमामष्टानां दीर्घ इत्यत्र शमादिभिरचो विशेषणात् शाम्यतीत्यादि सिद्धम् । ह्रस्वोनपुंसकइत्यत्र त्वजन्तस्य प्रातिपदिकस्येति व्याख्यानात् । अलोन्त्यस्य ह्रस्वः । अतिरि, अतिनु । नेह सुवाक् ब्राह्मणकुलम् । वाक्यस्य टे प्लुतउदात्त अत्र टेरच इति व्याख्यानात् । अग्निचित । सोमसुत् । अजित्यनुवृत्तिसामर्थ्यात्स्वसंज्ञया विधाने

इति लभ्यते। नेह, द्यौः पन्थाः सः॥

उच्चैरुदात्तः॥ ताल्वादिषु भागवत्सु स्थानेषु वर्णा निष्पद्यन्ते तत्र ऊर्ध्वभागे निष्पन्नो ऽनुदात्तसंज्ञः स्यात्। प्रदेशा आद्युदात्तश्चेत्येवमादयः॥

नीचैरनुदात्तः॥ स्पष्टम्। प्रदेशा अनुदात्तौ सुप्पितावित्यादयः॥

समाहारः स्वरितः॥ समाहृतिः समाहारः। उदात्तत्वानुदात्तत्वयोरज्धर्मयोर्मेलनम्। तद्वान् स्वरितसंज्ञः स्यात्। सूत्रे अर्शआद्यच्॥

तस्यादित उदात्तमर्धह्रस्वम्॥ अर्द्धह्रस्वशब्देनार्द्धमात्रा लक्ष्यते। प्रकृतत्वादेव सिद्धे तस्येति वचनेन दीर्घस्यापि स्वरितस्य ग्रहणात्। यद्वा। ह्रस्वग्रहणमविवक्षितम्। तेन स्वरितस्यादौ अर्द्धमात्रा अर्द्धं वा उदात्तं बोध्यम्। शिष्टं तु अनुदात्तं परिशेषात्। क्व चित्तु तस्य वाचनिकी एकश्रुतिः। तथा च बह्वृचप्रातिशाख्यम्। एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः। तस्योदात्ततरोदात्तादर्धमात्रार्द्धमेव वा॥ अनुदात्तः परः शेष स उदात्तश्रुतिर्न चेत्। उदात्तं वोच्यते किञ्चित् स्वरितं वाक्षरं परमिति॥ पूर्वयोः, उदात्तानुदात्तयोः। तस्य, स्वरितस्य। अर्द्धमात्रा उदात्तादुदात्ततरा स्वतन्त्रोदात्तादुच्चतरेत्यर्थः। अर्द्धमेव वेति द्वितीयव्याख्याभिप्रायम्। दीर्घप्लुतयोरनुरोधेनेदम्। सः शेषः, उदात्तश्रुतिः स्यात्। किमविशेषेण। नेत्याह। नचेदिति। उदात्तस्वरितपरं विहायेत्यर्थः। अत्रायं निष्कर्षः। स्वरितो द्विधा। प्राकृतोप्राकृतश्च। तत्राद्य उदात्तादनुदात्तस्येति विहित। तच्छेषस्यैकश्रुतिर्नियता। अग्निमीळे प्रत्यग्ने इत्यादि। गार्ग्यादिमते तु अत्राप्यनुदात्तः शेष।

घः, वः कालः परिच्छेदको यस्य सोच् क्रमाद्ध्रस्वादिसंज्ञः स्यात्। संज्ञाप्रदेशः ह्रस्वस्य गुणः। हे हरे दीर्घो कितः। पापच्यते। वाक्यस्यटेः प्लुतः। एहि कृष्ण ३। स्यादेतत्। उकालोच् ह्रस्व इति वाक्यार्थे ह्रस्वेनोकारेणाण्त्वात्सवर्णग्रहः स्यात्। मैवम्। एवं सति ह्रस्वसंज्ञा न विदध्यात्। अच्संज्ञयैव सिद्धेः। तस्मात्संज्ञारम्भसामर्थ्यान्नेह सवर्णग्रहः। महासंज्ञाया अन्वर्थत्वाच्च कालशब्दसामर्थ्याच्च। उरजित्युक्तेपि यथाश्रुते ऽज्ग्रहणं व्यर्थम्। उकारस्याच्त्वाव्यभिचारात्। तेन सामर्थ्यादुसदृश इत्यर्थः। सादृश्यं च न स्थानतः। असम्भवात्। न यत्नतः। अव्यभिचारात्। परिशेषात्कालत एवेति सिद्धे कालग्रहणं गृह्यमाणेनैव परिच्छेदलाभार्थम्। ह्रस्वनद्याप इत्यादिलिङ्गाच्च। यदि हि लुमत्संज्ञानां लोपसंज्ञेव दीर्घप्लुतसंज्ञयोर्ह्रस्वसंज्ञा व्यापिका तर्हि किं नद्याब्ग्रहणेन। न च नियमार्थः सः। विध्यर्थत्वे लाघवादिति दिक्। यद्वा। अशब्दसंज्ञेत्यनुवर्त्य सप्तम्या विपरिणमय्य शब्दसंज्ञायां सवर्णग्रहणं नेति व्याख्येयम्। न चैवमुदात्तादिसंज्ञाविधावच्शब्दो न सवर्णग्राहीत्यादिति वाच्यम्। वाक्यस्यटेःप्लुत उदात्त इति लिङ्गेनाशब्दसंज्ञायामित्यस्यानित्यत्वात्॥

अचश्च॥ यत्र ह्रस्वो दीर्घः प्लुत इति शब्दैरज्विधीयते तत्राच इति पदं पूरणीयम्। इकोगुणवृद्धीत्यनेन तुल्यमेतत्। न त्वलोन्त्यस्य शेषोपवादो वा। तेन शमामष्टानां दीर्घ इत्यत्र शमादिभिरचो विशेषणात् शाम्यतीत्यादि सिद्धम्। ह्रस्वोनपुंसकेत्यत्र स्वजन्तस्य प्रातिपदिकस्येति व्याख्यानात्। अलोन्त्यस्य ह्रस्वः। अतिरि, अतिनु। नेह सुवाक् ब्राह्मणकुलम्। वाक्यस्य टेः प्लुतउदात्तः अत्र टेरच इति व्याख्यानात्। अग्निचित्। सोमसुत्। अनित्यमागमशासनमिति ह्रस्वसंज्ञया विधाने

इति लभ्यते। नेह, द्यौः पन्थाः सः॥

उच्चैरुदात्तः॥ ताल्वादिषु भागवत्सु स्थानेषु वर्णा निष्पद्यन्ते तत्र ऊर्ध्वभागे निष्पन्नो ऽनुदात्तसंज्ञः स्यात्। प्रदेशा आद्युदात्तश्चेत्येवमादयः॥

नीचैरनुदात्तः॥ स्पष्टम्। प्रदेशा अनुदात्तौ सुप्पितावित्यादयः॥

समाहारः स्वरितः॥ समाहृतिः समाहारः। उदात्तत्वानुदात्तत्वयोरज्धर्मयोर्मेलनम्। तद्वान् स्वरितसंज्ञः स्यात्। सूत्रे अर्शआद्यच्॥

तस्यादित उदात्तमर्धह्रस्वम्॥ अर्द्धह्रस्वशब्देनार्द्धमात्रा लक्ष्यते। प्रकृतत्वादेव सिद्धे तस्येति वचनेन दीर्घस्यापि स्वरितस्य ग्रहणात्। यद्वा। ह्रस्वग्रहणमविवक्षितम्। तेन स्वरितस्यादौ अर्द्धमात्रा अर्द्धं वा उदात्तं बोध्यम्। शिष्टं तु अनुदात्तं परिशेषात्। क्व चित्तु तस्य वाचनिकी एकश्रुतिः। तथा च बह्वृचप्रातिशाख्यम्। एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः। तस्योदात्ततरोदात्तादर्धमात्रार्द्धमेव वा॥ अनुदात्तः परः शेष स उदात्तश्रुतिर्न चेत्। उदात्तं वोच्यते किञ्चित् स्वरितं वाक्षरं परमिति॥ पूर्वयोः, उदात्तानुदात्तयोः। तस्य, स्वरितस्य। अर्द्धमात्रा उदात्तादुदात्ततरा स्वतन्त्रोदात्तादुच्चतरेत्यर्थः। अर्द्धमेव वेति द्वितीयव्याख्याभिप्रायम्। दीर्घप्लुतयोरनुरोधेनेदम्। सः शेषः, उदात्तश्रुतिः स्यात्। किमविशेषेण। नेत्याह। नचेदिति। उदात्तस्वरितपरं विहायेत्यर्थः। अत्रायं निष्कर्षः। स्वरितो द्विधा। प्राकृतोप्राकृतश्च। तत्राद्य उदात्तादनुदात्तस्येति विहितः। तच्छेषस्यैकश्रुतिर्नियता। अग्निमीळे पुरोहितमित्यादि। गार्ग्यादिमते तु अत्राप्यनुदात्तः शेषः।

द्वितीयस्तु सूत्रान्तरैर्विहित । तस्याप्युत्सर्गेन एकश्रुतिः शेषः । व्यचक्षयत्स्वः, सेवर्धन्तइति यथा । उदात्तस्वरितपरत्वे तु शेषोनुदात्तः । क्व वोश्वा ३ इन्यध्न्यस्य । उदात्तपूर्वस्यामाकृतस्य पूर्वरूपनिष्पन्नस्य दीर्घस्याप्येवम् । न ये राः । उदात्तपूर्वस्य किम् । पुनस्तेमैषाम् । अत्र विशेषमनुपदं वक्ष्यामः । पूर्वरूपनिष्पन्नस्य किम् । अस्मिन्स्स्वे एतत् । अमाकृतदीर्घान्तरे तु, मध्ये तु कम्पयेत्कम्पमित्यादिवचनात् पूर्वोत्तरभागौ नीचौ मध्ये तूदात्तः । रथीरवेति । पुनस्ते २मास्वेए२तत् । सर्वत्र च समाहारः स्वरित इति पाणिनीयं लक्षण निर्बाधम् । तस्यादित इति विषयविवेकस्तु प्रायोवादो विशेषे शिक्षादिभिर्बाध्यतइति दिक् । एवं स्थिते अर्धह्रस्वमित्यर्द्धमात्रोपलक्ष्यते । ह्रस्वग्रहणमतन्त्रमिति वृत्तिग्रन्थः पूर्वापरितोषेणोत्तरवाक्यमवतार्य व्याख्येयः । अर्द्धमात्रादित उदात्ता अर्द्धमात्रा तु अनुदात्ता एकश्रुतिर्वेति वृत्तिग्रन्थोपि विषयभेदेन व्यवस्थया बोध्य । उभयत्रापि हरदत्तग्रन्थो मूलापर्यालोचननिबन्धन इति सुधीभिराकलनीयम् । इत आरभ्य नवसूत्री इत उत्कृष्योदात्तादनुदात्तस्य स्वरित इत्यस्मादुत्तरत्र पाठ्येति प्राञ्चः । तत्राव्यवधानपर्यन्तं नार्थः किं तूत्तरत्वमात्रम् । नोदात्तस्वरितोदयमित्यत्र निषेधलाभानुरोधेन तदुत्तरत्र अअ इत्यतः प्रागिय नवसूत्रीति फलितोर्थः । तेनाष्टमिकस्यापि स्वरितस्येदं विभागकथनम्, न्यर्१ग्नि, येर२राः । उत्तरत्राप्युत्कर्षस्य प्रयोजनं तत्तत्सूत्रे वक्ष्यामः । उत्कर्षे लिङ्गं तु देवब्रह्मणोरिति सूत्रम् । नह्युत्कर्षं विना देवब्रह्मणो स्वरितो लभ्यते त्रिपादीस्थत्वेनासिद्धत्वात् । ततः स्वरितात्परमिदङ्काण्डमिति स्थितम् ॥

एकश्रुतिदूरात्संबुद्धौ । सम्बुद्धिः सम्बोधना अन्तर्भावितण्यर्थाद् बुधेः क्तिन् । दूरत्वं च प्राकृतप्रयत्नाधिकयत्नसापेक्षोच्चार-

णवत्त्वम् । दूरादनुप्रेयतया बोधनायां करणीभूतं वाक्यमेकश्रुतिः स्यात् । आगच्छ भो माणवक देवदत्ता ३ । स्वराणामविभागेनावस्थानमेकश्रुतिः । अन्त्यस्य तु वाक्यस्यटेरिति प्लुतेनापवादत्वादेकश्रुतिर्बाध्यते । एकश्रुतिप्लुताभ्यामवयवभेदेन वाक्ये समुच्चिताभ्यां दूरात्सम्बोधना द्योत्यते । दूरात्किम् । त्रैस्वर्यमेव । तत्राङुदात्त उपसर्गाश्चाभिवर्जमिति फिट्सूत्रात् । गच्छेति तिङ्निघातः । भोशब्दो निपातत्वादाद्युदात्तः शेषयोरामन्त्रितनिघातः । एकवचनंसम्बुद्धिरिति कृत्रिमा सम्बुद्धिर्नेह गृह्यते । दूरादित्यपादानकारकान्वयाय क्रियाया एवाकाङ्क्षितत्वात् । तेन आगच्छत ब्राह्मणा इत्यादावपि भवति ॥

यज्ञकर्मण्यजपन्यूङ्खसामसु ॥ यज्ञक्रियायां मन्त्रएकश्रुतिः स्यात् जपादीन्वर्जयित्वा । अग्निर्मूर्द्धा दिवःककुत्पतिः पृथिव्या अयम् । अपांरेतांसि जिन्वतोम् । यज्ञकर्मणीत्युक्ते स्वाधायकाले त्रैस्वर्यमेव । अजपेत्यादि किम् । ममाग्नेवर्चोविहवेष्वस्तु । जपो नाम उपांशुप्रयोगो यथा जले निमग्नस्येत्याहुः । युक्तं चैतत, जप मानसे चेति धातोर्व्यधजपोरनुपसर्गे इत्यपि जपशब्दनिष्पत्तेः । रूढश्चायमकरणमन्त्रेषु यत्रजपतीति कल्पसूत्रकृतां व्यवहारः । अत एव याजुपत्वादुपांशुप्रयुज्यमानानामपि इषेत्वेत्यादीनां जपत्वाभावादेकश्रुतिर्भवत्येव । शाखाच्छेदनादिकं प्रति तेषां करणत्वात् । अकरणीभूतो मन्त्र इत्यन्ये । न्यूङ्खानाम षोडश ओकाराः तेषु प्रथमसप्तमत्रयोदशास्त्रय उदात्ताः त्रिमात्राश्च । इतरे त्रयोदशानुदात्ता अर्धोकारा । एतच्चाश्वलायनेन चतुर्थेहनीति खण्डे स्फुटीकृतम् । वृत्तौ तु षडोङ्कारा इति प्रायिकः पाठः तत्र षट्त्वे मान्तत्त्वे च मूलान्तरं मृग्यम् । गीतिषु सामाख्येति जैमिनिः । एविश्वं समत्रिण दह । विश्वमत्रिणं पाप्मानं सन्दहेति सम्बन्ध ।

एशब्दो गीतिपूरणः । निपात इत्यन्ये ।

उच्चैस्तरां वा वषट्कारः । यज्ञकर्मणि वषट्कार उच्चैस्तरां वा स्यादेकश्रुतिर्वा । वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते तुल्यार्थत्वात् । द्वावपि हि देवतासम्प्रदानस्य दानस्य द्योतकौ । वौषडित्येव तु नोक्तम् । प्रतिपत्तिलाघवेपि मात्राधिक्यात् । कारग्रहणं ज्ञापकं समुदायादपि कारप्रत्ययो भवतीति तेन एवकार इत्यादि सिद्धम् । उच्चैःशब्दोधिकरणप्रधानो तद्विशिष्टभवनक्रियायां वर्तते । तेन क्रियाप्रकर्षादामुप्रत्ययः । उदात्ततरो भवतीति फलितोर्थः । ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेरिति सूत्रेण वौषट्शब्दस्यादेः प्लुत उदात्तो विहितस्तदपेक्षया अयमुदात्ततरोन्त्यस्य विधीयते । द्वयोरप्ययमुदात्ततर इत्येके । तदा याज्यान्तापेक्षः प्रकर्षः । अन्ये तु स्वार्थिकस्तरबित्याहुः । तत्रोदात्तमात्रं प्रथमस्य सिद्धं द्वितीयस्यानेन विधीयते । अत्र प्रकर्षविवक्षापक्ष एव प्रबलः । वषट्कारोन्त्यः सर्वेभ्यश्चोच्चैस्तरां बलीयान् याज्याया इति सूत्रितत्वात् । सोमस्याग्ने वीही वौषट् ॥

विभाषा छन्दसि ॥ छन्दसि एकश्रुतिर्वा स्यात् । पक्षे त्रैस्वर्यम् । सम्प्रदायाद्व्यवस्थितो विकल्पस्तेन बह्वृचानां स्वाध्यायकाले संहितायां त्रैस्वर्यमेव । ब्राह्मणे त्वेकश्रुतिः । शाखान्तरेष्वपि यथासम्प्रदाय व्यवस्था । अत्र तन्त्राद्यावृत्त्यादिना अच्छन्दसीति नञ्प्रश्लेषाद्भाषायामपि ऐच्छिको विकल्पो बोध्यः । *तथा च दाण्डिनायनादिसूत्रे भाष्यम्* । एकश्रुतिर्हि स्वरसर्वनामेत्यादि । अत एवाभियुक्तानां च विरुद्धस्वरकतत्पुरुषबहुव्रीह्याद्याश्रयणेन श्लिष्टकाव्यादिनिर्माणं सङ्गच्छते । अलं बुसानांयातेति, श्वेतो धावती तिच ह्यर्थं वाक्य मिति पस्पशान्ते ।

भाष्यमपि । काव्यप्रकाशेपि वेदइव लोके स्वरो न विशेषा-ध्यवसायहेतुरिति । किमर्थं तर्हि शल्युपोत्तमं विभाषाभाषायामिति सूत्रमिति चेत्, त्रैस्वर्येण प्रक्रमे पाक्षिकानुदात्तलाभायेति गृहाण । वेति प्रकृते विभाषाग्रहणं कुर्वन्सूत्रकारोपि तन्त्रादि-कर्मभिर्मेति । यत्तु वृत्तिकृन्मतं विभाषाग्रहणं यज्ञकर्मणीत्यस्य निवृत्त्यर्थमिति,तच्चिन्त्यम् । छन्दसीत्युक्तेपि तन्निवृत्तिसिद्धेः । अन्यथा पूर्वसूत्रस्य निर्विषयत्वापत्तेः । न च जपादिषु साव-काशस्य परस्य पूर्वापवाद इति वाच्यम् । एवं हि सति परत्रैव जपादिग्रहणं कुर्यात् किं नञा किञ्च छन्दोग्रहणेन । एतेन ऊहितानामच्छन्दस्त्वात्तत्र सावकाशस्य मन्त्रेषु परेण बाधः स्यादिति हरदत्तोक्तं प्रत्युक्तम् । सिद्धान्तेपि अनूहितेषु पर-त्वादस्य प्राप्तिमाशङ्क्य यज्ञकर्मणीति कर्मग्रहणसामर्थ्यात्पूर्व-स्यैव प्रवृत्तिरिति स्वोक्तिविरोधात् । यदपि हरदत्तेनोक्तम्, जपादिपर्युदासेन मन्त्राणामेव ग्रहणमिति पक्षे विभाषाग्रहणं व्यर्थं स्यादिति । तदपि इन्द्रशत्रुप्रस्तावे दूषितमस्माभिः । य दपीह वृत्तिकृता अग्निमीळइत्याद्यप्येकश्रुतावुदाहृत तत्सकला-व्यापकसम्प्रदायविरुद्धं, छन्दोग्रहणवैयर्थ्यापादकञ्च । छन्दसि व्यवस्थितो ऽन्यत्रैच्छिक इति विकल्पयोर्वैषम्यं सूचयितुं हि तत् । न च लोके विकल्पस्य वृत्तिकृतानुक्तत्वादसाम्प्रदा-यिकत्वं वाच्यम् । भाष्यादिसम्मतेरुक्तत्वात् श्वेतइत्यादेर्वृत्तिकृ तापि तत्रतत्रोदाहृतत्वाच्च । इत इत्यस्य ह्रुडिदमित्यन्तोदा त्तता श्वेत इति तु एकोदात्तमिति कथं स्वरानुसरणे तन्त्रं स्या दिति दिक् ॥

न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥ सुब्रह्मण्याख्ये नि दे यज्ञकर्मणीति विभाषाछन्दसीति च प्राप्ता एकश्रुतिर्न स्

स्वरितस्योदात्तश्च स्यात् । निगराद्ग्यतइति निगदः । परम त्यायनार्थमुच्चैः पठ्यमानः पादबन्धरहितो यजुर्मन्त्रविशेषः । अपादबन्धे हि गदिर्वर्त्तते ग्ग्यमिति, नौगदनदेति कर्मण्य प्।सुब्रह्मण्याशब्दो परि क्तस्त्रालिङ्ग एव तद्वति निगदे निरूढः। सुब्रह्मण्योम् इन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्व-स्यमेने गौरावस्कन्दिन्नहल्यायै जार कौशिक ब्राह्मण गौतमब्रुवाण श्वः सुत्यामागच्छ मघवन्।सुब्रह्मणि साधुरिति यत्। तिस्रा त् स्वरितः तस्य टापा सहैकादेशः स्वरितानुदात्तयोरान्तर्या-त्स्वारितः । ततो निपातेन ओंशब्देन ओमाङोश्चेत्युदात्तस्व-रितयोरेकादेशः स्वरित एव। एकादेशउदात्तेनोदात्त इत्युदात्त विधिस्तु नेह प्रवर्त्तते अनुदात्तस्येत्यनुवृत्तेः। ततः स्वरितस्य तूदात्त इति प्रकृतसूत्रेणैवोदात्त इति वृत्तिकारकैयटहरदत्ताद-यः । वस्तुतस्तु नेदं युक्तम्। एकादेशउदात्तेनेत्यत्रानुदात्तानुवृत्तौ प्रमाणाभावात्। कावरम्मरुत इत्यत्रोदात्तपाठाच्च । अत एव प्रातिशाख्ये उदात्तवत्येकीभावे उदात्तं सन्ध्यमक्षरमनुदात्तोदये पुनः स्वरितं स्वारितोपधे इत्युक्तम् । इह हि पूर्वार्द्धे अनुदा-त्तग्रहणमकुर्वत उत्तरत्र च कुर्वत पुनःशब्देन पूर्वान्वयभ्रमं वा-रयत स्पष्ट एवोक्त आशयः। यत्तु तस्यादित इति सूत्रे स्वरि-तोदात्तार्थञ्चेति वार्त्तिके यः सिद्ध स्वरितः सुब्रह्मण्योम् इति भाष्यं, तत्प्रौढिवादमात्रं निष्कर्षे तु देवब्रह्मणोरितिवत् स्वरित स्यतूदात्त इत्यपि नवसूत्र्युत्कर्षज्ञापकमेवेत्यवधेयम्। इन्द्रेत्यामन्त्रि तमाद्युदात्तम्। आष्टमिको निघातस्तु भिन्नवाक्यत्वान्न भवति। द्वितीयो वर्णोनुदात्तः। उदात्तादनुदात्तस्य स्वरित तस्यानेनो-दात्तः । न चास्मिन् कर्त्तव्ये स्वरितस्यासिद्धत्वम् । एत-त्काण्डमुत्कृष्यतइत्युक्तत्वात् । अत एवास्मिन्नुदात्ते कृते शेष

निघ्नातोपि न । यथोद्देशपक्षेप्यनुदात्तपरिभाषायां कर्तव्यायामसिद्धत्वेन वर्ज्यमानाभावात् । तेन द्वावप्युदात्तौ । आद्युदात्तः तत. परस्योदात्तादनुदात्तस्य स्वरित इति स्वरितस्यानेनोदात्तः। छकाराकारोनुदात्तः । न च तस्योदात्तादनुदात्तस्येति स्वरितः शंक्य. । प्रकरणोत्कर्षेणास्यासिद्धत्वात् । हरिवआगच्छेत्युक्तप्रक्रियया चत्वार उदात्ताः । वकारच्छकारावनुदात्तौ । मेधातिथेरिति षष्ठ्यन्तस्य पराङ्गवद्भावः । आमन्त्रिताद्युदात्तः । धाशब्दस्योदात्तादिति स्वरितत्वे ऽनेनोदात्तः । ततश्चत्वारोनुदात्ताः वृषेति पूर्ववद् द्वावुदात्तौ पश्चानुदात्ताः । इत्याधीवतमिति अददाअर्भामिति च ऋड्यन्त्रावत्रानुसन्धेयौ । तेन पराङ्गवद्भावउपजीव्यं सामर्थ्यं स्फुटीभवति । गौरेत्यत्र गौरपदवस्कन्दतीति विग्रह. । सगो गौरो यथा पिबेति मन्त्रवर्णात् । पूर्ववद् द्वावुदात्तौ ततस्त्रयोनुदात्ताः । अहेत्युदात्तौ । चत्वारोनुदात्ताः । कौशीत्युदात्तौ । चत्वारोनुदात्ताः । गौतेत्युदात्तौ । चत्वारोनुदात्ताः । श्व इत्युदात्तम् । सुत्यामित्यन्तोदात्तम् । संज्ञायां समजेति क्यपो विधाने उदात्त इत्यनुवृत्तेः । आगोति द्वावुदात्तौ चत्वारोनुदात्ता. । अत्र वार्त्तिकानि । असावित्यन्तः । तस्मिन्नेव निगदे प्रथमान्तस्यान्त उदात्तः स्यात् । गार्ग्यो यजते । त्रिस्वरेण प्राप्त आद्युदात्तोनेन बाध्यते । अमुष्येत्यन्तः । षष्ठ्यन्तस्यापि प्राग्वत् । दाक्षेः पिता यजते । स्यान्तस्योपोत्तमं च । चादन्तः । तेन द्वावुदात्तौ । गार्ग्यस्य पिता यजते । वा नामधेयस्य । स्यान्तस्य नामधेयस्य उपोत्तममुदात्तं वा स्यात् । देवदत्तस्य पिता यजते ॥

देवब्रह्मणोरनुदात्तः ॥ स्वरितस्य तूदात्त इति पूर्वसूत्रशेषस्यायमपवादः । देवब्रह्मणोः स्वरितस्यानुदात्तः स्यात् सु-

ब्रह्मण्यायाम् । देवा ब्रह्माण आगच्छत । द्वयोरप्यामन्त्रिताद्युदात्तत्वे शेषनिघाते चोदात्तादनुदात्तस्य स्वरितः । तस्यानेनानुदात्तः । द्वितीयस्य आष्टमिको निघातस्तु न भवति आमन्त्रितं पूर्वमविद्यमानवदिति पदात्परत्वाभावात् । ततः प्राचीनपदस्य तु भिन्नवाक्यस्थत्वात् । ये तु देवा ब्रह्माण इति सामानाधिकरण्येन व्याचक्षते । तन्मते विभाषितं विशेषवचने बहुवचनमिति पक्षे विद्यमानतया द्वितीयस्य निघातः । प्रकृतसूत्रेण स्वरितनिघातस्तु वकारस्यैव । तथा च भाष्यं, देवब्रह्मणोरनुदात्तत्वमेके इच्छन्ति । देवा ब्रह्माणः इति द्विः पाठः । उदात्तौ द्वावेको वेति विकल्पाभिप्रायेण । तत्र द्वितीयपक्षे प्रकृतसूत्रे ब्रह्मग्रहणं न कर्तव्यम् ॥

स्वरितात्संहितायामनुदात्तानाम् ॥ स्वरितात्परेषामनुदात्तानामेकश्रुतिः स्यात्संहितायाम् । इम मे गङ्गे यमुने सरस्वति । अनुदात्तानामिति जातौ बहुवचनम् । तेनैकस्य द्वयोश्च भवत्येव । संहिताग्रहणं ज्ञापकमन्यत्र पञ्चमीनिर्देशे कालो न व्यवधायक इति तेन तिङ्ङतिङ इति निघातः पदपादेपि भवति । अग्निमीळे,पुरोहितमित्यादौ त्ववग्रहेपि भवत्येकश्रुतिः । यथा सन्धीयमानानामित्यतिदेशात् । इतिशब्दात्परस्य तु पुरुहूत इति पुरुहूत इत्यादौ न भवति परिग्रहे त्वनार्षान्तादिति प्रातिशाख्ये विशेषवचनात् । एवमन्वेतवाइत्यादावपि । पद्यर्दीस्तु द्व्युदात्तानामिति निषेधादिति दिक् ॥

उदात्तस्वरितपरस्य सन्नतरः ॥ उदात्तस्वरितौ परौ यस्मात्तथाभूतस्यानुदात्तस्य अनुदात्ततर स्यात् । अग्निम् । कन्या । स्यादेतत् । इमं मे इति मंत्रे शुतुद्रि शब्दस्य पादादित्वेन निघाताभावादाद्युदात्ततया तस्मिन्परे सरस्वतीतीकारस्य

सन्नतर इष्यते एकश्रुतिरेव तु प्राप्नोति । नवसूत्र्या उत्कर्षेणासिद्धतया सन्नतरायोगात् । उक्तं हि । पूर्वत्रासिद्धे नास्ति विप्रतिषेधो ऽभावादुत्तरस्येति । सत्यम् । नमुने इत्यत्र नेति योगविभागान्न दोषः।देवदत्तन्यङ्ङित्यत्र तु न्यधीचेति पूर्वपदप्रकृतिस्वरे उदात्तस्वरितयोर्यण इत्यन्यस्यकारस्य स्वरितः पूर्वस्य सन्नतरं प्रति नासिद्ध' । प्रकरणे उत्कर्षात् ॥

स्वरसूत्रप्रसङ्गात्फिट्सूत्राणि व्याख्यायन्ते ॥

फिषोन्त उदात्तः ॥ फिष् इति प्रातिपदिकस्य प्राचां संज्ञा। फिषोन्त उदात्तः स्यात् । उच्चैः॥

पाटलापालङ्काम्बासागरार्थानाम् ॥ एतदर्थानामन्त उदात्त स्यात् । पाटला । लघावन्त इति प्राप्ते । अपालङ्कः वृक्षविशेषः । इहापि प्राग्वत् । अम्बार्थ., माता। उनर्वन्नन्तानामित्याद्युदात्ते प्राप्ते । सागरः समुद्रः, लघावन्तइति प्राप्ते ॥

गेहार्थानामस्त्रियाम् ॥ गेहं गृहम् । नब्विषयस्येति प्राप्ते। अस्त्रियां किम् । शाला। अत एव पर्युदासाज्ज्ञापकाच्छालाशब्द आद्युदात्तः ॥

गुदस्य च ॥ अन्त उदात्तः स्यान्न तु स्त्रियाम् । गुदम् । अस्त्रियां किम् । आन्त्रेभ्यस्ते गुदाभ्यः । स्वाङ्गशिटामदन्तानामित्यन्तरङ्गमाद्युदात्तत्वम् । ततष्टाप् ॥

ध्यपूर्वस्य स्त्रीविषयस्य ॥ नित्यस्त्रीलिङ्गस्य धकारयकारपूर्वो योन्त्याच् स उदात्तः । अन्तर्धा । स्त्रीविषयवर्णनाम्नामिति प्राप्ते । छाया। माया। जाया। यान्तस्यान्त्यात्पूर्वमित्याद्युदात्तत्वे प्राप्ते । स्त्रीति किम् । वाह्यम् । वहिपष्टिलोपो यञ् चेति यञन्तरादाद्युदात्तत्वम्।विषयग्रहणं किम् ।इभ्या क्षत्रिया। यतोनाव इत्याद्युदात्त इभ्यशब्दः । क्षत्रियशब्दस्तु यान्तस्यान्त्यात्पूर्वमि-

ति मध्योदात्तः ॥

खान्तस्याश्मादेः ॥ नखम् । उखा । सुखम् । दुःखम् । नखस्य स्वाङ्गशिटामित्याद्युदात्ते प्राप्ते । उखानाम यवाग्वादि पाकार्थं याज्ञिकैर्निर्मितो भाण्डविशेषः । तस्य कृत्रिमत्वात् खय्युवर्णकृत्रिमाख्याचेदित्युवर्णस्योदात्तत्वे प्राप्ते । सुखदुःखयोर्नञ्विषयस्येति प्राप्ते । अश्मादेः किम् । शिखा मुखम् । मुखस्य स्वाङ्गशिटामिति नञ्विषयस्येति वा आद्युदात्तत्वं शिखायास्तु दीर्घान्ततया स्वाङ्गशिटामित्यस्याप्राप्तावपि अश्मादेरिति पर्युदासेनाद्युदात्तत्वं ज्ञाप्यते । तथा च शीङ्‌ खो निद्रुस्वश्चेति उणादिषु नित्त्वमुक्तम् । वस्तुतस्तु तदेव शरणम् । शङ्खो निधौ ललाटास्थ्नीति कोशादस्थिवाचकस्य स्वाङ्गशिटामित्याद्युदात्तस्याव्याप्त्या चरितार्थस्याश्मादेरित्यस्य ज्ञापकत्वायोगात् ॥

हिष्ठवत्सरतिशत्थान्तानाम् ॥ एषामन्त उदात्तः स्यात् । अतिशयेन बहुलो बंहिष्ठः । नित्त्वादाद्युदात्ते प्राप्ते । बंहिष्ठैरश्वैः सुवृता रथेन, पद्बंहिष्ठं नातिविधे इत्यादौ व्यत्ययादाद्युदात्तः । संवत्सरः । अव्ययपूर्वपदप्रकृतिस्वरो बाध्यते । सप्ततिः । अशीतिः । लघावन्ते इति प्राप्ते । चत्वारिंशत् । इहापि प्राग्वत् । अभ्युर्णोनामप्रभृत्यस्यायो । अव्ययपूर्वपदप्रकृतिस्वरोत्र बाध्यते ॥

दक्षिणस्य साधौ ॥ अन्त उदात्तः स्यात् । साधौ किम् । व्यवस्थायां सर्वनामतया स्वाङ्गशिटामित्याद्युदात्तो यथा स्यात् । अर्थान्तरे तु लघावन्तइति गुरुरुदात्तः । दक्षिणः सरलोदारपरच्छन्दानुवर्तिष्विति कोशः ॥

स्वाङ्गाख्यायामादिर्वा ॥ इह दक्षिणस्याद्यन्तौ पर्यायेणो-

दात्तौ स्त । दक्षिणो बाहुः । आख्याग्रहणं किम् । मत्यङ्मुखमासीनस्य वामपाणिर्दक्षिणो भवति ॥

छन्दसि च ॥ अस्वाङ्गार्थमिदम् । दक्षिणः । इह पर्यायेणाद्यन्तावुदात्तौ ॥

कृष्णस्यामृगाख्या चेत् ॥ वर्णानान्तणेत्याद्युदात्ते प्राप्तेऽन्तोदात्तो विधीयते । कृष्णानां व्रीहीणाम् । कृष्णो नोनाव वृषभः । मृगाख्यायान्तु । कृष्णो रात्र्यै ॥

वा नामधेयस्य ॥ कृष्णस्येत्येव । अयं वा कृष्णो अश्विना । कृष्ण ऋषिः ॥

शुक्लगौरयोरादिः ॥ नित्यमुदात्तः स्यादित्येके । वेत्यनुवर्त्ततइति तु युक्तम् । सरो गौरो यथा पिबेत्यत्रान्तोदात्तदर्शनात् ॥

अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः ॥ अङ्गुष्ठस्य स्वाङ्गानामकुर्वादीनामिति द्वितीयस्योदात्तत्वे प्राप्तेन्तोदात्तार्थ आरम्भः । वशाग्रहणं नियमार्थम् । छन्दस्येवेति । तेन लोके आद्युदात्तत्वेत्याहुः ॥

पृष्ठस्य च ॥ छन्दस्यन्त उदात्तः स्यात् वा भाषायाम् । भाषामात्रविषयं सूत्रमिदं प्रागेकादशभ्योच्छन्दसि ह्यत्युपोत्तमं विभाषाभाषायामित्यादिवत् । पृष्ठम् ॥

अर्जुनस्य तृणाख्या चेत् ॥ उनर्वन्नन्तानामित्याद्युदात्तस्यापवादः ॥

अर्यस्य स्वाम्याख्या चेत् ॥ यान्तस्यान्त्यात्पूर्वमिति यतोनाव इति वाद्युदात्ते प्राप्ते वचनम् ॥

आशाया अदिगाख्या चेत् ॥ दिगाख्याव्यावृत्त्यर्थमिदम् । अत एव ज्ञापकाद्दिक्पर्यायस्याद्युदात्तता । इन्द्र आशाभ्यस्परि ॥

नक्षत्राणामाब्विषयाणाम् ॥ अन्त उदात्तः स्यात् । आश्लेषानुराधादीनां लघावन्तइति प्राप्ते ज्येष्ठाश्रविष्ठाधनिष्ठानां इष्ठन्नन्तत्वेनाद्युदात्ते प्राप्ते वचनम् ॥

न कुपूर्वस्य कृत्तिकाख्या चेत् ॥ अन्त उदात्तो न । कृत्तिका नक्षत्रम् । केचित्तु कुपूर्वो य आप् तद्विषयाणामिति व्याख्याय आर्यिका बहुलिकेत्यत्राप्यन्तोदात्तो नेत्याहुः ॥

घृतादीनाञ्च ॥ अन्त उदात्तः । घृतं मिमिक्षे । आकृतिगणोयम् ॥

ज्येष्ठकनिष्ठयोर्वयसि ॥ अन्त उदात्तः स्यात् । ज्येष्ठ आह चमसा । कनिष्ठ आह चतुरः । वयसि किम् ।ज्येष्ठः, श्रेष्ठः । कनिष्ठोल्पिष्ठः । इह नित्त्वादाद्युदात्त एव ॥

बिल्वतिष्ययोः स्वरितो वा ॥ अनयोरन्तः स्वरितो वा स्यात् । पक्षे उदात्तः ॥

इति फिट्सूत्रेषु प्रथमः पादः ॥

अथादिः प्राक् शकटे ॥ अधिकारोयम् । शकटिशकट्योरिति यावत् ॥

ह्रस्वान्तस्य स्त्रीविषयस्य ॥ आदिरुदात्तः स्यात् । बलिः तनु ॥

नब्विषयस्यानिसन्तस्य ॥ वनेन वा यः । इसन्तस्य तु सर्पिः । नब् नपुंसकम् ॥

तृणधान्यानाञ्च द्व्यषाम् ॥ द्व्यचामित्यर्थः । कुशाः । काशाः । माषाः । तिलाः । बह्वचान्तु गोधूमाः ॥

त्रः संख्यायाः ॥ पञ्च चतस्रः ॥

स्वाङ्गशिटामदन्तानाम् ॥ शिट् सर्वनाम । कर्णः । ओष्ठः । विश्वः ॥

प्राणिनां कुपूर्वम् ॥ कवर्गात् पूर्वमादिरुदात्तः । काकः, वृ-

कः । शुकेषु मे । माणिनां किम् । उदकम् ॥

खय्युवर्णं कृत्रिमाख्या चेत् ॥ खयि परे पूर्वमादि उवर्णमुदात्तं स्यात् । कन्दुकः ॥

ऊनर्वन्नन्तानाम् ॥ उन, वरुणं वोरिशादसम् ॥ स्वसारं त्वा कृणवै । वन् । पीवानं मेषम् ॥

वर्णानान्तणतिनितान्तानाम् ॥ आदिरुदात्तः । एनः । हरिणः । शितिः । पृश्निः । हरित् ॥

ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये ॥ ऋद्वर्जं ह्रस्वान्तस्यादिभूतं ह्रस्वमुदात्तं स्यात् । मुनिः ॥

अक्षस्यादेवनस्य ॥ आदिरुदात्तः । तस्य नाक्षः । देवने तु अक्षैर्मा दीव्यः ॥

अर्धस्यासमद्योतने ॥ अर्धो ग्रामस्य । समेंशके तु अर्द्धं पिप्पल्याः ॥

पीतद्र्वर्थानाम् ॥ आदिरुदात्तः । पीतद्रुः सरलः ॥

ग्रामादीनाञ्च । ग्रामः ॥ सोमः । यामः ॥

लुबन्तस्योपमेयनामधेयस्य ॥ स्फिगन्तस्येति पाठान्तरम् । स्फिगिति लुपः प्राचां संज्ञा । चञ्चेव चञ्चा ॥

न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम् ॥ एषामुपमेयनाम्नां नादिरुदात्तः । ताल इव तालः । मेरुरिव मेरुः । व्याघ्रः । सिंहः । महिषः ॥

राजविशेषस्य यमन्वा चेत् ॥ यमन्वा वृद्धः । आङ्ग उदाहरणम् । अङ्गाः मत्युदाहरणम् ॥

लघावन्ते द्वयोश्च बव्हषो गुरुः ॥ अन्ते लघौ द्वयोश्च लघ्वोः सतोः बव्हच्कस्य गुरुरुदात्तः । कल्याणः । कोलाहलः । इह गुरूणां मध्ये य आदिरित्यर्थोऽभिमतः । तेन वृषाकपिरि-

त्यत्र व्यपदेशिवद्भावेनादिभूते सिद्धम् । तेन वृषाकप्यग्नीत्या-दिसूत्रस्था वृत्त्यादिग्रन्था न विरुध्यन्ते ॥ क्रीतवत्परिमाणादि-त्यादिसूत्रस्थभाष्यादिग्रन्थाश्च सङ्गच्छन्ते । नन्वेवमप्यन्यतो-ङीषिति सूत्रे सारङ्गकल्मापशब्दौ लघावन्त इत्यादिना मध्यो-दात्ताविति हरदत्तग्रन्थो विरुध्यतइति चेत् । सत्यम् । आ-दिशब्द इह नान्वेतीत्येव सारम् ॥

स्त्रीविषयवर्णाक्षुपूर्वाणाम् ॥ एषां त्रयाणामादिरुदात्तः । स्त्रीविषयः । मल्लिका । वर्णः । श्येनी । हरिणी । अक्षुश-ब्दात् पूर्वोस्त्येपान्तेक्षुपूर्वा । तरक्षुः ॥

शकुनीनाञ्च लघुपूर्वम् ॥ पूर्वं लघूदात्तं स्यात् । कुक्कुटः । तित्तिरिः ॥

नर्तुप्राण्याख्यायाम् ॥ यथालक्षणं प्राप्तमुदात्तत्वं न । वसन्तः । कृकलासः ॥

धान्यानां च वृद्धक्षान्तानाम् ॥ आदिरुदात्तः । कान्तः । श्यामाकाः । षान्तः । माषाः ॥

जनपदशब्दानामपान्तानाम् ॥ केकयः ॥

हयादिनामसंयुक्तलान्तानामन्तः पूर्वं वा ॥ हयिति हलः संज्ञा । पललम् । शललम् । हयादीनां किम् । एकल । असयुक्ते-ति किम् । मल्लः ॥

इगन्तानाञ्च द्व्यषाम् ॥ आदिरुदात्तः । कृषिः ॥

इति द्वितीय पादः ॥

अथ द्वितीयं प्रागीषात् ॥ ईषान्तस्य हलादेरित्यतः प्राक् द्वितीयाधिकारः ॥

त्र्यचां प्राङ् मकरात् ॥ मकरवरूढेरयतः प्राक् त्र्यचामि-त्यधिकारः ॥

स्वाङ्गानामकुर्वादीनाम् ॥ कवर्गरेफवकारादीन्वर्जयित्वा त्र्यचां स्वाङ्गानां द्वितीयमुदात्तम् ॥ ललाटम्। कुर्वादीनान्तु, कपोलः। रसना। वदनम् ॥

मादीनाञ्च ॥ त्र्यचां द्वितीयमुदात्तम्। मलयः। मकरः ॥

शादीनां शाकानाम् ॥ शीतन्या। शतपुष्पा ॥

पान्तानां गुर्वादीनाम् ॥ पादपः। आतपः। लघ्वादीनान्तु। अनूपम्। द्व्यचान्तु नीपम् ॥

युतान्यण्यन्तानाम् ॥ युतादित्रितयान्तानां द्वितीयमुदात्तम्। युत, अयुतम्। अनि, धमनिः। अणि, विपणिः ॥

मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा ॥ एषामादिर्द्वितीयो वोदात्तः।मकरः। वरूढ इत्यादि ॥

छन्दसि च ॥ अमकराद्यर्थ आरम्भः। लक्ष्यानुसारादादिर्द्वितीयं वोदात्तं ज्ञेयम् ॥

कर्दमादीनाञ्च ॥ आदिर्द्वितीयं वोदात्तम्। कर्दमः ॥

सुगन्धितेजनस्य ते वा ॥ आदिर्द्वितीयन्तेशब्दश्चेति त्रयः पर्यायेणोदात्ताः। सुगन्धितेजनाः ॥

नपः फलान्तानाम् ॥ आदिर्द्वितीयं वोदात्तम्। राजादनफलम् ॥

यान्तस्यान्त्यात् पूर्वम् ॥ कुलायः ॥

आन्तस्य च नाल्घुनी ॥ नाशब्दो लघु च उदात्ते स्तः। सनाथा सभा ॥

शिशुमारोदुंबरबलीवर्दोष्ट्रारपुरूरवसाञ्च ॥ अन्त्यात् पूर्वमुदात्तं द्वितीयं वा ॥

साङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् ॥ द्वितीयमुदात्तं वा। साङ्काश्यमित्यादि ॥

ईषान्तस्य हयादेरादिर्वा ॥ हयादेर्हलादेः । हलीषा । लाङ्गलीषा ॥

उशीरदाशेरकपालपलालशैवालश्यामाकशरीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम् ॥ एषामादिरुदात्तः स्यात् ॥

महिष्यषाढयोर्जायेष्टकाख्या चेत् ॥ आदिरुदात्तः । महिषी जाया । अषाढा उपधाति ॥

इति तृतीयः पाद ॥

शकटिशकट्योरक्षरमक्षर पर्यायेण ॥ उदात्तम् ॥ शकटिः । शकटी ॥

गोष्ठजस्य ब्राह्मणनामधेयस्य ॥ अक्षरमक्षरं क्रमेणोदात्तम । गोष्ठजो ब्राह्मणः । अन्यत्र गोष्ठजः पशुः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः ॥

पारावतस्योपोत्तमवर्जम् ॥ शेषं क्रमेणोदात्तम् । पारावतः ॥

धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानामधूजलस्थानाम् ॥ एषाञ्चतुर्णा धूमभृतींश्चतुरो वर्जयित्वा शिष्टानि क्रमेणोदात्तानि । धूम्रजानुः । मुञ्जकेशः । कालवालः । स्थालीपाकः ॥

कपिकेशहरिकेशयोश्छन्दसि । कपिकेश । हरिकेशः ॥

न्यङ्स्वरौ स्वरितौ ॥ स्पष्टम् । न्यङ्ङुत्तानः । व्यचक्षयत्स्वः ॥

न्यर्बुदव्यल्कशयोरादिः ॥ स्वरितः स्यात् ॥

तिल्यशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः ॥ स्वरितः स्यात् । तिलानां भवनं क्षेत्रं तिल्यम् । यतोनाव इति प्राप्ते ॥

बिल्वभक्ष्यवीर्याणिच्छन्दसि ॥ अन्तस्वरितानि ॥

त्वत्त्वसमसिमेत्यनुच्चानि ॥ स्तरीरुत्वत् । उत त्वः पश्यन् । नभन्तामन्यके समे । सिमस्मै ॥

सिमस्याथर्वणेन्त उदात्त ॥ आथर्वणइति प्रायिकम्। तत्र दृष्टस्येत्येवंपरं वा। तेन वासस्तनुते सिमस्मा इत्यृग्वेदेपि भवत्येव ॥

निपाता आद्युदात्ताः ॥ स्वाहा ॥

उपसर्गाश्चाभिवर्जम् ॥

एवादीनामन्तः ॥ एवमादीनामिति पाठान्तरम्। एव एवं नूनम्। सह। ते पुत्र सूरिभिः सह। पष्ठस्य तृतीये सहस्यस इति प्रकरणे सहशब्द आद्युदात्त इति तु प्राञ्चः। तच्चिन्त्यम् ॥

वाचादीनामुभावुदात्तौ ॥ उभौग्रहणमनुदात्तंपदमेकवर्जमित्यस्य बाधाय ॥

चादयोनुदात्ताः ॥ स्पष्टम् ॥

यथेति पादान्ते ॥ तन्नेमिमृभवो यथा। पादान्ते किम्। यथा नो अदितिः करत् ॥

प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः ॥ पटुपटुः।

शेषं सर्वमनुदात्तम् ॥ शेषं नित्यादिद्विरुक्तस्य परमित्यर्थः। प्रप्रायम्। दिवेदिवे ॥

इति शान्तनवाचार्यप्रणीतेषु फिट्सूत्रेषु तुरीयः पदम् ॥ प्रासङ्गिकं समाप्य प्रकृतमनुसरामः ॥

अपृक्त एकाल् प्रत्ययः ॥ एकाल् प्रत्ययो यः सोपृक्तसंज्ञः स्यात्। संज्ञाप्रदेशा वेरपृक्तस्येत्यादयः। एकेति व्यर्थम्। निपातएकाजित्येकग्रहणेन वर्णग्रहणेजातिग्रहणमिति ज्ञापनेपि अल्ग्रहणसामर्थ्यादेवेह व्यक्तिपरत्वात्। किञ्च सूत्रमेवेदं व्यर्थम्। अपृक्तप्रदेशेष्वल्ग्रहणेनैव सिद्धेः। न च सुरां सुनोतीति सुरासुत् तमाचक्षाणः सुरा इत्यत्र धात्ववयवस्य सस्य लोपः स्यादिति वाच्यम्। प्रत्ययाप्रत्ययपरिभाषया गतार्थत्वात्। विभक्तिसाहचर्याच्च। यथासूत्रारम्भेपि तिसाहचर्यात्सेरपि तिङ एव ग्र-

हणादमैत्सीदिति सिचो न भवति। वेरपृक्तस्येत्यत्र तु वकारेकारयोरन्यतरमनुनासिकमाश्रित्यापृक्तग्रहणं मत्वाख्यास्यत एव ॥

तत्पुरुषः समानाधिकरणः कर्मधारयः॥ समानाधिकरणस्तत्पुरुषः कर्मधारयसंज्ञः स्यात्। संज्ञाप्रदेशाः पुंवत्कर्मधारयेत्यादयः। समानाधिकरणे पदे आश्रयत्वेन स्तोऽस्येत्यर्शआद्यच्। यदि तु पूर्वकालैकेति प्रकरणस्यान्ते कर्मधारयश्चेति कृत्वा तत्पुरुषानुवृत्त्या पर्याये लब्धे चकाराद्द्वितीश्रेत्यादावपि समुच्चयः साध्यते तदेदं सूत्रं शक्यमकर्तुम् ॥

प्रथमानिर्दिष्टं समास उपसर्जनम् ॥ समासविधायकं शास्त्रं समासः। तादर्थ्यात्। समस्यतेऽनेनेति व्युत्पत्त्या वा। तत्र प्रथमया यन्निर्दिश्यते तदुपसर्जनं स्यात्। द्वितीयाश्रितादिभिः कृष्णाश्रित। महासंज्ञाकरणमन्वर्थसंज्ञार्थम्। लोके ह्यप्रधानमुपसर्जनमाहुः। तेन राज्ञः कुमार्या राजकुमार्या इत्यत्रोभयोः षष्ठीति सूत्रे प्रथमानिर्दिष्टत्वाविशेषेपि राजैवोपसर्जनं न तु कुमारी। तेन कुमारीशब्दस्य न पूर्वनिपातो न वा गोस्त्रियोरिति ह्रस्वः। न च राज्ञः कुमारीति प्रथमान्तेनैव विग्रह इति भ्रमितव्यम्। मूलाभावात्। तथा च तत्पुरुषेतुल्यार्थतृतीयासप्तमीति सूत्रे परमे कारके परमेण कारकेणेत्यादावतिप्रसङ्गमाशंक्य लक्षणप्रतिपदोक्तपरिभाषाबलेन समाहितं भाष्ये। अनेकमन्यपदार्थइति सूत्रेपि भाष्यकैयटयोः स्पष्टमेतत्। प्रथमान्तेनैव विग्रह इति नियमो नास्तीति परिनिष्ठितविभक्त्यैव विग्रहस्योचितत्त्वाच्च। अत एव पूरणगुणेति समानाधिकरणेन षष्ठीसमासनिषेधोपि सङ्गच्छते। अत एव चैकविभक्तिचापूर्वनिपातइत्यस्य विषयलाभः। स्यादेतत्। उक्तरीत्या सूत्रभाष्यादिस्वरसान्न्यायाच्च द्वितीयाद्यन्ततया परिनिष्ठितस्य प्रथमान्तेन विग्रहो

नास्तीत्येवोच्यताम् तत्किमुच्यते नियमो नास्तीति। सत्यम्। अस्ति तत्राप्यालम्बनम्। तथाहि। राजकुमार्या इत्यादेः परिनिष्ठितस्यार्थप्रदर्शनपरे लौकिके विग्रहवाक्ये प्रकृतिभागमात्रं व्याख्येय न तु समासोत्तरविभक्तिरपि। नहि षष्ठी षष्ठ्या व्याख्येया किन्त्वनुवादमात्रं तत्। तत्र प्रातिपदिकार्थमात्रव्याचिख्यासायां प्रथमया विग्रहः केन वार्यते। अत एव हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणीमित्यादिप्रयोगाः सङ्गच्छन्ते। मातेति प्रथमान्तेन समासे बाधकाभावात्। अत एव पचतीति पाचकस्तं पाचकमित्याद्यपि सम्यगेवेति दिक्। तस्माद् द्वितीयाद्यन्तस्य परिनिष्ठितस्य प्रथमया परिनिष्ठितया वा विग्रहो न तु तदुभयभिन्नयेति निष्कर्षः। स्यादेतत्। यद्यन्वर्थसंज्ञेयं याचकवृन्दारको गोगर्भिणीत्यादिषु विशेष्यस्य पूर्वनिपातो न स्यादिति चेत्। वृन्दारकनागकुञ्जरैः पूज्यमानं चतुष्पाद्गोगर्भिण्येत्यादौ विधिवाक्ये प्रथमानिर्देशस्यानन्यार्थत्वाददोष। तस्मात्सति सम्भवे व्यवस्थापकमन्वर्थत्वमिति स्थितम्॥

एकविभक्ति चापूर्वनिपाते॥ अर्थाधिकारादिह समासार्थमलौकिकं विग्रहवाक्यं समासः। तत्र विशेष्यसमर्पके पदे प्रयोगभेदादनेकविभक्तियुक्तेऽपि यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यात्पूर्वनिपातेतरस्मिन्कार्ये। अतिक्रान्तो मालामतिमालः। इहातिक्रान्तमतिक्रान्तेनेत्यादिक्रमेण सकलविभक्तियोगेऽपि मालाशब्दस्य द्वितीयानियमात् संज्ञायां सत्यां गोस्त्रियोरिति ह्रस्व। एवं निष्कौशांबिरित्यादि। एकविभक्तावषष्ठ्यन्तवचनम्। नेह। अर्द्धं पप्पल्या अर्धपिप्पली। नन्वेवं पञ्चखट्वी न सिध्येत्। सत्यम्। अत एव संज्ञापूर्वकतया व्यवस्थितविभाषाश्रयणेन वार्द्धपिप्पलीं साधयित्वा षष्ठ्यन्तेति वार्त्तिकं नारब्धव्यमिति मा-

माणिकाः । वस्तुतस्तु एकदेशिसमासविषयकोयं निषेधः । न चात्र प्रमाणाभावः।पञ्चखट्वीति द्वितीयभाष्यस्य प्रमाणत्वात्॥

इति शब्दकौस्तुभे प्रथमस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ डित्थादीन्यव्युत्पन्नान्युदाहरणम् । अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकम् । यत्तु व्युत्पत्तिपक्षेपि निपातार्थमनुकरणार्थं चेदमिति हरदत्तेनोक्तम् । तन्न । तत्रापि प्रकृत्यादिकल्पनसम्भवादिति बोध्यम् । वस्तुतस्तु बहुपटव इत्याद्यर्थमिदम् । न च तद्धितग्रहणे मत्वर्थलक्षणया निर्वाहः । पचतकीत्यादावतिव्याप्तेः । अव्युत्पत्तिपक्षस्तु कमिग्रहणेन सिद्धे कंसग्रहणेनैव ज्ञाप्यः । ज्ञापिते च तत्राप्यनेनैव संज्ञा सिध्यति । नन्वेतदेव ज्ञापकम् । बहुच्पूर्वे कृतार्थत्वादित्यवधेयम् । अर्थवत्किम् । धनं वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत् । स्यादेतत् । विशिष्टरूपोपादानविषयतया अर्थवत्परिभाषाया इहाप्रवृत्तावपि अधातुरप्रत्यय इति पर्युदासादेव सिद्धम् । न चाधीते यावक इत्यादौ इङ्कनौ निरर्थकावपि धातुप्रत्ययौ स्त इति वाच्यम् । अडादिव्यवस्थायै इङ एवार्थवत्त्वस्वीकारात् । स्वार्थिकानाञ्च प्रकृत्यर्थेनार्थवत्त्वात् । न चेदं कल्पनामात्रमिति वाच्यम् । डित्थादावपि तथात्वात् । उक्तं हि । अर्थवत्ता नोपपद्यते केवलेनावचनात् सिद्धं त्वन्वयव्यतिरेकाभ्यामिति । कल्पिताभ्यामिति हि तदर्थः । वस्तुतः पदस्फोटवाक्यस्फोटयोरेवार्थवत्त्वात् । सत्यम् । उत्तरार्थमर्थवद्ग्रहणं इह तु स्पष्टार्थम् । अधातुः किम् । अहन् । नलोपो मा भूत् । न च सुपोधात्विति धातुग्रहणात् धातोर्नेयं संज्ञेति वाच्यम् । श्येनायते इत्यादौ प्रत्ययान्ते धातुग्रहणस्य चरितार्थत्वात् । अप्रत्ययः किम् । पच-

तीति तिपो मा भूत्। सुपोप्येवम्। न चैवन्तदन्तेषु अतिव्याप्तितादवस्थ्यम्। उत्तरसूत्रे तद्धितग्रहणस्य नियमार्थत्वात्। तद्धितान्तानामेव नत्वन्यप्रत्ययान्तानामिति। न च तत्रापि संज्ञाविधित्वेन तदन्तग्रहणं दुर्लभमिति वाच्यम्। अर्थवदित्यनुवृत्तिसामर्थ्यात्तत्सिद्धेः। प्रशंसायां हि मतुप्। एकार्थीभावेन लौकिकप्रयोगे प्रसिद्धत्वञ्च प्रशंसार्थः। अधातुप्रत्ययाविति सिद्धे नञ्द्वयोपादानं स्पष्टार्थम्। महासंज्ञाकरणं प्राचामनुरोधात्॥

कृत्तद्धितसमासाश्च॥ अर्थवन्त एते प्रातिपदिकसंज्ञाः स्युः। विशेषणसामर्थ्यात्तदन्तविधिः। न हि जहत्स्वार्थायां वृत्तौ कृतान्ताद्धितानां चार्थोस्ति। भूतपूर्वगतिलभ्यस्तु न प्रशस्तः सः। भित्। छित्। अत्राधातुरिति पर्युदासे प्राप्ते कर्त्ता हर्त्ता, अत्र तद्धितान्तानामेवेति नियमेन निरासे प्राप्ते, सन्निहितत्वाच्च कृद्ग्रहणेन प्रागुक्तमेव बाध्यते नतु समासग्रहणकृतो नियमोपि। तेन कृद्ग्रहणपरिभाषानुपस्थानात् मूलकेनोपदंशमिति वाक्यस्य न भवति। ननु बाध्यसामान्यचिन्तायां समासनियमोपि बाध्येत। विशेषचिन्तायां तु मध्येपवादन्यायावताराद्धितनियमोपि न बाध्येतेति चेत्।सत्यम्। आद्ये एवेह पक्षः। न च वाक्येतिप्रसङ्गः। शब्दाधिकारमाश्रित्येहार्थवच्छब्देनैकार्थीभावविवक्षणात्। अतिशये मतुप्स्मरणात्। वक्ष्यमाणरीत्या अप्रत्यय इति निषेधः प्रत्ययान्तपर इति पक्षे तु मध्येपवादन्यायात् सर्वेष्टसिद्धिः। अप्रत्यय इत्यस्य प्रत्याख्यानपक्षेपि पुरस्तादपवादन्यायादिष्टसिद्धिरिति दिक्। तद्धितः।औपगवः। अत्रानेन पूर्वेण वा संज्ञा नियमविधीनां विधिरूपेण निषेधरूपेण वा प्रवृत्तिरिति मतभेदस्योक्तत्वात्। एवं समासेपि। न चासमर्थसमासेषु विध्यर्थं समासग्रहणमिति वा-

वानापन्नसंघातविषयको नियम इत्यपि सुवचं तथापि सरूपसूत्रे समुदायाद्विभक्त्युत्पत्तिरिति ग्रन्थं योजयितुमिदं गौरवमादृतम्। निष्कर्षे तु तथैवास्तु। तथा च तद्धितग्रहणं नियमार्थमेव। भेदसंसर्गद्वारकमर्थवत्त्वमिति कैयटस्याप्ययमेव भाव। भेदे परस्परपरिहारेण प्रयोगे सति यः संसर्गस्तद्द्वारकमित्यर्थात् न तु भेदः संसर्गो वा द्वयं वा वाक्यार्थ इत्याशयेन तद्ग्रन्थः। बहुव्रसमासयोर्वैरूप्यालाभात्। यद्वा। सात्पदाद्योरिति सातिग्रहणात्प्रत्ययो न प्रातिपदिकमिति सिद्धे पूर्वसूत्रस्थं प्रत्ययग्रहणं सामर्थ्यात्तदन्तपरम्। तद्धितग्रहणन्तु विध्यर्थमेव। स्यादेतत्। पक्षत्रयेपि राजपुरुषावित्यादौ पुरुषावित्यादेः संज्ञा दुर्वारेति प्रातिपदिकावयवत्वात्सुपो लुक् स्यादिति चेन्मैवम्। जहत्स्वार्थायामानर्थक्यात्। अजहत्स्वार्थायामपि पूर्वपदविनिर्मुक्तस्य विशिष्टार्थविरहेण तत्सहितस्यैव विशिष्टार्थगमकत्वात्। प्रशंसायां हि मतुबित्युक्तम्। एवं घटपटावित्यादावपि मिलितयोरेव पदयोः सहभूतार्थता। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वाच्च। घटावित्यंशो नार्थवानिति। एतेनासमर्थसमासे दशदाडिमादिवदनर्थके विध्यर्थे समासग्रहणं किं न स्यादिति चोद्यं प्रत्युक्तम्। अर्थवद्ग्रहणस्येहार्थताया एवोक्तत्वादिति दिक्। यदि तु नैयायिकरीत्या अर्थवत्त्वं वृत्तिमत्त्वं तच्च समासस्य नास्तीत्याश्रित्य समासग्रहणं विध्यर्थम्। तद्धितग्रहणमपि तथा। अप्रत्यय इति तु प्रत्ययवारणार्थमित्याश्रीयते तथापि न क्षतिः। तद्धितग्रहणस्य तद्विशिष्टपरतामाश्रित्य बहुपटव इत्यस्य सुसाधत्वात्। किन्त्वस्मिन्पक्षे सिद्धान्तविरोधः मूलकेनोपदंशं पचतकीत्यनातिप्रसङ्गश्चेति यथास्थितमेवास्तु। इह प्रकरणे यथाश्रुताः प्राचां ग्रन्था दुष्टा एवेत्यवधेयम्। नि

पातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या येषां द्योत्योऽप्यर्थो नास्ति तदर्थमिदम् । अवद्यति । अनुक्तसमुच्चयार्थाच्चकारात्सिद्धमिदम् । अनुकरणेषु तु अनुकरणेन सहाभेदविवक्षायामर्थवत्त्वाभावान्न प्रातिपदिकता, भूसत्तायामिति यथा । भेदविवक्षायां तु संज्ञा स्यादेव । भुवोवुगिति यथा । न चाधातुरिति पर्युदासापत्तिः । प्रकृतिवदनुकरणमित्यतिदेशस्यानित्यतयोवंशे प्रवृत्तावपि संज्ञांशे अप्रवृत्तिसम्भवात् । एतच्च ऋलृक्सूत्रे उपपादितम् ॥

ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ क्लीबे प्रातिपदिकस्याजन्तस्य ह्रस्वः स्यात् । श्रीपं कुलम् । प्रातिपदिकग्रहणसामर्थ्यान्नेह । काण्डे । कुड्ये । इह त्वन्तादिवचेत्यतिदेशेनास्ति प्राप्तिः । न च द्विकपक्षे वारिणीइति व्यावर्त्यं कृतार्थतेति वाच्यम् । तत्रापि प्रातिपदिकमित्यस्यानुवृत्त्या सिद्धे सामर्थ्यस्य सुवचत्वात् । लक्ष्यानुरोधेन पक्षान्तरस्यैव सुग्रहत्वाच्च । यद्वा कार्यकालपक्षं प्रत्ययान्तस्य नेति प्रसज्यप्रतिषेधं चाश्रित्य समाधेयम् । न चैवं ब्रह्मबन्धुरित्यत्र स्वादयो न स्युरिति वाच्यम् । लिङ्गविशिष्टपरिभाषया श्वश्रूरित्यत्रेव तत्सिद्धेः ॥

गोस्त्रियोरुपसर्जनस्य ॥ उपसर्जनं यो गोशब्दस्तादृगेव च यस्त्रीप्रत्ययान्तस्तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । चित्रगुः । निष्कौशाम्बिः । उपसर्जनस्य किम् । सुगौः । राजकुमारी । स्त्रीशब्दः स्वर्यते । तेन स्त्र्यधिकारोक्तप्रत्ययग्रहणान्नेह । अतिलक्ष्मीः । अतिश्रीः । कथं गोकुलं राजकुमारीपुत्र इति चेत् । शृणु । उपसर्जनस्य ससंबन्धिकतया यस्य प्रातिपदिकस्य ह्रस्वो विधीयते तदर्थं प्रति यद्युत्तरपदभूतयोर्गोस्त्रियोर्गुणीभावस्तदेदं ह्रस्वत्वम् । न चेह तदस्ति । गोः कुलं

प्रति गुणीभावेपि गां प्रत्यतथात्वात् । कुमार्याश्च पुत्र प्रति गुणीभावेपि राजानं प्रत्यतथात्वात् । शास्त्रीयं चेहोपसर्जनं गृह्यते । कृत्रिमत्वात् । अत एव प्रत्ययमात्रस्य तथात्वासम्भवात्तदन्तलाभ । यदि तु लौकिकमुपसर्जनत्वं गृहीत्वा प्रत्यय एव विशेष्येत तदा हरीतस्याः फलानि हरीतक्य इत्यत्राति व्याप्तिः स्यात् । स्पष्टञ्चेदमुपमानानिसामान्यवचनैरिति सूत्रे भाष्ये । अथ कथं राजकुमारीमतिक्रान्तोतिराजकुमारिरिति । अनुपसर्जने स्त्रीप्रत्यये तदादिनियमो नेत्युक्ततया राजकुमारीशब्दस्य स्त्रीप्रत्ययान्तत्वादित्यवेहि । अतिक्रान्तम्प्रति ह्यसावुपसर्जनं न तु राजानम्प्रतीति विवेकः । अत्रत्यः कैयटस्त्वापातत इत्यवधेयम् । अत्र वार्त्तिकम् । ईयसो-बहुव्रीहौ पुंवद्वचनमिति । ईयसन्ताद्यः स्त्रीप्रत्ययस्तदन्तान्तो यो बहुव्रीहिस्तत्र ह्रस्वो नेत्यर्थः ।गोस्त्रियोरिति ह्रस्वो विहितः। तत्र पुंसि यथा स्त्रीप्रत्ययान्तता नास्ति तथेह बोध्यमित्येवं वचनव्यक्त्या ह्रस्वाभावः पर्यवस्यति । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी । ईयसश्चेति कब्निषेधः । बहुव्रीहौ किम् । अतिश्रेयसि ॥

लुक्तद्धितलुकि ॥ तद्धितलुकि सति उपसर्जनस्त्रीप्रत्ययस्य लुक् स्यात् । लुक् तावत्प्रत्ययस्यैव सम्भवति।न तु तदन्तस्य । अत एवोपसर्जनमिह लौकिकम्, न तु पूर्ववच्छास्त्रीयम् । असम्भवात् । न हि प्रत्ययमात्रं शास्त्रीयमुपसर्जनम् । आमलक्याः फलमामलकम् । नित्यवृद्धशरादिभ्य इति मयटः फले लुक् । ततोनेन गौरादिङीषो लुक् । इह पूर्वसूत्रस्यावकाशो निष्कौशाम्बिः । अस्यावकाश आमलकम् । पञ्च इन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यत्र तु परत्वाल्लुगेव ॥

इद्गोण्याः ॥ गोण्या इत्स्यात्तद्धितलुकि । लुकोपवादः । पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः । दशगोणिः । गोणीशब्दः परिमाणवचन आवपनवचनश्च । तत्राद्यात्प्राग्वतेष्ठञ् । द्वितीयादार्हीयष्ठक् । तयोरध्यर्धेति लुक् ॥

लुपि युक्तवद्व्यक्तिवचने ॥ प्राचामिदं सूत्रं दूषणार्थं पाणिनिरनुवदति । लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालाः क्षत्रियाः पुल्लिङ्गबहुवचनविषयाः । तेषां निवासो जनपदः पञ्चालाः । पञ्चालस्यापत्यानि बहूनि । जनपदशब्दात् क्षत्रियादञ् । ते तद्राजा. । तद्राजस्य बहुषु । ततस्तस्यनिवास इत्यणो जानपदे लुप् । लुपि किम् । लवणस्सूपः । संसृष्टे । लवणाल्लुक् । व्यक्तिवचने किम् । हरीतकी पञ्चाला इत्यादिषु पष्ठ्या अतिदेशो मा भूत् । समासे उत्तरपदस्य बहुवचनस्य लुपः । नियमार्थमिदम् । मथुरा पञ्चालाः । उत्तरपदस्यैवेति नियमान्नेह । पञ्चालमथुरे । बहुवचनस्य किम् । गोदौ ग्रामो मथुरा च गोदमथुराः । पूर्वपदस्य द्वित्वातिदेशः स्यादेव ॥

विशेषणानाञ्चाजातेः ॥ लुबर्थस्य विशेषणानामपि तद्वल्लिङ्गवचने स्तो जातिं वर्जयित्वा । पञ्चाला रमणीयाः । गोदौ रमणीयौ । अजातेः किम् । पञ्चाला जनपद । गोदौ ग्रामः । कथं तर्हि पञ्चाला जनपदो रमणीय इति । जातिविशेषणत्वादिति गृहाण । पञ्चालविशेषकत्वे तु रमणीया इति भवत्येव । स्यादेतत् । लुपोन्यत्रापीद तुल्यम् । बदरीवृक्ष इत्यत्र सूक्ष्मकण्टका सूक्ष्मकण्टक इति प्रयोगयोर्विशेष्यभेदेन व्यवस्थास्वीकारात्, तत्किं सूत्रेण । सत्यम् । गुणवचनानामाश्रयतो लिङ्गवचनानीति सूत्रार्थः । तथाहि । जातिभिन्नानि यानि विशेषणानि तेषां युक्तवत् विशेष्यवदित्यर्थः । गुणवचनानामित्यु-

द्योपेपि जातिभिन्नं गुणशब्दार्थः। तदुक्तममरेण। स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः। गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदका इति॥ सामान्ये नपुंसकस्य न्यायमास्यापवादोयम्। तेन शुक्लं पटा इति न भवति। अनित्यश्चायमतिदेशः। संस्कृतंभक्षा इत्यादिलिङ्गात्। लक्ष्यानुरोधाद्व्यवस्था। हरीतक्यादिषु व्यक्तिः॥ नियमार्थमिदम्। तेन वचनं न युक्तवत्। हरीतक्याः फलानि हरीतक्यः। गौरादिङीषन्तादनुदात्तादेश्चेति लुप्। खलतिकादिषु वचनम्॥ अयमपि नियम एव। खलतिकस्य पर्वतस्यादूरभवानि वनानि खलतिकं वनानि। खलतिको वरणादिः। मनुष्यलुपि प्रतिषेधः॥ मनुष्यलक्षणे लुबर्थे विशेषणानां प्रतिषेधः। लुबन्तस्य तु भवत्येव। चञ्चा तृणमयः पुमान्। स इव चञ्चाभिरूपः। संज्ञायामिति कन् लुम्मनुष्यइति लुप्। चर्मविकारविशेषोवध्रिका। स इव वध्रिका दर्शनीयः। तदिह द्वे वार्त्तिके आद्यस्य तृतीयन्तु द्वितीयस्यापवाद इति स्थितम्। इदं त्ववधेयम्। इहाभिरूपदर्शनीयपदयोर्विशेष्यलिङ्गे प्रतिषिद्धे नपुंसकत्वं प्राप्नोति। भाष्यकारीयोदाहरणसामर्थ्यान्न भवतीति॥

तदशिष्यं संज्ञाप्रमाणत्वात्॥ तत् युक्तवद्वचनम्। अशिष्यम्, अकर्तव्यम्। कुतः। संज्ञानां प्रमाणत्वात्। अयं भावः। पञ्चाला वरणा इत्यादयो न यौगिकाः। तन्निवासेपि देशान्तरे अप्रयोगात्। देशे तन्नाम्नीत्यधिकृत्यादूरभवे प्रत्ययविधानाच्च। किन्तु संज्ञाशब्दा एते। ते च यल्लिङ्गसङ्ख्यतया लोके प्रसिद्धास्तत्र प्रमाणभूता एव। तदर्थप्रमाणका इत्यर्थः। यथा आपो दारा वनं गृहाः सिकता वर्षा इत्यादौ नेह शास्त्रेनुशासनमारच्यं तदर्थमपि मास्तु। किञ्च॥

लुब्योगाप्रख्यानात् ॥ लुबप्यशिष्यः । जनपदेलुप् वरणादिभ्यश्चेति । कुतः, योगस्यावयवार्थस्येह अप्रख्यानात्, अप्रतीतेः । तथा चात्र तस्यनिवासो ऽदूरभवश्चेति तद्धितो नैवोत्पद्यते किं लुपो विधानेनेत्यर्थः ॥

योगप्रमाणे च तदभावे ऽदर्शनं स्यात् ॥ चकारो ह्यर्थे । यदि हि योगस्यावयवार्थस्येदं प्रमाण बोधकं स्यात्तदा तदभावे न दृश्येत । दृश्यते च सम्प्रति । विनैव क्षत्रिययोगं जनपदे पञ्चालशब्दः । न च भूतपूर्वगतिः । क्षत्रिययोगाद्देशे देशयोगाद्वा क्षत्रिये शब्द इत्यत्र विनिगमकाभावेन वैपरीत्यस्यापि सुवचत्वापत्तेरिति भाव. । अतोक्षादिवन्नानार्था एवैते इति तत्त्वम् ॥

प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ॥ प्रत्ययार्थः प्रधानमित्येवंरूपं वचनमपि अशिष्यं कुतः अर्थस्य लोकत एव सिद्धेः । आख्यातस्य क्रियाप्रधानतया व्यभिचाराच्चेत्यर्थः ॥

कालोपसर्जने च तुल्यम् ॥ अतीताया रात्रेः पश्चार्द्धेन आगामिन्या पूर्वार्द्धेन च सहितो दिवसो ऽद्यतनः । विशेषणमुपसर्जनमित्यादिक्रमेण काल उपसर्जनं च पूर्वाचार्यैः परिभाषितं तत्रापि तुल्यम् । अशिष्यत्वं समानमित्यर्थः । लोकप्रसिद्धत्वादेवेति भावः ॥

जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ॥ ब्राह्मणाः पूज्याः । ब्राह्मण पूज्यः । एकोप्यर्थो वा बहुवदित्यतिदेशाद्विशेषणादपि सिद्धम् । बहूनां वचनं बहुवचनं प्रतिपादनमिति व्याख्यानाच्चातिदेशः फलितः ॥

अस्मदो द्वयोश्च ॥ एकत्वे द्वित्वे च विवक्षिते ऽस्मदो बहुवचनं वा स्यात् । वयं ब्रूमः । पक्षे अहं ब्रवीमि । आवां ब्रूव इति

वा । सविशेषणस्य प्रतिषेधः । पटुरहं ब्रवीमि । कथं तर्हि त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नता इति भर्तृहरिः । अत्रो-न्नतत्वस्य विधेयत्वाद्भवत्येव । अनुवाद्यविशेषणपरत्वात्प्रति-षेधस्येति हरदत्तः । भाष्ये त्वेतत्सूत्रं प्रत्याख्यातम् । तथाहि । अहंकारावच्छिन्नेष्वस्तानाञ्चक्षुरादीन्द्रियाणां तत्तादात्म्यादहमुल्लेखगोचरता भेदाभेदप्रतीतिश्च । अहं शृणोमीति वन्मम श्रोत्रं शृणोतीत्यपि व्यवहारात् । तत्र चक्षुरादीनां बहुत्वाद्भेदस्वातन्त्र्ययोर्विवक्षायां वयं ब्रूम इति सिद्धम् । अभेदमात्रविवक्षायां तु एकवचनम् । न च गौणता । गौरोहमित्यादीनां यावद्व्यवहारं बाधाभावात् । एतेन पुष्यादिगुराविकेपामिति वृत्तिकारेण पठितमपि गतार्थम् । त्वं गुरुर्यूयं गुरव इत्यस्योक्तरीत्या सिद्धेः । अत एवाचार्याः कथयन्तीत्यादिर्लौकिकप्रयोगोपि सङ्गच्छते ॥

फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे ॥ द्वयोरित्यनुकर्षाद् द्वित्वे बहुत्वप्रयुक्तं कार्यं वा विधीयते । तेन विशेषणेपि सिद्धं, पूर्वे फल्गुन्यौ पूर्वाः फल्गुन्यः । पूर्वे प्रोष्ठपदे पूर्वाः प्रोष्ठपदाः । नक्षत्रे किम् । फल्गुन्यौ माणविके । फल्गुन्योर्जाते इत्यर्थः॥ फल्गुन्यषाढाभ्यां टाणाविति ट॰ । टित्त्वान्ङीप् । एकस्यान्तु तारायां नेमौ शब्दौ प्रयुज्येते । उद्भूतावयवभेदे समुदायएव निरूढत्वात् । सूत्रे तु नक्षत्रे इति प्रथमाद्विवचनं नक्षत्रे यत्राभिधीयेते इत्यर्थात् ॥

छन्दसि पुनर्वस्वोरेकवचनम् ॥ द्वयोरेकवचनं वा स्यात् । पुनर्वसुर्नक्षत्रमदितिर्देवता । पुनर्वसू वा । लोके तूद्भूतावयवसमुदाये निरूढत्वाद्द्विवचनमेव । गाङ्गताविव दिवः पुनर्वसू ॥

विशाखयोश्च ॥ प्राग्वत् । विशाखा नक्षत्रमिन्द्राग्नी देवता ।

पक्षे विशाखे। छन्दसीत्यनुवृत्तेर्लोके विशाखेइत्येव। अमरस्तु राध विशाखेति प्रयुञ्जानो द्विवचननियमं नेच्छति। सूत्रं तूदासीनम् ॥

तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥

छन्दसीति न सम्बध्यते पूर्वत्र चकारेणानुकृष्टत्वात् । एतदर्थ एव हि पूर्वत्र योगविभागः । तिष्य एकः । पुनर्वसू द्वौ । तेषां द्वन्द्वो बह्वर्थः । तत्र बहुत्वं द्विवचवद्भवतीत्यतिदेशो ऽयम् । तिष्यपुनर्वसू उदितौ । तिष्यपुनर्वसू इति किम् । विशाखानुराधा । नक्षत्रेति किम् । तिष्यपुनर्वसवो माणवकाः । तिष्यपुनर्वसुशब्दाभ्यां नक्षत्रेण युक्त काल इत्यण् लुबविशेषे । ततो जातार्थे सन्धिवेलादिसूत्रेणाण्। तस्य श्रविष्ठाफल्गुन्यनुराधेत्यादिना लुक् । माणकवृत्तिरयं द्वन्द्वो न तु नक्षत्रवृत्तिः। न चायं गौण । यौगिकत्वात्। ननु नक्षत्रइत्यनुवृत्त्या सिद्धमेतत्। किं पुनर्नक्षत्रग्रहणेन । अत्र भाष्यम् । पर्यायाणामपि यथा स्यादिति । तस्याय भावः। तिष्यपुनर्वस्वोः शब्दयोरभिधेये नक्षत्रे वर्त्तमानो यो नक्षत्रशब्दानां द्वन्द्व इति व्याख्यानात् । पुष्यपुनर्वसू सिध्यपुनर्वसू इत्यपि सिध्यतीति । स्यादेतत् । यथा भावेचाकर्मकेभ्य इत्यकर्मकश्रुत्यान्तरङ्गं द्रव्यकर्म निषिध्यते न तु बहिरङ्गं कालादि कर्म तथान्तरङ्गस्य कालस्य व्यावृत्त्या बहवस्तिष्यपुनर्वसवोतिक्रान्ता इत्यादेः सिद्धावपि माणवकस्य बहिरङ्गस्य व्यावृत्तये पुनर्नक्षत्रग्रहणमस्तु । यद्वा । तिष्यपुनर्वस्वोरिति योगं विभज्य देशान्तरस्थमपि तिष्यस्य कार्यं नक्षत्रएवेति व्याख्यास्यते । तेन तिष्यपुष्ययोर्नक्षत्राणि यलोप इति सिद्धम् । तस्माद्बहिरङ्गव्यावृत्त्या योगविभागेन वा कृतार्थं नक्षत्रग्रहणं कथं पर्यायग्रहणार्थं स्यात् । उच्यते । अकर्मकशब्दः श्रुत्यैव कर्म व्यावर्त्तयन् मुख्यमन्तरङ्गमेव व्यावर्त्त-

यतीति युक्तम् । नक्षत्रशब्दस्तु स्वार्थार्पणमनाड्या अर्थान्तरं व्यावर्त्तयन्नविशेषाद्धुभौ व्यावर्त्तयतीति नाद्यं फलम् । नापि द्वितीयम् । पुष्यार्थवचनस्यावश्यकत्वात् । अत एव पक्षद्वये प्यपरितोषाद्भाष्ये पक्षान्तरमुक्तम् । द्वन्द्वइति किम् । पश्तिष्यस्तौ पुनर्वसू येषान्ते तिष्यपुनर्वसव । तिष्यादय एव विपर्ययविषया इह बहुव्रीहिणोच्यन्ते । अतो भवत्यय नक्षत्रसमासः न तु द्वन्द्वः । बहुवचनस्य किम् । इद तिष्यपुनर्वसु । सर्वो द्वन्द्वो विभाषयैकवत् । न्यायसिद्ध चेदम् । प्राण्यङ्गादीनां समाहार एवेति हि नियमः । न तु विपरीतः । चार्थेद्वन्द्व इति पृथग्विधानात् । प्रकृतसूत्रे बहुवचनग्रहणाचेति दिक् ॥

इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥

सरूपाणामेकशेष एकविभक्तौ ॥ समानायां विभक्तौ यानि सरूपाण्येव दृष्टानि तेषां मध्ये एक एव शिष्यते । अनैमित्तिकत्वेनान्तरङ्गोयमेकशेषः सुबुत्पत्तेः प्रागेव ङ्यन्ताचन्तप्रातिपदिकानां प्रवर्त्तते । हरिणी मृगी हरितवर्णा च । तयोः सहविवक्षायां हरिण्यौ हरिण्यः । क्षितिक्षान्त्योः क्षमा। वासोन सम्यक् क्षमयोश्च तस्मिन्निति श्रीहर्षः, श्रियौ नरेन्द्रस्य निरीक्ष्य तस्येति च । सकृच्छ्रुतात्सकृदर्थः प्रत्यय इति मते शब्दसारूप्येपि द्वन्द्वः स्यात् । अथापि तन्त्रेणानेकार्थताभ्युपगम्यते एवमपि सर्वत्र तन्त्रेणैव बोधनीयमिति नियमाभावात् पाक्षिको द्वन्द्वो दुर्वारः । आरब्धे त्वेकशेषे सुबन्तद्वयविरहात् द्वन्द्व स्याप्राप्तिरेव फलिता भवति । अत एव एकशेषस्य द्वन्द्वापवादकतेत्युद्धोषः । इकोगुणवृद्धावित्यस्य अलोन्त्यापवादकतोति पक्षे ऽपवादशब्दस्येत्थमेव व्याख्यातत्वात् । अत एव घटौ घटा

इत्यादीन्यपीहोदाहरणानि । तत्रापि ऐच्छिकस्यानेकव्यक्तिबोधोद्देश्यकस्यानेकविशकलितशब्दप्रयोगस्य घटोयं घटोयमिति बहुशो दर्शनेन तद्वदेव सहविवक्षायां घटावित्यादिद्वन्द्वस्य दुर्वारत्वात् । एतेन व्यर्थेषु च मुक्तसंशयमिति वार्त्तिकं दृष्ट्वा नानार्था एवेहोदाहरणमिति भ्राम्यन्तः परास्ताः । न च पदार्थतावच्छेदकभेदाभावाद्घटावित्यादौ द्वन्द्वप्रसक्तिर्नेति वाच्यम् । चार्थेद्वन्द्व इति सूत्रेण साहित्यमात्रे तद्विधानात् । तस्य चेतरेतरयोगद्वन्द्वे एकशेषे च विशेषणत्वं प्रयोगोपाधित्वं वा । समाहारद्वन्द्वे तु प्राधान्येन भानमित्यन्यदेतत् । न चैमपि घटकलशावित्यादिद्वन्द्वापत्तिः । विरूपाणामपि समानार्थानामिति वार्त्तिकेन एकशेषात् । वस्तुतस्तु सौत्र एवायमर्थः । रूप्यते बोध्यते इति रूपम्, अर्थः समानं रूपं येषामिति सरूपाः । ज्योतिर्जनपदेति समानस्य सभाव । सरूपाश्च सरूपाश्च तेषामिति एकशेषेण व्याख्यानात् । न च स्वाङ्गे स्वव्यापारायोगः व्याक्यापरिसमाप्तिन्यायादिति वाच्यम् । उद्देश्यतावच्छेदकरूपाक्रान्ततया तुल्यास्यप्रयत्नमिति वत्स्वस्मिन्नापि प्रवृत्तेः । एतद्विषयविवेचनं तु अइउणित्यत्रैव कृतम् । अत एव जननीवाचिनो मातृशब्दस्य धान्यमापवाचिनस्तृजन्तस्य च एकशेषं निषेद्धुं प्रवृत्ते मातृमात्रो' प्रतिषेधः सरूपत्वादिति वार्त्तिके स्वान्तर्गते मातृमात्रोरित्यत्रापि निषेधप्रवृत्तिः । नन्वर्थविशेषोपहितयोरेव तत्रानुवाद । अन्यथा जननीवाचिनोरपि निषेधापत्तेः, तत्कथं शब्दरूपपरे स्वान्तर्गते *निषेधप्रवृत्तिरिति* चेत् । प्रकृतिवदनुकरणमित्यतिदेशादिति गृहाण । सूत्रमते तूत्तरसूत्रादेवकारोऽनुकृष्यते । तेन एकविभक्तौ यानि सरूपाण्येवेति व्याख्यानात्परिच्छेत्तृवाचिनश्चाप्तृन्निति सर्वनामस्था

ने दीर्घविधानादसारूप्यादेकशेषाभावः । न च वाचार्निकैकशेषविरहेपि श्लिष्टरूपकस्थलइव तन्त्रन्यायाश्रयेण पाक्षिक एकशेषो मातृमात्रोः स्यादेवेति वाच्यम् । यान्येकविभक्तौ सरूपाण्येव तेषामेवैकशेष इति नियमात् । न चैवं घटघटाविति पापाक्षिकं दुर्वारमिति वाच्यम् । तन्त्रावृत्त्याद्याश्रयणेन सरूपाणामेकशेष एवेत्यपरनियमाश्रयणात् । तस्मात् घटकुम्भौ कुम्भकुम्भौ मातृम्यां चेति पाक्षिकमनिष्टत्रितयं प्राप्तं सूत्रेणानेन वार्यते । घटावित्यादिसिद्धिस्तु स्यादेवैतद्विनापि हि । जातिपक्षे व्यक्तिपक्षेपीति निष्कर्षसंग्रहः । स्यादेतत् । देवदेव इत्यादावपि तर्ह्येकशेषः प्राप्नोति । न चैकविभक्तावित्यनेन तद्वारणम् । तस्य सारूप्योपलक्षणत्वादेकशेषस्य चानैमित्तिकत्वात् । अथ वक्ष्यमाणरीत्या एकशेषविशेषणतां ब्रूषे, तथाप्यनिस्तारः । देवदेव इत्यत्रापि षष्ठीसमासादुपरि एकविभक्तेः सत्त्वात् । अन्तर्वर्तिन्योस्तु लुका लुप्तत्वेन प्रत्ययलक्षणाभावात् । अत्राहुः । सहविवक्षायामेव एकशेषः । इतरेतरयोगद्वन्द्वस्य विषये इति यावत् । यत्र ह्यनेकस्यार्थस्य मिलितस्येतरान्वयः स तथाभूतो विषयः । उक्तञ्च । अनुस्यूतेव भिन्नानामेका प्रख्योपजायते । यदा सहविवक्षान्तामाहुर्द्वन्द्वैकशेषयोरिति ॥ अयञ्च विषयनियमो ऽभिधानबलाल्लभ्यते वृद्धोयूनेत्यादिसूत्रेषु सहयोगे तृतीयायाः प्रयोगाच्च । यद्वा । पूर्वसूत्रात् द्वन्द्वे इत्यनुवर्त्तते । अर्थाधिकाराच्चेतरेतरयोगद्वन्द्वावगमः। तेन द्वन्द्वे प्रसक्ते सतीति व्याख्यानादुक्तविषयनियमसिद्धिः । न च द्वन्द्वे कृतइत्येव व्याख्यायतामिति वाच्यम् । स्वरसमासान्तादिदोषप्रसङ्गेन कृतद्वन्द्वानामेकशेष इति पक्षस्य दूषयिष्यमाणत्वात् । एतेन सारवसारवोर्मिज इति श्रीहर्षप्रयोगोपि

व्याख्यातः । सरव्यां भवाः सारवाः । ते च ते आरवसहिताश्चेति कर्मधारये सहविवक्षाविरहात् । विद्वन्मानसराजहंसेत्यादिश्लिष्टरूपके तु मानसमेव मानसमिति तन्त्रेण प्रयोगो न तु सौत्र एकशेषः । सहविवक्षाविरहात् । सारव इत्यत्रापि तथा स्यादिति चेत् । पक्षे एवमेव । तावतापि उभयप्रयोगस्य निर्वाह्यत्वात् । न चैवं समाहारद्वन्द्वविषये एकशेषानुशासनात्पाक्षिकं घटघटमित्यादि दुर्वारमेवेति वाच्यम् । तत्रानभिधानस्यैव शरणीकरणीयत्वात् । अस्तु वा तत्राप्येकशेषप्रवृत्तिः । न चैवं नपुंसकतापत्तिः । समाहारद्वन्द्व एव तदनुशासनात् । तथा च प्रत्यर्थं शब्दनिवेश इति पक्षे न ब्राह्मणं हन्यादित्यादौ सकलव्यक्तिसङ्ग्रहो भविष्यतीति प्रतिव्यक्तिलक्षणं नावर्तनीयम् । एकवच्चास्यान्यतरस्यामिति ज्ञापकादेकशेषे कृते एकवद्भावो नेति तु तत्त्वम् । एकश्च एकश्च द्वौ च द्वौ चेत्यादौ तु द्वन्द्वैकशेषौ उभावपि अनभिधानेनैव वारणीयौ । उत्सर्गतः संख्याशब्देष्वेवमेवेति बोध्यम् । विंशतीत्यादौ त्वेकशेष इष्ट एवेति दिक् । एवं स्थिते सूत्रारंभपक्षेपि बहुशोऽनभिधानस्यैवाश्रयणाद् घटघटावित्यादावपि तथैवास्तु किं तन्निरासार्थं सूत्रारम्भेणेत्याशयेन भगवता एकशेषप्रकरणं प्रत्याख्यातम् । न चैवं पितराविल्यत्र मातुः श्वशुरावित्यादौ श्वश्र्वादेश्च प्रतीतिः कथं स्यादिति वाच्यम् । एकशेषारम्भेपि तौल्यात् । यः शिष्यते स लुप्यमानार्थाभिधायीति चेत्, तर्हि द्विवचनाद्युपाधिविशेषपुरस्कारेण पित्रादिशब्दानामेव मात्रादौ शक्तिर्निरूढलक्षणा चेति फलितोर्थः । तथा च लोकव्यवहारादेव तद्ग्रहसम्भवे न किञ्चिदनुपपन्नम् । न चैवमग्निचिदित्यादौ क्विादयोपि प्रत्याख्यायतामिति वाच्यम् । प्रत्ययलक्षणेन तुगाग-

मप्रातिपदिकसंज्ञार्थं तदारम्भात् । तदेवं सरूपाणां विरूपाणां च सर्वमेकशेषं मत्वाचक्षाणेनापि भगवता सरूपसूत्रमात्रं तु शास्त्रीये व्यवहारे संज्ञापरिभाषादिवद्विनापि सहविवक्षामेकशेषं विधातु भविष्यतीत्याशयेन द्विवचनेचीत्यत्र एकशेष इति भाष्येभिहितमिति दिक् । आरभ्यमाणे तु सूत्रे यद्यपि षट् पक्षा सम्भवन्ति तथापि तत्र त्रयो दुष्टा एव त्रयस्तु निर्दोषा इत्यधेयम् । तथाहि । पृथक्सर्वेभ्यो विभक्तौ परत एकशेषः । एकवचनान्तानाञ्चाकृतद्वन्द्वानां वा समुदायादेकविभक्तौ वा युगपदधिकरणवचने वा अनैमित्तिको वेति षट् पक्षाः । तत्राद्ये एकशब्द समानपर्यायस्तथा च वृक्ष स् वृक्ष स् इति स्थिते आद्ययोर्निवृत्तौ स स् वृक्ष स् इति स्थिते संयोगान्तस्य पदान्तस्य लोप इति व्याख्याने मध्यमस्य सोर्लोपः । संयोगान्तं यत्पदं तदन्तस्येति व्याख्याने तु हल्ङ्याद्लोपः तत्रापि सुतिसीति प्रत्ययैः प्रकृतेराक्षेप इति पक्षे तु न कस्य चिल्लोपः । सर्वथापीष्टरूपं न सिध्यत्येव । आद्यन्तयोर्निवृत्तौ तु स् वृक्ष स् स इति स्यात् । परयोर्निवृत्तौ तु वृक्ष स् स् इति स्यात् । तथा वृक्षा अनित्या इत्यादावन्तसुप्रत्ययश्रवणं स्यादिति दुष्ट एव प्रथमः पक्षः । द्वितीये तु वृक्ष स् इति सविभक्तिकस्यावस्थानात् । द्विवचनबहुवचनयोरनुत्पत्तिरेकवचनश्रवणञ्च स्यात् । तृतीये तु द्वन्द्वे इति अनुवर्त्य अभिमतवाक्यार्थो यद्यपि लब्धुं शक्यते तथापि अश्व अश्व औ इति स्थिते विभक्त्यपेक्षाच्छेषात्पूर्वमन्तरङ्गत्वात्समासान्तोदात्ते कृते यदि पूर्वशेषस्तर्हि सर्वानुदात्त पदं स्यात् । परशेषे त्वन्तोदात्तं स्यात् । इष्यते त्वाद्युदात्तम् । अशेः क्वनिन्व्युत्पादनात् । यो अश्वेभिर्वहते वस्त उस्रा इत्यादौ तथैव प्रयोगाच्च । किञ्च ऋक्च ऋक्च ऋचावि-

व्याख्यातः । सरव्यां भवाः सारवाः । ते च ते आरवसंहिताश्चेति कर्मधारये सहविवक्षाविरहात् । विद्वन्मानसराजहंसेत्यादिश्लिष्टरूपके तु मानसमेव मानसमिति तन्त्रेण प्रयोगो न तु सौत्र एकशेषः । सहविवक्षाविरहात् । सारव इत्यत्रापि तथा स्यादिति चेत् । पक्षे एवमेव । तावतापि उभयप्रयोगस्य निर्वाह्यत्वात् । न चैवं समाहारद्वन्द्वविषये एकशेषानुशासनात्पाक्षिकं घटघटमित्यादि दुर्वारमेवेति वाच्यम् । तत्रानभिधानस्यैव शरणीकरणीयत्वात् । अस्तु वा तत्राप्येकशेषप्रवृत्तिः । न चैवं नपुंसकतापत्तिः । समाहारद्वन्द्व एव तदनुशासनात् । तथा च प्रत्यर्थं शब्दनिवेश इति पक्षे न ब्राह्मणं हन्यादित्यादौ सकलव्यक्तिसङ्ग्रहो भविष्यतीति प्रतिव्यक्तिलक्षणं नाश्रयणीयम् । एकवच्चास्यान्यतरस्यामिति ज्ञापकादेकशेषे कृते एकवद्भावो नेति तु तत्त्वम् । एकश्च एकश्च द्वौ च द्वौ चेत्यादौ तु द्वन्द्वैकशेषौ उभावपि अनभिधानेनैव वारणीयौ । उत्सर्गतः संख्याशब्देष्वेवमेवेति बोध्यम् । विंशतीत्यादौ त्वेकशेष इष्ट एवेति दिक् । एवं स्थिते सूत्रारंभपक्षेपि बहुशोऽनभिधानस्यैवाश्रयणाद् घटघटावित्यादावपि तथैवास्तु किं तन्निरासार्थं सूत्रारम्भेणेत्याशयेन भगवता एकशेषप्रकरणं प्रत्याख्यातम् । न चैवं पितरावित्यत्र मातुः श्वशुरावित्यादौ श्वश्र्वाश्च प्रतीतिः कथं स्यादिति वाच्यम् । एकशेषारम्भेपि तौल्यात् । यः शिष्यते स लुप्यमानार्थाभिधायीति चेत्, तर्हि द्विवचनाद्युपाधिविशेषपुरस्कारेण पित्रादिशब्दानामेव मात्रादौ शक्तिर्निरूढलक्षणा चेति फलितोर्थः । तथा च लोकव्यवहारादेस्तद्द्वारसम्भवे न किञ्चिदनुपपन्नम् । न चैवमपि पितरावित्यादौ क्रियाद्योपि प्रत्याख्यानापत्तिरिति वाच्यम् । प्रत्ययलक्षणेन लुगाग-

ममातिपदिकसंज्ञाद्यर्थं तदारम्भात् । तदेवं सरूपाणां विरूपाणां च सर्वमेकशेषं मत्वाचक्षाणेनापि भगवता सरूपसूत्रमात्रं तु शास्त्रीये व्यवहारे संज्ञापरिभाषादिवद्विनापि सहविवक्षामेकशेषं विधातुं भविष्यतीत्याशयेन द्विर्वचनेचीत्यत्र एकशेष इति भाष्येभिहितमिति दिक् । आरभ्यमाणे तु सूत्रे यद्यपि षट् पक्षा सम्भवन्ति तथापि तत्र त्रयो दुष्टा एव त्रयस्तु निर्दोषा इत्यवधेयम् । तथाहि । पृथक्सर्वेभ्यो विभक्तौ परत एकशेषः । एकवचनान्तानाश्चाकृतद्वन्द्वानां वा समुदायादेकविभक्तौ वा युगपदधिकरणवचने वा अनैमित्तिको वेति षट् पक्षाः । तत्राद्ये एकशब्द समानपर्यायस्तथा च वृक्ष स् वृक्ष स् इति स्थिते आद्ययोर्निवृत्तौ स् स् वृक्ष स् इति स्थिते संयोगान्तस्य पदान्तस्य लोप इति व्याख्याने मध्यमस्य सोर्लोपः । संयोगान्तं यत्पदं तदन्तस्येति व्याख्याने तु हल्ङ्यादिलोपः तत्रापि सुतिसीनि प्रत्ययैः प्रकृतेराक्षेप इति पक्षे तु न कस्य चिल्लोपः । सर्वथापीष्टरूपं न सिध्यत्येव । आद्यन्तयोर्निवृत्तौ तु स् वृक्ष स् स इति स्यात् । परयोर्निवृत्तौ तु वृक्ष स् स् इति स्यात् । तथा वृक्षा अनित्या इत्यादावन्तसुप्रत्ययश्रवणं स्यादिति दुष्ट एव प्रथमः पक्षः। द्वितीये तु वृक्ष स् इति सविभक्तिकस्यावस्थानात् । द्विवचनबहुवचनयोरनुत्पत्तिरेकवचनश्रवणञ्च स्यात् । तृतीये तु द्वन्द्वे इति अनुवर्त्य अभिमतवाक्यार्थो यद्यपि लब्धुं शक्यते तथापि अस्व अस्व औ इति स्थिते विभक्त्यपेक्षाच्छेषात्पूर्वमन्तरङ्गत्वात्समासान्तोदात्ते कृते यदि पूर्वशेपस्तर्हि सर्वानुदात्तं पदं स्यात् । परशेषे त्वन्तोदात्तं स्यात् । इष्यते त्वाद्युदात्तम् । अशेः क्वनिब्व्युत्पादनात् । यो अश्वेभिर्वहतेविभवोस्रा इत्यादौ तथैव प्रयोगाच्च । किञ्च ऋक्च ऋक्च ऋचावि-

त्यत्रान्तरङ्गत्वादङ्गपूरिति समासान्ते कृते विभक्तेरकारेण व्यवधानादेकशेषो न स्यात् । समासान्तो हि समासभक्तस्तमेव न व्यवदध्यात् । स्वरूपं तु व्यवदधात्येव । समासार्थोत्तरपदस्यावयव इति भाष्यमतेपि विरूपत्वादेकशेषो दुर्लभः । विरूपाणामपि समानार्थानामिति तु यद्यपि प्राप्नोति तथापि पक्षे ऋच इत्यस्य शेषे टापि ऋचें ऋचा इत्याद्यपि स्यात् । एवं पथा पथौ इत्याद्यपि पक्षे स्यात् । अपि च करौ करा इत्यादि न सिध्येत् । प्राण्यङ्गानां समाहार एवेति नियमात् । अपि च सर्वेषामित्यादौ द्वन्द्वे च विभाषाजसीति प्रवर्त्तेत । अत एव विरूपैकशेषो न कृतद्वन्द्वानां तेषामित्यादौ त्यदादीनिसर्वैरित्येकशेषे सर्वनामत्वाभावप्रसङ्गात्तदेवं त्रय पक्षा दुष्टा इति स्थितम् । सिद्धान्तस्तु त्रेधा । तथाहि । राम राम राम इत्यत्रावयवानामिव समुदायस्याप्येका प्रातिपदिकसञ्ज्ञा तावदस्ति । मिलितेनार्थवत्त्वात् । न चार्थवत्समुदायानां समासग्रहणं नियमार्थमित्युक्तेः कथमेतदिति वाच्यम् । नियमस्य सजातीयविषयकत्वेन यत्र समुदाये पूर्वो भागः पदं तत्रैव प्रवृत्तेः । अत एव बहुपटव इत्यत्र प्रातिपदिकत्वं भवत्येवेत्युक्तमर्थवत्सूत्रे । तथा चैकाज्द्विर्वचनन्यायेन समुदायप्रातिपदिकादेव द्विवचनबहुवचनयोरुत्पत्तिः । तावताप्यवयवानां संख्यान्वयेनानुग्रहसम्भवात् । तथा च समुदायादेकविभक्तौ परत एकशेषः । रामकृष्णावित्यादौ तु यद्यप्युक्तरीत्या समुदायादेकविभक्तिः प्राप्ता तथापि द्वन्द्वविधावनेकं सुबन्तमित्यस्यानुवृत्त्या बाध्यते । अस्मिन्पक्षे मातृमात्रोरपि एकशेषः प्राप्तः । एकविभक्ताविल्यस्यावृत्त्या एवकारस्य चानुकर्षणेन एकविभक्तौ यानि सरूपाण्येवेति व्याख्यानाश्र भवति । यद्वा युगपदधिकरणवचनतायां द्विवचनबहुवचना

न्तानामेकशेषः। द्वन्द्वोप्येवम्। अजहत्स्वार्थायां हि वृत्तौ रामकृष्णावित्यादौ पूर्वपदमप्युभावभिधत्ते तावेवोत्तरपदमपि। न चान्यतरवैयर्थ्यम्। परस्परसमभिव्याहारेणैवो भयार्थताध्यवसायात्। तथा च द्वन्द्ववृत्तेः प्रागेकैकार्थतावगमेपि वृत्तावुभयाभिधानात्प्रत्येकं द्विवचनाद्युत्पत्तिः। एवमेकशेषवृत्तावपि परार्थाभिधानं वृत्तिरिति सिद्धान्तात्। तथा च रामश्च कृष्णश्चेति लौकिकवाक्यस्यादूरविप्रकर्षेण विग्रहतया प्रदर्शनेपि अलौकिकद्वन्द्वैकशेषयोः प्रक्रियावाक्ये राम औ कृष्ण औ इति प्रविशति। तथा च विभक्त्यन्तानामेकशेपोपि निर्बाध एव। अथ वा उपक्रमएव यथा व्याख्यातं तद्रीत्या अनैमित्तिक एवैकशेष। तथा च पक्षत्रयं स्थितं सिद्धान्ते। अत्रेदमवधेयम्। उक्तपक्षत्रयमध्येपि समुदायादेकविभक्ताविति पक्षस्तावत् दुष्ट एव मातृमातारावित्यत्रातिप्रसङ्गं वारयितुं एकविभक्तावित्यस्य सरूपाण्येवेत्येतद्विशेषणतया आवश्यकत्वे स्थिते एकशेषविशेषविशेषणत्वायोगात्। आवृत्तौ मानाभावात् फलाभावाच्च। न च पयः पयो जरयतीत्यादिव्यावृत्तिः फलम्। सहविवक्षायामित्यस्य द्वन्द्वग्रहणबलेनावश्यवाच्यत्वात्। अन्यथा पयः पयो नयतीत्यत्र गौणमुख्यकर्मणोरेकशेषापत्तेः। देवदेव इत्यादावतिप्रसङ्गाच्च। प्रत्युत आवृत्त्योभयविशेषणत्वे भैक्षमिति न सिध्येत्। तथा हि। भिक्षा ३ आम् अ इति स्थिते अन्तरङ्गानपि विधीन्वहिरङ्गोपीति लुकि कृते लुका लुप्ते प्रत्ययलक्षणविरहादेकशेषो न स्यात् तथा युगपदधिकरणवचनतापक्षोपि दुर्बलः। जहत्स्वार्थायां वृत्तौ तदयोगात्। तथा च द्वितीये भाष्यम्। सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा चेति। तच्च तत्रैव स्फुटीकरिष्यामः। तस्मात्प्रागुक्तपक्षपक्षमध्ये ऽनैमित्तिकत्वपक्ष

एव मवलः । इतरे पञ्चापि हेया इति तदभिप्रायकतयैव सूत्रं व्याख्यातम् । पचतीत्यादौ तु धातोर्द्वन्द्वादिप्रसक्तिरेव नास्ति यद्वाक्यशेषो मृग्येत । न च मिलिताछडादिप्रसङ्गः । धातोरित्येकत्वस्य विवक्षितत्वात् । न चैकस्मादेव कर्तृद्वये लद्वयं कर्तृबहुत्वे लकारबहुत्वञ्च स्यादिति वाच्यम् । इष्टापत्तेः । लस्येत्यत्र जातिविवक्षया लद्वयस्य तसादयः बहूनान्तु झिथादय इति सुवचत्वात् । वस्तुतस्तु वर्तमाने लडित्यादौ व्यक्तिनिष्ठैकत्वस्य विवक्षणान्न कश्चिद्दोषः । अत एव वृक्षंवृक्षं सिञ्चतीत्यादौ नानैकत्वाभिधानार्थं विभक्तिपरम्परा नेति दिक् । गर्गावित्यादावपि पितुरेकत्वात्प्रकृतिरेकाप्रत्ययास्तु बहव । सर्वेषां प्रकृत्यर्थान्विताभिधायितया विरूपाणामपि समानार्थानामिति गर्गयशब्दस्य शेष । न च पक्षे यशब्दमात्रस्यापि तदापत्तिः । विकल्पस्याष्टदोषदुष्टत्वात् । न च विनिगमकाभावः । अणुरपीति न्यायेन स्पष्टप्रतिपत्तिसामर्थ्यस्यैव विनिगमकत्वात् । यद्वा । यञ इत्यपि व्यक्त्यैक्यं विवक्षितम् । प्रतिप्रधानञ्च गुणावृत्ति । गार्ग्यशब्दत्रयस्य चैकशेषः । उभयथा यञन्तं यद्बहुष्विति लुक् । न चैवं काश्यपस्य प्रतिकृतिः काश्यपः । तत प्रतिकृतीनां सहविवक्षायां काश्यपा इत्यत्रापि अजन्तं बहुषु वर्त्ततइति लुक् स्यादिति वाच्यम् । यस्कादिभ्योगोत्रइत्यतो गोत्रइत्यनुवृत्तेः । यद्यप्यपत्याधिकारादन्यत्र लौकिकं गोत्रं तथापहि ऋषिप्रजन एव गोत्रे विवक्षितमिति स्त्रीपुंसाभ्यांनञ्स्नञाविति सूत्रे कैयटः । तेन पौत्रा दौहित्रा इत्यत्र न लुगित्यवधेयम् । एतेनसंख्यया कर्मभेद इत्यस्य व्युत्पादनाय प्रवृत्ते पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यादित्यधिकरणे सप्तदश प्राजापत्यानित्युदाहृत्य, किं स्वयं तद्धितान्ता-

नामेकशेषः कृतो भवेत् । किं वा कृतैकशेषाणां पश्चात्तद्धितसङ्गतिरिति वदतां भट्टानां ग्रन्थोपि व्याख्यातः । ण्यप्रत्ययान्तानामेकशेषः । ण्यप्रत्ययान्तानामेव वेति तदाशयात् । कृतैकशेषाणां प्रजापतिर्देवता येषामिति कृतैकशेषयच्छब्देनोपस्थापितानां तद्धितसङ्गतिस्तद्धितवाच्यता । तथा च मिलितानां देवतासम्बन्धं बोधयितुं लौकिकविग्रहे येषामिति निर्देशः । वृत्तौ तु देवतावद्वाचकस्य तद्धितस्यैकशेष इति मिलितेषु पशुषु देवतान्वयादेको यागः । अग्नीषोमीय इत्यादौ मिलितयोर्देवतायामभेदान्वये यथेत्युदात्तवार्त्तिकस्योत्तरार्धेर्थोध्यवसेयः । युक्तं चैतत् । प्रत्ययार्थबहुत्वं हि प्रत्यक्षमुपलभ्यते । तत्कृतं चैकशेषत्वमिति न प्रकृतौ भवेदित्युत्तरवार्त्तिकस्यानुगुण्यात् । स्यादेतत् । प्रत्ययार्थस्यैकदेशे प्रकृत्यर्थो विशेषणम् । अभेदश्चेह सम्बन्ध आग्नेयादावियं स्थितिरिति पक्षे देवतावतां साहित्यं लभ्यते न तु सहितानां देवतात्वे देवतायां प्रदेये च खण्डशः शक्तिरिष्यतइति पक्षेपि एकप्रत्ययोपात्तदेवतान्वयस्यान्तरङ्गत्वादेवमेवेति चेत्सत्यम् । प्रदेयएव शक्तिः प्रकृतेस्तु प्रत्ययसमभिव्याहाराद्देवतायां निरूढलक्षणेत्याशयेनायं ग्रन्थो नेयः । केवलाद्देवतावाची तद्धितोग्नेः समुच्चरन्नित्यादिग्रन्थास्तु मतान्तराभिप्रायेण नेयाः । न चैवमपि विरूपैकशेषपक्षे समानार्थतालाभार्थं प्रकृत्यर्थान्वयस्य प्राथमिकत्वं स्वीकार्यमेवेति वाच्यम् । यद्यप इत्येषा मेकविभक्तिं प्रति प्रकृतित्वाभावे ऽपि विभक्तौ परतः सारूप्यसम्भवेन सरूपैकशेष एवेत्याशयात् । प्रकृतमनुसरामः । स्वरभिन्नानां यस्योत्तरः स्वरविधिः स शिष्यतइति वक्तव्यम् । तेन पूर्वोदात्तत्वे हरिण्यावित्यत्र ङीवन्तस्य पित्त्वादनुदात्तप्रत्ययकस्य शेषः । न तु जातौ पुंयोगे वा

यो ङीप् तदन्तस्य मत्वर्थस्वरेणान्तोदात्तत्वम् । ननु वर्णादनुदात्तादिति ङीपन्तस्यापि उदात्तनिवृत्तिस्वरेणान्तोदात्तता स्यादेवेति चेत् । भ्रान्तोसि । उदात्तनिवृत्तेरेवाभावात् । वर्णानान्तणतिनितान्तानामिति फिट्सूत्रेण प्रकृतेरनुदात्तत्वात् । तदुक्तं वर्णादनुदात्तादिति । तथा मीमांसते इति मीमांसकः । लित्स्वरेण मध्योदात्तः । मीमांसामधीते मीमांसकः । क्रमादिभ्यो वुन् । नित्स्वरेणाद्युदात्तः । उभयोः सहविवक्षाया माद्युदात्तः । उभयोः सहविवक्षायामाद्युदात्तः शिष्यते नित्स्वरस्य परत्वात् । अक्षौ अक्षाः । अक्षस्यादेवनस्येति फिट्सूत्रेण शकटाक्षे आद्युदात्तः । देवनाक्षे तु घिञ इत्यन्तोदात्तः । यद्वा । अक्षैर्दीव्यते इति मत्वर्थान्तत्वादन्तोदात्तः । शकटावयवविभीतकयोस्तु घञन्तत्वादाद्युदात्तः । अत एव प्राचेषामिति सूक्ते अक्षकितवनिन्दाप्रस्तावअक्षस्याहमेकपरस्येरयादयाक्षेशब्दा धदेवोन्तोदात्ता एव प्रयुज्यन्ते । तस्य नाक्ष इत्यादौ तु रथावयवपरत्वादाद्युदात्तः । उभयोः सहविवक्षायान्तु आद्युदात्तस्य शेषः । इन्द्रियवाचिना क्लीबेन सहविवक्षायान्तु नपुंसकमनपुंसकेनेति अक्षमक्षाणीत्याद्यूह्यम् । अन्यचेतनानां देवतानां कथं पुंनपुंसकादिप्रयत्स्येति चेत् । उच्यते । लोकप्रसिद्धमवयवसंस्थानविशेषात्मकलिङ्गं तावन्न व्याकरणे आश्रीयते । दारान् इत्यादौ तदभावप्रसङ्गात् । तटस्तटीतटमित्यादौ यथायथं लिङ्गानुशिष्यनियन्त्रणकार्याणामसिद्धिप्रसङ्गाच्च । किन्तु पारिभाषिकमेव लिङ्गमवम् । तच्च वैयाकरणानाम् । अयमर्थः इयं व्यक्तिरिदं यस्मिन्निति शब्दानां सर्वनामनिर्देशप्रसारत्वात् । तत्र कश्चिच्छब्दः पञ्चस्वेव लिङ्गं भजतः कस्मिंश्चनु द्वयोः कश्चित् त्रिष्विति लिङ्गानुशासनादिभ्यो निर्णयम् । पुमानक्षणा-

दिशब्दास्तु लौकिकपुंस्त्वविशिष्टे शास्त्रीये पुंस्त्वे शक्ताः लौकिकस्त्रीत्वविशिष्टे च शास्त्रीयस्त्रीत्वे । कथमन्यथा कुमारी कुमार इत्यादय प्रयोगा व्यवतिष्ठेरन् । करेणुरिभ्या स्त्रीनेभइत्यमरस्याप्ययमेवार्थ । नन्वेवं पशुनेतिपुंस्त्व विवक्षितमिति मीमांसकोद्घोषः कथं योज्यः । पारिभाषिकस्याव्यावर्त्तकतया तद्विवक्षाया अकिञ्चित्करत्वात् । लौकिकस्य तु पशुशब्दादप्रतीतेरिति चेत् । सत्यम् । छागो वा मन्त्रवर्णादिति पशून्त्याधिकरणन्यायेन पुंस्त्वस्य नियमो बोध्यः । छागशब्दस्य लौकिकपुंस्त्वविशिष्टपारिभाषिके शक्तत्वादिति दिक् । तच्च जातित्रयमित्येके । उक्तं च हरिणा । तिस्रो जातय एवैताः केषां चित्समवस्थिताः । अविरुद्धा विरुद्धाभिर्गोमनुष्यादिजातिभिरिति भाष्ये तु स्त्रियामितिसूत्रे प्रकारान्तरमुक्तम् । संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः। संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूते सप्सवे पुमान् ॥ उभयोरन्तरं यच्च तदभावे नपुंसकमिति ॥ अयमर्थः । सस्त्यानं स्त्री । सत्वरजस्तमोलक्षणानां गुणानामपचय । प्रसवो गुणानामुपचयः । स एव पुमान् । सूतेर्धातोः सप्सकारस्य पकारादेश इत्यर्थः । सूडो डुमसुन्निति माधवः । यत्तूज्ज्वलदत्तेन यतेर्डुमसुन्नित्युक्तम् । यच्च पुसोसुङिति सूत्रे न्यासरक्षिताभ्या पुनातेर्मकसुन् ह्रस्वश्चेति सूत्रं पठितं तदुभयमपि भाष्याननुगुणं तयोरुपचयापचययोरभावे सति यदुभयोरन्तरसदृश तन्नपुंसकम् । नभ्राण्नपादिति निपातनादिति भावः । तथा च स्थितिमात्रं नपुंसकम् । अत एवाविर्भावतिरोभावयोरपि स्थितिसामान्यविवक्षासम्भवान्नपुंसकलिङ्ग सर्वनामेति सिद्धान्तः। स्त्रीपुमान्नपुंसकमितिशब्दाश्च शुक्लयादिशब्दवद्धर्मे धर्मिणि वर्त्तन्तइत्यत्र ज्ञेयम् । स्वकृतान्त इति । कृता

न्तौ यमसिद्धान्तावित्यमरः । वैय्याकरणसिद्धान्ते इत्यर्थः ॥

वृद्धोयूनातल्लक्षणश्चेदेवविशेषः ॥ वृद्धो गोत्रम् । अपत्यमन्तर्हितं वृद्धमिति पूर्वाचार्यैः सूत्रितत्वात् । यूना सहोक्तौ वृद्धः शिष्यते गोत्रयुवमत्ययमात्रकृतञ्च तयोर्वैरूप्यं कृत्स्नं स्यात् । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । तल्लक्षणं किम् । भागवित्तिभागवित्तिकौ । कृत्स्नं किम् । गार्ग्यवात्स्यायनौ ॥

स्त्रीपुंवच्च ॥ यूना सह विवक्षायां वृद्धा स्त्री शिष्यते तदर्थश्च पुंवद्भवति । स्त्रीत्वस्य वैरूप्यकारणस्याधिक्यात्पूर्वेणाप्राप्तौ वाचयम्, पुंवदिति विधातुञ्च । गार्गी च गार्ग्यायणौ च गर्गाः । अस्त्रियामित्यनुवर्त्तमाने यञञोश्चेति लुक् । दाक्षी च दाक्षायणश्च दाक्षी ॥

पुमान् स्त्रिया ॥ सरूपाणां मध्ये स्त्रिया सहोक्तौ पुमान् शिष्यते स च पुंवदेव स्यात्तल्लक्षणएव विशेषश्चेत् । सम्पृक्ता च सम्पृक्तञ्च सम्पृक्तौ । य' शिष्यते स लुप्यमानार्थाभिधायीति सिद्धान्तात्स्त्रीत्वस्यापि सत्वेन टाप् प्राप्तः पुंवदेवेत्यनुवृत्तेर्न भवति । हंसश्च वरटा चेत्यादौ हसजातिसाम्येपि शब्दवैलक्षण्यस्य स्त्रीत्वपुंस्त्वमात्रप्रयुक्तत्वादेकशेषः प्राप्तः रूपग्रहणानुवृत्त्या वार्यते तदनुवृत्तौ च भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति सूत्रं ज्ञापकम्, अन्यथा एकापत्यत्वस्य अपत्यत्वस्य वा साम्यात्तत्रापि पुमान्स्त्रियेत्येव सिध्येत् । नन्वेवमपि गौरीयं गौश्चायं तयोः सहोक्तौ एतौ गावाविति नियमतो न स्यात् । नैष दोष इयमयमिति पदान्तरगम्येपि तल्लक्षणविशेषे पुमान्स्त्रियेत्यस्य प्रवृत्तिसंभवादिति कैयट । स्यादेतत् । तल्लक्षणविशेषरूपो विशिष्टाभावो ऽत्र हेतुः।स च किन्नरैरप्सारोभिश्च क्रीडद्भिरित्यादौ विशेषणाभावात् । गावावित्यत्र तु विशेष्याभावादित्यन्यदेतत् । तथा च किमर्थं

पदान्तरगम्यत्वपर्यन्तमुक्तमिति चेत् । उच्यते । नेह विशिष्टाभावः प्रयोजकः किन्तु तन्मात्रप्रयुक्तो विशेषः प्रयोजकः । अन्यथा भागवित्तिभागवित्तिकावित्यत्र वृद्धोयूनेति स्यात् । इह हि कुत्सासौवीरत्वाभ्यां प्रयुक्तेपि ठकि युवप्रयुक्ततास्त्येवेति विशिष्टाभावो निर्बाधः । एवमिन्द्रेन्द्राण्यावित्यत्र प्रकृतसूत्रप्रवर्त्तेत। हिमहिमान्यावित्यादौ चोत्तरसूत्रमिति दिक् । नन्वेवं गार्ग्यवात्स्यायनयोरतिप्रसङ्ग इति चेत् । योसौ विशेषः स तल्लक्षणश्चेदिति वचनव्यक्त्या पाठादुद्देश्यविधेयान्वयलाभात् । एवञ्च कृत्स्नस्य विशेषस्य तन्मात्रप्रयुक्तत्वं फलितम् । तेन पदान्तरपर्यन्तानुसरणं कैयटादीनां युक्तमेवेति दिक् । तदितरप्रयुक्तविशेषविरहरूपविशिष्टाभावविवक्षायान्तु सर्वं सुस्थम् । एकेन सा च स च ताविति व्याख्यातम् । अनैमित्तिकस्यैकशेषस्य तद् तद् इत्यवस्थायां प्रवृत्तावपि पुंस्त्वनियमस्यैतेन लब्धत्वात् ब्राह्मणवत्सश्च ब्राह्मणीवत्सा चेत्यत्र तु न भवति । सं-
[illegible]

होक्तौ क्लीबं शिष्यते तच्च वा एकवत् स्यात् । तल्लक्षण एव चेद्विशेषः । शुक्लः कम्बलः शुक्ला बृहतीका शुक्लं वस्त्रं तदिदं शुक्लम् । तानीमानि शुक्लानि । अनपुंसकेनेति किम् । शुक्लश्च शुक्लञ्च शुक्ले । एकवच्चेति न भवति । अस्येति किम् । उत्तरसूत्रे एकवद्भावानुवृत्तिर्मा भूत् ॥

पिता मात्रा ॥ मात्रा सहोक्तौ पिता वा शिष्यते । पितरौ । मातापितरौ । अयं योगः शक्योकर्तुम् । तथाहि । यः शिष्यते स लुप्यमानार्थाभिधायीतिन्यायेनास्मिन्विषये पितृशब्द एव मातरमपि वक्तीति निर्विवादम् । तत्र च निरूढलक्षणा वा शक्तिरेव वेत्यन्यदेतत् । न च द्वन्द्वनिवृत्त्यर्थं सूत्रम् । तस्यापि पक्षे इष्टत्वात् । एवं श्वशुरः श्वश्र्वेत्यत्रापि बोध्यम् । एतेन पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथेत्यस्य व्याख्यावसरे विग्रहे क्रमप्रतीतेः प्रथमं माता धनभाक् तदभावे तु पितेति विज्ञानेश्वरग्रन्थश्चिन्त्यः । एकपदजन्ये बोधे क्रमाभावात् । सूत्रारम्भेप्येवमेव । प्रत्युत मुख्यार्थस्य प्रथमप्रतीतिरुचिता । न तु लक्ष्याया मातुः । यत्तु विग्रहे क्रमप्रतीतिरिति । तन्न । वृत्तिविग्रहयोः सहाप्रयोगात् । इहैवेह व्याख्येयश्लोके प्रयोगात् । किं च वृत्तावपि प्रयुक्तायां विग्रहोपि स्मर्यतां कथञ्चित् । न तु तत्रापि पूर्वापरिभावे * किञ्चिन्नियामकमस्ति । तस्मात्क्रमनिर्णये प्रमाणान्तरं मृग्यम् ॥

श्वशुरः श्वश्र्वा ॥ श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते । श्वशुरौ । श्वश्रूश्वशुरौ । श्वश्रेति सौत्रनिर्देशादेव प्रत्ययान्तस्यापि प्रातिपदिकत्वम् । अन्यथा हि प्रकृतिवदनुकरणमिति ऊङन्ततापि न स्यात् ॥

त्यदादीनि सर्वैर्नित्यम् ॥ सर्वैस्त्यदादिभिरन्यैश्च सहोक्तौ

त्यदादीनि नित्यं शिष्यन्ते । प्रत्यासत्तेस्त्यदादिभिरेव सहोक्तावित्यर्थो मा भूदिति सर्वग्रहणम् । स च देवदत्तश्च तौ । द्वन्द्वनिवृत्त्यर्थं वचनम् । ताविति तु सरूपसूत्रेणैव सिद्धं देवदत्तस्यापि तच्छब्देनैव निर्देष्टुं शक्यत्वात् । त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते शब्दपरविप्रतिषेधात् । स च यश्च यौ । पूर्वशेषोपि दृश्यतइति भाष्यम् । स च यश्च तौ । अहं च भवांश्चावाम् । त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि । आद्यादित्वात्तसिः । त्यदादीनां शेषे सहविवक्षितो योर्थः पुमान् यश्च नपुंसकं तद्वशेन लिङ्गवचनानि भवन्तीत्यर्थः । सा च देवदत्तश्च तौ । तच्च देवदत्ता च यज्ञदत्ता च तानि । पुंनपुंसकयोस्तु सहविवक्षायां नपुंसकवशेन व्यवस्थापरत्वात् । तच्च देवदत्तश्च ते । अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्द्धं पिप्पल्यास्तत् । अर्धपिप्पली च सा अर्धपिप्पल्यौ ते । इह परवल्लिङ्गमिति समासार्थस्य लिङ्गातिदेशे कृते तद्विशेषणस्य सर्वनाम्नस्तदेव लिङ्गम् । भाष्ये तु एतत्सूत्रं प्रत्याख्यातम् । यदाह । सामान्यविशेषवाचिनोश्च द्वन्द्वाभावात्सिद्धमिति । विशेषसन्निधौ हि प्रयुक्तः सामान्यशब्दो विशेषान्तरे वर्त्तते । ब्राह्मणा आगता वसिष्ठश्चेति यथा । तथाविधे विषये वाचनिकोयं द्वन्द्वनिषेधः । तेनैव तद्देवदत्तावित्यादिनिवृत्तेः सिद्धत्वादयमेकशेषो न वक्तव्य इत्यर्थ इति कैय्यटः । कथं तर्हि शूद्राभीरङ्गो बलीवर्दं तृणोपलमिति । अत्राहुः । आभीरी जात्यन्तराणि । ब्राह्मणादुग्रकन्यायामाभीरो नाम जायते । माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपादिति स्मृतेः ॥ गोशब्दस्तु स्त्रीगवीपरोयं स्त्रीलिङ्गः । अपामुल्प इति नामधेयमिति । अनित्योयं निषेधः । प्राच्यभरतेष्वितिसूत्रनिर्देशाल्लिङ्गात् । तेन

प्रमाणप्रमेयेत्यादिषु द्वन्द्वः सिद्धः । एतेनाविद्यां तच्चितो योगः षडस्माकमनादयः । मत्स्यादौ तद्विशेषयेरित्यादिप्रयोगा व्याख्याताः । सूत्रारम्भे त्वेतेन सिद्ध्येयुरेवेति सहृदयैराकलनीयम् ॥

ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ॥ एषु सहविवक्षायां स्त्री शिष्यते । पुमान् स्त्रियेत्यस्यापवादः । गाव इमा । ग्राम्यग्रहणं किम् । रुरव इमे । पशुग्रहणं किम् । ब्राह्मणाः । सङ्घेषु किम् । एतौ गावौ चरत । एकशेषस्यानेकविषयत्वे लब्धे सङ्घग्रहणसामर्थ्याद्बहूनां सङ्घो गृह्यते । अतरुणेषु किम् । वत्सा इमे । बर्करा इमे । अनेकशफेष्विति वक्तव्यम् । अश्वा इमे । गर्दभा इमे । एकशफत्वात्पुंशेष एव । शफं क्लीबे खुरः पुमानित्यमरः । हरदत्तस्तु शफाः खुरा इति प्रायुङ्क्त । तत्र शफशब्दस्य पुस्त्वे मूलान्तरं मृग्यम् । उष्ट्राणां त्वारण्यत्वात् स्त्रीशेषाभाव ॥

इति श्रीशब्दकौस्तुभे प्रथमाध्यायस्य द्वितीये पादे
तृतीयमाह्निकम् ॥ पादश्च समाप्तः ॥

भूवादयो धातवः । क्रियावाचिनो गणपठिता धातुसंज्ञाः स्युः । धातुत्वाल्लडादयः । भवति एधते । क्रियावाचिनः किम् । याः पश्येत्यादौ धातुत्वं मा भूत् । सति हि तस्मिन्नातोधातोरित्यालोपः स्यात् । न च याप्रापणइत्याद्यर्थनिर्देशो नियामकः । तस्यापाणिनीयत्वात् । भीमसेनादयो ह्यर्थं निर्दिदिशुरिति स्मर्यते । पाणिनिस्तु भ्वेध इत्याद्यपाठीदिति भाष्यवार्त्तिकयोः स्पष्टम् । किञ्च । अभियुक्तैरपि कृतोर्थनिर्देशो नार्थान्तरनिवृत्तिपरः सुखमनुभवतीत्यादावधातुत्वमसङ्गात् । उक्तञ्च । क्रियावाचित्वमाख्यातुमेकैकोर्थः प्रदर्शितः । प्रयोगतोनुसर्तव्या अनेकार्था हि धातव इति ॥ अत एव कुर्द खुर्द गुर्द गुद क्रीडायामेवेत्येव-

कारः । पच्यते श्लिष आलिङ्गनइत्यादिसूत्राण्यपीह ज्ञापकानि । तस्माद्याः पश्येत्यादिव्यावृत्तये क्रियावाचिन इति विशेषणं स्थितम् । गणपठिता इति किम् । हिरुक् पृथक् ऋते इत्याद्यव्ययानां शिष्ये इति भावार्थतिङन्तस्य च मा भूत् । न चैवं सौत्रेष्वव्याप्तिः । स्तम्भ्वादीनामुदित्करणेन धात्वधिकारीयकार्यविधानेन च धातुत्वानुमानात् । न चैवमपि लौकिकानां चुलुम्पादीनामसङ्ग्रहापत्तिः । भ्वाद्यन्ते यजादिसमाप्त्यर्थं वृत्करणेपि भ्वादीनामसमाप्तेः । धातुवृत्तिषु तथैव व्याख्यातत्वात् । कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमिति कात्यायनवचनेनाप्येतल्लभ्यते । एवं भ्वाद्यन्ते वृत्करणस्य पुषादिसमाप्त्यर्थतया दिवादीनामपरिसमाप्तेर्मृग्यतीत्यादिसिद्धिः । वस्तुतस्तु चुरादीनामन्ते बहुलमेतन्निदर्शनमिति गणसूत्रेण सकलप्रसिद्धिः । तद्धि धातुवृत्तिषु द्वेधा व्याख्यातम् । भ्वादिगणपठितेभ्योपि णिच् प्रयोगानुसाराज्जप इति । दशगणीपाठो दिङ्मात्रप्रदर्शनार्थस्तेनान्येपि शिष्टप्रयुक्ता धातवः सङ्ग्राह्या इति च । स्यादेतत् । भूवादिः येषामिति विग्रहे यणि सति भ्वादय इति स्यात् । क्रियावाचित्वञ्च सूत्रानारूढमेवेति । उच्यते । भवनं भूः क्रियासामान्यम् । वदन्तीति वादयः वदेरौणादिक इञ् इति भाष्यम् । यद्यपि वसि वपि यजि राजि व्रजि सदि हनि वासि वादि वारिभ्य इञित्यौणादिकसूत्रेण वदेर्ण्यन्तादिञ् विहितस्तथापि बहुलग्रहणात् केवलादपि भविष्यतीति न्यासकारादयः । वस्तुतस्तु वदन्तीति वादय इतिभाष्यमर्थकथनपरम् । ण्यन्तादेव क्विप् । न चेह ण्यर्थानन्वयः । पचतिपाचयतोस्तुल्यार्थत्वात् । भुवो वादय इति विग्रहः । तथा च क्रियावाचित्वं तावत्सूत्रारूढम् । [illegible]

न्ता धातव इति सूत्रारम्भात्त्व । अथ वा भूरादिर्येषामिति विग्रह । निपातनाद्बुगागमः महासंज्ञाकरणं तु दधति क्रियामिति धातव इत्यन्वर्थसंज्ञाविज्ञानार्थम् । यद्वा । भूश्च वाश्चेति द्वन्द्वः । आदिशब्दयोस्तु व्यवस्थाप्रकारवाचिनोरेकशेष । ततो भूवौआदी येषामिति बहुव्रीहिः । भूप्रभृतयो वासदृशाः क्रियावाचिन इति यावत् । अथ वा वाइत्ययमादिर्येषामिति बहुव्रीहिः वाइत्यस्यादय इति तत्पुरुषः । तयोरेकशेषे स्वरभिन्नानामिति बहुव्रीहिशेषः । भुवो वादय इति षष्ठीतत्पुरुष । वाच्यवाचकभावश्च षष्ठ्यर्थः । द्विर्वचनेचीतिवत्तन्त्रावृत्त्यादिना वा उभयलाभः । सर्वथापि क्रियावाचिनो भ्वादय एव धातव इति स्थितम् । का पुन क्रिया । उच्यते । करोत्यर्थभूता उत्पादनापरपर्याया उत्पत्त्यनुकूलव्यापाररूपा भावनैव क्रिया । तथाहि । अभवतो गगनादेरक्रियमाणतया भवतश्च घटादेः क्रियमाणतया भवत्यर्थकर्तुः करोतिकर्मत्वम् । तथा च करोत्यर्थकर्तुर्भवितृप्रयोजकतया भवतेरुत्पत्त्यर्थप्रयोजकव्यापारे णिजुत्पद्यमानः करोत्यर्थमवलम्बते । उक्तञ्च । करोतिक्रियमाणेन न कश्चित्कर्मणा विना । भवत्यर्थस्य कर्ता च करोतेः कर्म जायते ॥ करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः । भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते ॥ प्रयोज्यकर्तृकैकान्तव्यापारप्रतिपादका । ण्यन्ता एव प्रयुज्यन्ते तत्प्रयोजककर्मसु ॥ तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुन । प्रयोजकक्रियामाहुर्भाविनां भावनामिद इति ॥ सा च सकलधातूनां वाच्या । अत एव किं करोतीति प्रश्ने पचतिपठतीत्याद्युत्तरं सङ्गच्छते । न चासौ मीमांसकोक्तरीत्या प्रत्ययवाच्यैवास्तामिति वाच्यम् । मोक्तव्यमित्यादावाख्यातं विनापि तत्प्रतीतेः । तथा च तत्रापि कारकापेक्षा दृश्यते । अस्ति च तत्रापि करो-

तिसामानाधिकरण्यं, किं कर्त्तव्यं, भोक्तव्यम्, किं कृतवान्भुक्तवानिति । किञ्च । भावयति घटमिति वत्तन्मते भवति घटमित्यपि स्यात् । तुल्यार्थत्वात् । दृष्टान्ते कर्तुः कुम्भकारस्य व्यापारं णिजाचष्टे दार्ष्टान्तिके त्वाख्यातप्रत्ययः । ननु प्रयोजकव्यापारो णिजर्थः कर्तृव्यापारस्त्वाख्यातार्थ इति वैषम्यमिति चेत् । कारकचक्रप्रयोक्तृ कर्तृत्वे घटस्यातथात्वात् । यदि तु धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यतइतिभर्तृहरिप्रतिपादितरीत्या प्राधान्येन धातूपात्तव्यापारस्वरूप कर्तृत्व तवापि सम्मतं कस्तर्हीदानीमाख्यातार्थः । व्यापारस्य धातुनैवाभिहितत्वात् । अपि च । धातोः सकर्मकाकर्मकत्वविभाग उच्छिद्येत । अकर्मकाच्चेत्यादिसूत्राणि च विरुध्येरन् । ननु सिद्धान्तेऽपि क्रियायाः कर्मापेक्षानियमात्कथमकर्मकतेति चेत् । न । फलव्यापारयोः सामानाधिकरण्यवैयधिकरण्याभ्यां सकर्मकाकर्मकविभागस्य वक्ष्यमाणत्वात् । किञ्च । ज्योतिष्टोमयाजीत्यादौ करणे यज इति णिनिरस्मत्पक्षे सङ्गच्छते । धातुत्वेन धातूपात्तां भावनां प्रति यजित्वेन तदुपात्तस्यांशान्तरस्य करणत्वात् । पूच्यादयो हि धातुत्वेन भावनामाहुः । विक्लित्याद्यंशान्तरे तु पाचित्वादिना प्रातिस्विकरूपेणाहुः । तच्चांशान्तरभावनां प्रति प्रायेण भाव्यतया सम्बध्यते । ज्योतिष्टोमयाजीत्यादौ तु करणतया ज्योतिष्टोमाख्येन यागेन स्वर्गं भावितवानित्यर्थप्रतीतेः । स्पष्ट चेद णिनिविधौ हरदत्तग्रन्थे । एतेन द्व्यर्थः पचिरिति भाष्यं व्याख्यातम् । भट्टिश्चाह, विभज्य सेनां परमार्थकर्मा सेनापतींश्चापि पुरन्दरोध । नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातूनिति ॥ ननु क्रियाया धात्वर्थत्वे पचतीत्यादौ एककर्तृका वर्त्तमाना पचिक्रियेति क्रियाविशेष्यको बोधो न स्यात् । प-

स्यपार्थं प्रति प्रकृत्यर्थस्य विशेषणताया औपगवादौ क्लृप्त त्वादिति चेन्न। प्रत्ययार्थः प्रधानमिति ह्युत्सर्गः स चेह त्यज्यते। क्रियाप्रधानमाख्यातमिति स्मरणात्। पाचिकेत्यादौ स्त्रीत्वस्य विशेषणत्वाभ्युपगमाच्च। प्रत्युत तवैव पचतीत्यादावनुपपत्तिः। पचन्तं तं पश्येत्यादौ शतृशानचोः कर्तृप्रधान्यस्य सर्वसम्मततया तिङ्क्ष्वपि तथात्वापत्तेः। शत्रादीनां तिङाञ्च लादेशत्वस्याविशिष्टत्वात्। आदेशानाञ्च स्थानिस्मारकत्वे स्थान्यर्थाभिधायित्वे वार्थैक्यध्रौव्यात्। अत एव हि युष्मदि समानाधिकरणे मध्यम अस्मद्युत्तम इत्यादिपुरुषव्यवस्था सङ्गच्छते। अभिहिते कर्तरि प्रथमेत्यादि च। न च समानाधिकरणइत्यनेन स्वाभिधेयसंख्यान्वयित्वमभिहितशब्देन चाभिहितसङ्ख्याकत्वं विवक्षितमिति वाच्यम्। सूत्राननुगुणत्वात्। कृत्तद्धितसमासैः सख्याया अनभिधानात्तदभिहितेपि तृतीयाप्रसङ्गाच्च। न च कृत्यनभिधानमेव कर्तुरनभिधानमिति वाच्यम्। भावार्थलकारेपि कर्तरि प्रथमापत्तेरिति दिक्। स्यादेतत्। अस्तिभवतिविद्यतिषु क्रियावाचित्वमव्याप्तम्। नहि तत्रोत्पादः प्रतीयते। एवन्तिष्ठतावपि तथा जायतउत्पद्यते इत्यत्राप्यव्याप्तिः उत्पत्तिर्हि आद्यक्षणसम्बन्धः। तदनुकूलव्यापारश्चोत्पादना। तदनुभवश्चास्त्यादिभ्यो नास्त्येव। अत एव किं करोतीति प्रश्ने पचतीत्यादिवदस्तीति न प्रतिब्रुवतइति चेत्। उच्यते। अस्तीत्यादेः स्वरूपधारणं करोतीत्यर्थः। धारणञ्चोत्तरकालसम्बधः। तथासत्यपि करोत्यर्थे धात्वर्थान्तर्गतेन धारणेनैव भाव्यराकाङ्क्षायाः पूरणात् जीवतिनृत्यत्यादिवदकर्मकता। क्रिया हि व्यापारव्यधिकरणत्रोत्पत्तिरुच्यते। अत एव तत्र घटादीना कर्मता। परसमवेतव्यापारफलीभूतोत्पत्तिशालित्वात्। जनि-

प्रभृतिभिस्तु व्यापारसमानाधिकरणेनोच्यते। अत एवाकर्मकता तेषाम्। सोत्पत्त्यनुकूलव्यापारभाजामपि सूक्ष्मरूपापन्नघटादीनां परसमवेतत्वघटितकर्मताविरहात्। उक्तञ्च हरिणा। आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यतइति॥ अन्ये त्वाहुः। अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना। अन्यत्रांशेऽभावात्तु सा तथा न प्रकाशतइति॥ तथा पचौ विक्लिदौ च विक्लित्तिर्यद्यपि साधारणी तथापि पचौ व्यापारव्यधिकरणा विक्लिदौ तु तत्समानाधिकरणा सेति सकर्मकाकर्मकविभागः। नहि धात्वर्थभूतफलशालित्वमात्रं कर्मत्वं किन्तु व्यापारवैयधिकरण्यमपि फलेऽपेक्ष्यते। यत्तूक्तं किं करोतीति प्रश्ने इत्यादि। तदसिद्धम्। आसन्नविनाशं कञ्चिदुद्दिश्य किं करोतीति प्रश्ने अस्तीत्युत्तरस्य सर्वसम्मतत्वात्। इतरत्र तु सुस्थतया निश्चिते किं करोतीति प्रश्नः पाकादिविशेषगोचर एवेत्यवधारणादस्तीति नोत्तरम्। एतेन यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयतइत्यपि व्याख्यातम्। पूर्वापरीभावापन्नानेकक्षणविशिष्टस्योत्पत्तिरात्मास्तीत्यादावपि सुलभैवेति भावः। पचत्यादावपि हि अधिश्रयणादिरधःश्रयणान्तो व्यापारकलापः क्रिया। अत एव तस्य युगपदसन्निकर्षान्न प्रत्यक्षता। किन्तु एकैकस्याधिश्रयणादिव्यापारस्य क्रमेणानुभवे सति मनसा सङ्कलना क्रियते। तदुक्तं भाष्ये। क्रिया नामेयमत्यन्तापरिदृष्टा अशक्या पिण्डीभूता निदर्शयितुमिति। ऐक्यमपि पारिभाषिकम्। एकफलावच्छिन्नत्वात्। उक्तं च। गुणभूतैरवयवैः समूहः क्रमजन्मनाम्। बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यतइति॥ तदेवं भवत्यादौ क्रियावाचकत्वं सुवचम्। अत एवाभूदस्तिभविष्यतीति का-

लयोगः । न हि क्रियात्वं विनासौ सम्भवति । तदुक्तम् । क्रियाभेदाय कालस्तु सङ्ख्या सर्वस्य भेदिकेति ॥ कालानुपातियद्रूपन्तदस्तीति प्रतीयतइति च ॥ भाष्ये तूक्तार्थसाधनाय निरुक्तकारवचनमुदाहृतम् । षड्भावविकारा इति ह स्माह भगवान्वार्ष्यायणिरिति। भावस्य क्रियायाः षड् प्रकारा इत्यर्थः । तेषु च जायतेऽस्तीति पाठात्सर्वक्रियान्वयः सिद्ध इत्यर्थः । कैयटस्तु प्रकारान्तरेणापि व्याचख्यौ । भावस्य सत्ताया एते प्रकाराः सत्तैवानेकक्रियात्मिका साधनसंबन्धादवसीयमानसाध्यस्वरूपा जन्मादिरूपतयावभासतइति । तथा च । जातिसमुद्देशेपि सम्बन्धिभेदत्सत्तैवेत्युपक्रम्योक्तम्, प्राप्तक्रमविशेषेषु क्रिया सैवाभिधीयते। क्रमरूपस्य संहारे तत्सत्त्वमिति कथ्यतइति ॥ व्यापारविशेषाणां साध्यत्वात् क्रमिकत्वाच्च तदुपहितायास्ते भवत इत्यर्थः । पाक इत्यादौ तु प्रकृत्या साध्यावस्थाया असत्वरूपाया उपस्थितिः । घञा तु सिद्धरूपायाः । उक्तञ्च । क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्त्तिता । सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति यज्ञविधिम् ॥ आख्यातशब्दे भागाभ्यां साध्यसाधन वर्तिता । प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥ साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना । सत्त्वभावस्तु यस्तस्याः स घञादि निबन्धन इति ॥ लिङ्गसङ्ख्याकारकाद्यन्वययोग्येनावस्थाविशेषेण घञादिभ्य उपस्थितिरित्यर्थः । एतेन कृदभिहितो भावो द्रव्यवत्प्रकाशतइति तृतीयाध्याये भाष्यमपि व्याख्यातम् । प्रकल्पितेत्यनेन पदस्फोटस्यैव वास्तवतां ध्वनयति । साध्यत्वेनेति । अत एव तस्मिन्कारकतया ओदनादेरन्वय इति भावः । अत एव भोक्तुं पाको भुक्त्वा गमनमित्यादौ तुमुनादयः सिद्धाः । क्त्वोर्यास्त्व-

नभिधानान्नेत्येव शरणम्। अत एव क चिद्दृश्यतेपि द्विर्वचनम्। द्विरणविधिरिति सूत्रवार्त्तिकयोः प्रयोगात्। सत्त्वभावस्त्विति। अत एव पाकं करोतीत्यादौ कारकत्वेन सान्वेतीत्यर्थः। नन्वेवं पश्य मृगो धावतीत्यादौ मृगकर्तृकशीघ्रगतेर्दर्शनम्प्रति कर्मता न स्यात्। न च ससर्गमर्यादयेह कर्मत्वाभानेपि प्रकारत्वेनाभानान्नोक्तदोष इति वाच्यम्। एवमपि पचतिभवतीत्यादावसङ्गतेः। एककर्तृका वर्त्तमाना पचिक्रिया एककर्तृका वर्तमाना भवनक्रियेति हि तत्र वाक्यार्थः। तत्र च भवतीति लकारार्थस्य कर्तुर्देवदत्तकर्तृकपचिक्रियां प्रत्यभेदेन संसर्गेण विशेष्यत्वस्यावश्यकत्वात्। तथा च देवदत्तवत्पचिक्रियायाः सत्वधर्मो दुर्वारः। अत्राहुः। कर्तृत्वकर्मत्वयोरनुभवबलाद्भानं स्वीक्रियते। कारकान्तराभावमात्रे तु तात्पर्यमिति। आख्यातशब्दे भागाभ्यामित्युदाहृतश्लोकोप्येतदभिप्रायक एव। तत्र यं प्रतीत्युत्तरश्लोकानुरोधादिति तृतीये स्फुटीकरिष्यामः। एतेन अपाक्षीदपाक्षीः पचतः पचन्ति पक्ष्यति पक्ष्यत इत्यादावपि भवतीत्यनेन कर्तृत्वेनान्वयो व्याख्यातः। भावी वर्त्तते ध्वस्तोस्तीत्यादाविव सूक्ष्मावस्थस्य वर्त्तमानसत्तासम्भवात्॥

उपदेशेजनुनासिक इत्॥ उपदेशेनुनासिकोजित्संज्ञः स्यात्। उपदिश्यतेनेनेत्युपदेशः। कृत्यल्युटो बहुलमिति बाहुलकात्करणे घञ्। अन्यथा ल्युट् स्यात्। स च धातुपाठप्रातिपदिकपाठौ सूत्रवार्त्तिके च। एतैर्हि शब्दा उपदिश्यन्ते। तत्र [illegible] भयत स्वकृता पठितस्याप्यनुनासिकस्य पाठ इदानीमप भ्रष्टः। अत [illegible] प्रति निर्हुर्वृत्तिकाराः। प्रतिज्ञानुनासिक्याः पाणिनीया इति। [illegible] पि इ-लित्वं स्पर्धेत्यादावनुदात्तेत्त्वादात्मनेपदम्। एधते। स्पर्धते।

गित्वान्नुम् ।·भवान्·। लण्सूत्रे अकारस्येत्त्वाद्रप्रत्याहारसिद्धिः। आचारेवगल्भक्लीबहोढेभ्य इति वार्त्तिके ऽवगल्भादेरनुनासिकत्वेनानुदात्तेत्त्वात्तङ् । अवगल्भतइत्यादि । उपदेशे इति किम् । अभ्रआँअपः । आङोऽनुनासिकश्छन्दसीत्यनुनासिकः । नासौ शास्त्रे पठितः । नन्वेवं उञ ऊँ इत्यत्रातिप्रसङ्गः । विधानसामर्थ्यान्नेति तु प्रकृतेपि तुल्यम् । अथानुबन्धा अनेकान्ता इति पक्षे अभ्रआँ अटित · इत्यादावादितश्चेतीण्निषेधार्थमित्संज्ञा किन्न स्यादिति चेन्न । एवमपि आङ इदिति वक्तव्ये· अनुनासिकविधानस्य वैयर्थ्यापत्तेः । एतेन दधि इच्छतीति दधि· ब्राह्मणकुलं दधीयतेः क्विप्यल्लोपयलोपयोर्ह्रस्वत्वे· चाणोप्रगृह्यस्येत्यनुनासिकः । अत्रेदितोनुम्धातोरिति नुम् स्यात् । दधि मध्वित्यादिषु प्रातिपदिकेषु भवतिपचतीत्यादिषु·च इत्कार्यं लोप एव स्यात् । तस्मादुपदेशग्रहणं कर्त्तव्यमिति परास्तम् । अणोप्रगृह्य इदिति वक्तव्ये ऽनुनासिकविधानसामर्थ्यादित्संज्ञाविरहोपपत्तेः । सत्यम् · । उत्तरार्थमुपदेशग्रहणम् । आजिति किम् । मनिन्प्रत्यये मकारस्य मा भूत् । सत्यां हि तस्यामन्येभ्योपि दृश्यन्तइति·हलन्तेष्वित्यादचः परः स्यात् । अनुनासिकः किम् । चिरिणोति जिरिणोति ॥

हलन्त्यम् ॥ उपदेशेन्त्यं हलित्स्यात् । यद्यपि सर्वो हल् तन्तमवधिं प्रत्यन्त्यो भवति तथापि·धातुप्रातिपदिकत्वाद्युपाधिपरिच्छिन्नसमुदायं प्रत्यन्त्य इह गृह्यते । अन्त्यग्रहणसामर्थ्यात् । शीङ् स्वप्ने ङित्त्वात्तङ् । शेते । उपदेशे किम् । अग्निचित् । श्रोत्रियश्छन्दोधीते शेत्रियच् परसेप्रे चिकित्स्य इत्यादौ तु वाक्यार्थे पदवचनमिति· पक्षे ऽविद्यमानप्रकृतिप्रत्ययविभागेष्युपदेशेन्त्यत्वान्नकारस्येत्संज्ञा । सनुत इत्यस्य स्वरादिपाठा-

दित्संज्ञा मात्रा उच्चारणसामर्थ्यान्न भवति । न च रित्स्वरः प्रयोजनम् । अन्तोदात्तनिपातनवैयर्थ्यापत्तेः । स्यादेतत् । हल्ग्रत्याहारसिद्धेरेतत्सूत्रसापेक्षत्वादन्योन्याश्रयः । पदार्थबोधं विना वाक्यार्थज्ञानासम्भवात् । अत्राहुः । हल् च ल् चेति समाहारद्वन्द्वे संयोगान्तलोपेन लकारोप्यत्र निर्दिश्यते । तेन लस्येत्संज्ञायां सत्यामादिरन्त्येनेति हल्संज्ञा । ततोन्त्यं हलिदिति वाक्यार्थबोधः । यद्वा । हल् इति तन्त्राद्वृत्त्येकशेषाणामन्यतमाश्रयणाद्धस्य समीपवर्त्ती लकारो हल् स इदिति । सम्पूर्णसूत्रावृत्त्या हल्सूत्रस्यान्त्यं हलन्त्यमिति वा । इह पक्षत्रये पूर्वः पूर्वः प्रबलो लाघवादिति तत्त्वम् । यद्वा । हल्सूत्रे लृकारस्यैव तपरकार इतिवद् गुणभूतस्य निर्देशः । तस्य च पुषादिद्युताद्यॢदित इति ज्ञापकादित्संज्ञा । न तूपदेशेजनुनासिक इति। अच्संज्ञाया अद्याप्यनिष्पादात् । यत्तु णलो लित्करणं ज्ञापकमिति । तच्चिन्त्यम् । लित्त्वस्याद्याप्यसिद्धेः । न च विभेदेत्यत्र लोपाभावार्थं हल्ङ्याब्भ्य इत्यादिसूत्रे ऽपृक्तं हलिति द्वितीयहल्ग्रहणं तत्र ज्ञापकमिति वाच्यम् । भवितेत्यादौ डानिवृत्त्यर्थं हल्ग्रहणोपपत्तेः । न च सुतिसीतिप्रत्ययैः प्रकृतेराक्षेपाच्चैवमिति वाच्यम् । यासेत्यादौ सुलोपानापत्तेः । न चैकदेशविकृतस्यानन्यत्त्वादेकादेशस्य च पूर्वान्ततया ग्रहणाद्धलन्तायाः प्रकृतेः परत्वेनेष्टसिद्धिः । यः स इत्यत्रातिप्रसङ्गात् । तस्माल्लोपप्रवृत्तिकाले हलन्तत्वं वाच्यम् । तच्च यासेत्यत्रापि नास्ति किं त्वाबन्तात्परत्वमाश्रित्य लोपः कार्यः । न च तत्राबन्ता प्रकृतिः । उभयत आश्रयणेन्तादिवद्भावायोगात् । अथ तदस्यांग्रहणमिति निर्देशादाबन्तस्थले उभयतआश्रयेप्यन्तादिवद्भावं ब्रूषे तथापि हल्शब्दस्यैवाद्यापि शक्त्यग्रहे कथं हल्ग्रहणसामर्थ्याण्णलो लित्त्वं

निश्रेयम् । न च लितीति ज्ञापकम् । ल्युडादौ चरितार्थत्वात् । तस्मादुक्तप्रकारचतुष्टयमेव शरणम् । स्यादेतत् । आद्ये हल्संज्ञातः पूर्वं कथं संयोगान्तलोपः । संयोगसंज्ञाया अनिष्पत्तेः । द्वितीये ह्रस्य ल् इति कथं समासः । सुप्संज्ञाया अनिष्पादात् । एवं तृतीये हलोन्त्यमिति तत्पुरुषः कथम् । चतुर्थे च लृदित इति बहुव्रीहिः कथम् । उच्यते । साधुत्वज्ञानोपयोगिनः शास्त्रस्याप्यर्थबोधो यदि तद्बोध्यसाधुत्वानां पदानां स्वार्थानुभावकतायामुपयुज्येत तदैष दोषः स्यात् । स च नोपयुज्यते । प्रमाणाभावात् । शतशो व्यभिचाराच्च । यथा चैतत्तथा अइउणित्यत्रैव प्रतिपादितम् ॥

न विभक्तौ तुस्माः ॥ विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः । रामान् । पचेरन् । ब्राह्मणाः । पचतः । रामम् । अद्राक्षम् । विभक्तौ किम् । अचो यत्, ऊर्णाया युस्, रुधादिभ्यः श्नम्, प्राग्दिशोविभक्तिरिति यत्र विभक्तिसंज्ञा तत्रायं निषेधो न भवति।इदमस्थमुरिति मकारपरित्राणार्थमुकारानुबन्धासञ्जनाज्ज्ञापकात् । तेन किमोत्, यत्र इति सिद्धम् । स्यादेतत् । तदानीमित्यादौ दानीमोपि तर्हि मित्त्वं स्यादिति चेन्न । यान्तत्वात्तस्य । यकारोन्त्यत्वमनुभवन्मकारस्येत्संज्ञां प्रतिबध्नाति । संयोगान्तस्य लोप इति यलोपस्येत्संज्ञां प्रत्यसिद्धतया मकारस्यान्त्यत्वाभावात् । यद्वा । इदमस्थमुरित्यनेनानित्यत्वमात्रं ज्ञाप्यते । न तु प्राग्दिशीयेष्वप्रवृत्तिः । भीन्, इदोदित्यत्र तु मुखसुखार्थस्तकारः । न त्वित्संज्ञकः । तित्स्वरापत्तेः । न चेष्टापत्तिः । उदीचाये । अशीयत्रवतामारा इत्यादौ उदीभशीयेत्यनयोरन्तोदात्ततादर्शनात् । आयुदात्तश्चेति सूत्रे अशिवीयेत्यत्र भाष्यकारैरेवान्तोदात्तत्वस्य सिद्धान्तितत्वाच्च । पञ्चिर इतिक्रमात्तम्, किमोत्,

इटोत् इत्यत्रायं निषेधो न भवति अनित्यत्वादस्य विधेरिति । तत्स्वोक्तिविरुद्धम् । इटोदिति सूत्रे तकार उच्चारणार्थ इति तेनैवोक्तत्वात् । तस्मादभ्युपेत्यवादमात्रम् । यद्वा । इटोदित्यत्रास्य अकारमात्रस्य विधेः । अनित्यत्वादिति तु किमोदित्येतत्परमिति व्याख्येयम् ॥

आदिर्ञिटुडवः ॥ उपदेशे आदिभूताः ञि टु डु एते इतः स्युः । ञिइन्धी । इद्धः । टुवेपृ । वेपथुः । डुवप् । उप्त्रिमम् । उपदेशइति किम् । ञिकारीयति । आदिः किम् । पटूयति । अस्ति हि पृथ्वादिषु पटुशब्दस्योपदेशः । अत्रेत्संज्ञायां सत्यामथुच् स्यात् । अवयवे ह्यचरितार्थं द्वित्वं समुदायस्य विशेषकं स्यात् ॥

षः प्रत्ययस्य ॥ प्रत्ययस्यादिः ष इत्स्यात् । शिल्पिनि ष्वुन्, नर्तकी । प्रत्ययस्येति किम् । षोडश । षषडत्वमित्यत्रोपदेशस्थोयं षकारः । आदिः किम् । अविषः । महिषः । अविमहिभ्यां टिषच् । नन्वत्र प्रयोजनाभावादेव षकारस्येत्संज्ञा न भविष्यति ईकारस्य टित्वादेव सिद्धेः । न च पक्षे ङीपर्थः षकारः । ङीपोपि पितः परस्योदात्तनिवृत्तिस्वरेणोदात्तत्त्वात् । सत्यम् । विनिगमकाभावेन पक्षे टकारस्यापि श्रवणं स्यात् ॥

चुटू ॥ प्रत्ययाद्यौ चुटू इतौ स्तः । गोत्रे कुञ्जादिभ्यश्च्फञ् । कौञ्जायन्यः । छस्य ईयादेशं वक्ष्यति । जस् । ब्राह्मणाः । झस्यान्तादेशो वक्ष्यति । सोस्याभिजन इत्यधिकारे शण्डिकादिभ्यो ञ्यः । शाण्डिक्यः । चरेष्टः । कुरुचरी । ठस्येकादेशं वक्ष्यति । सप्तम्यां जनेर्डः । उपसरजः । ठस्यैकादेशं वक्ष्यति । धनगणं लब्धेत्यतो लब्धेत्यनुवर्तमाने, अन्नाण्णः । अन्नं लब्धा आन्नः । षुटुषाः प्रत्ययस्येति कर्तव्ये योगविभागादनित्यमिदम् । तेन केशचुञ्चुः केशचण इत्यत्र

चकारस्येत्संज्ञा न। सत्यां हि तस्यां चित इत्यन्तोदात्तः स्यात्। चित्करणं तु पर्यायार्थं स्यात्। अत्रात्कुटारच्चेत्यतो ऽवादित्यनुवर्तमाने नतेनासिकाया इति टीटच्। अवटीटः। यद्वा। चुञ्चुप्चणप्टीटचोयादयः। लोपोव्योरिति यलोप इति व्याख्येयम्॥

लशक्वतद्धिते॥ तद्धितभिन्ने प्रत्यये आदिभूता लशकवर्गा इतः स्युः। ल्युट् च। भवनम्। कर्तरि शप्। भवति। क्तक्तवतू निष्ठा। भूतः भूतवान्। प्रियवशेवदः खच्। प्रियंवदः। वशंवदः। ग्लाजिस्थश्चग्स्नुः। जिष्णुः। भञ्जभासमिदो घुरच्। भङ्गुरम्। ङे। हरये। अतद्धिते किम्। चूडालः। प्राणिस्थादातो लजन्यतरस्याम्। लोमशः। अत्र प्रयोजनाभावान्नेत्संज्ञेत्यपि सुवचम्। कर्णिका। कर्णललाटात्कनलङ्कारइति भवार्थे कन्। अत्र किति चेति वृद्धिः स्यात् रूपञ्च न सिध्येत्। इर उपसङ्ख्यानं, रुणद्धि। अयं वा रेफो हलन्त्यमितीत्संज्ञः। इकारस्तूपदेशेजनुनासिक इति। स्यादेतत्। एवं सतीदित्त्वान्नुम् स्यात्। न च तक्रकुम्भीधान्यन्याय आश्रयितुं शक्यः नन्दतीत्याद्यव्याप्तेः। सत्यम्। स्कन्दिरप्रभृतीनां नकारपाठो ज्ञापकः अन्तेदितामेव नुमिति। यद्वा। गोः पादान्तइति सूत्रादन्तग्रहणमनुवर्त्तयिष्यते। तच्चावश्यमनुवर्त्यम्। चक्षिङो नुम्मा भूदिति। अथवा न दश इति ज्ञापकान्न भविष्यति सति हि नुमि इगुपधत्वाभावादेव क्सस्याप्राप्तेः किं तन्निषेधेन। यद्वा। इरितोवेति ज्ञापकात्समुदायस्येत्संज्ञा। अवयवे अचरितार्थस्य स्वरितत्वस्य समुदायविशेषकत्वात्स्वरितेत्त्वप्रयुक्तमात्मनेपदम्। तेन रुन्ध इत्यादि सिद्धम्॥

तस्य लोपः॥ तस्येतो लोपः स्यात्। तस्यग्रहणं सर्वलोपार्थम्।

ञिटुडूनामलोन्त्यस्य मा भूत् । नानर्थकेलोन्त्यविधिरिति तु नास्ति । अलोन्त्यात्पूर्व उपधेति सूत्रे तस्य प्रत्याख्यानात् ॥

यथासङ्ख्यमनुदेशः समानाम् ॥ समसङ्ख्यानां सम्बन्धो यथाक्रमं स्यात् । नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । नन्दनः । ग्राही । पचः । समूलाकृतजीवेषु हन्कृञ्ग्रहः । समूलघातं हन्तीत्यादि । अत्रानुवाद्ययोरपि धातूपपदयोर्यथाक्रमं बोध्यम् । स्यादेतत् । विदिभिदिच्छिदेः कुरजित्यादौ तच्छीलाद्यर्थत्रयेण यथासङ्ख्यं प्राप्नोति । एवं ख्यत्यात्ङसिङसोरित्यादावपीति चेत् । अत्र भाष्यम् । स्वरितेनेत्यपकृष्यते । तेन स्वरितत्वाभावान्नेह यथासङ्ख्यमिति । प्रतिज्ञास्वरिताः पाणिनीयाः । स्वरितत्वाभावादेव कर्तृकर्मणोश्च भूकृञोरिति सूत्रे, न यथासंख्यं नाडीमुष्ट्योश्चेति सूत्रे यथासंख्यं च भवत्येवेति भाष्यम् । वृत्तिकारस्तु कर्तृकर्मणोश्च नाडीमुष्ट्योश्चेति सूत्रद्वयेपि भाष्यं विपरीतं वदन्नुपेक्ष्यः । नाडीमुष्ट्योश्चेति सूत्रे यथासङ्ख्याभावपरं भाष्यमपि पूर्वापरविरोधाचिन्त्यम् । एतदेव वा मतान्तरपरं सत्तत्रत्यवृत्तेरालम्बनमस्तु । कर्तृकर्मणोरित्यत्र तु वृत्तिश्चिन्त्यैव । वेशोयशआदेर्भगाद्यल्खाविद्यत्राप्यस्वरितत्वादेव न यथासङ्ख्यम् । इह सूत्रे भाष्ये वृत्तौ चेत्थं स्थितम् । चतुर्थे तु वृत्तिकारो योगं व्यभजत् । भगाद्यलिति ख-श्चेति च ॥

स्वरितेनाधिकारः ॥ इत्थंभूतलक्षणे तृतीया । अधिकारो विनियोगः स्वरितत्वयुक्तशब्दस्वरूपमधिकृतं बोध्यम् । प्रत्ययः परश्चेत्यादि । यथा प्रायेणोत्तरत्रोपस्थितिः । क्वचित्तु पूर्वत्रापि । तदुक्तम् । अतिङिस्त्युभयोर्योगायोः शेष इति । कियद्दूरमधिकार इत्यत्र व्याख्यानं शरणम् । यथा आतृतीयाध्यायान्तं धात्वधि-

कारो न तु प्राग्लादेशेभ्य एव। तथा आसप्तमाध्यायपरिसमाप्तेरङ्गाधिकारो न तु प्रागभ्यासविकारेभ्य एवेत्यादि । यद्वा। स्वरिते इति सप्तम्यन्तम्। तेन तस्मिन्दृष्टे अधिकारो निर्वर्तत इत्यर्थः । कः स्वरिताधिकारार्थः कश्च तन्निवृत्त्यर्थ इत्यत्र तु व्याख्यानमेव शरणम्। नन्वेवं व्याख्यानादेवानुवृत्त्यननुवृत्ती स्तां किमनेन सूत्रेण । सत्यम्। अर्थान्तराणि सङ्गृहीतुं सूत्रं कृतम् । तथाहि । स्वरितेनाधिकाररूपोर्थो ग्राह्यः । गोस्त्रियोरित्यत्र च स्त्रीशब्दः स्वर्यते । तेन गोटाङ्ग्रहणं कृन्निवृत्त्यर्थमिति न वक्तव्यम्। किञ्च अधिकं कार्यमधिकारः । गौणेपि शास्त्रप्रवृत्तिरित्यर्थः । तथा च गौणमुख्यन्यायो यत्र नेष्यते । अपादानाधिकरणादौ तत्र स्वरित पाठ्यः । अपि च अधिकः कारः कृतिरियम् । यत्पूर्वः सन् परं बाधते । तथा च पूर्वविप्रतिषेधाः संगृहीता भवन्ति । तत्रतत्र स्वरितपाठेनैव गतार्थत्वादिति दिक् ॥

इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

अनुदात्तङित आत्मनेपदम् ॥ अनुदात्तेत उपदेशे यो ङित्तदन्ताद्धातोर्लस्थाने आत्मनेपदमेव स्यात्। एधते । स्पर्धते। बोभूयते । ऋतीयते । कथं तर्हि शेतइत्यादि, ङिदेव त्वयमिति चेत् । सत्यम् । व्यपदेशिवद्भावो बोध्य । उपदेशे किम्। चुकुटिषति। गाङ्कुटादिभ्य इति सन आतिदेशिकं ङित्त्वम्। धातोरिति किम् । अत्युतत् अदुद्रुवदिति ङिद्भ्यामङ्चङ्भ्यां मा भूत् । कथं पुनर्धातोरिति लभ्यतइति चेत् । भूवादिसूत्रान्मण्डूकप्लुत्यानुवृत्तस्य धातव इत्यस्य विभक्तिविपरिणामात् । सादृश्यमात्रेण परिणामव्यवहारो वस्तुगत्या तु योग्यशब्दान्तरमेव सन्निहितं भवतीति कैयटः । यद्वा । आत्मनेपदेनैव लका-

रस्य धातोश्चाक्षेपः । इकोझलित्यत्र सना धातोराक्षेपवत् । अत एव ङिता तस्य विशेषणात्तदन्तविधिर्व्याख्यातः । चित्रीयतइत्यादौ तु अवयवे ऽचरितार्थेन ङकारेण क्यजन्तस्य विशेषण ततो व्यपदेशिवद्भावान्ङिदन्ततेति दिक् । एतेन चिनुतः सुनुत इति व्याख्यातम् । यत्तु तत्र ङितीव ङिद्वदिति व्याख्यानमाश्रित्य समाधानं, तदापाततः । पचेतेइत्यादावातोङित इति इयादेशाभावप्रसङ्गात् । ननु वृद्भ्यः स्यसनोरिति सूत्रे स्यग्रहणेन विकरणेभ्यो नियमो वलीयानिति ज्ञापितत्वाच्चङ्ङोश्चिनुत इत्यादौ चानुपपत्तिरेव नास्तीति चेत् । उपजनिष्यमाणेनापि ङिता उपसञ्जातनिमित्तस्यापि परस्मैपदस्य बाधापत्तेः । नियमो वलीयानित्यस्यापि पाक्षिकत्वाच । वृद्भ्यः स्यसनोरित्यस्य विकरणव्यवधानेपि नियमप्रवृत्तिरिति ज्ञापकताया अपि सुवचत्वात् । शदेः शित इति सूत्रे भाष्यकैयटयोरिदं स्पष्टम् । तस्माद्यथाव्याख्यानमेव मनोरमम् । हरदत्तस्तु ङित इत्येव व्याख्यत् । धातोरिति नापेक्ष्यते । नियमो वलीयानित्याश्रयणाच्चङादौ न दोषः । न च भाविना ङिता बाधः । परत्वात्परस्मैपदस्यैवोचितत्वादिति तस्याशयः । उभयथापि यङीयङोर्ङित्वस्य गुणनिषेधे चरितार्थतामाशङ्क्य यङः प्रागनुदात्तमकारं प्रश्लिष्य जुचङ्क्रम्यदन्द्रम्येति ज्ञापकाद्गुजभावं वदन्तः ईयङः प्रागिकारमीकारं वा प्रश्लिष्य आद्ये अन्तोदित्त्वाभावान्न नुम्, द्वितीये एकाच इत्यनुवृत्तेः श्वीदितोनिष्ठायामिति नेण्निषेध इति कल्पयन्तः परास्ता । स्यादेतत् । यङ्लुक्यपि सर्वत्रातिव्याप्तिः । प्रत्ययलक्षणेन ङिदन्तत्वात् । सत्यम् । ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणतया सुदृपदित्यत्र सोर्मनसीातिस्वरस्येवात्रसन्नस्येति दीर्घ-

स्येव चेहात्मनेपदस्याप्रवृत्तेरिति निष्कर्षः । प्राञ्चस्तु बोभूतुतेतिक्तइत्यत्र तिर्जेयङ्लुगन्तादात्मनेपदविधानं ज्ञापकं यङ्लुगन्तात्प्रत्ययलक्षणेनात्मनेपदं नेति । अत एव चर्करीतं चेत्यदादौ पठितस्य चकारात्परस्मैपदमिति व्याख्यानं ज्ञापकसिद्धार्थानुवाद इति सिद्धान्तः । नन्वेवमपि पास्पर्धीतीत्यादावात्मनेपदं दुर्वारम् । स्पर्द्धेरनुदात्तेत्त्वात् । न चेद प्रकृत्यन्तरमिति वाच्यम् । द्विःप्रयोगो द्विर्वचनं षाष्ठमिति वक्ष्यमाणत्वात् । सत्यम् । श्तिपाशपेत्यादिना निषेधो बोध्य । अनुबन्धेन निर्देशो हि द्विधा । क चित्साक्षात् । शीङः सार्वधातुके गुणः । दीङोयुडिति यथा । अनुदात्तेत इत्यादौ त्वनुबन्धत्वेन । यत्र तु नोभयथापि निर्देशस्तत्रवत्स्येव । आङोयमहनः भावकर्मणोरित्यादि यथा । नन्वाङ इति कथं नानुबन्धनिर्देश इति चेत् । न । प्रकृतिग्रहणे यङ्लुगन्तस्य ग्रहणमित्यस्य ह्ययमपवादः । तेन प्रकृतेर्यत्रानुबन्धेन निर्देश स एवास्य विषयः । अत एव चेचितः मरीमृष्ट इत्यादौ क्ङितिचेति प्रवर्तत एवेति दिक् । अथ कथं स एवायं नागः सहति कलभेभ्यः परिभवमिति । अत्राहुः । आधृषाद्वेति विकल्पितणिचः सहेरिदं रूपम् । यद्वा । चक्षिङो ङित्करणमनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यतां ज्ञापयति । स हि अनुदात्तेत् । विचक्षणः प्रथयन्नित्यादावनुदात्तेतश्चहलादेरितियुचो दर्शनात् । न चायं ल्युट् । लित्स्वरापत्तेः । अन्तोदात्तस्य च पाठापत्तेरादिति । एतेन स्फायन्निर्मोकसन्धीति मुरारिप्रयोगो व्याख्यातः । स्यादेतत् । लस्य तिबादयः । लटः शतृशानचौ । लिटः कानज्वा । क्वसुश्च । लृट सद्वेत्यात्मनेपदपरस्मैपदयोर्विहितत्वादित आरभ्यापादपरिसमाप्ति प्रकरणं कि-

मर्थमिति चेत्। नियमार्थमित्यवेहि। अत एवानुदात्तङित आत्मनेपदमेवेति व्याख्यातम्। सोयं प्रकृतिनियमः। उत्तरसूत्रे च भावकर्मणोरात्मनेपदमेवेति अर्थनियमः। यत्रैवकारस्ततोन्यत्रावधारणमिति सिद्धान्तात्। तथाहि। तदसम्बन्ध्यसम्बन्धो व्याप्तिः सैवावधारणम्। व्यापकत्वद्योतकैवशब्दसम्बद्धभिन्नजम्॥ न चास्मिन्पक्षे अनुदात्तेत्प्रभृतिभ्य परस्मैपदं मा भूत् आत्मनेपदं त्वनियतत्वादत्तीत्यादावपि स्यादिति वाच्यम्। शेषात्परस्मैपदमेवेति नियमात्। ननु तत्र कर्त्तरीत्युक्तेः कर्त्तरि परस्मैपदमेवास्तु। भावकर्मणोस्तु जागर्यते अत्तइत्यादौ परस्मैपदं दुर्वारमेवेति चेन्न। भावकर्मणोरात्मनेपदमेवेति नियतत्वात्। अस्तु वा प्रत्ययनियमः। आत्मनेपदमनुदात्तङित एवेति। भावकर्मणोरेवेति। नचैवमनुदात्तेत्प्रभृतिभ्य परस्मैपदप्रसङ्गः। परस्मैपदस्यापि शेषात्कर्त्तरीति नियतत्वात्। ननु कीदृशस्तत्र नियमः कर्त्तरि यदि परस्मैपदं भवति शेषादेवेति, शेषाद्यदि भवति कर्त्तर्येवेति वा, आद्ये अशेषात्कर्त्तरि मा भूत्। भावकर्मणोस्तु शेषादशेषाच्च परस्मैपदं दुर्वारम्। अन्त्ये शेषाद्भावकर्मणोर्मा भूत्, अशेषात्तु भावकर्मकर्तृषु त्रिष्वपि प्राप्नोति। सत्यम्। योगविभागेन नियमद्वयं बोध्यम्। शेषादेव तत्रापि कर्त्तर्येवेति। तस्मादिह प्रकरणे प्रकृत्यर्थनियमः प्रत्ययनियमो वेति पक्षद्वयमपि स्थितम्। स्यादेतत्। विकरणव्यवधाने नियमो न प्राप्नोति। तथाहि। विकरणानामत्र काशो लादेशभिन्नाः। इक्श्तिपौ धातुनिर्देशइति श्तिप्। पाघ्राध्माधेट्दृशः शः। ताच्छील्यादिषु चानश्। नियमस्यावकाशः लिट्लिङौ लुङ्लुङ्श्च। पस्पर्धे, स्पर्धिषीष्ट, आस्ते, शेते, अत्ति, जुहोति, भिनत्ति, भूयादित्यादि। एधते,

स्पर्धते, कुरुते, निविशनइत्यादावुभयप्रसङ्गे परत्वान्नित्यत्वाच्च विकरणेषु तैर्व्यवधानान्नियमो न स्यात् । ततश्च प्रकृतिनियमपक्षे विकरणान्तादुभयप्रसङ्गः । प्रत्ययनियमेपि तुल्यजातीयस्यैव नियमेन व्यावृत्तिः धातोरनन्तरस्य लस्य यद्यात्मनेपदमनुदात्तङित एव यदि तु परस्मैपदं शेषादेवेत्यादि । तथा च धात्वन्तरात्तद्व्यावृत्तावपि विकरणव्यवधाने नियमाप्रवृत्तेः पदद्वयमपि स्यादेव । सत्यम् । विकरणेभ्यो नियमो बलीयानिति वृद्भ्यः स्यसनोरितिस्यग्रहणेन ज्ञाप्यते । अतो नियमद्वयेप्यदोषः । तत्रापि प्रकृत्यर्थनियमपक्षो बलीयानित्यवधेयम् । तत्र हि शेषात्कर्त्तरीति न वाच्यम्, किन्तु परस्मैपदमित्येव यत्र तच्चान्यच्च प्राप्तं तत्र परस्मैपदमेव स्यात् । प्रत्ययनियमपक्षे तु शेषादिति कर्त्तरीति वाच्यम्, योगश्च विभजनीय इति दोषत्रयमधिकं स्यात्। तिबादिवाक्येन सह वाक्यभेदः परिसङ्ख्याप्रयुक्तत्रिदोषता चेति दोषचतुष्कन्तु पक्षद्वयेप्यस्त्येव । यदि तु तदपि किमर्थं सोढव्यमिति बुद्धिस्तर्हि लस्य तिबादय इत्यनेनसहेदं प्रकरणमेकवाक्यतया विधायकमिति व्याख्येयम् । अस्मिन्पक्षे शेषात्कर्त्तरीति कर्त्तव्यमेव । परस्मैपदमात्मनेपदमिति च सूत्रशाटकवद्भाविनी संज्ञाश्रयणीया । अन्यथा विहितानां संज्ञा संज्ञया च विधानमित्यन्योन्याश्रयः स्यात् । अस्मिंश्च पक्षे विकरणेषु न कश्चिद्दोषः । लादेशेषु कृतेषु सार्वधातुकमाश्रित्य विकरणप्रवृत्तेः । न च स्यादिषु दोषस्तदवस्थ एवेति वाच्यम् । लमात्रापेक्षयान्तरङ्गेषु तिबादिषु कृतेषु लकारविशेषापेक्षतया बहिरङ्गाणां स्यादीनां प्रवृत्तेः ॥

भावकर्मणोः ॥ अनयोर्विहितस्य लस्यात्मनेपदं स्यात् । सुप्यते । क्रियते । प्राग्वदेकवाक्यतया विधिः भिन्नवाक्यतया नि-

यमो वेति बोध्यम् । नियमोपि द्विधा । प्रत्ययनियमो ऽर्थनियमश्चेति । न चान्त्यपक्षे कर्मणि यक् न स्यात् को भवता लाभो लब्ध इति, अकर्त्तरिचेत्यस्य त्वपादानादिरवकाश इति वाच्यम् । तुल्यजातीयस्य परस्मैपदस्यैव नियमेन व्यावर्त्तनात् । स्यादेतत् । लूयते केदारः स्वयमेवेत्यत्र परस्मैपदं प्राप्नोति । कर्मवत्कर्मणेत्यनेन हि शास्त्रं व्यपदेशो वातिदिश्यते । तथा च तेन तेन शास्त्रेण तत्तत्कार्यं कर्त्तव्यम् । तत्र कर्मण्यात्मनेपदमित्यस्यात्रकाशः शुद्धं कर्म, कर्त्तरि परस्मैपदमित्यस्य शुद्धः कर्त्ता । कर्मकर्त्तर्युभयप्रसङ्गे परत्वात्परस्मैपदमिति । सत्यम् । प्राधान्यात्कार्यातिदेश एवेत्यात्मनेपदमेव परं बोध्यम् । पक्षान्तरे तु शेषात्कर्त्तरीत्यत्र कर्त्तरिकर्मेत्यतः कर्त्तरीत्यनुवर्त्य कर्त्तैव यः कर्त्ता तत्र परस्मैपदं न तु कर्मकर्त्तरीति व्याख्यातम् ॥

कर्त्तरि कर्मव्यतिहारे ॥ विनिमयविपयीभूतायां क्रियायां वर्त्तमानाद्धातोः कर्तर्यात्मनेपदं स्यात् । व्यतिलुनीते । अन्यस्य योग्यं लवनं करोतीत्यर्थः । परस्परकरणमपि कर्मव्यतिहारः । सम्प्रहरन्ते राजानः । व्यात्युक्षीमभिसरणग्लहामदीव्यन् । कर्तृग्रहणमुत्तरार्थम् ॥

न गतिहिंसार्थेभ्यः ॥ एभ्यः कर्मव्यतिहारे आत्मनेपदं न स्यात् । व्यतिगच्छन्ति । व्यतिसर्पन्ति । व्यतिघ्नन्ति । प्रतिषेधे हसादीनामुपसङ्ख्यानम् । हसादयो हसप्रकाराः शब्दक्रियाः । व्यतिहसन्ति । व्यतिजल्पन्ति । हरतेरप्रतिषेधः । सम्प्रहरन्ते राजानः । अर्थग्रहणसामर्थ्याद्ये शब्दान्तरनिरपेक्षा गतिहिंसयोर्वर्तन्ते तइह गृह्यन्ते । हरतिस्तूपसर्गवशाद्धिंसायां वर्त्तत इति न तस्यायम्प्रतिषेध इत्याहुः । ततः सम्प्रहरिष्यन्तौ दृष्ट्वा कर्णधनंजयावित्यत्र तु योत्स्यमानाविति विवक्षितं न तु

कर्मव्यतिहारः । वहेस्तु नायं प्रतिषेध । अगत्यर्थत्वात् । प्रापणं हि वहेरर्थः । गतिप्रतीतिस्त्वाक्षेपात् ॥

इतरेतरान्योन्योपपदाच्च ॥ आत्मनेपदं न स्यात् । परस्परोपपदाच्चेति वक्तव्यम् । इतरेतरस्यान्योन्यस्य परस्परस्य वा व्यतिलुनन्ति । लौकिके शब्दव्यवहारे लाघवं प्रत्यनादरादितरेतरादिशब्दा व्यतीत्युपसर्गौ च कर्मव्यतिहारद्योतनाय समुच्चीयन्ते । तथात्मनेपदमपि समुच्चीयेतेति निषेधोयमारभ्यते । नन्वेवं सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयमित्यत्र तङ् कथं नेति चे, त्करणविनिमये सत्यपि क्रियाविनिमयस्याविवक्षितत्वात् ॥

नेर्विशः ॥ निपूर्वाद्विश आत्मनेपद स्यात् । निविशते । नेः किम् । प्रविशति । कथं तर्हि न्यविशत न्यविक्षतेति, अटा व्यवधानात् । न च स्वाङ्गमव्यवधायकमिति वाच्यम् । अङ्गभक्तस्याटो विकरणानां प्रत्ययावयवत्वेपि धातुम्प्रत्यनवयवत्वेन व्यवधायकत्वादिति । अत्राहुः । तिवादिविधेः प्राग्लावस्थायां धातोरेवाडागमः । लुङ्लङित्यत्र द्विलकारकनिर्देशस्य भाष्यकृताऽसिद्धवत्सूत्रप्रत्याख्यानावसरे वक्ष्यमाणत्वात् । मतान्तरेपि लकारविशेषापेक्षत्वाद्बहिरङ्गमडागम बाधित्वा लमात्रापेक्षत्वादन्तरङ्गेषु । तिवादिषु कृतेषु नियमो भविष्यति । विकरणेभ्यो नियमो बलीयानिति सिद्धान्तात् । अत्र च वृद्भ्यः स्यसनोरिति स्यग्रहणं ज्ञापकमिति बोध्यम् । अथेदं ज्ञापक विकरणव्यवधानेपि नियमः प्रवर्त्ततइत्येवपरतयानीयेत तथाप्यदोषः । अन्तरङ्गत्वात्तिवादिषु सत्सु शब्दान्तरप्राप्त्याऽनित्ययोरड्विकरणयोर्मध्ये परत्वादडप्रवृत्ते. । ननु विकरणः शब्दान्तरात्प्राप्तो न तु शब्दान्तरस्येति चेत्, किन्ततः । न हि शब्दान्तरस्येति वाचनिकम् । किन्तु न्यायोयम् । तथा च शब्दा-

न्तरस्य प्राप्नुवत इव तस्मात्प्राप्नुवतोप्यनित्यत्वम्। यद्व्यक्तिसम्बन्धितया पूर्वं प्राप्नोति तद्व्यक्तिसम्बन्धितया पुनरप्राप्तेस्तुल्यत्वात्। अत एवोपसर्गनियमे ऽड्व्यवायउपसङ्ख्यानमिति वार्त्तिकं प्रत्याख्यातम्। शदेःशित इति सूत्रे भगवता भाष्यकारेणेति दिक्। अर्थवद्ग्रहणपरिभाषया नेरुपसर्गस्य ग्रहणं तेनेह न। मधूनि विशन्ति भ्रमराः। कथं तर्हि इत्युक्त्वा मैथिलीं भर्त्तुरङ्के निविशन्ति भयादिति कालिदास इति चेत्। अङ्गानि विशतीमिति पाठ इति प्रामाणिकाः। यत्तु पदसंस्कारपक्षेण समाधानं दुर्घटवृत्तौ कृतम्। तन्न। अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेः। अन्यथा ऽतिप्रसङ्गात्। वालिप्सायामित्यादेर्वैयर्थ्यापत्तेश्चेति दिक्॥

परिव्यवेभ्यः क्रियः॥ एभ्यः क्रीणातेरात्मनेपदं स्यात्। ञित्त्वादेव सिद्धे सत्यकर्त्रभिप्रायार्थोयमारम्भः। परिक्रीणीते। विक्रीणीते। अवक्रीणीते। पर्यादय उपसर्गा इह गृह्यन्ते। तन्त्र,वृत्ताद्याश्रयणेन क्रीणातेर्ये पर्यादयस्तेभ्यः क्रिय इति व्याख्यानात्। परस्परसाहचर्याद्वा। तेनेह न। विक्रीणासीति। अत्र ल्वेरुदेशविकृतस्यानन्यत्वात्प्राप्नोति। न चायं विभक्तिविशिष्टस्य विरित्यस्य विकारो न तु विशब्दस्येत्युत्तरसूत्रस्थकैयटवाक्याद् भ्रमितव्यम्। विभक्तेर्लोपात्। प्रकृतिभागस्यैव विकारात्। कैयटस्याप्ययमपरितोषोस्त्येव। अत एव वक्ष्यति पक्षिवाचिनो विशब्दस्य सम्भवे तु साहचर्यादुपसर्गग्रहणं व्याख्येयमिति॥

विपराभ्याञ्जेः॥ स्पष्टोर्थः। विजयते। पराजयते। प्राग्वदुपसर्गग्रहान्नेह। विजयति पराजयति सेना। परा उत्कृष्टा। ननु जेरिति कथं निर्देशः। प्रकृतिवदनुकरणमित्यतिदेशेन

धातुतया इयङि ज्ञिय इति वक्तव्यत्वात् । न च नियः क्रिय इति दीर्घे सावकाशमियङं परत्वाद् घेर्ङितीति गुणो बाधतइति युक्तम् । ह्रस्वेष्वपि पूर्वविप्रतिषेधेनेयङ इष्टत्वात् । अत एव क्षिय इति निर्दिश्यते । किञ्च क्षियोदीर्घादिति सूत्रे दीर्घग्रहणमपीह ज्ञापकम् । अन्यथा क्षिय इति निर्देशादेव दीर्घस्य निर्णये किं तेन । उच्यते । अनित्योयमतिदेशः । अतो नेयङ् । अनित्यतायां प्रमाणन्तु ऋलृक्सूत्रएवोक्तम् । अविवक्षितार्थरूपमात्रानुकरणाद्वा।यत्तु पराजेरसोढ इति सूत्रे इयङः परत्वाद्घेर्ङितीति गुण इति हरदत्तेनोक्तम् । तच्चिन्त्यम् । क्षियोदीर्घादित्येतत्सूत्रस्थभाष्यकैयटवृत्तिग्रन्थैस्तत्रत्यहरदत्तग्रन्थाभ्याञ्च सह विरोधात् ॥

आङो दोनास्यविहरणे ॥ आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थे वर्त्तमानादात्मनेपदं स्यात् । विद्यामादत्ते । अनास्यविहरणे किम् । मुखं व्याददाति । आस्यग्रहणमविवक्षितम् । उपेयिवाननाश्वाननूचानश्चेत्यत्रोपशब्दवत् । तेनेहापि न विपादिकां व्याददाति । पादस्फोटो विपादिका । नदीकूलं व्याददाति । पराङ्गकर्मकादनास्यइति निषेधो नेष्यते । तथा च वार्त्तिकम् । स्वाङ्गकर्मकाच्चेति । स्वमङ्गमिह स्वाङ्गं न त्वद्रवं मूर्त्तिमदिति परिभाषितम् । व्याददते पिपीलिकाः पतङ्गस्य मुखम् । कथन्तर्हि व्याददे विहगपतिर्मुखं स्वकीयम् । कर्त्रभिप्राये भविष्यति । अकर्त्रभिप्रायार्थो ह्ययमारम्भः । एतेन मुखं व्यादाय स्वपितीत्यत्र सुप्त्वा व्याददतइति व्यस्तपासेन प्रयोग इति मैत्र भावपरीक्षायां वाचस्पतिग्रन्थोपि व्याख्यातः । आङो दिद्विशिष्टस्य ग्रहणान्नेह, भिक्षामाददाति । अत्र स्मृतावाकार इति हरदत्तः ॥

क्रीडोनुसम्परिभ्यश्च ॥ क्रीड् विहारे । अस्मादात्मनेपदं

स्यात्। अनुसम्परिभ्यः। चकारादाङः। अनुक्रीडते। सङ्क्रीडते। परिक्रीडते। आक्रीडते। उपसर्गेण समा साहचर्यादनोः कर्मप्रवचनीयात्र। माणवकमनुक्रीडति। माणवकेन सहेत्यर्थः। तृतीयार्थइत्यनोः कर्मप्रवचनीयसंज्ञा। समो ऽकूजने॥ सङ्क्रीडति शकटम्। मयास्य सङ्क्रीडति चक्रिचक्र इति श्रीहर्षः। कथं तर्हि क्रीडते नागराज इति। अपप्रयोग एवायमित्याहुः। आगमेः क्षमायाम्॥ ण्यन्तस्येदं ग्रहणम्। आगमयस्व तावत्। सहस्व काञ्चित्कालम्। मा त्वरिष्ठा इत्यर्थः। एतेन यावदागमयतेथ नरेन्द्रानिति श्रीहर्षप्रयोगो व्याख्यातः। यावत्प्रतीक्षते इत्यर्थात्। शिक्षेर्जिज्ञासायाम्॥ धनुषि शिक्षते। शिक्ष विद्योपादानइत्यस्य नेह ग्रहणम्। अनुदात्तेत्त्वादेव सिद्धत्वात् किन्तु शकेः सन्नन्तस्य। सनिमिमेतीस्। धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः। क्रियैव हि शकेरर्थं प्रति विषयतयैवान्वेति। भोक्तुं शक्नोतीत्यादिदर्शनात्। भोजनविषयकशक्तिमानिति हि तदर्थः। शकधृषज्ञाग्लाघटरभेति तुमुन्। इह तु ज्ञानं विषयः। ज्ञातुमिति तु न प्रयुज्यते आत्मनेपदेनैव ज्ञानविषयकताया गमितत्त्वात्। न चैवं जिज्ञासायामित्यसंगतम्। ज्ञानेच्छा हि तदर्थः। लक्ष्ये तु ज्ञान शक्तो विषयः। शक्तिस्तु सनर्थभूतायामिच्छायामिति व्याख्यानात्। सत्यम्। ज्ञानविशिष्टायाः शक्तेरिच्छाविषयतया ज्ञातस्यापि विषयतानपायात्। एतावानेव परम्भेदः। इच्छा सन्वाच्या। शक्तिस्तु प्रकृत्यर्थः। तस्यास्तु ज्ञानविषयकत्वमात्मनेपदेन द्योत्यतइति। आशिषि नाथः॥ अनुदात्तेत्त्वादेव सिद्धे नियमार्थं वार्तिकम्, आशिष्येवेति। न चैवमनुदात्तेत्त्वं व्यर्थमिति वाच्यम्। तस्य नाथनइति युजर्थत्वात्। सर्पिषो नाथते। आशिषि नाथ इति कर्मणि

षष्ठी।सर्पिषो भूयादित्याशास्तइत्यर्थः।कथं तर्हि नाथसे किमु पतिं न भूभृतामिति भारविः। उच्यते। नाधसइति पाठः। तवर्गचतुर्थस्थाने लिपिप्रमादाद् द्वितीयः पठ्यते। अत एव काव्यप्रकाशे च्युतसंस्कृतेरुदाहरणम् तत्पल्लीपतिपुत्रिकुञ्जरकुलं कुम्भाभयाभ्यर्थनादीनं त्वामनुनाथते कुचयुगं पत्रावृत मा कृथा इति॥ अनुनाथति स्तनयुगमिति तु पठनीयमिति तत्रैवोक्तम्। अत्रापि धकारो वा पाठ्यः। हरतेर्गतताच्छील्ये॥ गतं प्रकारः। पैतृकमश्वा अनुहरन्ते। मातृकं गावो ऽनुहरन्ते। पितुर्मातुश्चागतं प्रकारं सततं परिशीलयन्तीत्यर्थः। ऋतष्ठञ्। इसुसुक्तान्तात्कः। गतताच्छील्ये किम्। मातुरनुहरति। सादृश्यमात्रमिह विवक्षितं न तु प्रकारताच्छील्यम्। किरतेर्हर्षजीविकाकुलायकरणेषु॥ विक्षेपार्थः किरतिः। हर्षादयस्तु विषयत्वेनोपात्ताः। तत्र हर्षो विक्षेपस्य कारणं जीविकाकुलायकरणे तु फलम्। एष्वेवार्थेष्वपाच्चतुष्पादिति सुड्विधीयते। अपस्किरते वृषो हृष्टः कुक्कुटो भक्षार्थी श्वा आश्रयार्थी च। हर्षादिष्विति किम्। अपकिरति कुसुमम्। इहात्मनेपदसुडागमौ न भवतः। हर्षादिमात्रसत्त्वे तु यद्यपि तङ् प्राप्नोति। तद्विधौ चतुष्पाच्छकुनिकर्तृकत्वस्य निमित्तत्वेनानुपादानात्। तथापि शब्दशक्तिस्वाभाव्यात्सुटा सह समानविषयोयं तङ्। तेन गजोपकिरतीत्येव भवतीत्याहुः। आङि नुप्रच्छ्योः॥ आनुते। उत्कण्ठापूर्वं शब्दं करोतीत्यर्थः। णु स्तुतौ, अदादिः। आपृच्छते। प्रच्छ ज्ञीप्सायाम्, तुदादिः। ग्रहिज्येति सम्प्रसारणम्। शप उपालम्भने॥ शप आक्रोशइति स्वरितेत्। तस्मादात्मनेपदमकर्तृगेपि फले वक्तव्यं शपथरूपेर्थे। देवदत्ताय शपते त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येकं रूपं शपथं करोतीत्यर्थः।

श्लाघह्नुङ्स्थाशपामिति सम्प्रदानसंज्ञा । ईप्स्यमाने, विवदन्ते । तद्यथा । यस्माआख्यायते स सम्प्रदानमित्येके । य आख्यायते स इत्यन्ये । कथं तर्हि नीवीम्प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किञ्चिदपि स्मरामीति ॥ अत्राहुः । स्वाशयं प्रकाशयामीत्येतावदिह विवक्षितं न तु शपथ इति ॥

समवप्रविभ्यः स्थः ॥ एभ्यस्तिष्ठतेः प्राग्वत् । सन्तिष्ठते । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते । आङः प्रतिज्ञायामुपसंख्यानम् । शब्दं नित्यमातिष्ठते नित्यत्वेन प्रतिजानीतइत्यर्थः । वृत्तौ तु अस्तिसकारमातिष्ठते।गुणवृद्धीआगमा वा तिष्ठतइत्युदाहृतम्।अस्यार्थः । आपिशलिर्हि अस भुवीति न पठति किं तु सकारमात्रम् । स्तः सन्तीत्युदाहरणम् । अस्ति आसीदित्यादि सिद्धये तु अडाटावागमौ प्रतिजानीते । तत्रैव गुणवृद्धीति ॥

प्रकाशनस्थेयाख्ययोश्च ॥ तिष्ठतेरेतयोरर्थयोरात्मनेपदं स्यात् । गोपी कृष्णाय तिष्ठते । स्वाभिप्रायं प्रकाशयतीत्यर्थः । श्लाघह्नुङिति सम्प्रदानत्वम् । संशय्य कर्णादिषु तिष्ठते यः । कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः । स्थेयो विवादपदनिर्णेता तिष्ठतेस्मिन्निति व्युत्पत्तेः । वृत्तौ तु तिष्ठन्त्यस्मिन्निति प्रयुक्तम् । तत्र प्रकरणाच्छिादिना विवादपदनिर्णेतुः प्रतीतिर्न तु शाब्दीत्यभिप्रायेण परस्मैपदं बोध्यम् । कृत्यल्युटोबहुलमिति अधिकरणे अचो यत् ॥

उदोनूर्ध्वकर्मणि ॥ उत्पूर्वात्तिष्ठतेरनूर्ध्वत्वविशिष्टे परिस्पन्दे वर्त्तमानादात्मनेपदं स्यात् । उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता । अनूर्ध्वेति किम् । जवेन पीठादुदतिष्ठदच्युत । इह क्रियाया अनूर्ध्वत्वं नाम उपरिदेशसंयोगफलकत्वाभावः । यद्यपि उदोनूर्ध्वेइत्युक्तेरनूर्ध्वताविशिष्टक्रियावा-

चकत्वं लभ्यतएव धातोः। क्रियावाचित्वाव्यभिचारात्तथापि लोकप्रसिद्धपरिस्पन्दात्मककर्मपरिग्रहार्थं कर्मपदम् । तेनेह न । अस्माद् ग्रामाच्छतमुत्तिष्ठति । उत्पद्यतइत्यर्थः । तथा च उदईहायामिति वार्त्तिकं सौत्रकर्मपदासिद्धार्थकथनपरम् ॥

उपान्मन्त्रकरणे ॥ मन्त्रकरणं कारकविशेषो यत्र तस्मिन्नर्थे वर्त्तमानादुपपूर्वकात्तिष्ठतेरात्मनेपदं स्यात् । आग्नेय्याग्नीध्रमुपतिष्ठते ऐन्द्र्या गार्हपत्यमुपतिष्ठते। मन्त्रकरणे किम्। भर्तारमुपतिष्ठति यौवनेन । उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम् ॥ देवपूजायां, आदित्यमुपतिष्ठते । कथं तर्हि स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वतीति । देवतात्वारोपाद्भविष्यति । महीपतेर्देवतांशत्वाद्वा । सङ्गतकरणे, रथिकानुपतिष्ठते । उपश्लिष्यतीत्यर्थः । एवं गङ्गा यमुनामुपतिष्ठतेइति । मित्रकरणन्तूपश्लेषं विनापि भवति । रथिकानुपतिष्ठते । अयं पन्थाः स्रुघ्नमुपतिष्ठते । प्राप्नोतीत्यर्थः ॥ वा लिप्सायामिति वक्तव्यम् । भिक्षुको ब्राह्मणमुपतिष्ठते उपतिष्ठति वा । लिप्सया हेतुभूतया उपगच्छतीत्यर्थः ॥

अकर्मकाच्च ॥ उपपूर्वकात्तिष्ठतेरकर्मकादात्मनेपदं स्यात् । भोजनकाले उपतिष्ठते । सन्निधत्तइत्यर्थ ॥

उद्विभ्यां तपः ॥ आभ्यां तपतेरकर्मकादात्मनेपदं स्यात् । उत्तपते वितपते । दीप्यतइत्यर्थः। स्वाङ्गकर्मकाच्चेति वक्तव्यम् ॥ स्वमङ्गं स्वाङ्गम् । न त्वद्रवमिति परिभाषितम्। उत्तपते वितपते पाणिम्। अकर्मकात्स्वाङ्गकर्मकादित्युक्तेः स्वमङ्गं स्वाङ्गमिति व्याख्यानाच्च नेह देवदत्तो यज्ञदत्तस्य पाणिमुत्तपति । सन्तापयतीत्यर्थ । सुवर्णमुत्तपति । सन्तापयति विलापयति वेत्यर्थ । उद्विभ्यां किम् । निष्टपति । निसस्तपतावनासेवनइति मूर्धन्यः ॥

आङो यमहनः ॥ आङ्पूर्वाभ्यामकर्मकाभ्यां स्वाङ्गकर्मकाभ्याञ्च यमिहनिभ्यामात्मनेपदं स्यात् । आयच्छते । आहते । आयच्छते पाणिम् । अहते शिरः । नेह । परस्य शिर आहन्ति । कथं तर्ह्याजघ्ने विषमविलोचनस्य वक्ष इति भारविः । अत्र केचित् । आजेति पदं छित्वा घ्न इति भावे क्विपि चतुर्थ्येकवचनान्तमुक्त्वा घ्ने हन्तु आजजगामेति व्याचख्युः । तन्न । अजेर्लिटि वीभावेन विवायेति सिद्धान्तात् । अन्ये तु विषमविलोचनस्य समीपमेत्य स्वं वक्षमास्फालितवानित्यर्थः । मल्लो त्वुत्साहाविष्करणाय स्वं वक्षमास्फालयतीत्याहुः । भागवृत्तौ तु प्रमाद एवायमित्युक्तम् । एवञ्च मोहादाहध्वमा रघूत्तममिति भट्टिप्रयोगोपि चिन्त्यः ॥

समो गम्यृच्छिभ्याम् ॥ सम्पूर्वाभ्यामकर्मकाभ्यां गम्यृच्छिभ्यामात्मनेपदं स्यात् । सङ्गच्छते । समृच्छिष्यते । अकर्मकाभ्यां किम् । ग्रामं सङ्गच्छति । कथन्तर्हि तच्चैक्यं समगच्छतेति । आर्षत्वात् । यद्वा । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । एक समपद्यतेत्यर्थः । विदिपृच्छिस्वरतीनामुपसङ्ख्यानम् ॥ विदेर्ज्ञानार्थस्येह ग्रहणम् । परस्मैपदिभ्यां साहचर्यात् । न लाभार्थस्य । स हि स्वरितेत्त्वादुभयपदी । सत्ताविचारणार्थयोस्त्वनुदात्तेत्वादात्मनेपदं सिद्धमेव । सवित्ते सविदाते संविद्रते । सम्पृच्छते संस्वरते । अर्त्तिश्रुदृशिभ्यश्चेति वक्तव्यम् ॥ अर्त्तीतिभ्वादिजुहोत्यादी द्वावपि गृह्येते । सर्त्तिशास्तीत्यङ्विधौ तु शास्तिना लुग्विकरणेन साहचर्याज्जुहोत्यादेरेव ग्रहणम् । परस्मैपदेष्विति तूत्तरार्थमनुवर्तमानमपि योगविभागसामर्थ्यादङ्विधौ न सम्बध्यते । तेन मासमृत मासमृषातां मासमृषतेति भाष्यं भ्वाद्यभिप्रायेण । समारत समारेतां समारन्तेति वृत्तिस्तु जुहोत्या-

अभिप्रायेण योज्या। संशृणुते सम्पश्यते। रक्षांसीति पुरापि संशृणुमहे इति मुरारिमयोगस्तु चिन्त्यः। अकर्मकादित्यनुवृत्तेः। वृत्तिकारस्तु, समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्य इति पठित्वा दृशेश्चेति वक्तव्यरूपेण पपाठ। तत्र वार्तिकानुपूर्वीभङ्गे केषाञ्चिदेव सूत्रे प्रक्षेपे दृशेश्च तद्बहिष्कारे वीजं न पश्यामः। अथास्मिन्नकर्मकाधिकारे ये सकर्मका हनिगामिप्रभृतयस्तेषां कथमकर्मकता। उच्यते। धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोकार्मिका क्रिया॥ वहति भारमिति प्रापणे सकर्मको वहिः। स्पन्दने त्वकर्मकः। वहन्ति नद्य इति। प्राणविशिष्टं धारणं जीवतिराह। गात्रविशिष्टं विक्षेपञ्च नृत्यतिः। अतो द्वावप्यकर्मकौ। प्रसिद्धेर्यथा। मेघो वर्षतीति। कर्मणो ऽविवक्षातो यथा। हितान्न यः संशृणुते स किंप्रभुः। उपसर्गादस्यत्यूह्योर्वेति वक्तव्यम्। इत आरभ्याकर्मकादिति न सम्बध्यते। निरस्यति निरस्यते। समूहति समूहते। उपसर्गात्किम्। अस्यति। ऊहते। अनुदात्तेत्त्वादात्मनेपदी। कथन्तर्हि अनुक्रमप्यूहति पण्डितो जन इत्यादि। चक्षिङो ङित्करणेनानुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यताज्ञापनात्समाधेयम्॥

निसमुपविभ्यो ह्वः॥ स्पष्टोर्थः। निह्वयते। अकर्त्रभिप्रायार्थं सूत्रम्। स्यादेतत्। निह्वास्यते इत्याद्युदाहरणमस्तु न तु निह्वयते इति। आकारान्तस्य सूत्रे उपादानात्। एकारान्तस्य ग्रहणाभावात्। नहि विकृतिः प्रकृतिं गृह्णातीति चेत्। उच्यते। आकारान्तादपि कथमभ्युपैषि। नहि ह्व इति सूत्रे आकारविशिष्टः पठितः। प्रयोगसमवायिनां वाचकतेति सिद्धान्तरीत्या ह्व इति वान्तस्य आकारान्तमर्थः। दध्नेत्यत्र नान्तस्य दधी वेति यदि तर्हि वान्तस्यैव एकारान्तमर्थ इत्यपि

तुल्यम् । प्रक्रियादशायां हि एकारान्तानुकरणे लक्षणवशादात्वं न तु आकारान्त इहानुकार्यः । तस्मान्न किञ्चिदिहानुपपन्नम् । यत्तु न्यासकृतोक्तं नव्योलिंटीत्यात्वनिषेधके सूत्रे कृतात्वस्य व्य इत्यस्य निर्देशाज्ज्ञाण्कादिकृतिरपि प्रकृतिं गृह्णातीति । सोयमस्थाने संरम्भः । उक्तरीत्या पूर्वपक्षस्य शिथिलत्वात् । एरनेकाच ओःसुपीत्यादावपि विकृतिग्रहणे शिशयिपतइत्यादावपि यणापत्तेः । विकृतेः प्रकृतिग्राहकत्वे विश्वराजावित्यत्रापि विश्वस्यवसुराटोरिति दीर्घप्रसङ्गात् । तुरासाहमित्यादौ मूर्धन्यप्रसङ्गाच्चेति दिक् ॥

स्पर्धायामाङः ॥ आङ्पूर्वात् ह्वयतेरात्मनेपदं स्यात्स्पर्धाया विषये । मल्लमाह्वयते । स्पर्धमानस्तस्याह्वानङ्करोतीत्यर्थः । *स्पर्धायां किम् । पुत्रमाह्वयति । यद्यपि स्पर्धायामप्यय* धातु पठ्यते तथापि आङ्पूर्वकस्तत्र न वर्त्तते किं तु शब्दने । अत एव स्पर्धायां विषये अयं विधिरिति व्याख्यातम् ॥

गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ सप्तस्वर्थेषु कृञ आत्मनेपदं स्यादकर्तृगेपि फले । गन्धनमिह सूचनम् । तथाहि । गन्ध अर्दने अर्द हिंसायामिति च चुरादौ पाठाद्गन्धन हिंसा । सूचनमपि वधबन्धादिकरणत्वाद्धिंसेति स एवेह *गन्धनशब्दार्थः* । उत्कुरुते । सूचयतीत्यर्थः । अवक्षेपणं भर्त्सनम् । श्येनो वर्तिकामुदाकुरुते भर्त्सयतइत्यर्थः । हरिमुपकुरुते । सेवतइत्यर्थ । सहसा वर्त्तते साहसिकः । ओज सहोम्भसा वर्त्ततइति ठक् । तस्य कर्म साहसिक्यम् । ष्यञ् । परदारान्प्रकुरुते । तेषु सहसा प्रवर्त्ततइत्यर्थः । प्रतियत्ने, एधो दकस्योपस्कुरुते । अवोदैधौध्मेति निपातः । समाहारद्वन्द्वः । कृञ प्रतियत्नइति षष्ठी ।

उपात्प्रतियत्नेत्यादिना सुट् । तस्य गुणान्तराधानं करोतीत्यर्थः । गाथाः प्रकुरुते । प्रकर्षेण कथयतीत्यर्थः । उपयोगः समीचीनो विनियोगः । शतं प्रकुरुते । धर्मार्थं विनियुङ्क्तइत्यर्थः । एषु किम् । कटं करोति ॥

अधेः प्रसहने ॥ अधिपूर्वात्कृञः प्राग्वदभिभवे क्षमायाञ्च । षह मर्षणे ऽभिभवे चेति पाठात् । ये त्वभिभवे छन्दसीति पठन्ति तेषामपि छन्दसीति प्रायोवाद इति हरदत्तः । तमधिचक्रे । अभिभूतवान् सोढवान्वेत्यर्थः । एतेन भवादृशाश्चेदधिकुर्वते परानिति भारविप्रयोगोपि व्याख्यातः । क्षमन्तइत्यर्थात् ॥

वेः शब्दकर्मणः ॥ विपूर्वात्कृञ आत्मनेपदं स्यात् शब्दश्चेत्कर्म कारकं भवति । स्वरान्विकुरुते । उच्चारयतीत्यर्थः । शब्दकर्मणः किम् । चित्तं विकरोति कामः ॥

अकर्मकाच्च ॥ वेः कृञोकर्मकात्प्राग्वत् । हीनान्यनुपकर्तॄणि प्रवृद्धानि विकुर्वते ॥

सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ एषु योत्यमानेषु नयतेरात्मनेपदं स्यात् । तत्रोत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्याः । इतरे प्रयोगोपाधयः । तथाहि । आचार्यः शास्त्रे नयते । शास्त्रीयसिद्धान्तानुपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयतीत्यर्थः । ते च शिष्या युक्तिभिर्निश्चाय्यमानाः सम्मानिता भवन्ति तदीयाभिलषितार्थसम्पादनात् । तथा चात्र नयतेः प्रापणमेवार्थः । शिष्यसम्माननन्तु तदीयं फलं सत्प्रयोगोपाधिः । उत्सञ्जने दण्डमुन्नयते । उत्क्षिपतीत्यर्थः । आचार्यकरणे, माणवकमुपनयते । विधिना आत्मसमीपप्रापणमिह नयतेरर्थः । तत्फलं माणवकसं-

स्कारः । तस्य कर्तृगामित्वाभावादप्राप्तमात्मनेपदं आचार्यकरणे विधीयते उपनयनपूर्वकेणाध्यापनेन हि कश्चिदतिशयोऽध्यापके जन्यते । स एवाचार्यशब्दप्रवृत्तिनिमित्तम् । उपनीय वदद्वेदमाचार्यः स उदाहृत इत्यपि अतिशयविशेषपरिचायकपरम् । तथा चाचार्यकरणं फलीभूतं प्रयोगोपाधिः । न च तस्य कर्तृगामित्वादात्मनेपदं सिद्धमेवेति वाच्यम् । नहि तत्तुपनयनक्रियायाः साक्षात्फलं किन्तूपनयनपूर्विकाया अध्यापनक्रियायाः । प्रयोगोपाधित्वं तु परम्परया फलीभूतस्याप्यस्तीति दिक् । विनिन्युरेनं गुरवो गुरुप्रियमित्यत्र तु आचार्यकरणस्याविवक्षितत्वान्न तङ् । विवक्षा हि स्वायत्तेत्युपक्षोपक्रमं तदाद्याचिख्यासायामितीच्छासना ज्ञापितम् । ज्ञाने, तत्त्वं नयते । निश्चिनोतीत्यर्थः । भृतिर्वेतनम् । कर्मकरानुपनयते । भृतिद्दानेनात्मसमीप प्रापयतीत्यर्थः । विगणनमृणादेर्निर्यातनम् । करं विनयते, राजदेयं भागं शोधयति निर्यातयतीत्यर्थ । व्ययो, धर्मादौ विनियोगः । शतं विनयते । धर्मार्थे विनियुङ्क्तइत्यर्थः । एषु किम् । घटं नयति ॥

कर्तृस्थे चाशरीरे कर्मणि ॥ नियः कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्ने एव स्यात् । शरीरशब्देन तदवयवो लक्ष्यते । शरीरतादात्म्यापन्नस्य कर्तृतया शरीरस्य तत्स्थत्वासम्भवात् । अवयवानान्तु सम्बन्धविशेषेण तत्स्थत्वस्यानुभवात् । अत एव हि करादि पुरुषत्वव्याप्यमित्युद्घोषः । क्रोधं विनयते । स्वकीयं क्रोधमपगमयतीत्यर्थः । क्रोधापनयनफलस्य चित्तप्रसादादेः कर्तृगतत्वात्स्वरितञित इति सूत्रेण सिद्धे नियमार्थमिदम् । तेनेह न । गडुं विनयति । कथन्तर्हि विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषव

इति भारविः । कर्त्रभिप्रायत्वाविवक्षाया भविष्यति । केचित्तु अपनयने वर्त्तमानादनेनात्मनेपदं विधीयते । इह तु करोत्यर्थे भासयर्थे वा वर्त्तते । धातूनामनेकार्थत्वादित्याहुः ॥

वृत्तिसर्गतायनेषु क्रमः ॥ क्रमआत्मनेपदं स्यादप्रतिबन्धोत्साहस्फीततासु । वृत्तौ । ऋच्यस्य क्रमते बुद्धिः । न प्रतिहन्यतइत्यर्थः । सर्गे । व्याकरणाध्ययनाय क्रमते । उत्सहतइत्यर्थः । सृजतेरुत्साहार्थतायेनेन्द्रलोकावजयाय सृष्ट इत्यादौ प्रसिद्धा । तायने । क्रमन्तेऽस्मिन् शास्त्राणि । स्फीतीभवन्तीत्यर्थः । ताय सन्तानपालनयोरित्यस्माल्ल्युटि तायनमिति रूपम् ॥

उपपराभ्याम् ॥ वृत्त्यादिषूपपराभ्यामेव क्रमेरात्मनेपदं स्यान्न तूपसर्गान्तरपूर्वात् । उपक्रमते । आभ्यामेवेति नियमान्नेह । सङ्क्रामति । वृत्त्यादिष्वित्येव । नेह । उपक्रामति पराक्रामति ॥

आङ उद्गमने ॥ आङ्पूर्वात्क्रमेरुद्गमने वर्त्तमानादात्मनेपदं स्यात् । आक्रमते आदित्यः । उदयतइत्यर्थः । ज्योतिरुद्गमन इति वाच्यम् ॥ नेह, आक्रामति धूमो हर्म्यतलात् । भाष्ये तु हर्म्यतलमिति पठ्यते । तत्रोद्गमनपूर्विकाया व्याप्तौ क्रमिर्द्रष्टव्यः न तूद्गमनमात्रे अकर्मकतापत्तेः । कथन्तर्हि नभः समाक्रामति चन्द्रमाः क्रमादिति । उच्यते । व्याप्ताविह क्रमिर्वर्त्तते न तूद्गमने ॥

वेः पादविहरणे ॥ विपूर्वात्क्रमेः पादविहरणे वर्त्तमानादात्मनेपदं स्यात् । साधु विक्रमते वाजी । पादविहरण पादविक्षेपः । यद्यपि क्रमिस्तत्रैवार्थे पठ्यते तथापि धातूनामनेकार्थत्वात्सूत्रेऽर्थोपादानम् । तेनेह न विक्रामत्यजिनसन्धिः, द्विधा भवति स्फुटतीत्यर्थः ॥

प्रोपाभ्यां समर्थाभ्याम् ॥ तुल्यार्थाभ्यां प्रोपाभ्यां क्रमेरात्मनेपदं स्यात् । समस्तुल्योर्थो ययोरिति विग्रहे शकन्ध्वादित्वात्पररूपं संशब्द एव वा तुल्यार्थो बोध्यः । प्रारम्भेनयोस्तुल्यार्थता । प्रक्रमते । उपक्रमते । आरभतइत्यर्थः । समर्थाभ्यां किम् । प्रक्रामति । गच्छतीत्यर्थः । उपक्रामति । आगच्छतीत्यर्थः । उपपराभ्यामिति तु नेह प्रवर्त्तते । तत्र वृत्त्यादिग्रहणानुवृत्तेरुक्तत्वात् । इह च वृत्त्यादेरविवक्षणात् ॥

अनुपसर्गाद्वा ॥ अनुपसर्गात्क्रमेरात्मनेपदं वा स्यात् । क्रामति । क्रमते । उपपराभ्यामित्यस्य नियमार्थत्वाद्वृत्त्यादिसूत्रमनुपसर्गविषयकमेव । तेन वृत्त्यादौ नायं विकल्पः । तस्मादप्राप्तविभाषैवेयम् ॥

अपन्हवे ज्ञः ॥ अपलापे वर्त्तमानाज्जानातेरात्मनेपदं स्यात् । शतमपजानीते । अपलपतीत्यर्थः ॥

अकर्मकाच्च ॥ अकर्मकाज्जानातेरात्मनेपदं स्यात् । सर्पिषो जानीते । सर्पिषा उपायेन प्रवर्त्ततइत्यर्थः । ज्ञोविदर्थस्येति करणे षष्ठी । अकर्मकादित्यस्य स्थाने सकरणादित्येव तु नोक्तम् । स्वरेण पुत्रं जानातीत्यत्रातिव्याप्तेः ॥

सम्प्रतिभ्यामनाध्याने ॥ आभ्यां जानातेरात्मनेपदं स्यादनाध्याने । शतं सञ्जानीते । अवेक्षतइत्यर्थः । शतम्प्रतिजानीते । अङ्गीकरोतीत्यर्थः । अनाध्याने किम् । मातुः सञ्जानाति । उत्कण्ठापूर्वं स्मरतीत्यर्थः । अधीगर्थेति कर्मणि षष्ठी । ननु तत्र शेष इत्यनुवर्त्तते । तेनात्र कर्मणः शेषत्वेन विवक्षितत्त्वादकर्मकाच्चेति पूर्वेण प्राप्नोति । अत्राहुः । अनाध्यानइति विभज्यते । स चोभयोर्योगयोः शेषः तेनाध्याने पूर्वेणापि न भवतीति ॥

भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ एष्व-र्थेषु वदेरात्मनेपदं स्यात् । अत्रोपसम्भाषोपमन्त्रणे धातोर्वाच्ये । इतरे प्रयोगोपाधयः । भासनन्दीप्तिः । शास्त्रे वदते । भासमानो ब्रवीतीत्यर्थः । भासनं हेतुभूत सद्विशेषणं शिष्यैः स्तूयमानो हि भासते । तथा चोपर्युपरि शास्त्रार्थप्रतिभासात्सुष्ठूक्तिर्निर्वहति । तेजोभङ्गे तु न शक्नुयाद्वदितुमिति भावः । उपसम्भाषोपसान्त्वनम् । कर्म्मकरानुपवदते उपसान्त्वयतीत्यर्थः। ज्ञाने, शास्त्रे वदते । उक्तिविषयकज्ञानवानिति फलितोऽर्थः । यत्न उत्साहः । क्षेत्रे वदते । तद्विषयकमुत्साहमाविष्करोतीत्यर्थः । अत्राविष्करणरूपस्य वदत्यर्थस्य यत्नः कर्मेत्याहुः । विशिष्टोत्र वदतेरर्थ इत्यपि सुवचम् । विमतौ, क्षेत्रे विवदन्ते । विमत्या हेतुभूतया नानाविधं भाषन्तइत्यर्थ । उपमन्त्रणमुपच्छन्दनम् । कुलभार्यामुपवदते । स्वाभिलषिते प्रवर्त्तयितुं प्रार्थयतइत्यर्थः । एतेष्विति किम् । यत्किञ्चिद्वदति ॥

व्यक्तवाचां समुच्चारणे ॥ मनुष्यादीनां सम्भूयोच्चारणे वदेरात्मनेपदं स्यात् । सम्प्रवदन्ते ब्राह्मणाः देवा वा । यद्यपि वद धातुर्व्यक्तायामेव पठ्यते । तथापि व्यक्तवाचामित्युपादानसामर्थ्याद्येषां प्रसिद्धतरं व्यक्तवाक्यन्तदेवेह गृह्यते । तेन शुकसारिकादीनां समुच्चारणे न भवति । वरतनु सम्प्रवदन्ति कुक्कुटाः । नन्विह तनुशब्दस्य ह्रस्वान्तत्वे सम्बुद्धौ चेति गुणेन भाव्यं दीर्घान्तत्वे नदीलक्षणः कप् प्राप्नोति । सत्यम् । तनुशब्दः स्त्रीजातौ कविभिः प्रयुज्यते । तस्मादूङुत इत्यूङि कृते कर्मधारयोपमिति हरदत्तः ॥

अनोरकर्मकात् ॥ अनुपूर्वाद्वदेरकर्म्मकाद्व्यक्तवाग्विषयकादात्मनेपदं स्यात् । अनुवदते कठः कलापस्य । अनुः सादृश्ये

तेन कलापस्येति तुल्यार्थयोगे शेषलक्षणा षष्ठी । अकर्मकादिति किम् । पूर्वोक्तमनुवदति । व्यक्तवाचामित्येव । अनुवदति वीणा ॥

विभाषा विप्रलापे । विप्रलापात्मके व्यक्तवाचां समुच्चारणे वर्त्तमानाद्वदेरात्मनेपदं वा स्यात् । विप्रवदन्ते विप्रवदन्ति वा वैद्या । युगपत्परस्परविरोधेन वदन्तीत्यर्थः । विप्रलापे किम् । सम्प्रवदन्ति ब्राह्मणाः । व्यक्तवाचामित्येव । विप्रवदन्ति शकुनय । समुच्चारणइत्येव । क्रमेण विप्रवदन्ति ॥

अवाद्ग्रः ॥ अवपूर्वाद्गिरतेरात्मनेपदं स्यात् । अवगिरते । अवात्किम् । गिरति । गृणातेस्त्ववपूर्वस्य प्रयोगो नास्ति अनभिधानादिति भाष्यम् ॥

समः प्रतिज्ञाने ॥ सम्पूर्वाद्गिरतेः प्रतिज्ञाने वर्त्तमानादात्मनेपदं स्यात् । शब्दं नित्यं सङ्गिरते । प्रतिजानीतइत्यर्थ । प्रतिज्ञाने किम् । सङ्गिरति ग्रासम् ॥

उदश्चरः सकर्मकात् ॥ उत्पूर्वात्सकर्म्मकाच्चरतेरात्मनेपदं स्यात् । धर्म्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः । सकर्मकात्किम् । वाष्पमुच्चरति । उपरिष्टाद्गच्छतीत्यर्थः ॥

समस्तृतीयायुक्तात् ॥ सम्पूर्वाच्चरतेस्तृतीयान्तेन युक्तादात्मनेपद स्यात् । रथेन सञ्चरते । तृतीयायुक्तात्किम् । उभौ लोकौ सञ्चरसि इमं चामुञ्च देवल ॥

दाणश्च सा चेच्चतुर्थ्यर्थे ॥ सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादात्मनेपदं स्यात्सा चेत्तृतीया चतुर्थ्यर्थे । दास्या संयच्छते । कामुकः संस्तयै ददातीत्यर्थः । आशिष्ट्यव्यवहारे चतुर्थ्यर्थे तृतीया वक्तव्या ॥ एतच्चानेनैव ज्ञाप्यते । यद्वा, इहसूत्रे चेच्छन्दश्चशब्दार्थे । निपातानामनेकार्थत्वात् । सा च चतुर्थ्यर्थे भवतीत्य

र्थः । अशिष्टव्यवहारइति तु वक्तव्यमेव । भाष्ये त्विदं सूत्रमपि प्रत्याख्यातम् । तथाहि । यो दास्या सह भुञ्जानस्तया दत्तं स्वयं भुंक्ते स्वयञ्च तस्यै ददाति तद्विषयेयं प्रयोग इष्यते । तत्र सहयुक्तइत्येव तृतीया । कर्मव्यतिहारे च तङ् । दानपूर्वके भोगे दाण्धातुर्बोध्य इति । नन्वारभ्यमाणे सूत्रे सम्प्रयच्छतइत्यत्र कथं तङ् सम इति पञ्चम्या आनन्तर्यलाभात् । अत्राहुः । सम् इति विशेषणषष्ठी तेन पूर्वसूत्रमप्यश्वेन समुदाचरतइत्यादौ प्रवर्त्ततइति दास्या सम्प्रयच्छतइत्युदाहृत्य शिष्टव्यवहारे तु ब्राह्मणीभ्यः सम्प्रयच्छतीति प्रत्युदाहरन् भाष्यकारश्चेह व्याख्याने प्रमाणम् ॥

उपाद्यमः स्वकरणे ॥ उपपूर्वाद्यमेः प्राग्वत् स्वीकारेर्थे । भार्यामुपयच्छते । यत्स्वस्य सतो रूपान्तरेण करणं तदिह न गृह्यते किं त्वस्वस्य सतो यत्स्वत्वसम्पादनं तदेव । च्विप्रत्ययस्तु सूत्रे न कृतः समर्थानां प्रथमाद्वेति विकल्पितत्वात् । तेनेह न । स्वं शाटकमुपयच्छतीति । अत्र वृत्तिकारः पाणिग्रहणएवेष्यते । तेनेह न । देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छति । दासीत्वेन रूपेण स्वीकरोतीत्यर्थ इति । एतच्च भाष्यविरुद्धम् । तत्र स्वीकारमात्रे आत्मनेपदस्योक्तत्वात् । तथा च भट्टिः प्रायुङ्क्त । उपायंस्त महास्त्राणि शस्त्राण्युपायंसत जित्वराणि । नोपायंस्त दशाननः । उपायंसत नासवमित्यादि ॥

ज्ञाश्रुस्मृदृशां सनः ॥ सन्नन्तानामेषामात्मनेपदं स्यात् । अपह्नवे ज्ञ इत्यादिभिः सूत्रैर्ज्ञानातेरात्मनेपदं विहितं श्रुदृशोरपि समोगम्पृच्छिभ्यामित्यत्रोपसङ्ख्यानम् । तस्मिंश्च विषये पूर्ववत्सन इत्येव सिद्धम् । विषयान्तरेणेन विधीयते स्मरतेस्तु अप्राप्त एव विधानम् । धर्मं जिज्ञासते । शुश्रूषते । सुस्मूर्षते ।

दिदृक्षते ॥

नानोर्ज्ञः ॥ अनुपूर्वाज्जानातेः सन्नन्तादात्मनेपदं न स्यात् । पुत्रमनुजिज्ञासति । अनोः किम् । धर्मं जिज्ञासते । पूर्वसूत्रेण प्राप्तस्यायं निषेधः । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायात् । तथा च सकर्मकस्यैव प्रतिषेध इति फलितम् । पूर्वसूत्रस्य सकर्मकविषयत्वादकर्मकात्तु पूर्ववत्सन इत्यात्मनेपदं भवत्येव । अकर्मकाच्चेति सूत्रेण केवलाद्विधानात् । औषधस्यानुजिज्ञासते । औषधेन प्रवर्त्तितुमिच्छतीत्यर्थः ॥

प्रत्याङ्भ्यां श्रुवः ॥ आभ्यां श्रुवः सन्नन्तादात्मनेपदं न स्यात् । प्रतिशुश्रूषति । आशुश्रूषति । उपसर्गग्रहणं चेदम् । परस्परसाहचर्यात् । तेनेह न । देवदत्तं प्रति शुश्रूषते । लक्षणेत्थंभूतेत्यादिना प्रतिः कर्मप्रवचनीयो नोपसर्गः ॥

शदेः शितः ॥ शितः प्रकृतिभूतो यः शदिस्तस्मादात्मनेपदं स्यात् । शीयते शीयेते शीयन्ते । शितः किम् । शत्स्यति । अशत्स्यत् । शेषात्कर्त्तरीति परस्मैपदम् ॥

म्रियतेर्लुङ्लिङोश्च ॥ शितो लुङ्लिङोश्च प्रकृतिभूतो यो म्रियतिस्तत एवात्मनेपदं स्यान्नान्यस्मात् । अत्र शित्प्रकृतित्वं पूर्ववच्छिदुत्पत्तेः प्रागेव योग्यतया बोध्यम् । लुङ्लिङोस्तु सत्यामेवोत्पत्तौ बोध्यम् । म्रियते । म्रियताम् । अम्रियत । अमृत । मृषीष्ट । नियमः किम् । ममार । मर्त्तासि । मरिष्यति । अमरिष्यत् । ङित्वं तु स्वरार्थम् । मा हि मृत । लुङि तास्यनुदात्तेदिति ङिल्लक्षणः सार्वधातुकनिघातः हि चेति तिङि निघातप्रतिषेधः ॥

पूर्ववत्सनः ॥ सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्म-

नेपदं स्यात् । येन निमित्तेन सनः प्रकृतेरात्मनेपदं विधीयते तदेव निमित्त सना व्यवहितं सदप्यात्मनेपदं प्रवर्त्तयतीत्यर्थः । इह सूत्रे तेनतुल्यमिति तृतीयान्ताद्वतिर्न तु पञ्चम्यन्तात् । ल क्षणाभावात् । यथा च ब्राह्मणेन तुल्यं वैश्यादधीत इत्यत्र ब्राह्मणादिवेति गम्यते तथेहापि पूर्वस्मादिवेति गम्यते । ब्राह्मणापादानकेऽध्ययने ब्राह्मणशब्दस्य लक्षणया ब्राह्मणापादानकाऽध्ययनसादृश्यं वैश्यापादानकाध्यापनमिति क्रियासाम्यं दृष्टान्ते निर्वाह्यम् । अन्यथा वतिप्रत्ययायोगात् । यदाह तेन तुल्यं क्रिया चेद्विति । एवञ्च प्रकृतेपि आत्मनेपदभावनस्य तुल्यत्व वोध्यम् । तदपि निमित्तस्य तुल्यत्वात्तद्द्वारकमिति फलितोर्थः । एतेन शब्दो नित्यः कृतकत्वात् घटवदित्यादि व्याख्यातम् । तत्रापि भवनक्रियाया साम्यात् । अन्यथा वत्प्रत्ययासाधुतापत्तेः । अत एवानित्यो भवितुमर्हतीति प्राञ्चः प्रयुञ्जते । साध्यपदस्य ज्ञाने लक्षणया ज्ञानयो साम्यं वाक्यार्थ इति वास्तु । सर्वथापि शब्दघटयोः साम्यमार्थं न तु शाब्दमिति दिक् । आसिसिपते । शिशयिपते । निविविक्षते बुभुक्षतइत्यादि । इह तु न भवति । शिशत्सति मुमूर्पति । न ह्येपा शदिम्रियतिभ्यां शित प्रकृति अतो नात्मनेपदनिमित्तम् । कृते हि सनि सन्नन्तमेव शितः प्रकृतिः । शिशयिपतइत्यादौ तु प्रकृतौ ङित्त्वानपायान्निमित्तातिदेशः सम्भवत्येवेति वैपम्यात् । नन्वे वमनुचिकीर्पतीत्यत्रातिप्रसङ्गः । गन्धनादेरर्थस्य ञित्वस्य चा त्मनेपदनिमित्तस्यातिदेशापत्तेरिति चेन्न । अनुपराभ्याङ्कृञ इति वचनपर्यालोचनया अनुपूर्वकत्वाभावविशिष्टस्यैवात्मनेपदनिमित्तताध्यवसायात् । अस्तु वा प्राधान्यात्कार्यस्यैवातिदेशः प्राक्सनो येभ्य आत्मनेपदं दृष्टं तेभ्य सन्नन्तेभ्योपि भवतीति । न

चैवं शिशत्सति मुमूर्षतीत्यत्रातिप्रसङ्गः शदेःशितो म्रियतेर्लुङ्लिङोश्चेति सूत्रद्वयेपि सनो नेत्यनुवर्त्य, वाक्यभेदेन सन्नन्तान्निषेधात्। जुगुप्सतइत्यादौ तु यद्यप्ययमतिदेशो न प्राप्नोति । नित्यसन्नन्ततया प्राक् सन आत्मनेपदादर्शनात् । तथाप्यनुदात्तङित इत्यनेनैवात्मनेपदम् । अवयवे ह्यचारितार्थं लिङ्गं समुदायं विशिनष्टि सामर्थ्यात्। न चैवं जुगुप्सतीत्यादावतिप्रसङ्गः। सन्पर्यन्तविशेषणेन चारितार्थ्ये सति ततोप्यधिकविशेषणे प्रमाणाभावात्। नन्वेवं गोपयति तेजयतीत्यादावतिप्रसङ्गः। सन्णिचोर्मध्ये कतरद्विशेषणीयं कतरन्नेत्यत्र विनियामकाभावादिति । अत्राहुः । यत्र निन्दादौ सन्निष्यते तदर्थका एवानुदात्तेतः नित्यसन्नन्ताश्चेते । अर्थान्तरे त्वननुबन्धका एव चुरादौ पाठ्याः । अन्यथा निन्दाक्षमादिभ्योन्यत्र यथा णिज् भवति तथा ङादिरपि स्यात् ॥

आम्प्रत्ययवत्कृञोनुप्रयोगस्य ॥ आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृतिभूतस्य धातोरिवानुप्रयुज्यमानात्करोतेरात्मनेपदं स्यात् । ञित्त्वादेव सिद्धे ऽकर्त्रभिप्रायार्थं सूत्रम् । ईहाञ्चक्रे । नन्वस्य विध्यर्थत्वादिन्दाञ्चकारेत्यादावपि कर्त्रभिप्राये तङ् प्राप्नोति । सत्यम् । पूर्ववदित्यनुवर्तते । तत्सामर्थ्याद्वाक्यभेदेन नियमोपि क्रियते पूर्ववदेवात्मनेपदं न तु पूर्वविपरीतमपीति । कृञः किम् । ईहामास । ईहाम्बभूव । इह कृञ्ग्रहणसामर्थ्यान्न प्रत्याहारग्रहणम् । अत एव च ज्ञापकादनुप्रयोगविधौ प्रत्याहारग्रहणम् ॥

प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ प्रोपाभ्यां युजेरयोगइत्यस्मादात्मनेपदं स्यादयज्ञपात्रेषु । प्रयुङ्क्ते । उपयुङ्क्ते । युजिरः

स्वरितेतो रुधादेरकर्त्रभिप्रायार्थोयं विधिः । युज समाधाविति दिवादेस्तु नेह ग्रहणम् । अनुदात्तेत्त्वादेव सिद्धेः । सूत्रे युजेरितीकारस्य विवक्षितत्वाच्च । यज्ञपात्रविषयतायास्तत्रासम्भवाच्च । स्वराद्यन्तोपसृष्टादिति वक्तव्यम् ॥ स्वरोच्चआदिरन्तो वा यस्य तादृशेनोपसर्गेण सम्बद्धादित्यर्थः । सम् निस् निर् दुस् दुर् एतद्भिन्नाः सर्वेप्युपसर्गाः सङ्गृहीता । उद्युंक्ते नियुङ्क्ते । अयज्ञपात्रेषु किम् । द्वन्द्वं न्यञ्चिपात्राणि प्रयुनक्ति ॥

समः क्ष्णुवः ॥ सम्पूर्वात्क्ष्णु रातोः प्राग्वत् । समोगम्यृच्छिभ्यामित्यतो निच्छिद्य पाठः सकर्मकादपि विधानार्थः । सक्ष्णुते शस्त्रम् ॥

भुजो ऽनवने ॥ रक्षणातिरिक्तेर्थे वर्त्तमानाद् भुजेः प्राग्वत् । भुजो ऽभक्षणइति वक्तव्ये ऽनवनइति वचनमर्थान्तरेष्वपि यथा स्यात् । भुजेर्हि पालनाभ्यवहारादिवोपभोग आत्मसात्करणं चार्थः । ओदनम्भुंक्ते । अभ्यवहरतीत्यर्थः । बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् । दिवं मरुत्वानिव भोक्ष्यते महीम् । नेह पालनमर्थः किन्तूपभोग आत्मसात्करणं वा । एतेन वृद्धो जनो दुःखशतानि भुङ्क्तइति व्याख्यातम् । अनवने किम् । महीं भुनक्ति । रुधादेरेवेह ग्रहणम् । अवनप्रतिषेधात् । पठन्ति हि । संयोगो विप्रयोगश्चेत्युपक्रम्य विशेषस्मृतिहेतव इति । यथा दोग्ध्रीपर्यायो धेनुशब्दः संसर्गिभिर्विशेषवस्थाप्यते । सवत्सा धेनुरानीयतां सकिशोरा सवर्करेति तथा वत्सा किशोराऽवर्करेति गौर्धेनुर्वडवा अजा च क्रमेणानीयते नान्या तथेहापि । तेन भुज कौटिल्यइत्यस्य तुदादेरग्रहणान्नेह विभुजति पाणिमिति ॥

णेरणौ यत्कर्म णौ चेत्स कर्त्तानाध्याने ॥ ण्यन्तादात्मनेपदं

स्यादनाध्याने । अणौ यत्कर्म णौ चेदिति द्वितीयं वाक्यम्। कर्मेह क्रिया णिच्प्रकृत्युपात्ता या सैव चेण्यन्तेनोच्येतेत्यर्थः । सकर्तेति तृतीयं वाक्यम् । अणावित्याद्यनुवर्तते कर्मेह कारकं शब्दाधिकाराश्रयणात् । णिच्प्रकृतेरर्थं प्रति यत्कर्म कारकं स चेण्यन्ते कर्तेत्यर्थः । णिचश्चेत्यात्मनेपदे सिद्धेपि अकर्त्रभिप्रायार्थमिदं सूत्रम् । कर्त्रभिप्रायेपि विभाषोपपदेनप्रतीयमानइति विकल्पबाधनार्थञ्च। अणावकर्मकादिति परस्मैपदबाधनार्थञ्च । न चाकर्त्रभिप्राये चरितार्थस्यास्य विकल्पपरस्मैपदाभ्यां पराभ्यां बाधः स्यादिति वाच्यम् । पूर्वविप्रतिषेधाश्रयणात् । अत्र च प्रमाणं दर्शयते राजेति भाष्योदाहरणमिति दिक् । उदाहरणन्तु कर्तृस्थभावकाः कर्तृस्थक्रियाश्च । तत्र हि कर्मवद्भावो नास्तीति वक्ष्यते । प्रकृतसूत्रेणैव त्वात्मनेपदम् । तथाहि विषयत्वापत्त्युपसर्जनाविषयत्वापादनवचनो दृशिः सकर्मकाणामशब्दाभिधायितानियमात् । तत्र धातूपात्तव्यापाराश्रयः कर्त्ता धात्वर्थभूतव्यापारव्यधिकरणफलशालिकर्म तथा च पश्यन्ति भवं भक्ता इति प्रयोगः चाक्षुषज्ञानेन विषयीकुर्वन्तीत्यर्थः । यदा तु सौकर्यातिशयविवक्षया प्रेरणांशस्त्यज्यते तदा पश्यति भव इति प्रयोगः, विषयीभवतीत्यर्थः । उक्तञ्च । निवृत्तप्रेषणं कर्म स्वक्रियावयवैः स्थितम् । निवर्त्तमाने कर्मत्वे स्वेकर्तृत्वेवतिष्ठतइति ॥ ततः पश्यन्तं प्रेरयन्तीति णिचि दर्शयन्ति भवं भक्ता इति प्रयोगः । पश्यन्तीत्यर्थः । उक्तञ्च । निवृत्तप्रेषणाद्धातोः प्राकृतेर्थे णिजुच्यतइति ॥ ततः पुनर्ण्यर्थस्य सौकर्यद्योतनार्थमविवक्षायां दर्शयते भवः विषयीभवतीत्यर्थः । तदिह पश्यतिदर्शयत्योः समानार्थतया कर्तृस्थभावकत्वाच्च कर्मवद्भावविरहे प्रकृतसूत्रेणात्मनेपदम् । इह हि

णिच्प्रकृतिभूतेन हशिना य एवार्थो द्वितीयकक्षायामुपात्तः स एव चतुर्थ्यामिति सामानक्रियत्वमस्ति अणौ यत्कर्म प्रथमकक्षायां तदेव कर्तृ। एव आरोहयते हस्तीत्यप्युदाहरणम् । आरोहन्ति हस्तिनं हस्तिपकाः । न्यग्भावयन्तीत्यर्थः । आरोहाति हस्ती न्यग्भवतीत्यर्थः । ततो निवृत्तप्रेषणाण्णिचि आरोहयन्ति । आरोहन्तीत्यर्थः। ततः पुनर्ण्यर्थत्यागे आरोहयते । न्यग्भवतीत्यर्थः । इहापि प्राग्वत्प्रथमतृतीययोर्द्वितीयचतुर्थ्योश्चार्थसाम्याच्चतुर्थी कक्षा उदाहरणम् । सोयं निवृत्तप्रेषणपक्ष । आह च। न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते । न्यग्भावनं न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते ॥ अवस्थां पञ्चमीमाह ण्यन्तत्कर्मकर्त्तरि । निवृत्तप्रेषणाद्धातो प्राकृतेर्थे णिजुच्यतइति ॥ इह विशिष्टवाचकयोः शुद्धण्यन्तयोर्वाच्यावंशौ वाचकभेदात् द्वेधा गणयित्वा पूर्वोक्तप्रथमतृतीयकक्षायामवस्थाचतुष्टयञ्चतुर्थकक्षायान्तु पञ्चमी अवस्थेति श्लोकार्थोभिप्रेतः । यद्वा । पश्यन्ति भवं भक्ताः । आरोहन्ति हस्तिनं हस्तिपका इति प्राग्वदेव प्रथमकक्षा । तत सौकर्यद्योतनार्थं कर्मणा एव प्रेषणमध्यारोप्य णिच् क्रियते । दर्शयति भवः आरोहयति हस्तीति पश्यत आरोहतश्च प्रेरयतीत्यर्थ । ततो णिच्प्रकृतिभ्यां णिजर्थाच्चोपात्तयोर्द्वयोरपि प्रेषणयोर्युगपत्त्यागे दर्शयते आरोहयतइत्युदाहरणम् । विपयीभवति न्यग्भवतीति च पूर्ववदेवार्थः । सोयमध्यारोपितप्रेषणपक्ष इहाध्यारोपितप्रेषणपक्षे दर्शयति भव आरोहयति हस्तीति द्वितीयकक्षायामतिव्याप्तिं वारयितुं समानक्रियत्वपरं द्वितीय वाक्यम् । तेन प्रेषणाधिक्यान्नातिव्याप्तिः । निवृत्तप्रेषणपक्षे दर्शयन्ति भवमारोहयन्ति हस्तिनमित्येवंरूपं तृतीयकक्षायामतिव्याप्तिं वारयितुमणौ

भाष्यवार्त्तिकयोः कर्मशब्दस्य क्रियापरतयैव व्याख्यातुं शक्यत्वाच्च । अभ्युपेत्यापि ब्रूमः । मास्तु भाष्यमते समानक्रियत्वं तथापि दर्शयते भृत्यान् राजेत्युदाहरणं व्याचक्षाणेन कैयटेन अणौ ये कर्तृकर्मणी तद्भिन्नं कर्म व्यावर्त्यते इति तावत्स्पष्टीकृतम् । तथा च मनुष्यानित्यस्याणौ कर्तृतया गत्यर्थाद् द्रुहणौ कर्मत्वेपि दुर्वारमात्मनेपदम् । मनुष्यस्थलयोरणौ कर्तृकर्मणोरेवेह कर्मतया तदितरकर्माभावात् । अपि च । सकर्त्तेत्यंशोपीह नास्ति । हस्तिन एव कर्तृत्वात् । स्यादेतत् । आरोहयमाण इत्यत्राणौ कर्मणो हस्तिन एव कर्तृत्वं स एव च स्थलमारोहयतीत्यत्रापि कर्त्तेति । तदपि न । प्रत्यासत्तिबलेनैवातिप्रसङ्गभङ्गात् । तथाहि । ण्यन्तादात्मनेपदं स्यादणौ यत्कर्म स चेत्कर्त्तेत्युक्ते प्रत्यासत्तेरेतल्लभ्यते । येन णिचा ण्यंतादात्मनेपदं विधित्सितं तत्प्रकृतौ यत्कर्म स चेत्कर्त्तेति । इह तु यत्रायमुपाधिः कृतमेव तत्रात्मनेपदम् । आरोहयमाण इति यत्र तु न कृतं स्थलमारोहयतीति न तत्रायमुपाधिरस्ति, येनातिव्याप्तिः स्यात् । यत्तु हरदत्तेनोक्तम् । हस्तिपकानारोहयति हस्तीत्यत्र मा भूदिति । तत्रेदं वक्तव्यम् । किमिदमध्यारोपितप्रेषणपक्षे द्वितीयकक्षायामुदाहरणं किं वा निवृत्तप्रेषणपक्षइति । नाद्यः । णिज्वाच्यव्यापारभेदेन समानक्रियत्वाभावात् । न द्वितीयः । तत्राद्ययोः कक्षयोरण्यन्तत्वात् । तृतीयस्यान्तु हस्तिनः कर्तृत्वायोगात् । हस्तिपकानां कर्मत्वासम्भवाच्च । तस्माच्चतुर्थी परिशिष्यते । तत्रापि न्यग्भवतीत्यर्थापर्यवसानेन कर्मणो नान्वयः स्पष्ट एव । स्यादेतत् । दर्शयते भृत्यान् राजेति तावद्भाष्ये स्वीकृतं तत्समर्थनाय आणौ ये कर्तृकर्मणी तदितरकर्मव्यवच्छेदोभिमत इत्याह कैयटः । तस्यायमाशयः ।

अणौ यत्कर्मेत्यत्र॒कर्तरिकर्मेत्यतोनुवृत्त कर्तरीत्येतत्प्रथमया वि-परिणम्यते । यश्च यच्च यदिति नपुंसकमनपुंसकेनेत्येकशेष. । तेन कर्मकर्त्रोर्णौ कर्मत्वेप्यदोषः । एवञ्च करेणुरारोह्यते नि-पादिनमिति माघप्रयोगोप्युपपद्यतइति एवं स्थिते निवृत्तप्रेषणाध्या-रोपितप्रेषणपक्षयोर्द्वयोरपि चरमकक्षायामकर्मकतया भाष्यकैय-टादिग्रन्थाः सर्वएवानन्विताः स्युस्तर्कि हरदत्तं प्रत्येव पर्यनुयो-गेन। एतावानेव हि भेद. भाष्यमते ऽणौ ये कर्तृकर्मणोरिति व्या-ख्यानादुदाहरणमिदं वृत्तिकारहरदत्तादिमते तु प्रत्युदाहरणम् । अणौ यत्कर्मेत्येव व्याख्यानादिति । अत्रोच्यते । अनन्वय-स्तावद्दुरुद्धर । बाधे वृद्धेन्यसाम्यात्किं दद्वेद्वयदपि बाध्यतामिति न्यायात् । गम्भीरायां नद्यां घोष इत्यत्र गम्भीरनदीपदार्थयोरभे-दबोधानन्तरं तीरलक्षणायामपि प्राथमिकबोधमादाय गम्भीर-पदसार्थक्यवदिहाप्यध्यारोपितप्रेषणपक्षे द्वितीयकक्षायां कर्मण्य-न्विते ततो णिजर्थस्येव कर्मणोपि त्यागे णिचः कर्मपदस्य च प्राथमिकबोधमादाय कथं चित्सार्थक्यम् । स्वज्ञाप्यसम्बन्धो लक्षणेत्यभ्युपगमात् । एषैवार्थवादैः प्राशस्त्यलक्षणायां गतिरिति कैयटस्योक्तिसम्भवो बोध्यः । निष्कर्षस्तु कर्मण्यवच्छेदवाक्या-र्थो भाष्यवार्त्तिकयोरनभिमत एव । उक्तरीत्या प्रयोजनाभावा-त् । ग्रन्थस्तु कर्मपदस्य क्रियापरतायां सुस्थ एव । उदाहरणेषु तु भृत्यानित्यादेरविवक्षायां कर्मण्यापारमात्रे विवक्षिते सिद्ध भवतीत्येवाशयो बोध्यः । स्मरयत्येनं वनगुल्मः स्वयमेवेति भा-ष्यग्रन्थस्य व्याख्यावसरे एनमिति कर्मणो विवक्षायाः कैयटहरद-त्ताभ्यामुभाभ्यामपि शरणीकृतत्वाच । यत्तु सूत्रशेषे कैयटेनै-नमित्यस्य विवक्षेति पुनः प्रतिपादितं तदेव त्वापातत इति दिक् । तस्मात्, भृत्यादीनां परित्यागाच्छब्दभेदात्परिग्रहात् ।

कर्मवाक्ये च तादर्थ्यवर्णनात्सर्वमुज्ज्वलम् ॥ स्यादेतत् । सकर्मकाणां सर्वेषामशक्याभिप्रायितया कर्मकर्तरि कर्मवद्भावातिदेशादेव सिद्धानीह मूलोदाहरणानि । न चाध्यारोपितप्रेषणपक्षे आरोहयतौ हस्तिनः कर्मत्वाभावात्समानधातौ च कर्मत्वाभावेन पचत्योदनं देवदत्तो राध्यत्योदनः स्वयमेवेतिवत्कर्मवद्भावो न प्राप्नोतीति वाच्यम् । निवृत्तप्रेषणप्रक्रिययैव सकललक्ष्यसङ्ग्रहात् । अध्यारोपितप्रेषणपक्षस्य रित्यागेऽपि क्षत्यभावात् । न च दृशेः कर्तृस्थभावकतया रुहेश्च कर्तृस्थक्रियतया कर्मवद्भावो न प्राप्नोतीति वाच्यम् । पचिभिद्यादिभ्यो वैलक्षण्यस्य दुरुपपादत्वात् । विक्लेदनद्विधाभवनयोरपि कर्तृस्थतापत्तौ कर्मवद्भावातिदेशस्य निर्विषयतापत्तेः । तत्र व्यापारांशस्य कर्तृस्थत्वेऽपि विक्लित्तिद्विधाभवनरूपे फले कर्मस्थे इति । यदि तर्हि दृशिरुह्योरपि विषयत्वन्यग्भावौ कर्मस्थाविति तुल्यम् । तस्मादिह वैषम्ये बीजं वक्तव्यमिति चेत् । अत्राहुर्भर्तृहरिः । विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता । क्रियाव्यवस्थात्वन्येषां शब्दैरेव प्रकल्पितेति ॥ अस्यार्थः । यत्र क्रियाप्रयुक्तो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु यथा वा छिन्नेषु काष्ठेषु । तत्र क्रिया स्थिता । तेन पच्यते ओदनः छिद्यते काष्ठमिति कर्मवद्भाव सिद्धः । अन्येषां मते । अन्येषां धातूनां वा शब्दैरेव क्रियाव्यवस्था । शब्देन कर्तृव्यापारस्यैव प्राधान्येनावगमात्कर्तृस्थतेत्यर्थः । उद्देशतापि क्व चित्कर्मस्थांशस्य क्व चित्तु व्यापारांशस्येति औत्सर्गिकं नियामकं बोध्यं तदिह दर्शनरोहणाभ्यां विषये न्यग्भूते च विशेषानुपलम्भात्कर्तृस्थ एवेह भावः क्रिया च । उद्देशानुरोधाच्च । अहं पश्येयमिति ह्युद्देशः न तु अयं विषयो भवत्वित्येवमहमुपरि गच्छेयमित्युद्देशो न तु हस्तिनो न्यग्भावो भवत्विति ।

उपरिगमनरूपएव च व्यापारविशेषो रुहेरर्थो न तु न्यग्भावनमात्रम्। भूमिष्ठे वृक्षस्य शाखां हस्ताभ्यामवनमयत्यपि आरोहतीत्यप्रयोगात्। अत एव यद्धितुपरं छन्दसीत्यत्र भाष्यं रुहिर्गत्यर्थ इति। अत एव चाणौ, कर्तुर्णौ कर्मत्वम्। पचिच्छिद्योस्तु विक्लित्तिद्विधाभवनरूपो विशेषः कर्मणि दृष्टः तदुद्देशेनैव च कारकव्यापार इति महद्वैषम्यम्। एवञ्चारुह्यते हस्तीति कर्मवद्भावं प्रदर्शयन्तो भाष्यन्यायविरोधादुपेक्ष्या इति कैयटः। एतेन, अधिगच्छाति शास्त्रार्थः स्मराति श्रद्धाति च। यत्कृपावशतस्तस्मै नमोस्तु गुरवे सदेति प्रयोगो व्याख्यातः। न चैवं क्रियतइति न स्यादिति वाच्यम्। यत्नार्थतावादिनामेतद्दोषप्रसङ्गेपि भूवादिसूत्रस्थभाष्यानुसारेण करोतेरभूतप्रादुर्भावार्थतामभ्युपगच्छतामस्माकं सर्वसामञ्जस्यात्। एवञ्च कर्तृस्थभावक्रियेषु कर्मवद्भावाप्राप्तेर्विध्यर्थमिदं सूत्रमिति स्थितं भाष्ये। लावयते स्वयमेवेत्यादौ तु कार्यातिदेशपक्षे परत्वात्कर्मवत्कर्मणेत्येवात्मनेपदम्। शास्त्रातिदेशे तु भावकर्मणोरित्येतदपेक्षया परत्वाण्णेरणादिसूत्रेणेत्यवधेयम्। यदि त्वणौ ये कर्तृकर्मणी तद्भिन्नकर्मनिवृत्तिर्भाष्यकृतोभिप्रेता स्यात्तर्हि सकर्मकाणां मध्ये तत्सूत्रोदाहरणतापत्तौ कर्मस्थक्रिया अप्युदाहरणं स्युः। न हि तत्रातिदेशः सुलभः। कर्मवदकर्मकाणामिति वक्ष्यमाणत्वात्। तथा नियमार्थन्वपराणां यक्चिणोः प्रतिषेधार्थं त्वित्यादिभाष्यवार्तिकग्रन्थानामप्यसामञ्जस्यं स्यादिति दिक्। तस्मादिहास्मदुक्तमेव वाक्यार्थत्रयं मुनित्रयसंमतम्। जयादित्यन्यासकारहरदत्तकैयटादिसकलग्रन्थकाराणामिह महानेव पूर्वापरविरोधो विपश्चिद्भिरुद्धर्तव्यः। अस्मदुक्तिस्तु मात्सर्यमुत्सार्य परिभावनीयेत्यलं बहुना। यत्तु करेणुरारोहयते निषादिनमिति माघे

प्रयुक्तं तण्णिचश्चेति सिद्धम् । एतेन स सन्ततं दर्शयते ग तस्मयः कृताधिपत्यामिव साधु वन्धुतामिति व्याख्यातम् । बन्धुता तं पश्यति तां दर्शयते । यद्वा । वन्धुतां कृताधि पत्या मिव लोकः पश्यतितां दर्शयते इत्यर्थः । आद्ये वन्धुता अणौ कर्त्री । द्वितीये त्वणौ सा कर्म । उभयथापि णौ कर्मत्वं निर्विवादमेवेति दिक् । णेरिति किम् । आरोहतीति निवृत्तप्रेषणान्मा भूत् । न च णौ चेदिति वाक्यशेषे श्रुतत्वाण्णेरेव भविष्यतीति वाच्यम् । अणाविव्यस्यापि श्रुतत्वात्[1]। किं चोत्तरार्थमवश्यं णेरिति वाच्यमेव । तदिहैव स्पष्टार्थमुक्तम् । हेतुमणिज्ग्रहणार्थं च । भीस्म्योस्तस्यैव सम्भवात् । तेन गणयते गणः स्वयमेवेति सिद्धम् । गणयतिर्हि विभज्य भागशोवस्थापने वर्त्तते । तथा च कर्मस्थभावकादस्मान्निवृत्तप्रेषणाद्धेतुमण्णौ पुनः प्रेषणांशत्यागे सत्यात्मनेपदमिष्टम् । णेरिति हेतुमण्णिचा सन्निधानादणावित्यत्रापि तस्यैव ग्रहणाच्चुरादिणौ यत्कर्म तत्कर्तृकाद्धेतुमण्ण्यन्तादपि सिध्यतीति । यत्तु वृत्तिकृता गणयतीत्येव रूपमवस्थाचतुष्टयेप्युदाह्रियते । तत्र सङ्ख्यानिमित्तस्य परिच्छेदस्य ज्ञानविशेषात्मकतया कर्तृस्थस्य धातुवाच्यतामाश्रित्य कर्मवद्भावाप्रवृत्त्या द्वितीयावस्थायां परस्मैपदमुपपादनीयम् । चतुर्थावस्थायां तु परस्मैपदमशुद्धमेव । णेरणावित्यत्रापि अणावकर्मकादित्यत्रेव हेतुमण्णिच एव ग्रहणस्य न्याय्यत्वात् । तथैव भाष्ये स्थितत्वाच्च । भागशोवस्थापनपरत्वे तु द्वितीयावस्थायामप्यात्मनेपदमिति विशेष । कर्मवद्भावस्य दुर्वारत्वात् । यक्षिणौ तु णिश्रन्थीत्यादिनिषेधान्न स्त इति दिक् । णौ चेदिति किम् । निवृत्तप्रेषणाण्णौ आरोहयन्ति हस्तिपका इति तृतीयकक्षायां मा भूत् । असति हि णौ चेद्ग्र-

हणे ध्रुवत्वादणावेव कर्मत्वं कर्तृत्वञ्च लभ्येत । न चैकस्योभयरूपता बाधितेति वाच्यम् । प्रथमावस्थायां कर्मणो द्वितीयावस्थायां कर्तृत्वस्य निर्विवादत्वात्। अनाध्याने किम्। स्मरति वनगुल्मङ्कोकिलः । ततश्चतुर्थावस्थायां स्मरयति वनगुल्मः । उत्कण्ठापूर्वकस्मृतौ विषयो भवतीत्यर्थः। स्मृ आध्याने, घटादिः॥

भीस्म्योर्हेतुभये ॥ आभ्यां ण्यन्ताभ्यामात्मनेपदं स्यात्प्रयोजकादेव चेद्भयविस्मयौ स्तः। सूत्रे भयग्रहणं विस्मयस्याप्युपलक्षणम्। मुण्डो भीषयते। भियो हेतुभये षुगिति षुक्। बिभेतेर्हेतुभयइति वैकल्पिकात्वपक्षे तु भापयते अत्र पुङ्न। तद्विधावीकारप्रश्लेषात्। जटिलो विस्मापयते। नित्यंस्मयतेरित्यात्वम्। अर्तिह्रीति पुक्। हेतुभये किम्। कुञ्चिकया भाययति। रूपेण विस्माययति। इह करणाद्भयविस्मयौ न तु हेतोः। यद्यपि हेतोर्व्यापारे णिज्विधानात्प्रयोजकसाध्यता दुर्वारा,तथापि हेतुस्वरूपमेवान्यनिरपेक्षं धात्वर्थप्रयोजकञ्चेदितीत्यर्थः। विशेषणोपादानसामर्थ्यात्। अत एव मौण्ड्येन भापयतीत्यत्र न, मौण्ड्याख्यधर्मस्य भेदेन विवक्षणात्। उदाहरणे तु तादात्म्यस्य विवक्षणाद्धेतोरेव भयम्। एतेन मनुष्यवाचा मनुवंशकेतुम्, विस्मापयन्निति, व्याख्यातम्। इह हि न सिंहाद्विस्मयः किन्तु मनुष्यवाचेति कारणात। अत एवात्र नित्यंस्मयतेरित्यात्वं न। तद्विधाने बिभेतेर्हेतुभयइत्यतो हेतुभयानुवृत्त्या भयग्रहणस्य,च स्मयोपलक्षणतया व्याख्यानात्। क चित्तु विस्मापयन्निति पुगागमपाठः प्रामादिकः। यद्वा। भाष् विस्मापयते सिंहस्तु विस्मापयमानां वाचं प्रयुङ्क्ते विस्मापयति। ण्यन्ताण्णिच्। वाचेति तु प्रयोज्ये कर्तरि तृतीया न तु करणे इति समाधेयम्॥

गृधिवञ्च्योः प्रलम्भने ॥ प्रतारणार्थाभ्यामाभ्यां ण्यन्ताभ्यामात्मनेपदं स्यात्। माणवकं गर्धयते वञ्चयते वा । प्रलम्भने किम्। श्वानङ्गर्धयति । अभिकांक्षामस्योत्पादयतीत्यर्थः। अहिं वञ्चयति । वर्जयतीत्यर्थः ॥

लियः सम्माननशालिनीकरणयोश्च ॥ सम्माननशालिनीकरणयोश्चकारात्प्रलम्भने च वर्त्तमानाण्ण्यन्ताल्लीधातोरात्मनेपदं स्यात्। लीङ् श्लेषणे दिवादिः, ली श्लेषणे क्र्यादिः, उभयोरपि ग्रहणम्। निरनुबन्धकपरिभाषा तु प्रत्ययविषयिणी। वामदेवाड्ड्यड्ड्याविति डित्करणेन ज्ञापिता हि सा। ज्ञापकञ्च सजातीयविषयकमेवेत्युत्सर्गः। सम्मानने, जटाभिरालापयते। पूजां समधिगच्छतीत्यर्थः। अकर्मकश्चायम्। धात्वर्थेन क्रोडीकृतकर्मत्वात् पुत्रीयतीत्यादिवत्। शालिनीकरणे, श्येनो वर्त्तिकामुल्लापयते। न्यक्करोतीत्यर्थः। प्रलम्भने, बालमुल्लापयते। विभाषालीयतेरिति णत्वात्वं विर्धापते। तदस्मिन्विषये नित्यम्। अन्यत्र तु विकल्पः। व्यवस्थितविभाषा हि सा। न च लीयतेरिति विहितमात्वं कथं लीनातेः स्यादिति वाच्यम्। लीनातिलीयत्योर्यका निर्देशोयमिति सिद्धान्तात्। संमाननादिष्विति किम्। बालकमुल्लापयति। आक्षेपयतीत्यर्थः ॥

किम्। पदं मिथ्या वाचयति। अभ्यासे किम्। सकृत्पद मिथ्या कारयति॥

स्वरितञितः कर्त्रभिप्राये क्रियाफले॥ स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्क्रियाफले कर्तृगामिनि सति। यजते। सुनुते। कर्त्रभिप्राये किम्। यजन्ति याजकाः। सुन्वन्ति। दक्षिणादि तु न फलम्। उक्तं हि हरिणा। यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः। तत्प्रधानफलं तेषां न लाभादि प्रयोजनमिति। पचा, पाकः। पित्त्वादङ्। के चित्तु प्रयोजकव्यापारवृत्तिभ्यो धातुभ्यस्तद्द्योतकमात्मनेपदमनेन विधीयते। कुरुते। कारयतीत्यर्थः। कारयतइत्यत्र तु प्रयोजकव्यापारद्वयमर्थः। णिजन्ताण्णिचि यथा कर्त्रभिप्रायइति सूत्रांशोपि कर्तृपदस्याहेतुकर्तृपरत्वाड्डुक्तार्थतात्पर्यक एवेत्याहुः। उक्तञ्च हरिणा, क्रियाप्रवृत्तावाख्याता कैश्चित्स्वार्थपरार्थता। असती वा सती वापि विवक्षितनिबन्धना॥ येषाञ्चित्कर्त्रभिप्राये णिचा सह विकल्प्यते। आत्मनेपदमन्येषां तदर्थप्रकृतिर्यथा॥ क्रीणीष्व पचते धत्ते चिनोति चिनुतेपि च। आप्तप्रयोगा दृश्यन्ते येषु ण्यर्थोभिधीयतइति॥ असती चेत्यनेन कमलवनोद्घाटनं कुर्वते यइत्यादयः प्रयोगाः समर्थिताः। तत्रापि स्वार्थताविवक्षायाः सम्भवात्। ण्यर्थस्य वाचकं द्योतकं वा आत्मनेपदमिति मतद्वयं सङ्गृहीत केषां चिदित्यादिना श्लोकेन। चिनोति चिनुत इति, चिनोति चापयति चेति क्रमेणार्थः॥

अपाद्वदः॥ अपपूर्वाद्वदतेरात्मनेपदं स्यात्कर्तृगामिनि फले संविधाने च। न्यायमपवदते। कर्त्रभिप्राये किम्। अपवदति॥

णिचश्च॥ णिजन्तादात्मनेपदं कर्तृगे फले संविधाने च।

कट कारयते । कथं कृतश्मश्रुरपि श्मश्रूणि कारयतीति भाष्यम् । संविधानइति व्याख्याने भविष्यति । आद्यपक्षे तु कर्तृगामित्वाविवक्षायां भविष्यति । अत्र कश्चित् लक्षयतेः स्वरितेत्करणाज्ज्ञापकाच्चुरादिणिजन्तादिदमात्मनेपदं न भवतीति । आह च स्वरितेत्स्याद्रहि क्र्यादौ लक्षिश्चैकश्चुरादिष्विति । चन्द्रस्तु णिजभावपक्षे स्वरितेत्त्वस्य सार्थकत्वान्नोक्तार्थज्ञापकता अतश्चुरादेरप्ययं विधिर्भवत्येवेत्याह । मैत्रेयस्तु स्वरितेत्त्वमस्थानाकरमित्याह । तदेतद्धरदत्तोपि सञ्जग्राह । एष विधिर्न चुरादिणिजन्तात्स्यादिति कश्चन्न निश्चिनुते स्म । आसवचोत्र न किं चन दृष्टं लक्षयतेः स्वरितेत्त्वमनार्षमिति ॥

समुदाङ्भ्यो यमो ऽग्रन्थे ॥ एभ्यो यमः प्राग्वत्कर्तृगे फले सविधाने च न तु ग्रन्थे विषये । आङ्पूर्वकस्य वचनं सकर्मकार्थम् । अकर्मके त्वाङोयमहन इत्येव सिद्धम् । व्रीहीन्संयच्छते भारमुद्यच्छते वस्त्रमायच्छते । अग्रन्थे किम् । उद्यच्छति चिकित्सां वैद्यः । इहाधिगमपूर्वकमुद्यम यमेरर्थः । चिकित्साशास्त्रमधिगन्तुमुद्यमं करोतीत्यर्थः । कर्त्रभिप्रायइत्येव । संयच्छति उद्यच्छति आयच्छति ॥

अनुपसर्गाज्ज्ञः ॥ अस्मात्प्राग्वत्कर्तृगे फले सविधाने च । अकर्मकाच्चेत्येव सिद्धे वचनमिदं सकर्मकार्थम् । गाञ्जानीते । अनुपसर्गात्किम् । स्वर्गं लोकं न प्रजानाति । कथं तर्हि भट्टिः, इत्थ नृपः पूर्वमवालुलोचे ततोनुजज्ञे गमनं सुतस्येति । कर्मण्यय लिट् । नृपेणेति तृतीयान्तस्य विपरिणामादिति जयमङ्गला ॥

विभाषोपपदेन प्रतीयमाने ॥ स्वरितेत्प्रभृतिभ्य आत्मनेपदं वा स्यात् समीपोच्चारितपदेन क्रियाफलस्य कर्तृगत्वे

प्रतीते। स्वरितञित इत्यादि पञ्चसूत्र्या यदात्मनेपदं विहितन्तत् क्रियाफलस्य कर्तृगत्वे उपपदे न द्योतिते न प्राप्नोति । उक्तार्थानामप्रयोगात् । तत्राप्राप्तविभाषेयम् । उपपदं चेह समीपे श्रूयमाणं पदं न तु पारिभाषिकम् । असम्भवात् । इह च पञ्चसूत्री अनुवर्त्तते। स्वं यज्ञं यजति यजते वा। स्वं कटं करोति कुरुते वा। स्वं पुत्रमपवदति अपवदते वा । स्वं व्रीहिं संयच्छति संयच्छते वा । स्वाङ्गां जानाति जानीते वा ॥

शेषात्कर्त्तरि परस्मैपदम् ॥ आत्मनेपदनिमित्तहीनाद्धातोः कर्त्तरि परस्मैपदं स्यात् । याति वाति । कथ तर्हि स्मराग्नौ जुह्वानाः सुरभिघृतधाराहुतिशतैरिति सौन्दर्यलहरी । सत्यम् । नायं शानच् किन्तु चानश् । एतेन रसमानसारसेनेतिमाघो व्याख्यातः ॥

अनुपराभ्यां कृञः ॥ आभ्यां कृञः परस्मैपदं स्यात् कर्तृगेपि फले गन्धनादावपि । अनुकरोति पराकरोति । ननु कर्मकर्त्तर्यपि प्राप्नोति । अनुक्रियते स्वयमेवेति । नैष दोषः । कार्यातिदेशपक्षे कर्मवत्कर्मणेत्यात्मनेपदेन परेणास्य बाधात् । शास्त्रातिदेशे तु भावकर्मणोरित्यस्य पूर्वत्वात्परेणानेन यद्यपि भाव्यं तथापीह कर्त्तरिकर्मेत्यत. शेषात्कर्तरीत्यतश्च कर्तृग्रहणद्वयमनुवर्त्तते तेन कर्तैव यः कर्ता तत्रायं विधिर्न तु कर्मकर्त्तरीति बोध्यम् ॥

अभिप्रत्यतिभ्यः क्षिपः ॥ क्षिप प्रेरणे । स्वरितेत् । अभिक्षिपति। प्रतिक्षिपति । अतिक्षिपति । एभ्यः किम्। आक्षिपते । कर्त्तरीत्येव । नेह । आक्षिप्यते सूत्रम् । द्वितीयकर्तृग्रहणानुवृत्तेः कर्मकर्त्तर्यपि न ॥

प्राद्वहः ॥ वह प्रापणे स्वरितेत् । प्रवहति । प्राप्तिम् ।

आवहते ॥

परेर्मृषः ॥ मृष तितिक्षायां स्वरितेत्। परिमृष्यति। परेः किम्। आमृष्यते। इह परेरिति योगं विभज्य वहइत्यनुवर्त्तनात्परिवहतीति केचिदिच्छन्ति ॥

व्याङ्परिभ्यो रमः ॥ रमक्रीडायाम्। अनुदात्तेत्। विरमति। आरमति। परिरमति। एभ्यः किम्। अभिरमते ॥

उपाच्च ॥ उपपूर्वाद्रमेः प्राग्वत्। सकर्मकार्थोयमारम्भः। अकर्मकात्तु विभाषां वक्ष्यति। स्यादेतत्। उपपूर्वको रमिर्निर्वृत्तिविनाशयोर्वर्तते। उपरतोऽध्ययनात्। उपरता निधनानीति यथा। न चानयोरर्थयोः सकर्मकता सम्भवति। सत्यम्। अन्तर्भावितण्यर्थोत्रोदाहार्यः। तद्यथा। यज्ञदत्तमुपरमति। उपरमयतीत्यर्थः ॥

विभाषाकर्मकात् ॥ उपाद्रमेरकर्मकात्परस्मैपदं वा स्यात्। उपरमति उपरमते वा। निवर्त्ततइत्यर्थः ॥

बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात्। णिचश्चेत्यस्यापवादः। बोधयति पद्मम्। योधयति काष्ठानि। नाशयति दुःखम्। जनयति सुखम्। इहाणावकर्मकादिति न सिध्यति। अचित्तवत्कर्तृकत्वात्। इङ्, अध्यापयति। प्रुद्रुस्रूणां निगरणचलनार्थेभ्यश्चेत्येव सिद्धे यदा न चलनार्थस्तदर्थं वचनम्। प्रावयति। प्रापयतीत्यर्थः। द्रावयति। विलापयतीत्यर्थ। स्रावयति। स्यन्दयतीत्यर्थः। स्यन्दनं द्रवत्वजन्यचलनम्। न चैवं चलनार्थत्वात्सिद्धमिति वाच्यम्। द्रवत्वजन्यतावच्छेदकचलनत्वव्याप्यजातिविशेषे शक्ततयास्य विशेषशब्दत्वेऽपर्यायत्वात् ॥

निगरणचलनार्थेभ्यश्च ॥ अभ्यवहारार्थेभ्यः कम्पनार्थेभ्य-

ण्यन्तेभ्यः परस्मैपदं स्यात् । निगारयति । आशयति । भोजयति । चलयति । चोपयति । कम्पयति । सकर्मकार्थोऽचित्तवत्कर्तृकार्थश्चायमारम्भः । आदेः प्रतिषेधो वक्तव्यइति काशिका । भाष्यकारस्तु गतिबुद्धीति सूत्रे इममर्थं वक्ष्यति । आदयते देवदत्तेन । गतिबुद्धीत्यादिना णौ कर्तुः कर्मसंज्ञा प्राप्ता आदिखाद्योः प्रतिषेध इति वचनान्न भवति । कथं तर्ह्यादयत्यन्नं बटुनेति । अकर्त्रभिप्राये भविष्यति । कर्त्रभिप्राये प्राप्तस्य निगरणचलनेत्यस्य ह्ययं निषेधो न तु शेषात्कर्तरीत्यस्य । कथं तर्हि श्रीहर्षः, इमां किमाचामयसे न चक्षुषी चिरं चकोरस्य भवन्मुखस्पृशीति । न च नायं भक्षणार्थः, न पीयतां नाम चकोरजिह्वया कथं चिदेतन्मुखचन्द्रचन्द्रिकेति पूर्वार्धानुरोधेन पानार्थत्वादिति वाच्यम् । पानस्यापि भक्षणविशेषात्मकत्वात् । सामान्यग्रहेण विशेषस्यापि ग्राह्यत्वात् । अन्यथेहैव सूत्रे चोपयतीत्युदाहरणासङ्गतेः । चुपेर्मन्दगत्यर्थकत्वात् । इमामित्यस्याकर्मकत्वासङ्गतिप्रसङ्गाच्च । गत्यादिसूत्रेण ह्यस्य कर्मसंज्ञा सा च प्रत्यवसानार्थतां विना दुरुपपादेति । अत एव नपादमीति सूत्रे पाग्रहणं धेट उपसङ्ख्यानञ्च सङ्गच्छते । अन्यथा पाधेटोरप्याचामिवत्पानार्थत्वेन निषेधो व्यर्थः स्यात् । न चैवं बुधयुधादिसूत्रे द्रवतिग्रहणं व्यर्थं चलनविशेषवाचकस्यापि चलनवाचकतानपायादिति वाच्यम् । चलनत्वव्याप्याया अखण्डाया एव जातेः प्रवृत्तिनिमित्तताया उक्तत्वात् । पानन्तु द्रवद्रव्यस्य गलादयः करणम् । तत्र द्रवद्रव्यांशस्यापः करणे कर्मीभूतस्याधिकस्य भानेपि भक्षयतेरर्थस्य भानं निर्विवादम् । यथा मन्दगतौ भासमानायां गतेर्भानम् । अधिकं प्रविष्टं न तु तद्धानिरिति न्यायात् । न च पानत्वमपर्यखण्डस्पन्दन-

त्ववदिति वाच्यम् । तत्साधकानिरुक्तेः । दृष्टान्ते तु कार्यतावच्छेदकतया तत्सिद्धेरिति । उच्यते । आचामयेति लोडन्तं छित्वा किं नाचामयेरिति व्याख्येयम् । से इति तु सम्बोधनं दमयन्त्याः । तथाहि । अस्य स्त्री ई लक्ष्मीः तया सह वर्त्तमाना सेः तस्याः सम्बोधनं से । सलक्ष्मीके इत्यर्थः ॥

अणावकर्मकाच्चित्तवत्कर्तृकात् ॥ णेःपूर्वमकर्मकाच्चित्तवत्कर्तृकाण्ण्यन्तात्परस्मैपदं स्यात् । शेते कृष्णस्तं शाययति गोपी । अणौ किम् । आरोहयमाणं प्रयुङ्क्ते आरोहयते । णेरणाविति सूत्रे उदाहरणत्वेन योकर्मको निर्णीतस्तस्माद् द्वितीये णौ मा भूत् । स हि णावृकर्मकः निवृत्तप्रेषणाध्यारोपितप्रेषणयोरुभयोरपि न्यग्भवतीत्यर्थे पर्यवसानस्योक्तत्वात् । अकर्मकात्किम् । कटं कुर्वाणं प्रयुङ्क्ते कारयते । चित्तवत्कर्तृकात्किम् । व्रीहीन् शोषयते । अत्र केचित् । चुरादिण्यन्ताद्धेतुमण्णावणाविल्यस्य प्रत्युदाहरणमाहुः । तत्तु भाष्यादिविरुद्धम् । तथाहि । बुधादिसूत्रादिह णेरित्यनुवर्तते । बुधादिभ्यश्च हेतुमण्णिरेव सम्भवतीति निषेधोपि प्रत्यासत्तेस्तस्यैव न्याय्यः । तेन चुरादिण्यन्तादपि हेतुमण्णौ भवत्येवेदं परस्मैपदमिति भाष्ये स्थितम् । यत्तु रूपयन्तं प्रयोजयति रूपयतइति केन चित्प्रत्युदाहृतं तच्चुरादिण्यन्ताद्धेतुमण्णिचं विधाय तस्य च सौकर्यातिशयात्प्रयोजकव्यापाराविवक्षायां प्रयोज्यव्यापारमात्रवृत्त्या अकर्मकतामाश्रित्य ततो द्वितीये हेतुमण्णिचि बोद्धव्यम् । अत एव प्रयोजयतीत्याह । इह हि युजिना णिचा च प्रयुक्तिद्वयं वदता हेतुमण्णिद्वयं सूच्यते । अन्यथा प्रयुङ्क्तइत्येवादर्शयिष्यत् । एवञ्च चेतयमानं प्रयुङ्क्ते चेतयतइति केषां चित्प्रत्युदाहरणं पदूचिकृता दूषितं तत्समर्थितं भवति । स्वार्थण्यन्तादेकस्मिन्

व हेतुमण्णौ तु रूपयति चेतयतीत्येव बोध्यम् ॥

न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥ एभ्यो ण्यन्तेभ्यः परस्मैपदं न स्यात् । तत्र पिबतिर्निगरणार्थः । इतरे चित्तवत्कर्तृकाः । नृतिश्चलनार्थोपि । तेनाणावकर्मकादिति निगरणचलनेति प्राप्तमिह निषिध्यते । पा पाने पाययते । पा रक्षणइत्ययन्तु न गृह्यते । लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति परिभाषणात् । तेनाणावकर्मकत्वाविवक्षायां परस्मैपद भवत्येव । पालयति । पातेर्लुग्वक्तव्य इति लुगागम । दमु उपशमे । दमयते । आङ्पूर्वो यम उपरमे । आयामयते । नकम्यमिचमामित्यतो नेत्यनुवर्तमाने यमोपरिवेषणइत्यनेन मित्सञ्ज्ञाप्रतिषेधः । ङकारविशिष्टस्योपादानमुपसर्गप्रतिपत्त्यर्थम् । तेनान्यान्वितादाकारात्परस्य न । आङ्पूर्वो यसु प्रयत्ने । आयासयते । परिपूर्वो मुह वैचित्ये । परिमोहयते । रोचयते । नर्तयते । वादयते । वासयते । वस आच्छादनइत्यस्य लुग्विकरणत्वादग्रहणम् । पादिषु धेट उपसङ्ख्यानम् ॥ धापयेते शिशुमेकं समीची । प्रत्यवसानार्थत्वाच्छिशुमित्यस्य कर्मत्वम् । समीचीति प्रथमाद्विवचनम् । वाछंदसीतिपूर्वसवर्णदीर्घ । स्यादेतत् । वत्सान्पाययति पयः । दमयन्ती कमनीयतामदम् । अवीव दद्वीर्णां परिवादकेन । भिक्षा वासयती, त्यादिप्रयोगास्तर्हि कथमिति चेत् । अत्राहु । कर्तृगे फले प्राप्तस्यात्मनेपदस्यापवादो यद्विहित परस्मैपदं तस्यैवायं निषेधः । यत्त्वकर्त्रभिप्राये शेषादिति परस्मैपद तन्निर्बाधमेवेति ॥

वा क्यषः ॥ क्यषन्तात् परस्मैपदं वा स्यात् । लोहितायति लोहितायते । नन्विह परस्मैपदाभावपक्षे लकार एव श्रूयेत न त्वात्मनेपदम् । तस्य प्रकृतिविशेषेर्यविशेषे च

नियतत्वात् । सत्यम् । पूर्वसूत्रे तावदपवादमपनयता प्रतिषेधेनात्मनेपदं प्रवर्त्यत इति निर्विवादम् । स एव च प्रतिषेध इहानुवर्त्यते । तदनुवृत्तिसामर्थ्याच्चेहात्मनेपदविकल्पः सिध्यति आत्मनेपदप्रवृत्त्यविनाभूतेन निषेधेनात्मनेपदस्य लक्षणया उपस्थितौ तस्यैव विकल्पनात् । तेन मुक्ते शेषात्कर्त्तरिपरस्मैपदं भविष्यति । प्रकृत्यर्थनियमपक्षे एकवाक्यताविधिश्चेति पक्षे च परस्मैपदविकल्पेपि न कश्चिद्दोष इत्यवधेयम् ॥

द्युम्भ्यो लुङि ॥ द्युतादिभ्यः परस्मैपदं वा स्याल्लुङि । अद्युतत् । अद्योतिष्ट । अलुठत् । अलोठिष्ट । लुङि किम् । द्योतते । लोठते । अनुदात्तेत्त्वान्नित्यं तङ् । नन्विह विकल्पानुवृत्तिर्व्यर्था । अनुदात्तेत इत्यनेन प्रतिषिद्धस्य परस्मैपदस्यानेन प्रतिप्रसवे कृते लस्येत्युत्सर्गेणैव पाक्षिकस्यात्मनेपदस्य सिद्धेः । सत्यम् । परस्मैपदे प्रतिप्रसूते आत्मनेपदं न भवतीति ज्ञापयितुं वानुवृत्तिः । तेनानुकरोतीत्यादौ पाक्षिकमात्मनेपदं न भवति । यद्वास्त्वनुदात्तङित इत्यादिप्रकरणेनात्मनेपदमेव विधीयते शेषादित्यादिना च परस्मैपदम् । तदानुकरोतीत्यादौ परस्मैपदेनात्मनेपदं बाध्यते येन नाप्राप्तिन्यायात् । पक्षे आत्मनेपदप्रवृत्त्यर्थं चेह वाग्रहणमित्यवधेयम् । पक्षद्वयमपीदमनुपराभ्यामिति सूत्रे भाष्ये स्थितम् । प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रे नियमसूत्राणां विधिरूपेण निषेधरूपेण वा प्रवृत्तिरिति पक्षद्वयस्यापि तत्त्वं निरूपितमस्माभिः । तदप्येतस्माद्भाष्यादुत्थितमित्यवधेयम् ॥

वृद्भ्यः स्यसनोः ॥ वृतुवृधुशृधुस्यन्दूभ्यः परस्मैपदं वा स्यात्स्ये सनि च । वर्त्स्यति । अवर्त्स्यत् । विवृत्सति न वृद्भ्यश्चतुर्भ्य इतीण्निषेधः । पक्षे वर्तिष्यते । अवर्तिष्यत ।

विवर्तिपते। स्यसनोः किम्। वर्त्तते। ननु द्युतादिष्वेव वृतादयः पठ्यन्ते। तथा च तक्रकौण्डिन्यन्यायेनेयं माप्तिर्द्युभ्यः पूर्वा माप्ति बाधेत। ततश्चावृतदवर्तिष्टेति लुङि पूर्वेण विकल्पो न सिध्येत्। तथा चोत्तरसूत्रे चकारः क्रियते। लुटीति विशेषविधिना स्यसनोरियं माप्तिर्मा बाधीति। अन्यथा कृपेरपि वृताद्यन्तर्भावादनेनैव सिद्धे किञ्चकारेणेति चेत्। सत्यम्। द्युतादिपाठसामर्थ्याद्वृतादिभ्यो लुङि भविष्यति यद्वा लुटीति स्वरयिष्यते॥

लुटि च क्लृपः॥ लुटि स्यसनोश्च कृपेः परस्मैपदं वा स्यात्। कल्प्तासि। कल्प्स्यति अकल्प्स्यत्। चिक्लृप्सति। तासि च क्लृप इतीट्प्रतिषेधः। पक्षे कल्पितासे। कल्पिष्यते। अकल्पिष्यत। चिकल्पिषते। इट्प्रतिषेधो नास्ति। तत्र हि गमेरिट्परस्मैपदेष्वित्यतः परस्मैपदेष्वित्यनुवर्त्तते। ऊदित्वात्पाक्षिक इडभावस्त्वस्त्येव। स्यादेतत्। स्यसनोरित्यस्य स्वरितत्वमेवास्तु वाक्यभ इति वाशब्दस्य यथा। तथा च स्वरितेनाधिकार इत्येव सिद्धे किञ्चकारेण। सत्यम्। स्पष्टार्थश्चकारः। अत एवानुकर्षणार्थाः सर्वे चकारा भाष्ये प्रत्याख्याताः॥

इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम्॥ पादश्च समाप्तः॥

आकडारादेका संज्ञा॥ इत ऊर्ध्वं कडाराः कर्मधारयइत्यतः प्रागेकस्य एकैव संज्ञा स्यात्। तत्रोभयोः सावकाशत्वे विप्रतिषेधे परमिति परैव। निरवकाशत्वे तु सैवेति विवेकः। तत्र परस्या उदाहरणं धनुषा विध्यतीति। शराणामपायं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकत्वमित्युभयप्रसङ्गे परत्वात्करणसंज्ञा अपादानसंज्ञां बाधते। तथा कांस्यपात्र्याम्भुङ्क्ते

नियतत्वात्। सत्यम्। पूर्वसूत्रे तावदपवादमपनयता प्रतिषेधेनात्मनेपदं प्रवर्त्यतइति निर्विवादम्। स एव च प्रतिषेध इहानुवर्त्यते। तदनुवृत्तिसामर्थ्याच्चेहात्मनेपदविकल्पः सिध्यति आत्मनेपदप्रवृत्त्यविनाभूतेन निषेधेनात्मनेपदस्य लक्षणया उपस्थितौ तस्यैव विकल्पनात्। तेन मुक्ते शेषात्कर्त्तरिपरस्मैपदं भविष्यति। प्रकृत्यर्थनियमपक्षे एकवाक्यताविधिश्चेति पक्षे च परस्मैपदविकल्पेपि न कश्चिद्दोष इत्यवधेयम्॥

द्युभ्यो लुङि॥ द्युतादिभ्यः परस्मैपदं वा स्याल्लुङि। अद्युतत्। अद्योतिष्ट। अलुठत्। अलोठिष्ट। लुङि किम्। द्योतते। लोठते। अनुदात्तेत्त्वान्नित्यं तङ्। नन्विह विकल्पानुवृत्तिर्व्यर्था। अनुदात्तेत इत्यनेन प्रतिषिद्धस्य परस्मैपदस्यानेन प्रतिप्रसवे कृते लस्येत्युत्सर्गेणैव पाक्षिकस्यात्मनेपदस्य सिद्धेः। सत्यम्। परस्मैपदे प्रतिप्रसूते आत्मनेपदं न भवतीति ज्ञापयितुं वानुवृत्तिः। तेनानुकरोतीत्यादौ पाक्षिकमात्मनेपदं न भवति। यद्वा त्वनुदात्तङित इत्यादिप्रकरणेनात्मनेपदमेव विधीयते शेषादित्यादिना च परस्मैपदम्। तदानुकरोतीत्यादौ परस्मैपदेनात्मनेपदं बाध्यते येन नाप्राप्तिन्यायात्। पक्षे आत्मनेपदप्रवृत्त्यर्थं चेह वाग्रहणमित्यवधेयम्। पक्षद्वयमपीदमनुपराभ्यामिति सूत्रे भाष्ये स्थितम्। प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रे नियमसूत्राणां विधिरूपेण निषेधरूपेण वा प्रवृत्तिरिति पक्षद्वयस्यापि तत्त्वं निरूपितमस्माभिः। तदप्येतस्माद्भाष्यादुत्थितमित्यवधेयम्॥

वृद्भ्यः स्यसनोः॥ वृतुवृधुशृधुस्यन्दूभ्यः परस्मैपदं वा स्यात्स्ये सनि च। वर्त्स्यति। अवर्त्स्यत्। विवृत्सति न वृद्भ्यश्चतुर्भ्य इतीण्णिषेधः। पक्षे वर्तिष्यते। अवर्तिष्यत

विवर्तिपते । स्यसनोः किप् । वर्तते । ननु द्युतादिष्वेव वृतादयः पठ्यन्ते । तथा च तक्रकौण्डिन्यन्यायेनेयं प्राप्तिर्वृ-भ्यः पूर्वा प्राप्तिं बाधेत । ततश्चावृतद्वर्तिषीति लुङि पूर्वेण विकल्पो न सिध्येत् । तथा चोत्तरसूत्रे चकारः क्रियते । लुटीति विशेषविधिना स्यसनोरियं प्राप्तिर्मा बाधीति । अन्यथा कृपेरपि वृताद्यन्तर्भावादनेनैव सिद्धे, किञ्चकारेणेति चेत् । सत्यम् । द्युतादिपाठसामर्थ्याद्वृतादिभ्यो लुङि भविष्यति यद्वा लुङीति स्वरयिष्यते ॥

लुटि च क्लृपः ॥ लुटि स्यसनोश्च कृपेः परस्मैपदं वा स्यात् । कल्प्तासि । कल्प्स्यति अकल्प्स्यत् । चिक्लृप्सति । तासि-चक्लृप इतीट्प्रतिषेधः । पक्षे कल्पितासे । कल्पिष्यते । अकल्पिष्यत । चिकल्पिषते । इडेण्निषेधो नास्ति । तत्र हि गमे-रिट्परस्मैपदेष्वित्यतः परस्मैपदेष्वित्यनुवर्तते । ऊदित्वात्पाक्षिक इडभावस्त्वस्त्येव । स्यादेतत् । स्यसनोरित्यस्य स्वरितत्वमेवास्तु वाक्यप इति वाशब्दस्य यथा । तथा च स्वरितेनाधिकार इत्येव सिद्धे किञ्चकारेण । सत्यम् । स्पष्टार्थश्चकारः । अत एवानुकर्षणार्थाः सर्वे चकारा भाष्ये प्रत्याख्याताः ॥

इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ॥

आकडारादेका संज्ञा ॥ इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्य एकैव संज्ञा स्यात् । तत्रोभयोः सावकाशत्वे विप्रतिषेधेपरमिति परैव । निरवकाशत्वे तु सैवेति विवेकः । तत्र परस्या उदाहरणं धनुषा विध्यतीति । शराणामपायं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकतममित्युभयप्रसङ्गे, परत्वात्करणसंज्ञा अपादानसंज्ञां बाधते । तथा कांस्यपात्र्यां भुङ्क्ते

इत्यधिकरणसंज्ञा धनुर्विध्यतीति कर्तृसंज्ञा च । तदुक्तम् । अपादानमुत्तराणीति। निरवकाशायास्तूदाहरणमततसादिति। अत्र हि संयोगेगुर्विति गुरुसंज्ञा लघुसंज्ञां बाधते । तेन सन्वल्लघुनीत्ये तन्न प्रवर्त्तते । स्यादेतत् । भपदसंज्ञाभ्यां तर्हि अङ्गसंज्ञा बाध्येत । तथा च गार्ग्य इत्यत्र यस्येतिचेति लोपो न स्यात् । धानुष्क इत्यत्राङ्गस्योच्यमाना वृद्धिर्न स्यात् । अङ्गसंज्ञा तु कर्त्तव्यमित्यादौ सावकाशा । न हि धातुप्रत्यये पूर्वस्य भपदसंज्ञे स्तः । अत्राहुः । सुपि च बहुवचनेझल्येत् तद्धितेष्वचामादेरित्यादौ स्वादिषु तद्धितेषु चाङ्गस्य कार्यविधानं समावेशस्य ज्ञापकम् । द्विविधा हि स्वादयः । यजादयो वलादयश्च तत्र यथाक्रमं भपदसंज्ञाभ्यां भाव्यम् । ताभ्यां चाङ्गसंज्ञा बाधे निर्विषया एव तत्तद्विधयः स्युः । गुरुलघुसंज्ञे वर्णमात्रस्य विधीयेते नदीघिसंज्ञे तु तदन्तस्येति ताभ्यां समाविशतः । तेन वात्सीबन्धुरित्यत्र नदीबन्धुनीति पूर्वपदान्तोदात्तत्वं हे वात्सीबन्धो इत्यत्र गुरोरनृत इति प्लुतश्च सिध्यति । तथा विश्व नौ च विनरौ द्वन्द्वेघीति पूर्वनिपातः । विनरावाचष्टे विनयति प्रविनय्य गतः । ल्यपिलघुपूर्वादिति णेरयादेशः । यथा चायादेशे कर्त्तव्ये टिलोपो न स्थानिवत्तया ऽचःपरस्मिन्नित्यत्र व्युत्पादितम्। यत्तूक्तं विन्त्रोर्भावो वैन्त्रम्। इगन्ताच्चलघुपूर्वादित्यणिति, तच्चिन्त्यम् । द्वन्द्वमनोज्ञादिभ्यश्चेति वुञ्प्रसङ्गादिति कैयटः । पुरुषसंज्ञा तु परस्मैपदसंज्ञां न बाधते णलुत्तमोवेति ज्ञापकात्। अन्यत्रापि यत्र समावेश इष्टस्तत्र चकारादिना स्वस्थाने साधयिष्यते । भाष्ये तु पाठान्तरमप्युपन्यस्तम् । प्राकडारात्परं कार्यमिति । अस्यार्थः प्राक्कडारात्संज्ञाख्यं कार्यं परं स्यादिति । संज्ञाप्रकरणाद्धि संज्ञारूपमेवेह कार्यम् । परा

संज्ञेत्येव तु न सूत्रितम् । विप्रतिषेधे इत्युत्तरसूत्रे परङ्कार्यमित्यस्यानुवृत्तिर्यथा स्यात् । तत्र यस्याः संज्ञायाः परस्याः पूर्वयानवकाशया बाधः प्राप्तः सा परा ऽनेन विधीयते । एतदेव च ज्ञापकमिह प्रकरणे संज्ञानां बाध्यबाधकभावस्य तेन परयानवकाशया सावकाशा पूर्वा बाध्यते द्वयोस्तु सावकाशयोर्विप्रतिषेधे परया पूर्वा बाध्यतइति । अस्मिन्पक्षे अङ्गसंज्ञा परा कर्तव्या भपदसंज्ञे तु पूर्वे, एवं यत्रयत्र समावेश इष्टस्तत्र सर्वत्र बोद्धव्यम् । अस्मिन्पक्षे ऋत्विय इति न सिध्यति । तथाहि । ऋतोरण् छन्दसिघस् । सितिचेति पदसंज्ञैवेष्टा । तेन तत्र परं कार्यमिति वचनाद्भसंज्ञापि स्यात् । ततश्च ओर्गुणः प्रसज्येत । पदत्वमयुक्तेनावग्रहेण सित्करणं सार्थकं स्यात् । शेषोबहुव्रीहिः शेषोध्यसखीति शेषग्रहणं चास्मिन्पक्षे कर्त्तव्यं स्यात् । अन्यथा हि उन्मत्तगङ्गमित्यादावन्यपदार्थेचसंज्ञायामिति सत्यामव्ययीभावसंज्ञायां परङ्कार्यमिति वचनाद्बहुव्रीहिसंज्ञापि स्यात् । मत्यै इत्यत्र नदी संज्ञापर्याये घिसंज्ञापि स्यात् ततश्च गुणप्रसङ्गः । वस्तुतो बहुव्रीहौ शेषग्रहणं पाठद्वयेपि कर्तव्यं घिसंज्ञायान्तु पाठद्वयेपि न कर्तव्यमिति तत्रैव वक्ष्यामः । इदंत्त्व वधेयम् । एका संज्ञेति पाठेपि संज्ञाग्रहणं न कर्तव्यम् । एकेत्युक्तेपि संज्ञाधिकारादेव तल्लाभात् । स्यादेतत् । आद्वन्द्वादित्येवोच्यताम् । न हि चार्थेद्वन्द्व इत्यतः परत्रेदमुपयुज्यते । सत्यम् । तथा सति द्वन्द्वश्चप्राणितूर्यैत्यस्याप्यवधित्वं सम्भाव्येत । ततश्च सम्बुद्धिसंज्ञामन्त्रितसंज्ञयोः समावेशो न स्यात् । नन्वाकडारादित्युक्तेपि प्राक्कडारात्समास इत्यस्यावधित्वं कुतो न स्यादिति चेत् । व्याप्तिन्यायाल्लिङ्गाच्च । यदयं तत्पुरुषो द्विगुश्चेत्यारभते । समावेशार्थं हि च तत्रावस्तुतस्तु सङ्ख्यापूर्वोद्विगुरित्यत्रैव चकारः पाठ्यः॥

तावतैव दिवः कर्मच तत्प्रयोजकोहेतुश्चेत्यादाविव समावेशसिद्धेः। द्विगुश्चेति सूत्रान्तरं तु न कर्तव्यमेव। एवं समानाधिकरणसमासप्रकरणं समाप्य कर्मधारयश्चेत्येव पाठ्यम्। तत्पुरुषः समानाधिकरणः कर्मधारय इति सूत्रं तु मास्त्विति दिक्॥

विप्रतिषेधे परङ्कार्यम्॥ विरोधे सति कृत्यर्हं यत्परन्तत्स्यात्। विप्रतिपूर्वात्सेधतेर्घञ्। उपसर्गात्सुनोतीति पत्वम्। उपसर्गवशाच्च विरोधार्थकत्वम्। कार्यमित्यत्रार्हेकृत्यतृचश्चेत्यर्हार्थे कृत्यप्रत्ययः। तेन तुल्यबलविरोध इति पर्यवस्यति। नह्यपवादादीनां सान्निधौ उत्सर्गादीनां कृत्यर्हत्वं तैर्बाधितत्वात्। तत्र नित्यमावश्यकत्वाद्बाधकम्। अन्तरङ्गन्तु लाघवात्। अपवादस्तु वचनप्रामाण्यात्। तद्भिन्नस्तु प्रकृतसूत्रस्य विषयः। तदुक्तम्। परनित्यान्तरङ्गापवादानामुत्तरोत्तरस्य बलवत्त्वमिति। जातिपक्षे विध्यर्थं सूत्रम्। वृक्षेषु वृक्षाभ्यामित्यत्र हि लब्धावकाशयोरेत्वदीर्घत्वशास्त्रयोर्वृक्षेभ्य इत्यत्र युगपत्प्रसङ्गे सति गमकाभावादप्रतिपत्तिरेव स्यात्। तदुक्तम्। अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वादिति। तत्तस्माद्वचनात्परस्मिन्कृते यदि पूर्वस्यापि निमित्तमस्ति तर्हि तदपि भवति यथा भिन्धकीत्यत्र परत्वाद्द्विर्भावे कृतेप्यकच्। तदुक्तं, पुनः प्रसङ्गविज्ञानात्सिद्धमिति। व्यक्तिपक्षे तु तत्तद्व्यक्तिविषयकयोर्लक्षणयोरन्यत्र चरितार्थत्वासम्भवात्तत्तत्त्यानयिरामिव पर्याये प्राप्ते नियमार्थमिदं सूत्रम्। विप्रतिषेधे परमेव न तु पूर्वमिति। एतल्लक्षणारम्भाच्च तत्र पूर्वस्यानारम्भोनुमीयते। तथा च जुहुतात्त्वमित्यत्र परत्वात्तातङि कृते स्थानिवद्भावेन धित्व न भवति। तदुक्तं सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति। जातिव्यक्तिपक्षयोश्च लक्ष्यानुरोधाद्व्यवस्थेत्युक्तं पस्पशायाम्। नित्यादिषु तु नास्य प्रवृत्तिरित्युक्तम्। तेन रधे-

णिचि अतउपधाया इति वृद्धिं परामप्यनित्यां बाधित्वा रधिजभोरिति नुमेव । न च सोपि शब्दान्तरप्राप्त्यानित्य एवेति वाच्यम् । कृताकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यताभ्युपगमात् । तेन रन्धयतीति सिद्धम् । तथाहुष्ठुवादित्यादावन्तरङ्ग उवङ् परमपि लघूपधगुणं बाधते । तथा शुन इत्यत्रान्तरङ्गत्वात्सम्प्रसारणाच्चेति पूर्वत्वम् । अल्लोपे तु सति तस्य स्थानिवत्त्वादण् स्यात् । बहुश्वा नगरीत्यत्रानउपधालोपिन इति ङीप् स्यात् । सिद्धान्ते गौरादिलक्षणो ङीप् तु न । उपसर्जनत्वात् । यत्त्विहत्यभाष्यं बहुशुनीति तत्सिद्धान्तेन स्थितम् । अल्लोपाभ्युपगमपक्षे प्रवृत्तत्वात् । एतच्चेहैव कैयटे आभात्सूत्रीयभाष्यकैयटयोश्च स्पष्टं न्यायसिद्धञ्च । यत्तु बहुश्वेत्येव भवितव्यमिति डाप्सूत्रे भाष्यम्, तदिह साधकतया न ग्राह्यम् । डाप्पक्षमेवोपक्रम्य बहुशूकेति रूपं तिरस्कर्तुं तस्य प्रवृत्तत्वात् । वृक्ष इहेत्यादौ त्वन्तरङ्गेण गुणेन दीर्घो बाध्यते । न चासौ अपवादः कथं बाध्यतामिति वाच्यम् । समानाश्रये तस्य चरितार्थत्वात् । तथा च वार्त्तिकम्, इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वादिति । इह शीनामिति नदीत्वान्नुट् । विभक्तिपरतया नित्यस्त्रीत्वात् । अत एव ओङः श्यामिति प्रयोगः । उदाहरणन्तु अयजे इन्द्रं वृक्षे इन्द्रं सर्वे इहेति बोध्यम् । इहान्तरङ्गं बलवदिति लाघवन्यायमूलकमिति कैयटः । अच परस्मिन्निति सूत्रे भाष्यमप्येवम् । असिद्धं बहिरङ्गमिति तु वाहऊडित्यूठ्ग्रहणेन ज्ञापितम् । षत्वतुकोरित्यनेन तु तदपवादभूतं नाजानन्तर्यइति । तत्रासिद्धमित्यनया पचावेदमित्यादावैत्वाभावार्थमवश्याश्रयणीयया गतार्थत्वादन्तरङ्गं बलीय इति न कर्तव्येतीहत्य भाष्यं विरुद्धम् । न्यायसिद्धताया उक्तत्वात् । किञ्च

सापवादया ऽसिद्धपरिभाषया कथं निरपवादाया गतार्थता । अथ पत्वतुकोरित्यनेनासिद्धं वहिरङ्गमित्यस्या अनित्यतैव ज्ञाप्यते लाघवात् न तु नाजानन्तर्यइति, गौरवात् । तर्हि प्रवलमिदं भाष्यं, स्फुटीकृतं चेदमचः परस्मिन्निति सूत्रे ऽस्माभिः। एवञ्चाचोरानन्तर्यमिति द्वित्वं विवक्षितम् । नचेत्यादयोपि माचाङ्कलहा मुधैव । एवञ्चान्तरङ्गानपि विधीन् वहिरङ्गो लुग्वाधतइत्यपि गतार्थम् । पत्वतुकोरिति वा कृतितुग्ग्रहणेन वा ऽनित्यताज्ञापनात् । अश्विमानण् श्वयुवेत्यादिनिर्देशाच्च। तेन गोमन्प्रिय इत्यादि सिद्धम् । आचारक्विपि तवममादिवाधे च क्रमेण मत्ययोत्तरपदग्रहणस्य कृतार्थत्वात्तदीयज्ञापकताप्रवादोपि यथाश्रुताभिप्रायेणैवेति दिक् ॥

इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य चतुर्थे पादे प्रथममान्हिकम् ॥

यूस्त्र्याख्यौ नदी ॥ इवर्णोवर्णान्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । दीर्घान्तयोरेषा संज्ञा व्यवतिष्ठते । अन्त्वेन सवर्णग्रहणात् । ह्रस्वान्तयोस्तु माप्ताप्येषा परया घिसंज्ञया बाध्यते । तेन मते धेनो इत्यादौ अम्बार्थनद्योरिति ह्रस्वो न भवति । ननु शेषग्रहणाद् घिसंज्ञा कथं भवेदिति चेन्न । शेषग्रहणस्य प्रत्याख्यातत्वात् । तथाहि । एका संज्ञेति पाठे तावच्छेपस्यग्रहणं व्यर्थमिति स्पष्टमेव । अपरङ्कार्यमिति पाठे तु दीर्घान्ते सावकाशा नदीसंज्ञा पुम्नपुंसकयोः सावकाशा घिसंज्ञा हे मतइत्यादौ परत्वाद्बाधिष्यते । मत्यै धेन्वै इत्यादौ तु निरवकाशापि ङिति ह्रस्वश्चेति नदीसंज्ञा घिसंज्ञां न बाधेत । अतः शेषग्रहणं कृतम् । तदपि वस्तुतो व्यर्थमेव । नदीसंज्ञावचनसामर्थ्यादेव घिसञ्ज्ञाबाधोपपत्तेः । ह्रस्वलक्षणा हि नदीसंज्ञा । सा च

प्रत्ययापेक्षत्वाद्बहिरङ्गा तत्रान्तरङ्गायां घिसंज्ञायां घेर्ङितीति च गुणे कृते ह्रस्वाभावान्नदीसंज्ञा निर्विषया स्यात्। तदुक्तम्। तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञाभाव इति। यद्वा। ईश्च ऊश्च यू वाछन्दसीति पूर्वसवर्णः। तेन दीर्घयोरेवेयं नदीसंज्ञा। न चैवं ङितिह्रस्वश्चेति सूत्रे ह्रस्वांशे ऽनन्वयः स्यादिति वाच्यम्। विभक्तिविपरिणामेन य्वोः सवर्णो यो ह्रस्व इति व्याख्यानात्। उदाहरणन्तु गौर्यै वध्वै इत्यादि। यू इति किम्। मात्रे स्वस्रे। स्त्र्याख्यौ किम्। वातप्रम्ये। स्यादेतत्। स्त्रियमाचक्षाते इति विग्रहे स्त्र्याख्यायाविति प्राप्नोति। आतश्चोपसर्गइति कप्रत्ययस्य सुग्ल इत्यादौ सावकाशस्य परेण कर्मण्यणा बाधितत्वात्। सत्यम्। मूलविभुजादित्वात्कः। यद्वा। विच्प्रत्ययो भविष्यति। एतेन तत्प्रख्यञ्चान्यशास्त्रमिति जैमिनिसूत्रमपि व्याख्यातम्। नन्वेवमपि स्त्रियामित्येवास्तु किमधिकेन। मैवम्। आसमन्ताचक्षाते इति व्युत्पत्त्या नित्यस्त्रीत्वलाभार्थं तदुपादानात्। तेन ग्रामण्ये सेनान्ये स्त्रियै इत्यत्र न भवति। ग्रामं सेनाञ्च नयतीति हि क्रियाशब्दावेतौ लिङ्गत्रयसाधारणौ। अत एव आध्यै ब्राह्मण्यै इति भाष्योदाहरणं चिन्त्यमिति कैयटः। आध्यानकर्तृत्वस्यापि लिङ्गत्रयसाधारणत्वात्। स्यादेतत्। आसमन्ताद्धीर्यस्या इति विग्रहउत्तरपदस्य नित्यस्त्रीत्वात् नदीत्वमस्तु। प्रथमलिङ्गग्रहणं चेति वक्ष्यमाणत्वात्। अतिलक्ष्म्यै ब्राह्मणायेतिवत्। तत्कुतो भाष्यस्य चिन्त्यतेति चेन्न। तथा सति यणो दुर्लभत्वात्। गतिकारकपूर्वस्येष्यते इत्यत्र हि गतिसाहचर्यात्कारकपूर्वस्यापि नित्यसमासस्य ग्रहणं, गतिसमासश्च प्रतिपदोक्त एव गृह्यते। तेन दुर्धियः निर्भियः वृश्चिकभिया पलायमानस्येत्यादावनित्यसमासत्वान्न यणिति पुरुषोत्तम-

प्रभृतयः। अत एव कृन्मेजन्त इति सूत्रे मानः समस्यद्दूढय इति मन्त्रव्याख्यायां दुर्धिय इति कैयटेनेयङ् प्रयुक्तः। अदूरविप्रकर्षेण बहुव्रीहिणेदमप्यर्थकथनम् । व्याख्येयमन्त्रे तु दुष्टं ध्यायतीति विग्रहे नित्यसमास एव बोध्यः। ततो यण् । दुरो नाशदाशदभध्येष्विति पृषोदरादिसूत्रस्थवार्त्तिकेन उत्वष्टुत्वे । यत्तु तद्वार्त्तिकव्याख्यावसरे दुष्टं ध्यायतीति विगृह्य आतश्चोपसर्गेऽति कप्रत्यय इति कैयटहरदत्तादिभिरुक्तम्। तच्चिन्त्यम्। अन्तस्वरितानुरोधेन अर्थानुरोधेन च स्यत्यादितिवत्कृतयणादेशानुकरणतयैव वार्त्तिकस्य व्याख्येयत्वात् । सर्वस्य दुर्द्धेः अहतिरुपद्रवः नोस्मान् मा वधीदिति तृतीयचरणस्थेन सहान्वयः। अमेरतिरित्यनुवर्तमाने हन्तेरंहचेत्यंहादेशोतिश्च प्रत्ययः। अंहतिशब्दस्य मादेशनं निर्वपणमपवर्जनमहतिरित्यमरकोशादिबलादाने रूढौ तु मद्वेषयुक्तमाभिचारिकाद्यङ्गभूतमेव तदिह ग्राह्यम्। उणादीनामव्युत्पत्तिपक्षाश्रयणादन्तोदात्तता। वहिवस्यर्तिभ्यश्चिदिति चिद्ग्रहणानुवृत्तेरिति तु तत्त्वम्। एतेन मानो गर्व इति व्याचक्षाणा अपि प्रत्युक्ताः। पदद्वयत्वस्याध्यापकसम्प्रदायसिद्धत्वात् वाक्यशेषानुगुण्याच्च । तस्मादाध्यै ब्राह्मण्यै इति भाष्योदाहरणं चिन्त्यमिति स्थितम् । प्रास्मुत्पत्तेर्यत्र समासस्तत्रैव गतिकारकपूर्वस्येष्यत इति यण् प्रवर्त्ततइति वदतां श्रीपतिदत्तादीनामपि मते कैयटोक्तं चिन्त्यं दृढमेव। वस्तुतस्तु आध्यानमाधीरिति व्युत्पाद्य गुणगुणिनोरभेदविवक्षयैव प्रयोगोयमिति चिन्त्योद्धारो ऽवधेयः। हरदत्तस्त्वाह । नित्यस्त्रीत्वं नाम न लिङ्गान्तरानभिधायकत्वं किन्तु शब्दान्तरसमभिव्याहारं विनैव स्त्रिया वर्तमानत्वं तत्। वृत्तिसारसोप्येवम्। कथन्तर्हि ग्रामण्ये खलप्वेइत्यादि प्रत्युदाहृतमिति चेत्। शृणु ।

क्रियाशब्दत्वेप्यनयोः पुंसि मुख्या वृत्तिः । पुंसामेव त्वयमौत्सर्गिको धर्मः यद्ग्रामनयनं खलपवनं वा आध्यानं तु स्त्रीपुंससाधारणमेवेति वैषम्यं तस्माद्युक्तमेवेदं भाष्यमिति । अत्र वार्त्तिकम् । प्रथमलिङ्गग्रहणञ्च । प्रयोजनं क्विब्लुक्समासाः । अस्यार्थः । यः पूर्वं स्त्र्याख्यः पश्चादुपसर्जनतया लिङ्गान्तरविशिष्टं द्रव्यान्तरमाह तस्य नदीसंज्ञा वक्तव्या । क्विपि कुमारीमिच्छति कुमारीयाति ततः क्विप् अल्लोपयलोपौ क्वौ लुप्तस्य स्थानिवत्त्वनिषेधान्न यण् । यद्वा कुमारयतीति कुमारी आचारक्विबन्तात्कर्त्तरि क्विप् । कुमारी ब्राह्मणः । ङ्यन्तत्वात्सुलोपः । तस्मै कुमार्यै ब्राह्मणाय । स्यादेतत् । इह क्यच्क्विपोः प्रकृतिभूतस्य ङीबन्तस्यापि नित्यस्त्रीत्वं दुर्लभं पुंलिङ्गात्क्यच्क्विपोः निर्वृत्तेन त्रिलिङ्गेन समानाकारत्वादिति चेन्न । अर्थभेदेन शब्दभेदाश्रयणात् । तत्र प्रथमोदाहृतस्येत्थं रूपाणि कुमारीमिच्छन् कुमारीवाचरन् वा ब्राह्मणः कुमारी ङ्यन्तत्वात्सुलोपः । कुमार्यौ । कुमार्यः । न चेह अचिश्नुधात्वितीयङ्प्रसङ्गः । एरनेकाच इति यणा बाधितत्वात् । अत एव अमि शसि च कुमार्यं कुमार्यः मध्यं मध्य इतिवत् । न च गतिकारकपूर्वस्यैवेति निषेधः शङ्क्यः । तदितरपूर्वस्य नेत्यर्थात् विशिष्टाभावस्यापूर्वेपि सत्त्वात् । ङयि कुमार्यै कुमार्याः कुमारीणां कुमार्यां ब्राह्मणे । हे कुमारि ब्राह्मणेत्यादि । पत्न्यादेस्तु संयोगपूर्वकत्वादियङ् । पत्नियौ पत्नियः इत्यादि । शेषं प्राग्वत् । पुंलिङ्गात्क्यच्क्यङोर्निष्पन्नस्य तु अङ्यन्तत्वात्सुलोपो न । कुमारीः । हे कुमारीः । अनदीत्वाद्ध्रस्वो न । कुमार्ये कुमार्याः कुमार्यां ब्राह्मणानां कुमार्यि ब्राह्मणे इत्यादि । कुमारमात्मनमिच्छन्ती ब्राह्मणी कुमारीरित्यत्रापि कैयटमते नित्यस्त्रीत्वाभावात्पुंवदेव रूपम् । हरदत्तमते तु लक्ष्मीवत् ।

अमि शसि च यण्विशेषः । मकृतमनुसरामः । लुम्मनुष्यइति लुप् । खरकुट्यै ब्राह्मणाय । यद्यप्यत्र युक्तवद्भावात्स्त्रीत्वमस्ति तथापि स्वाश्रयस्य पुंस्त्वस्यापि सत्त्वान्नित्यस्त्रीत्वं नास्तीति कैयटहरदत्तादयः । तच्चिन्त्यम् । चञ्चाः पश्येत्यादौ शसो नत्वापत्तेः । तस्माल्लुबन्तैः खरकुटीचञ्चादिशब्दैः शास्त्रीयस्त्रीत्वविशिष्ट एव लौकिकः पुमानभिधीयतइत्येव तत्त्वम् । एवञ्च लुपः प्रयोजितत्त्वेन कथं गणनेत्यपि चिन्त्यम् । समासे अतिलक्ष्मीः बहुश्रेयसी । इयसश्चेति कब्निषेधः । ईयसो बहुव्रीहेर्नेत्युपसर्जनहृस्वो न । उभयत्रापि सम्बुद्धौ हूस्वः ङित्सु आडागमादिकञ्च नदीसंज्ञाकार्यं बोध्यम् ॥ अवयवस्त्रीविषयत्वात्सिद्धम् ॥ समासे तावदवयवो लक्ष्म्यादिशब्दः स्त्रियामेव वर्त्ततइति तदानीमेव संज्ञाः । ततश्च वर्णसंज्ञापक्षे समुदायस्य नद्यन्तत्वात्कार्यसिद्धिः । तदन्तस्य संज्ञेति पक्षे तु अङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वचनात् । वस्तुतस्तूक्तवचनस्य प्रागेव दूषितत्वात्तदन्तत्वेनैव सिद्धिर्बोध्या । अतितन्त्रीबन्धुरित्यत्रापि नदीबन्धुनीति पूर्वपदान्तोदात्तत्वं सिध्यति । पूर्वपदस्य नद्या विशेषणात् । क्विब्लुपोरपि अन्तरङ्गत्वात्क्विबादेः प्रागेव मवृत्ता संज्ञा बहिरङ्गेण लिङ्गान्तरयोगेण न निवर्त्तते स्वकारपितृकेऽकज्वत् । अकृतव्यूहा इत्यस्यानित्यताया अचः परस्मिन्निति सूत्रे वर्णितत्वात् । स्यादेतत् । इयङुवङ्स्थानप्रतिषेधे यण्स्थानप्रतिषेधप्रसङ्गोवयवस्येयङुवङ्स्थानत्वात् । यथा ह्यवयवस्य स्त्रीविषयत्वात्समुदायस्य नदीसंज्ञेत्युक्तम् । तथावयवस्येयङुवङ्स्थानत्वात्समुदायस्य यण्स्थानस्यापि प्रतिषेधः स्यात् । यथा स्त्रियै आध्यै मध्यै । अत्राहुः । इङुवङ्भ्यामङ्गमाक्षिप्यते । अङ्गाधिकारे तयोर्विधानात् । तेन यस्याङ्गस्येयङुवङौ

निर्वर्तते तस्य नदीसंज्ञानिषेधः । आध्यै इत्यत्र तु अवयवस्याङ्गत्वं नास्ति अङ्गस्य तु एरनेकाच इति यण्विधानादियङुवङः स्थानता नास्तीति निषेधाभावः । एतदर्थमेव च तत्र स्थानग्रहणम्, इयङुवङोर्यदा स्थितिस्तदा प्रतिषेधो यथा स्यात् यदा त्वपवादेन बाधस्तदा मा भूदिति । एवं ङिति ह्रस्वश्चेत्यत्राप्यङ्गस्याक्षेपात्सोपि विधिरङ्गस्यैव स्त्रीत्वे भवति नावयवस्य । शकट्यै । अतिशकटये ब्राह्मणाय । श्रियै अतिश्रिये ब्राह्मणाय । इह तु स्यादेव । अतिश्रियै अतिश्रिये वा ब्राह्मण्यै इति स्थितं भाष्ये । न चेह नित्यस्त्रीत्वं नास्तीति वाच्यम् । हरदत्तमते तत्सत्त्वात् । कैयटमते तु ङितिह्रस्वश्चेत्यत्र स्त्रीग्रहणमात्रमनुवर्तते न त्वाख्याग्रहणम् । एवञ्च सुधीशब्देपि रूपद्वयं निर्विवादम् । सुध्यादयः पुंवदिति प्रक्रिया तु प्रामादिक्येव । अतिलक्ष्म्यतिचम्वोर्वातप्रमीहूहूभ्यां साम्योक्तिरप्येवम् । तथा स्वयंभूः पुंवदित्यपि प्रमाद एव । स्यादेतत् । निष्कौशाम्बिः पुमानित्यत्रापि अन्तरङ्गतया नदीसंज्ञा स्यादतिलक्ष्म्यादौ यथा । सत्यम् । सत्यामपि तस्यां न कश्चिद्रूपे दोषः । न च सम्बुद्धिह्रस्वादिप्रसङ्गः । ह्रस्वादेशेन नद्या अपहारात् । वर्णस्य नदीत्वात् । स्त्र्याख्यत्वं तु तस्य शक्त्याश्रयतामात्रेण बोध्यम् । पर्याप्त्यधिकरणताया अविवक्षितत्वात् । तदन्तस्य नदीसंज्ञेति पक्षेपि एकदेशविकारानभ्युपगमेन सर्वादेशस्यैव वक्तव्यत्वात् । न च स्थानिवद्भावः । अल्विधित्वात् । प्रपठ्येत्यत्रेड्भावार्थं विशेषणतयाप्यल्लाश्रयणे निषेधस्य सिद्धान्तितत्वादिति दिक् । निष्कौशाम्ब्यै निष्कौशाम्बये ब्राह्मण्यै इत्यत्र तु ङितिह्रस्वश्चेति विकल्पो भवत्येवेति दिक् ॥

नेयङुवङ्स्थानावस्त्री ॥ इयङुवङोः स्थितिः स्थानं निरपवादा प्रसक्तिर्यत्र तावीदूतौ नदीसंज्ञौ स्तः स्त्रीशब्दं विना । हे श्रीः ।

हेभ्रूः । अस्त्रीति किम् । हेस्त्रि । कथं तर्हि विमानना सुभ्रु कुतः पितुर्गृहे इति कालिदासः । हापितः क्वासि हे सुभ्रु इति भट्टिश्च । एकवंशप्रभवभ्रुव इति श्रीहर्षश्च । प्रमाद एवायमिति हरदत्तः । सामान्ये नपुंसकमिति वा कथं चित्समाधेयम् । केचित्तु तदो दावचनेन सकृद्द्वंद्वमनित्यमिति परिभाषाज्ञापनमाश्रित्यानित्योय प्रतिषेध इति समादधुः । किन्त्वेतत्सकलमप्रमादेषु सुवचम् । तदोदावचनप्रत्याख्यानपरभाष्यादिविरुद्धञ्च । अन्ये तु वामीत्यतो वाग्रहणस्य सिंहावलोकितन्यायेनानुवृत्तस्य व्यवस्थितविभाषापरत्वेनेष्टसिद्धिमाहुः । तदपि न । सिंहावलोकितन्यायस्येहाभिमतत्वे नञ्ग्रहणस्य वामीत्युत्तरसूत्रस्य च वैयर्थ्यापत्तेः । यत्तूक्तं दुर्घटवृत्तौ भ्रूशब्दादप्राणिजातेश्चेत्यूङि समासे उपसर्जनह्रस्वत्वे च कृते ऊदुत इत्यूङि तस्य समुदायभक्तत्वान्नेयङुवङ्स्थानत्वमिति । तदतिस्थवीयः । प्रत्ययस्य भक्तताया निष्प्रमाणकत्वात् । तत्स्थानिकस्यैकादेशस्यान्तवद्भावेन भ्रूशब्दावयवताया अनपायात् । अङ्गाधिकारे तदुत्तरपदग्रहणस्य निर्विवादतया समुदायभक्तेप्युवङ्प्रवृत्तेश्च । सुभ्रुवावित्यादिरूपाणां सर्वसंम्मतत्वाच्चेति दिक् ॥

वामि ॥ इयङुवङ्स्थानौ वा नदीसंज्ञौ स्तः स्त्रियामामि । श्रीणाम् । श्रियाम् । भ्रूणाम् । भ्रुवाम् । द्वितीयैकवचनं तु नेह सूत्रे गृह्यते । तत्र नदीकार्याभावात् । अस्त्रीत्येव । स्त्रीणाम् । इह वाचि ह्रस्वश्चेत्येव कुतो न कृतम् । एवं हि ङितीति न कर्तव्यमिति चिन्त्यम् । वस्तुतस्तु सन्निपातपरिभाषया भ्रूणामिति नुट् न स्यादत आमीत्युक्तम् । परिभाषा चेयमनेनैव ज्ञाप्यतइति ध्येयम् ॥

ङिति ह्रस्वश्च ॥ इयङुवङ्स्थानौ ह्रस्वौ च यू वा नदी-

संज्ञौ स्तः स्त्रियां ङिति परे। श्रियै, श्रिये, भ्रुवै, भ्रुवे, कृत्यै, कृतये, धेन्वै, धेनवे। अस्त्रीत्येव। स्त्रियै। स्त्रीलिङ्गाविति किम्। अग्नये। वायवे। इह प्रथमलिङ्गग्रहणं नास्ति। तेन निष्कौशाम्बिर्हरिवदित्युक्तम्। स्त्रियमतिक्रान्तोऽतिस्त्रिरित्यत्र तु विशेषः। अतिस्त्रियौ अतिस्त्रिया इतीयङ्। अयं हि गौणत्वेपि भवति। किन्तु, गुणनाभावौत्वनुड्भिः परत्वात्पुंसि बाध्यते। क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम्॥ जसिचेति गुणः। अतिस्त्रयः। वाम्शसोः। अतिस्त्रियम् अतिस्त्रीम्। अतिस्त्रियौ अतिस्त्रियः अतिस्त्रीन्। आङो नास्त्रियाम्। अतिस्त्रिणा। अतिस्त्रिभ्याम्। घेर्ङितीति गुणः। अतिस्त्रये अतिस्त्रेः अतिस्त्रियोः। ह्रस्वनद्याप इति नुट्। अतिस्त्रीणाम्। अच्च घेः। अतिस्त्रौ।

सङ्ग्रहश्च, औकारे ओसि नित्यं स्यादम्शसोस्तु विभाषया। इयादेशोऽचि नान्यत्र स्त्रियाः स्यादुपसर्जने॥ एवं क्लीबे नुमा इयङ् बाध्यते। तेनातिस्त्रि अतिस्त्रिणी इत्यादि वारिवत्। स्त्रियान्तु ङिति ह्रस्वश्चेतिह्रस्वान्तत्वप्रयुक्तो नदीसंज्ञाविकल्पः। अस्त्रीति तु इयङुवङ्स्थानावित्यस्यैव विशेषणम्। तत्राव्यवहितस्यैवानुवृत्तेः। न चेहावृत्त्योभयविशेषणता। प्रमाणाभावात्। तेनातिस्त्रियै अतिस्त्रिये। औदिति बाधित्वा इदुद्भ्यामिति ङेराम्, अतिस्त्रियाम्। पक्षे अच्चघेः अतिस्त्रौ॥

शेषो घ्यसखि॥ ह्रस्वौ यौ यू तदन्तं सखिभिन्नमनदीसंज्ञं घिसंज्ञं स्यात्। हरये भानवे। ह्रस्वौ किम्। ग्रामण्ये खलप्वे। यू किम्। मात्रे। असखिकिम्। सख्ये। शेषः किम्। मत्यै। शेषग्रहणं व्यर्थमिति नदीसंज्ञासूत्रएवोक्तम्। समासे तु सुसखेरागच्छतीत्यादौ घिसंज्ञा भवत्येव। समुदायस्य सखिशब्दाद्भिन्नत्वात्। तदन्तग्रहणं तु नास्ति। विशेष्यसम्बन्धाभावात्।

यत्तु ग्रहणवतेत्यादि हरदत्तेनोपन्यस्तं ख्यत्यात्सूत्रे च कैयटेन । तत्पूर्वापरविरुद्धमिति येनविधिरिति सूत्रे व्युत्पादितम् । न चैवं यस्येतिचेति सूत्रे इवर्णस्य ईति सखीत्युदाहरणं न युज्यते । सखिशब्दात्सख्यशिश्वीतिभाषायामिति ङीपि सति लोपे सवर्णदीर्घे वा विशेषाभावात् । यत्तु तत्र भाष्ये वृत्तौ चोक्तम्, असति लोपे ऽतिसखेरागच्छतीत्यत्र सवर्णदीर्घस्य पूर्वं प्रत्यन्तवद्भावादसखीति घिसंज्ञाप्रतिषेधः स्यादिति, तदसखीति प्रसज्यप्रतिषेधमाश्रित्येति कैयटादौ स्पष्टम् । अत एवापाततः पर्युदासस्यैवेह स्थितत्वात् । अन्यथा वाक्यभेदादसमर्थसमासात् सुसखेरित्याद्यसिद्ध्यापत्तेश्च । तस्मादीति लोपे फलं दुर्लभमिति चेत्, अत्रोच्यते । सखी सख्यौ सख्य इत्यादावनङ्णित्वे मा भूतामिति इलोप एषितव्यः । न च सिद्धान्तेपि प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणाद्दोषतादवस्थ्यम् । विभक्तौ लिङ्गविशिष्टाग्रहणात् । एतेन इकारलोपस्य तद्धितएवोदाहरणं न त्वीति परत इति वदन् हरदत्तोपास्तः ॥

पति समासएव ॥ पतिशब्दः समासएव घिसंज्ञ स्यात् । भूपतये । नेह, पत्या पत्ये । विपरीतनियमं वारयितुमेवकारः. ह हमुष्टिना । स्यादेतत् । शेषोघ्यसखिपती इत्येवास्तु समस्तस्य तु पूर्वोक्तरीत्या सिद्धम् । न चोत्तरसूत्रे सख्युरपि सम्बन्धापत्तिः । बाधकाभावात् । इष्टरूपस्य तावतापि सिद्धेः । द्वितीयस्य तु साधोरपि छन्दस्यपठितस्यानापाद्यत्वात् । न चैवमुत्तरसूत्रे षष्ठीयुक्तग्रहो व्यर्थः स्यादिति वाच्यम् । इष्टापत्तेः । एवमेव हि श्रीग्रामण्योच्छन्दसीति श्रीग्रहणं नित्यं मन्त्रइत्यादीनि च प्रत्याख्यातानि । सम्बुद्धौ शाकल्यस्येत्यत्रानार्षग्रहणमप्येवम् । सत्यम् । यथा सखिगृहे गृहसखायावित्यत्र पूर्वनिपातानि-

यमस्तथा पतिगृहे इत्यत्र मा भूत्। इह हि घित्वात्पूर्वनिपात एव। बहुच्पूर्वस्य तु सुसखिन्यायेन घित्वाद्बहुपतिनेत्यादि बोध्यम्। अथ कथं सखिना वानरेन्द्रेण, पतिना नीयमानायाः पुरः शुक्रो न दुष्यति, नष्टे मृते प्रव्रजिते क्लीबे च पतिते पताविस्यादि। अत्र हरदत्तः, छन्दोवदृषयः कुर्वन्तीति। अस्यायमाशयः। असाधव एवैते त्रिशङ्क्वाद्ययाज्ययाजनादिवत्तपोमाहात्म्यशालिनां मुनीनामसाधुप्रयोगोपि नातीव बाधते अस्मदादीन्प्रति तु स्मृतिपुराणाद्यध्ययनविधिबलादेव तदन्तर्गततत्पाठो न बाधकः। तथा च स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येवेति नदीसंज्ञासूत्रे भाष्यकैयटयोरपि स्थितमिदम्। यद्वा सखेत्याख्यातः सखिः पतिरित्याख्यातः पतिः तेन सखिना पतिना आख्यातण्यन्तात्कर्मणि अच इरित्यौणादिक इप्रत्ययः। लाक्षणिकत्वाच्चैतयोर्घिसंज्ञापर्युदासे ग्रहणं नास्तीति दिक्। एतेनार्जुनस्य सखा कृष्णः कृष्णस्य सखिरर्जुन इत्यपि व्याख्यातम्। कथं वचो वाचस्पतेरपीति माघः। न ह्ययं समासः। अलुग्विधायकादर्शनादिति, सत्यम्। तत्पुरुषेकृतीति बहुलग्रहणादलुक्। एतेन दिवस्पतिवास्तोष्पती व्याख्यातौ। षष्ठ्याः पतीत्यादिना सत्वम्। ये तु तत्र छन्दसीत्यनुवर्तयन्ति श्रियःपतिरित्यादिसिद्धये, तन्मते पारस्करादित्वात्सुट्। के चित्तु द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छचेति सामान्यापेक्षज्ञापकात् षष्ठ्या अलुक्। कस्कादित्वात्सत्वम्। इणः परस्य तु षत्वमित्याहुः। पदकारास्तु वाचस्पतिं विश्वकर्माणम्, वास्तोष्पते प्रतीत्यादौ पृथक् पदमधीयते॥

षष्ठीयुक्तश्छन्दसि वा॥ षष्ठ्यन्तेन युक्तः पतिशब्दश्छ-

न्दसि घिसंज्ञो वा स्यात्। क्षेत्रस्य पतिना वयम् । इह योगो विभज्यते। षष्ठीयुक्तश्छन्दसीति। ततो, वा । छन्दसीत्येव। सर्वे विधयश्छन्दसि विकल्प्यन्ते इत्यर्थः। बहुलंछन्दसीत्यादिकस्त्वस्यैव प्रपञ्चः॥

ह्रस्वं लघु॥ ह्रस्वं लघुसंज्ञं स्यात्। लघूपधगुणः, चेतति। न च ह्रस्वप्रदेशेष्वपि लघुसंज्ञयैव व्यवहारः सुकरः। सर्पिष्ट्वमित्यादौ ह्रस्वात्तादौ तद्धित इति षत्वासिद्धिप्रसङ्गात् गुरुसंज्ञया तत्र लघुसंज्ञाया बाधात् तस्मादेकसंज्ञाधिकाराद्बहिर्ह्रस्वसंज्ञाप्रणयनं सम्यगेव कृतम्। यद्येवन्तर्हि दीर्घप्लुतसंज्ञायाः समावेशमाशङ्क्य एकसंज्ञाधिकारेयं योगः करिष्यतइति भाष्यं विरुध्यते गुरुसंज्ञाया लघुसंज्ञाया इव गुरुलघुसंज्ञाभ्यां ह्रस्वसंज्ञाया बाधप्रसङ्गात्। न च निरवकाशता । लघुसंज्ञाप्रवृत्त्युपायतामात्रेण सार्थक्यात्, यथा पदं सञ्ज्ञं भवतीति व्याख्यायां पदसंज्ञायाः। सत्यम्। चकारादिना समावेशः कर्तव्य इत्याशयः। एतदपरितोषादेव वा तत्र पक्षान्तराण्युक्तानीति दिक्॥

संयोगे गुरु॥ ह्रस्वं गुरुसंज्ञं स्यात्संयोगे परे । शिक्षा भिक्षा। गुरोश्च हल इत्यकारप्रत्ययः॥

दीर्घं च॥ दीर्घं गुरुसंज्ञं स्यात्। ईहाञ्चक्रे॥

यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्॥ प्रत्ययो यस्माद्विहितस्तदादि शब्दः प्रत्यये परे ऽङ्गसंज्ञं स्यात्। रामेण। विधिरिति किम्। स्त्री ईयती। न चेह वतुपः स्त्रीशब्दादविधानेपि स विधिरस्त्येवेति वाच्यम्। सन्निधानबलेन यस्माद्यः प्रत्ययो विहितस्तस्मिन्सोऽङ्गमिति व्याख्यानात् । तदादि किम्। वदामि वदिष्यामि। अतोदीर्घोयञीति दीर्घः। न चायमारम्भसामर्थ्यादेव भविष्यतीति वाच्यम् । यप गतौ चय गतौ

आभ्यां यङ्लुकि यायामि यायावः यायामः चाचामि चाचावः चाचाम इत्यादौ चरितार्थत्वात् । प्रत्यये किम् । प्रत्ययविशिष्टस्य ततोप्यधिकस्य वा मा भूत् । एवं हि वव्रश्चेत्युरदत्वस्य परनिमित्तत्वं न लभ्येत । तथा च अचःपरस्मिन्निति स्थानिवत्त्वाभावाद्वकारस्य सम्प्रसारणप्रसङ्गः । न च प्रथमसूत्रेण स्थानिवद्भावः । अल्विधित्वात् । अत एव हि सत्यपि प्रथमलिङ्गग्रहणे निष्कौशाम्ब्यादौ नदीकार्यं नेत्युक्तम् । इह प्रकृत्यादिमित्ययेन्नामित्येव लाघवाद्वक्तुं युक्तम् । प्रकृतिमात्रस्य तु व्यपदेशिवद्भावात्सिद्धम् । योगविभागेन परिभाषार्थलाभार्थं तथोक्तमिति तत्त्वम् । कर्ता कारकः । इह योगो विभज्यते । यस्मात्प्रत्ययविधिस्तदादिप्रत्यये इतिपरिभाषेयम् । प्रत्यये गृह्यमाणे यस्मात्तस्य विधिस्तदादि गृह्यतइत्यर्थः । तेन ञ्नित्यादिरित्यादौ यत्र प्रत्ययः सप्तम्या निर्दिश्यते तत्र तदादेर्ग्रहणम् । तेन देवदत्तो गार्ग्य इति सङ्घातस्य ञित्स्वरो न भवति । सुप आत्मनः क्यजित्यत्राप्यनेन तदादिनियमः तत्र सुपा कर्मणस्तदादेर्वा विशेषणात्तदन्तविधिः । तेन महान्तं पुत्रमित्यादावतिप्रसङ्गो न । सति हि वाक्यात्क्याचि महत्पुत्रीयतीति स्यात्, तथा देवदत्तश्चिकीर्षतीति सङ्घातस्य धातुसंज्ञा न देवदत्तो गार्ग्य इति सङ्घातस्य प्रातिपदिकसंज्ञा न देवदत्तो गार्ग्यायण इति सङ्घातात्फङ् नेति दिक् । अस्यापवादः कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति । इह च गतिरनन्तर इत्यनन्तरग्रहणं ज्ञापकम् । तद्धि अभ्युद्धृतशब्दे उच्छब्दव्यवहितस्याभिशब्दस्य प्रकृतिस्वरनिवृत्त्यर्थम् । न च परत्वाद्गतिर्गतावितिनिघाते कृते उदात्तग्रहणानुवृत्त्या विधीयमानः पूर्वपदप्रकृतिस्वरो न भविष्यतीति वाच्यम् । अपादादावित्यधिकारात्पादादौ निघाताप्रवृत्तेः । तदा-

दिनियमे तु हृतशब्दस्य क्तान्तत्वेप्युद्धृतशब्दस्याक्तान्तत्वात्प्राप्तिरेव नेति किमनन्तरग्रहणेन । प्रयोजनन्तु समासतद्धितस्वराः। तथाहि। अवतप्तेनकुलस्थितमित्यत्र क्तेनेत्यनुवर्त्तमाने क्षेपे इति समासः। तत्पुरुषेकृतीत्यलुक्। सांकूटिनमित्यत्र अभिनुण इति सोपसर्गादण्। अत एव वादिवृद्धिरुपसर्गांशे पर्यवस्यति। व्यावक्रोशीत्यत्र कर्मव्यतिहारे णचस्त्रियामिति णच् ततो णचः स्त्रियामित्यञ् । न कर्मव्यतिहारे इत्यैजागमनिषेधः। दूरादागत इत्यत्र थाथादिस्वरेणान्तोदात्तत्वम् । ननु परिभाषां विनापि समासस्येत्यन्तोदात्तो भविष्यतीति चेत् । मैवम् । आगम्यते स्मेति हि कर्मणि क्तः। तथा च समासस्वरं बाधित्वा गतिरनन्तर इति मध्योदात्तं स्यात् । सत्यान्तु परिभाषायां थाथघञित्यनेन कृत्स्वरापवादगतिस्वरं बाधित्वा परत्वादन्तोदात्तत्वं भवति। ननु थाथादिस्वरस्याप्यपवादो गतिस्वरः। सत्यम् । गतेरुत्तरस्य क्तान्तस्य यदन्तोदात्तत्वं तस्यैवासावपवादः। कारकादुत्तरस्य तु थाथादिस्वर एव भवतीति वक्ष्यते । नन्वस्तु गतिस्वरेणाद्युदात्त आगतशब्दः ततो दूरशब्दस्य स्तोकान्तिकेति समासः । पञ्चम्याः स्तोकादिभ्य इत्यलुक् । ततः सतिशिष्टत्वात्समासान्तोदात्त एव भविष्यति । सत्यम् । अन्वार्थं कृतया परिभाषया कृदुत्तरपदप्रकृतिस्वरेणाद्युदात्ते आगतशब्दे प्राप्ते सगतेरपि क्तान्तत्वात्स्थानान्तरप्राप्तत्वाद्गतिस्वरस्य बाधकस्यापि बाधेन थाथादिस्वरो भवतीत्येवाभिमतं न तु स्वर एवानन्यथासिद्धं परिभाषोदाहरणं तथा च परिभाषा प्रातिपदिकसंज्ञायां न प्रवर्तते। मध्येपवादन्यायेन कृद्ग्रहणस्याप्रत्यय इति निषेधमात्रबाधकत्वात् । समासेतरपदसंज्ञकपूर्वभागघटितः सङ्घातो न प्रातिपदिकमिति

निषेधस्तु परत्वाद्बाधक एव । तेन मूलकेनोपदंशमित्यत्र न सुपो लुक् । न च समासविकल्पसामर्थ्यम् । न समासइति शाकलनिषेधामवृत्त्या दध्युपदंशादौ तत्सार्थक्यसम्भवात् । एतच्च पुंयोगादाख्यायामिति सूत्रे भाष्यकैयटयोः स्पष्टमिति दिक् । ष्यङः सम्प्रसारणमिति सूत्रे भाष्ये तदादिनियमस्यापवादान्तरं पठितम् । स्त्रीप्रत्यये चानुपसर्जने तदादिनियमो नेति । एतच्च वाचनिकमेवेति सर्वादिसूत्रे व्याख्यातम् । यद्वा इह नेयङुव-ङ्स्थानावित्यतो ऽस्त्रीत्यनुवर्त्तते । तच्च यद्यपि तत्र स्वरूपपदार्थकन्तथापीहार्थपरं सम्पद्यते । प्रत्ययग्रहणे तदादि ग्राह्यं, स्त्री चेन्नाभिधीयतइत्यर्थः । तेन स्त्रीप्रत्यये तदादिनियमो नास्तीति फलितम् । न चैवमतिकारीषगन्ध्या पुत्र इत्यत्र सम्प्रसारणप्रसङ्गः । अस्त्रीत्यनेन प्रधानस्त्रिया एव प्रतिषेधात् । गौणमुख्ययोरिति न्यायात् । तेन यावान् शब्दः स्त्रियं प्राधान्येनाह तावान् स्त्रीप्रत्ययान्तः न तु ततोधिकोपीति स्थितम् ॥

सुप्तिङन्तं पदम् ॥ सुबन्तं तिङन्तञ्च पदसंज्ञं स्यात् । ब्राह्मणा ऊचुः । अन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति ज्ञापनार्थं, गौरब्राह्मणितरा । घसंज्ञायामन्तरेणान्तग्रहणे हि सति गौरीशब्दस्य पुंवत्कर्मधारयेति पुंवद्भावं बाधित्वा पुंवद्भावाद्ध्रस्वत्वं खिद्यादिकेष्विति ह्रस्वः स्यात् पद्विनरेतिवत् । ब्राह्मणीशब्दस्य ह्रस्वो न स्यात् । कथं तर्हि प्रातिपदिकसंज्ञायां कृत्तद्धितशब्दाभ्यां तदन्तग्रहणमिति चेत्, अत्र भाष्यकाराः । अर्थवद्ग्रहणं तत्रानुवर्तते तत्सामर्थ्याच्चदन्तग्रहणमिति । स्यादेतत् । यद्यर्थवत्ता पारमार्थिकी विवक्ष्यते तर्हि सा पदस्य वाक्यस्य वास्ति न तु कृत्तद्धितान्तस्य तथा चार्थवत्सूत्रे वार्त्तिकम्, अर्थवता नोपपद्यते केवलेनावचनादिति । अथ

सिद्धं त्वन्वयव्यतिरेकाभ्यामिति । तत्रत्योत्तरवार्तिकानुरोधेन प्रक्रियादशायां कल्पिता सा विवक्ष्यते, तर्हि कृत्तद्धितयोरपि सास्तीति चेत् । सत्यम् । अत एवार्थवद्ग्रहणसामर्थ्यमुक्तम् । प्रत्ययान्तेन त्वेकार्थीभूतेन प्रतीयमानोर्थ इह गृह्यते तस्य लौकिकार्थं प्रति प्रत्यासन्नतरत्वात् । मतुपः प्राशस्त्यपरतया तस्यैव ग्रहणात् । अत एव च तदुपादानं सार्थकम् । पूर्वसूत्रे ऽधातुरिति पर्युदासबलेनापि तल्लाभसम्भवात् ॥

नः क्ये ॥ क्यचि क्याङि क्यषि च नान्तमेव पदसंज्ञं स्यात् । क्यच् । राजीयति । क्यङ् । राजायते । क्यष् । चर्मायति । चर्मायते । सामान्यग्रहणार्थं क्यषः ककार इति वदतो वृत्तिकारस्य मतेनेदमुदाहृतम् । भाष्ये तु क्यषः ककारस्य प्रत्याख्यानात्क्यच्क्यङोरेवेह ग्रहणम् । चर्मायतीति रूपं चासाधु । क्यङन्ततया नित्यमात्मनेपदाभ्युपगमात् । तथा च वक्ष्यते, लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणीति । एतच्च तृतीयएव स्फुटीकरिष्यामः । नान्तमेवेति किम् । वाच्यति । स्रुच्यति । तपस्यति । ननु क्य एव नान्तमिति विपरीतो नियमः कुतो नेति चेन्न । ङिसम्बुद्ध्योरिति ज्ञापकात् नलोपः प्रातिपदिकान्तस्येति ज्ञापकाच्च । अन्यथा हि नलोपः क्ये इत्येव सूत्रयेत् ॥

सिति च ॥ सिति प्रत्यये परे पूर्वं पदसंज्ञं स्यात् । भसंज्ञापवादः । भवतष्ठक्छसौ । भवदीयः । ऋतोरण् छन्दसिघस् ऋतुः प्राप्तोस्य ऋत्वियः ॥

स्वादिष्वसर्वनामस्थाने ॥ कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदसंज्ञं स्यात् । राजभ्यां राजभिः । राजत्वं राजता । सर्वनामस्थाने तु राजानौ । राजानः । भुनद्भ्यो धारयद्-

द्भ्व इति पदसंज्ञाया उपसङ्ख्यानम् । तसौमत्वर्थे इति भसंज्ञाया अपवादः व्यत्ययेन भवते शपो लुक् ॥

यचि भम् ॥ यकारादिष्वजादिषु च स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यात् । गार्ग्यः । राज्ञः । वाचिकषडिकयोस्तु यथा भत्वाभत्वे निर्वहतस्तथा पञ्चमे वक्ष्यते । नभोङ्गिरोमनुषां वत्युपसंङ्ख्यानम् । नभसा तुल्यं वर्तते इति नभस्वत् भत्वाद्रुत्वाभावः । मनुष्वदग्ने । अङ्गिरस्वदङ्गिरः । जनेरुसीत्यत्र बहुलग्रहणानुवृत्तेर्मन्यतेरुपिमत्ययः आदेशप्रत्यययोरिति षत्वम् । वृषण्वस्वश्वयोः वृष वर्षुकं वसु यस्य सः वृषण्वसुः । एवं वृषणश्वः । कर्मधारये षष्ठीतत्पुरुषादिर्वा यथासम्भवं बोध्यः । इहान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्रसज्येत भत्वात्तु न पदत्वम् । अत एव पदान्तस्येति णत्वनिषेधो न । अल्लोपोन इति तु न भवति अङ्गसंज्ञाया अभावात् अङ्गस्येति तत्राधिकारात् । उपसङ्ख्यानान्येतानि छन्दोविषयाणीति कैयटः ॥

तसौ मत्वर्थे ॥ तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे । विद्युत्वान् भत्वाज्जश्त्वं न । उदकेन श्वयतिर्वर्धते उदश्वित् क्विप् उदश्वितोन्यतरस्यामिति निपातनात्सम्प्रसारणाभावः । उदकस्योदः संज्ञायाम् । उदश्वित्वान् घोषः । यशस्वी । मत्वर्थव्याप्तित्वं मतुपो विनिप्रभृतीनां चाविशिष्टं, अत उभयत्र भत्वप्रवृत्तिः । यथा देवदत्तशालास्था आनीयन्तामित्युक्ते देवदत्तोप्यानीयते उद्देश्यतावच्छेदकरूपाक्रान्तत्वात् ।

अयस्मयादीनि छन्दसि ॥ एतानि छन्दसि साधूनि । भपदसंज्ञाधिकाराद्यथायोगन्तदुभयद्वारेणं साधुत्वं निर्णीयते । तथा च वार्तिकम्, उभयसंज्ञान्यपीति वक्तव्यमिति । अयस्मयं

पात्रम् । भत्वादुत्वम् । अयसो विकार इत्यर्थे द्व्यचश्छन्दसीति मयट् । एतेन मयड्वैतयोर्भाषायामित्युक्तेः कथमिह मयडित्याशङ्क्यात एव निपातनादिति वदन् न्यासकृत्परास्तः । समुष्टुभा सऋक्वता गणेन । इह ऋक्वतेति पदत्वात्कुत्वम् । भत्वाज्जश्त्वाभावः । जश्त्वविधानार्थायाः पदसंज्ञाया भत्वेन प्रतिबन्धात् ॥

बहुषु बहुवचनम् ॥ बहुत्वे एतत्स्यात् । वृक्षाः । कथन्तर्हि दारा इति । अवयवबहुत्वस्यावयविनि आरोपाद्भविष्यति । न चैवमेकस्मिन्नपि वृक्षे बहुवचनापत्तिः । तत्रारोपे प्रमाणाभावात् । दारादौ तु नित्यबहुवचनान्तत्वग्राहककोशादेर्वृद्धव्यवहारस्य च मानत्वेन वैषम्यात् ॥

द्व्येकयोर्द्विवचनैकवचने ॥ द्वित्वैकत्वयोरेते स्तः । वृक्षौ । वृक्षः । इह द्व्येकशब्दौ सङ्ख्यापरौ । न तु सङ्ख्येयपरौ । अत एव द्व्येकयोरिति द्विवचनम् । अन्यथा बहुवचनं स्यात् । पूर्वसूत्रेऽपि बहुष्विति सङ्ख्यापरमेव । बहुवचनन्तु आश्रयगत बहुत्व धर्मं आरोप्य कृतम् । तत्फलन्तु बहवः पर्वता इति वैपुल्यवाचिनो नेह ग्रहणमिति सूचनमेव । वस्तुतो व्यर्थं तत् । परत्वादेकवचनासम्भवात् । यत्तु आदरवतः सङ्ख्याः सङ्ख्येयपरा इति, तत्मायोवादमात्रम् । अत्र श्लोकवार्त्तिकं, सुपाङ्कर्मादयोऽप्यर्थाः सङ्ख्या चैव तथा तिङाम् । प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ॥ कर्मणि द्वितीयेत्यादेः प्रकरणस्य बहुषु बहुवचनमित्यादेश्च स्वादिसूत्रेण सङ्क्रमापयनया विधायकत्वम् । तथा बहुषु बहुवचनमित्यादिसूत्रयोः श्वशुरादिवारणेनाप्येकवाक्यतेति पूर्वार्धस्यार्थः । तृतीयचरणेनार्थनियम उक्तः । चतुर्थेन तु प्रकृतार्थविषयः प्रत्ययनियम उक्तः एषां प्रत्ययानां प्रकृत्यर्थ्यान्या

तु तद्धितश्चासर्वविभक्तिरिति सूत्रएवास्माभिः कृता । इह ए-
कद्विबहुष्वेकवचनद्विवचनबहुवचनानीति कर्तुमुचितम् । बहु-
शब्दश्च सङ्ख्यावाच्येव ग्रहीष्यते द्विशब्दसाहचर्यात् । अत
एव हि एकशब्दः सङ्ख्यावाच्येव गृह्यते । वस्तुतस्तु इदं
सूत्रद्वयं मास्तु । एकवचनादिसंज्ञानामन्वर्थताश्रयणेन सकले-
ष्टसिद्धेः ॥

इति श्रीशब्दकौस्तुभे प्रथमाध्यायस्य चतुर्थे
पादे द्वितीयमाह्निकम् ॥

कारके ॥ अधिकारोयम् । व्यत्ययेन प्रथमार्थे सप्तमी । त-
था च ध्रुवमित्यादौ प्रतिसूत्रं वाक्यं भित्वा कारकसंज्ञा वि-
धीयते । तथाहि । अपाये ध्रुवं कारकसंज्ञं स्यात् । तत अ-
पादानम् । उक्तं कारकमपादानसंज्ञं स्यात् । पुनः कारकश-
ब्दानुवृत्तिसामर्थ्याद्विशेषसंज्ञाभिः सह समावेशो न तु पर्यायः ।
अनुवृत्तिं विनापि प्रथमवाक्यमात्राचात्सिद्धेः । तेन स्तम्बेरम
इत्यादौ अधिकरणत्वात्सप्तमी, कारकत्वाद्गतिकारकोपपदा-
त्कृदिति प्रकृतिस्वरश्च सिद्धः । थाथादिस्वरस्तु न भवति ।
अपा साहचर्यादेरच एव तत्र ग्रहणात् । न चोपपदत्वादेव कृ-
दुत्तरपदप्रकृतिस्वरोस्त्विति वाच्यम् । स्तम्बकर्णयोरिति निर्देशा-
त्प्रातिपदिकयोस्तथात्वेपि सप्तमीविशिष्टयोरतथात्वात् । न हि
सप्तमीविशिष्टं सप्तम्या निर्दिष्टम्, येनोपपदसंज्ञां लभेतेति
दिक् । अन्वर्था चेयं संज्ञा करोतीति कारकमिति । तेन क्रि-
यानन्वयिनो न भवति । ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति ।
इह हि ब्राह्मणः पुत्रविशेषणं न तु क्रियान्वयी । ननु पुत्रोपि
कथं कारकम् । प्रश्नो हि जिज्ञासा । तत्र प्रष्टुः कारकत्वेपि
यं प्रति प्रश्नस्तस्य जनकत्वायोगादिति चेत् । सत्यम् । मा-

स्तु जनकता। क्रियान्वयमात्रमिह विवक्षितम् । तच्चास्त्येव। एतेन सम्प्रदानस्य कारकत्वं व्याख्यातम् । यद्वा। सम्प्रदानादेरपि प्रथमं बुद्ध्यारोहात्कारकता। एवं ज्ञायते करोतीत्यादौ कर्तृकर्मणोरपि बोध्यम् । कार्याव्यवहितपूर्वक्षणवृत्तीनां कथं कारणतेति चेत् । यथा यागस्येत्यवेहि। तत्र व्यापारोस्तीति चेन्न। तावतापि यागस्य पूर्ववर्तितानुपपादनात् । अव्यवहितपूर्ववर्तिस्वस्वव्यापारान्यतरकत्वं कारणत्वमिति चेन्न। व्यापारत्वस्य कारणत्वगर्भतया आत्माश्रयापत्तेः । स्वव्यापारस्येव स्वज्ञानस्यापि प्रवेशसम्भवाच्च। अत एव ज्ञायमानं लिङ्गं पदञ्चानुमितिशब्दज्ञानयोः कारणमिति जरन्नैयायिकाः। ज्ञायमानाः पदार्थाः कारणमिति च मीमांसकाः। अत एव च रथन्तरसामादेरैन्द्रवाय्वाग्रत्वादौ निमित्ततेत्युद्घोषो मीमांसकानाम् । अथ वा उपसर्जनसञ्ज्ञा यथा राज्ञः कुमार्यां राजकुमार्यां इत्यादौ यथा सम्भवमन्वर्थापि अर्धपिप्पलीत्यादौ वचनाद्भवति तथा कारकसञ्ज्ञापि प्रतिसूत्रं विधीयमाना वचनात्सम्प्रदानादौ भवति। प्रदेशेषु तु सञ्ज्ञाप्रकारक एव बोधः। तत्तद्रूपप्रकारको वेत्यन्यदेतत् । स्यादेतत्। वृक्षस्य पर्णं पततीत्यादौ पर्णविशेषणस्यापि वृक्षस्य कारकतापत्तिः । वृक्षात्पततीति प्रयोगानुरोधात् । तर्हि अस्मदीयशब्दप्रयोगवैलक्षण्यमात्रेण एकस्यैव जनकत्वाजनकत्वे व्यवतिष्ठेते इति चेत्। अत्रेदं सिद्धान्तरहस्यम्। कारकत्वं तद्व्याप्यकर्तृत्वादिषट्कञ्च वस्तुविशेषे ऽनवस्थितम्। विशेषणविशेष्यवत् तर्हि गौः सर्वं प्रति गौरेव न तु क चित्प्रत्य गौरितिवद्विशेषण विशेषणमेवेति सुवचम्। तथा च।किं कारकः कर्त्ता किं कर्मेत्यादिप्रश्ने सर्वमित्युत्तरम्। वक्ष्यमाणकर्तृत्वकर्मत्वादेरचेतनेषु अनादिषु च निर्बाधत्वात् कथा पचिधातुव्य-

त्कथा उपस्थापितेर्थे किं कर्त्रादिकमिति प्रश्ने तु प्रकृतपाचित्य-वस्तुपात्तव्यापाराश्रयः कर्ता । व्यापारव्यधिकरणफलाश्रयः कर्म । यद्व्यापारोत्तरभावित्वं क्रियाया विवक्ष्यते तत्करणम् । कर्तृकर्मणोराश्रयोधिकरणमित्यादि क्रमेणोत्तरम् । विक्लित्त्यनुकूलव्यापारो हि पच्यर्थः । व्यापारश्चानेकधा । तत्र पचेरधिश्रयणतण्डुलावपनैधोपकर्षणापकर्षण फूत्कारादितात्पर्यकत्वे तदाश्रयो देवदत्त कर्ता । ज्वलनतात्पर्यकत्वे त्वेधाः कर्तारः । तण्डुलधारणादिपरत्वे स्थाली कर्त्री । अवयवविभागादिपरत्वे तण्डुला. कर्त्तारः । अत एव कर्मकर्ता करणकर्तेत्यादिव्यवहारः । एवं स्थाल्या पचतीत्यत्र तृतीयोपात्तव्यापाराश्रयोपि स्थालीकरणमेव न तु तदा कर्त्री । देवदत्तादिव्यापारस्यैव तत्र धातूपात्तत्वात् । तथा आदिखादिभ्यामुपात्तेर्थे बटुः कर्ता । तस्मिन्नेवार्थे भक्षयतिनोपात्ते बटुः कर्म । अभिपूर्वैः शीङ्स्थाप्रभृतिभिरुपात्तेर्थे आधारः कर्म । तत्रैव केवलैरुपात्तेधिकरणमित्यादि । नन्वेवमननुगम इति चेत्, सत्यम् । कस्य कः पिता को भ्रात इत्यत्रेवाननुगतस्यैव लक्ष्यत्वात् । अत एव प्रयोगाणां साध्वसाधुता व्यवतिष्ठते । अन्यथा क चित्कर्तुः सर्वत्र कर्तृतापत्तौ सकलप्रयोगाः सङ्कीर्येरन् । उक्तं च हरिणा । वस्तुतस्तदानिर्देश्यं न हि वस्तु व्यवस्थितम् । स्थाल्या पच्यतइत्येषा व्यवस्था दृश्यते यत इति ॥ अत एव प्रयोजकव्यापारव्याप्यत्वाविशेषेपि पच्यादिधातुषु प्रयोज्यो न कर्म गम्यादिष्वेव तु कर्म तथा पौराणिकाच्छृणोति नटस्य शृणोतीत्यत्र पौराणिकोपादानं कारकञ्च नटस्तु नोभयमित्यादि वक्ष्यमाणं सङ्गच्छते । नन्वेवं लः कर्मणीत्यादिविधिषु किं कर्म ग्राह्यमिति चेत् । विनिगमकाभावात्सर्वमित्यवेहि, यथा भस्येत्यत्र सर्वं भम् । तर्हि टिघु-

भादिवत्पारिभाषिकमेव कारकत्वकर्मत्वादिकं स्यादिति चेत् । को वा ब्रूते नेति । एतावानेव परं भेदः । टिघुभादीनां शब्दसंज्ञात्वमितरेषान्त्वर्थसंज्ञात्वमिति । एवञ्च कर्मणिद्वितीयेत्यनेन यथायथमाधारादावपि द्वितीया विधीयतइति फलितम् । रथेन गम्यते रथो गच्छतीत्यादावपि कर्तृविभक्तिरुत्सर्गेणैव सिद्धेति न तत्र लक्षणाश्रयणीयेत्यवधेयम् । विभक्तीनां वाच्यांशानिष्कर्षस्तु करिष्यते । एतेन ज्ञानस्य स्वप्रकाशत्वे कर्तृकर्मविरोधमुद्भावयन्तः परास्ताः । शब्दविशेषोपाधिकस्य कर्तृत्वादे प्रत्यक्षादावुक्तिसम्भवात् । एतेन परसमवेतक्रियाफलशालित्वं कर्मत्वं चेदपादानेतिव्याप्तिरित्याशङ्क्य धात्वर्थतावच्छेदकफलशालित्वं तदिति परिष्कुर्वन्तोपि परास्ताः । ग्रामं गमयति देवदत्तमित्यादौ गन्तरि अव्याप्तेः । त्वन्मते गमनस्य प्रकृत्यर्थत्वेपि तथात्वानवच्छेदकत्वात् । तत्त्वे वा पाचयत्यादिप्रयोज्यकर्तर्यतिव्याप्तेः । तत्र पारिभाषिकमनुशासनोपयोगिकर्मत्वं वचनबलाद्व्यवस्थितमिति चेत् । अपादानेपि तर्हि तन्नास्तीत्यवेहि । एकसंज्ञाधिकारे ऽनवकाशया बाधात् । अत एवात्मानमात्मा हन्तीत्यादौ परया कर्तृसंज्ञया कर्मसंज्ञाबाधमाशङ्क्याहङ्कारादिविशिष्टात्मभेदमाश्रित्य तत्रतत्र भाष्ये समाहितमिति दिक् । नन्वेवं करणं कारकमिति सामानाधिकरण्यं कथम् । अस्वातन्त्र्येण ण्वुल्प्रत्ययायोगात् । अन्यथा कर्तृसंज्ञापत्तौ करणसंज्ञायाः पर्यायापत्तेरिति चेत् । उच्यते । अधिकारसामर्थ्यात्कारकशब्दोपनीतं स्वातन्त्र्यमवस्थान्तरगतं विज्ञायते । अवस्थान्तरे यत्स्वतन्त्रं तत्साधकतमङ्करणमिति यथा कुरुक्षेत्रस्थाः काश्यां वसन्तीत्यादौ । कर्तुस्तु साम्प्रतिकं स्वातन्त्र्यम् । तच्च कर्तृसंज्ञायामुपयुज्यतइति । यद्वा । कारकशब्दः क्रिया

परः करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्ते । तथा च अपादानादिसंज्ञाविधौ क्रियायामित्यस्योपस्थितया क्रियान्वयिनामेव तत्तत्संज्ञाः स्युः । कारकादत्तश्रुतयोरित्यादौ तु कारकशब्दः स्वर्यते तेनैतदधिकारोक्तं कर्त्रादिषट्कमेव गृह्यतइति ॥

ध्रुवमपाये ऽपादानम्॥अपायो विश्लेषो विभागस्तद्धेतुत्वोपहितो गतिविशेषश्चेह विवक्षितस्तस्मिन्साध्ये ऽवधिभूतमपादानसंज्ञं स्यात् । वृक्षात्पतति । ध्रुवमित्यत्र ध्रु गतिस्थैर्ययोरित्यस्मात्कुटादेः पचाद्यच् । ये तु ध्रुव स्थैर्ये इति पठन्ति । तेषामिगुपधलक्षणः कप्रत्ययः, ध्रुवतीति ध्रुवं स्थिरम् । एकरूपमिति यावत् । ध्रुवमस्य शीलमिति यथा । तथा चापाये साध्ये यदेकरूपमित्युक्ते प्रकृतधातूपात्तगत्यनाविष्टत्वे सति तदुपयोगीति लभ्यते । तच्चार्थादवधिभूतमेव पर्यवस्यति । तेन धावतो ऽश्वात्पततीत्यादौ क्रियाया विशिष्टरूपाप्यश्वस्य प्रकृतधातूपात्तक्रियां प्रत्यवधित्वन्न विरुध्यते । तथा परस्परस्मान्मेषावपसरत इत्यत्र सृधातुना गतिद्वयस्याप्युपादानादेकमेषनिष्ठाङ्गतिं प्रत्यपरस्यापादानत्वं सिध्यति । उक्तञ्च हरिणा प्रकीर्णकाण्डे । अपाये यदुदासीनं चलं वा यदि वा ऽचलम् । ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥ पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ । तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते ॥ मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् । मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक्पृथगिति ॥ अतदावेशादिति अपायानावेशादित्यर्थः । गतिर्विना त्ववधिना नापाय इति कथ्यतइति तत्रैवोक्तेरवधिनिरपेक्षस्य चलनस्यापायत्वाभावादिति भावः । पर्वतात्पततो ऽश्वात्पततीत्यत्र तु पर्वतावधिकपतनाश्रयो योऽश्वस्त-

दवधिकं देवदत्ताश्रयं पतनमर्थः । पञ्चमी त्ववधौ शक्ता । तत्राभेदेन संसर्गेण प्रकृत्यर्थो विशेषणम् । प्रत्ययार्थस्तु क्रियायां विशेषणम् । कारकाणां क्रिययैव सम्बन्धात् । अन्यथा ऽसाधुत्वात् । क्रियान्वये सत्येव हि कारकसंज्ञा तत्पूर्विका : विशेषसंज्ञाश्च स्थिताः । अत एवाहुः । नाम्नो द्विधैव सम्बन्धः सर्ववाक्येष्ववस्थितः । सामानाधिकरण्येन षष्ठ्या वापि क चिद्भवेदिति । सामानाधिकरण्येनेति नीलो घट इत्याद्यभिप्रायम् । नीलं घटमानयेत्यादावप्यन्तरङ्गक्रियान्वयानन्तरमेकक्रियावशीकृतानां पार्ष्णिक्यबोधाभिप्रायञ्च । षष्ठ्येति अकारकविभक्तेरुपलक्षणं हरये नम इति यथा । क चिदिति, अकारकविभक्तेरपि, नटस्य शृणोतीत्यादौ क्रियान्वयदर्शनादिति भावः । एतेन भूतले घटो नेत्यत्र भूतलाधेयत्वाभावो घटे भूतलाधेयत्वं वा घटाभावे विशेषणमिति द्वेधा व्याचक्षणा नैयायिकाः परास्ताः । उभयथापि क्रियानन्वये कारकविभक्तेरसाधुत्वात् । अर्थाभावे ऽव्ययीभावापत्तेश्च । तस्य नित्यसमासत्वात् । नन्वस्मदुक्तोपि बोधोस्मदर्शनव्युत्पन्नानामनुभवसाक्षिक इति चेत् । सत्यम् । न हि वयं बोध एव नोदेतीति ब्रूमः । सर्वे सर्वार्थबोधनसमर्था इत्यभ्युपगमात् किन्तु तस्मिन्नर्थे ऽसाधुताम् । तथा च सिद्धे शब्दार्थसम्बन्धइति वार्तिकं व्याचक्षाणा भाष्यकारा आहुः । समानायामर्थावगतौ साधुभिश्चासाधुभिश्च गम्यागम्येतिवन्नियमः क्रियतइति । उक्तञ्च । भेदाभेदकसम्बन्धोपाधिभेदनियंत्रितम् । साधुत्वं तदभावेपि बोधो नेह निवार्यतइति ॥ एवञ्च कस्माद्वाक्यात्कीदृग्बोध इति प्रश्ने यो यथा व्युत्पन्नस्तस्य तादृगेवेति स्थितिः । कीदृशे बोधे साधुत्वं कुत्र नेति परं विचारविषय इति तत्त्वम् । एतेन घटः कर्मत्व-

मानयनं कृतिरित्यादीनां स्वरूपायोग्यतेति परास्तम्। तथाव्युत्पन्नस्य बोधानुभवात्। अन्यथा व्युत्पन्नस्य व्युत्पत्तिरूपसहकारिविरहात्कार्यानुदयेपि स्वरूपयोग्यतानपायात्। एतेन प्रकृत्यर्थप्रकारको बोधो यत्र विशेष्यतया तत्र विषयतया प्रत्ययजन्य इत्यादिकार्यकारणभावं कल्पयन्तोऽप्यपास्ताः। विपरीतव्युत्पादिते व्यभिचारस्योद्भवात्। सिद्धान्ते तु घटः कर्मत्वमित्याद्यसाध्वेव। तथाहि। अभिहिते प्रथमेति वार्त्तिकं तत्कथं घटः कर्मत्वमिति प्रथमा। घटानयनयोरानयनकृतौ प्रति कर्मतया कर्तृकर्मणोरिति षष्ठीप्रसङ्गाच्चेति दिक्। निर्दिष्टविषयं किं चिदुपात्तविषयं तथा। अपेक्षितक्रियश्चेति त्रिधापादानमुच्यते॥ यत्र साक्षाद्धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयम्। अश्वात्पततीति यथा। यत्र तु धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्तविषयम्। यथा बलाहकाद्विद्योततइति, निःसरणाङ्गे विद्योतने द्युतिर्वर्तते। यथा वा कुसूलात्पचतीति। आदानाङ्गे पाकेत्र पचिर्वर्तते। अपेक्षितक्रियं तु तत् यत्र प्रत्यक्षसिद्धमागमनं मनसि निधाय पृच्छति कुतो भवानिति, पाटलिपुत्रादिति चोत्तरयति। अर्थाध्याहारस्य न्याय्यतया उक्तत्वात्। इह सार्थाद्धीयतइत्यपि निर्दिष्टविषयस्योदाहरणम्। स्यादेतत्। परत्वात्सार्थस्य कर्तृसंज्ञा प्राप्नोति। उक्तं हि,अपादानमुत्तराणीति। किञ्च सार्थस्य कर्तृत्वाभावे त्यज्यमानस्य कर्मसंज्ञा न स्यात् कर्तृव्यापारव्याप्यत्वाभावात्। ततश्च हीयते हीन इति कर्मणि लकारो निष्ठा च न स्यात्। न च कर्मकर्तर्ययं लकार इति वाच्यम्। जहातेः कर्तृस्थक्रियत्वात्कर्मण्येवायं लकार इति इन्दुनोक्तत्वात्। यत्तु त्वपादाने चाहीयरुहोरिति सूत्रे न्यासकारेण सम्प्रदानसूत्रे कैयटेन चोक्तं कर्मसंज्ञा-

यां कर्तृग्रहणं स्वातन्त्र्योपलक्षणम्। अतो हानक्रियायां स्वतन्त्रेणापादानेनेप्स्यमानस्येह कर्मतेति। तच्चिन्त्यम्। मापेव्यव वन्धातीत्यत्र कर्मणोप्यश्वस्य वस्तुतो भक्षणे यत्स्वातन्त्र्यं तदाश्रयकर्मसंज्ञापत्तेः। अत एव कर्मसंज्ञाविधायकसूत्रशेषे कैयटेनोक्तम्। प्रयोजकव्यापारस्याशब्दार्थत्वात्तदपेक्षं कर्मत्वमयुक्तमिति। अत्राहुः। सार्थाद्धीयतइत्यत्र कर्मकर्त्तरि लकारः। तथाहि। अपगमना जहातेरर्थः। सा च क्षुदुपघातादिना देवदत्तस्यापगमते तत्समर्थाचरणम्। यदा तु क्षुदुपघातादिना स्वयमेवापगच्छति तदा कर्मकर्तृत्वम्। स्फुटञ्चेदं हरदत्तमाधवग्रन्थयोः। स्यादेतत्। ध्रुवग्रहण किमर्थम्। न च ग्रामादागच्छति शकटेनेत्यत्र शकटे ऽतिव्याप्तिवारणाय तदिति वाच्यम्। परत्वात्तत्र कारणसंज्ञाप्रवृत्तेः। यथा धनुषा विध्यतीत्यत्र। इह हि शरनिःसरणं मत्यवधिभावोपगमेनैव व्यधने करणतेत्युभयप्रसङ्गः। वृक्षस्य पर्णं पततीत्यादौ तु वृक्षः पर्णविशेषणं न त्वपायेन युज्यते। न च संज्ञिनिर्देशार्थं ध्रुवग्रहणम्। अपाये क्रियायां यदन्वेतीत्यस्याक्षिप्तस्य संज्ञिसमर्थकत्वात्। यद्वा कारके इति निर्धारणसप्तम्याश्रयणात्कारकमिति लभ्यते। पूर्वत्रापि प्रथमार्थे सप्तमीत्युक्तत्वाच्च। तस्माद् ध्रुवग्रहण चिन्त्यप्रयोजनम्। जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्। अधर्माज्जुगुप्सते विरमति प्रमाद्यति वा। संश्लेषपूर्वको विश्लेषो विभागः। स चेह नास्ति। बुद्धिकल्पितस्तु गौणत्वान्न गृह्यतइति वार्त्तिकारम्भः। भाष्यकारास्तु जुगुप्सादयोत्र जुगुप्सादिपूर्विकायां निवृत्तौ वर्तन्तइत्युपात्तविषयमेतत्। कारकप्रकरणे च गौणस्यापि ग्रहणम्। साधकतममिति तमग्रहणाल्लिङ्गात्। अपायादिपदानां स्वरितत्वाद्वा स्वरितेनाधिकारः,

गौणोप्यर्थो गृह्यतइति व्यवस्थापनात्। तेन बुद्धिकल्पितस्याप्यपायस्य सत्वात्सिद्धम्। पूर्वं हि बुद्धया ऽधर्मं सम्प्राप्य ततो दोपदर्शनान्निवर्ततइत्यस्त्यपायः। एवमुत्तरसूत्रेष्वपि प्रपञ्चस्त्व बोध्यमिति दिक्॥

भीत्रार्थानां भयहेतुः॥ भयं भीः त्राणं त्रा भयार्थानां त्राणार्थानाञ्च योगे भयहेतुः कारकमपादानं स्यात्। चोरेभ्य उद्विजते बिभेति रक्षति वा त्रायते भयहेतुग्रहणं चिन्त्यप्रयोजनम्। अरण्ये बिभेतीत्यादौ तु परत्वादधिकरणसंज्ञा। कस्य बिभ्यति देवाश्च जातरोपस्य संयुगइति रामायणश्लोकस्तु कस्य संयुगइति योजनया व्याख्येयः॥

पराजेरसोढः॥ परापूर्वस्य जयतेः प्रयोगे ऽसोढोऽर्थोऽपादानं स्यात्। अध्ययनात्पराजयते ग्लायतीत्यर्थः। अकर्मकश्चायम्। तत्र पञ्चम्यां प्राप्तायां वचनम्। असोढ किम्। शत्रून्पराजयते। अभिभवतीत्यर्थः। असोढ इति क्तार्थो भूतकालोत्राविवक्षित तेनाध्ययनात्पराजेष्यतइत्यादि सिद्धम्। वस्तुतस्तु असोढग्रहणं व्यर्थं शत्रून्पराजयतइत्यत्र परत्वात्कर्मसंज्ञासिद्धेः। इह सूत्रे पराजेरिति रुप विपराभ्याञ्जेरितिवत्समर्थनीयम्। यत्तु परत्वात् घेर्ङितीति गुण इति हरदत्तेनोक्तं तत्सूत्रभाष्यादिविरुद्धमिति प्रागेव प्रपञ्चितम्॥

वारणार्थानामीप्सितः॥ वारणार्थानां प्रयोगे क्रियया आप्तुमिष्टं कारकमपादानं स्यात्। यवेभ्यो गां वारयति वृञ् वरणे, चुरादिः। प्रवृत्तिविघातो वारणम्। ईप्सित इति किम्। यवेभ्यो गां वारयति क्षेत्रे। नन्विह परत्वादधिकरणसंज्ञा भविष्यति यथा कृतेपीप्सितग्रहणे गोषु इप्सिततमत्वप्रयुक्ता कर्मसंज्ञा। सत्यम्। चिन्त्यप्रयोजनमेवेप्सितग्रहणम्॥

अन्तर्धौ येनादर्शनमिच्छति ॥ अन्तर्धाविति सप्तमी येनेति कर्तरि तृतीया। न च कृद्योगे षष्ठीप्रसङ्गः। उभयप्राप्तौ कर्मण्येवेति नियमात्। व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तत्कारकमपादानं स्यात्। मातुर्निलीयते कृष्णः। लीङ् श्लेषणे दैवादिकः। अत्रान्तर्धाविति चिन्त्यप्रयोजनम्। न दिदृक्षते चोरानित्यत्र हि परत्वात्कर्मता सिद्धा। इच्छतीति किम्। इच्छायामसत्यां सत्यपि दर्शने यथा स्यात्॥

आख्यातोपयोगे ॥ उपयोगो नियमपूर्वकं विद्यास्वीकरणम्। तस्मिन्साध्ये य आख्याता तत्कारकमपादानं स्यात्। उपाध्यायादधीते। उपयोगे किम्। नटस्य शृणोति॥

जनिकर्तुः प्रकृतिः ॥ जायमानस्य हेतुरपादानं स्यात्। पुत्रात्प्रमोदो जायते। इह जनिरुत्पत्तिः। जनिरुत्पत्तिरुद्भव इत्यमरः। इञजादिभ्य इति जनेर्भावे इञ् जनिघसिभ्यामित्युणादिसूत्रेणण् वा। जनिवध्योश्चेति वृद्धिप्रतिषेधः। तस्याः कर्तेति षष्ठीतत्पुरुषः। कर्तरि चेति प्रतिषेधस्त्वनित्यः अत एव ज्ञापकात्। यद्वा शेषषष्ठ्या समासोयम्। निषेधस्तु कर्मषष्ठीविषय इति कारकइति सूत्रे कैयटः। तथा चार्थमात्रस्य ग्रहणाद्धात्वन्तरयोगेपि भवति अङ्गादङ्गात्सम्भवतीति यथा। एतेन इक्श्तिपौ धातुनिर्देशइतीका निर्देशोयमित्याश्रित्य गमहनेत्युपधालोपमर्थासङ्गतिं चोद्भावयन्तो मीमांसावार्तिककाराः समाहिताः। अत्र प्रकृतिग्रहणमुपादानमात्रपरमित्येके। अत एव प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधादित्यधिकरणे ब्रह्मणो जगदुपादानतायां यतो वा इमानि भूतानि जायन्तइति पञ्चमीमुपष्टम्भिकामाहुः। अन्ये तु पुत्रात्प्रमोदो जायतइति वृत्तिस्वरसात्प्रकृतिशब्द इह कारणमात्रपर इत्याहुः। अस्मिंश्च पक्षे यतो

वेति सामान्यशब्दोपि उपादानरूपविशेषपरः छागो वा मन्त्र-वर्णादितिं षाष्ठन्यायात् । अहमेव बहु स्यामिति हि सामाना-धिकरण्यं श्रूयते तच्च चतुर्धा भ्रमे, बाधाया, मेदे, तादात्म्ये च । प्रकृते तादात्म्ये, भिन्नत्वे सत्यभिन्नसत्ताकत्वं आवि-धकः सम्बन्धविशेषो वा तादात्म्यमित्याद्युत्तरमीमांसायां स्पष्टम् ॥

. भुवः प्रभवः । भूकर्तुः प्रभवः प्राग्वत् । हिमवतो गङ्गा प्रभवति । कश्मीरेभ्यो वितस्ता प्रभवति । तसु उपक्षये । भावे क्तः । विगतस्ता वितस्ता । अशोष्येत्यर्थः । अत्रोपलभतेः कर्मव्या-पारे प्रभवतिर्वर्तते । प्रकाशतइत्यर्थः । भीत्रार्थानामित्यारभ्येयं सप्तसूत्री भाष्ये प्रत्याख्याता । तथाहि चोरेभ्यो बिभेति । भया-न्निवर्ततइत्यर्थः । त्रायते रक्षणेन चोरेभ्यो निवर्त्तयतीत्यर्थः । पराजयते । ग्लान्या निवर्ततइत्यर्थः । वारयति । प्रवृत्तिम्प्रति वध्नान्निवर्तयति । निलीयते । निलयनेन निवर्ततइत्यर्थः । अधी-ते । उपाध्यायान्निःसरन्तं शब्दङ्गृह्णातीत्यर्थः । ब्रह्मणः प्रप-ञ्चो जायतइत्यत्रापि । ततोपक्रामति । यथा वृक्षात्फलमिति लोकप्रसिध्याश्रयेणापायो बोध्यः । प्रभवतीत्यत्रापि भवन-पूर्वकं निःसरणमर्थः । अत्रेदं वक्तव्यं, निवृत्तिनिःसरणादिधा-त्वन्तरार्थविशिष्टे स्वार्थे वृत्तिमाश्रित्य यथाकथंचिदुक्तप्रयोगा-णां समर्थनेपि मुख्यार्थपुरस्कारेण षष्ठीप्रयोगो दुर्वारः । नटस्य शृणोतीतिवत् । न ह्युपाध्यायनटयोः क्रियानुकूलव्यापारांशे वि-शेषो वक्तुं शक्यः । अनभिधानब्रह्मास्त्रमाश्रित्य प्रत्याख्यान-न्तु नातीव मनोरमम् । एवञ्च जुगुप्साविरामेत्यादिवार्तिकम-प्यवश्यारम्भणीयम् । तथा च सूत्रवार्तिकमतमेवेह प्रबलमिति यावद्बाधं साधु । तथा ध्रुवं भयहेतुरसोढ इत्यादिसंज्ञिनिर्देशोपि

सार्थकः परत्वात्तत्संज्ञाप्राप्तावपि शेषत्वविवक्षायां न मापाणामश्नीयादित्यादाविव षष्ठ्या इष्टतया तत्रापादानसंज्ञाया वारणीयत्वादित्यवधेयम् ॥

कर्मणा यमभिप्रैति स सम्प्रदानम् ॥ कर्मणा करणभूतेन कर्ता यमभिप्रैति सम्बन्धाति ईप्सति वा तत्कारकं सम्प्रदानं स्यात् । न च युगपत्कर्मत्व करणत्वञ्च कथमिति वाच्यम् । क्रियाभेदेनाविरोधात् । दानक्रियायां हि कर्म अभिप्रापणक्रियायां करणम् । दीयमानया गवा हि शिष्य उपाध्यायमभिप्रैति । उपाध्यायाय गां ददाति । अत्राभिप्रैतीति पदत्रयम् । न तु समासः । उदात्तवता गतिमता च तिङा गतेः समासो वक्तव्य इति वार्तिकस्य छन्दोविषयत्वादिति हरदत्तः । भाषाविषयत्वे बाधकं तु तत्रैव वक्ष्यामः । अत्र वृत्तिकाराः । अन्वर्थसंज्ञेयं सम्यक् प्रदीयते यस्मै तत्सम्प्रदानमिति । तेनेह न । रजकस्य वस्त्रं ददाति । घ्नतः पृष्ठं ददाति । इह हि ददातिर्गौणः न तु वास्तव दानमस्तीत्याहुः । भाष्ये तु नैतत्स्वीकृतं खंडिकोपाध्यायस्तस्मै चपेटां ददाति । न शूद्राय मतिं दद्यादित्यादिप्रयोगात् । रजकस्य ददातीति तु शेषत्वविवक्षायां बोध्यम् । नन्वेवमजान्नयति ग्राममिति नयतिक्रियाकर्मभिरजैः सम्बध्यमानस्य ग्रामस्य सम्प्रदानत्वं स्यादिति चेन्न । यमभिप्रैतीत्युक्त्या हि यमिति निर्दिष्टस्य शेषित्वं कर्मणेति निर्दिष्टस्य गवादेः शेषत्वं च प्रतीयते । यथा कर्त्रभिप्राये क्रियाफलइति कर्तुः शेषित्वं क्रियाफलस्य शेषत्वं च । न चेह ग्रामं प्रत्यजा शेषभूता तथा च प्रयोजकलक्षणे प्रासनवन्मैत्रावरुणाय दण्डप्रदानमित्यधिकरणे क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति दण्डदान न प्रतिपत्तिः । किन्तु द्वितीयापेक्षया बलीयस्या चतुर्थीश्रुत्या ऽर्थ-

कर्मेत्युक्तम् । अत्र वार्त्तिकं, क्रियाग्रहणं कर्तव्यम् । पत्ये शेते । भाष्यकारास्तु सन्दर्शनप्रार्थनाध्यवसायैराप्यमानत्वात्क्रियापि कृत्रिमं कर्म । तथा च सूत्रेणैव सिद्धम् । प्रतीयमानाक्रियापेक्षोपि हि कारकभावो भवत्येव । प्रविश पिण्डीमिति वत् । सूत्रकारश्चाह क्रियार्थोपपदस्य च कर्मणि स्थानिन इति । न चैवमप्यददातिकर्मत्वात् क्रियाग्रहणं कर्त्तव्यमेवेति वाच्यम् । भाष्ये अन्वर्थसञ्ज्ञात्वास्वीकारात् । नन्वेवं कटङ्करोतीत्यादावपि सम्प्रदानत्व स्यात् । वचनबलाच्च कर्मसम्प्रदानत्वयोः पर्यायप्रसङ्ग । अत्राहुः । नेद वार्त्तिकं सार्वत्रिकम् । किन्तु प्रयोगानुसारान्नियतविषय धातूपात्तफलानाधारएव प्रवृत्तेः । भाष्यमते तु यत्र सम्प्रदानत्वमिष्ट तत्र सन्दर्शनादीनां क्रियायाश्च भेदो विवक्ष्यते । ततश्च तैराप्यमाना क्रियापि कृत्रिम कर्मेति सिद्धन्तयाऽभिप्रेयमाणस्य सम्प्रदानत्वम् । यत्र तन्नेष्टं तत्र भेदो न विवक्ष्यते । ततश्चोत्पत्तिविक्लित्त्याद्येकफलावच्छेदेनैकीकृतया क्रियया व्याप्यमानस्य कर्मत्वमेव भविष्यति। कटङ्करोत्योदनं पचतीति गत्यर्थेषु तु भेदोऽभेदश्चेत्युभयं विवक्ष्यते तत्र भेदविवक्षायां ग्रामाय गच्छतीति प्रयोगः अभेदविवक्षायान्तु ग्रामं गच्छतीति तथा च गत्यर्थकर्मणीति सूत्रं प्रत्याख्यास्यते । उक्तञ्च हरिणा । भेदस्य च विवक्षायां पूर्वा पूर्वा क्रियां प्रति । परस्याङ्गस्य कर्मत्वात्तत्क्रियाग्रहण कृतम् ॥ क्रियाणां समुदाये तु पदैकत्व विवक्षितम् । तदा कर्मक्रियायोगात्स्वाख्ययैवोपचर्यते ॥ भेदाभेदविवक्षा च स्वभावेन व्यवस्थिता । तस्माद्गत्यर्थकर्मत्वे व्यभिचारो न दृश्यते ॥ विकल्पेनैव सर्वत्र सञ्ज्ञे स्यातामुभे यदि । आरम्भेण न योगस्य प्रत्याख्यानं समं भवेदिति ॥ अस्यार्थः । कर्म स्वाख्ययैव क्रियेप्सितत्वप्रयुक्तकर्मसंज्ञयैवोपचर्यते व्यवह्रियते । न

तु सम्प्रदानसंज्ञया गत्यर्थकर्मणि तु भेदाभेदौ द्वावपि विवक्ष्येतइति रूपद्वयसिद्धिः । व्यभिचारो ऽतिप्रसङ्गस्तु न इष्यते । विवक्षाया व्यवस्थितत्वादेव। एतदेव द्रढयति विकल्पेनेति । समं तुल्यफलकम् । तस्मात्सूत्रं प्रत्याचक्षाणस्य भगवतो विवक्षानियमोभिमतः गत्यर्थेषु विवक्षाद्वयम् । पत्ये शेतइत्यादौ तु भेदविवक्षैव ओदनं पचतीत्यादावभेदविवक्षैव चेष्टायामनध्वनीत्येतत्प्रत्युदाहरणयोरपि अभेदविवक्षैव मनसा हरिं व्रजति अध्वानं गच्छतीति त्रिधा चेदम् । यदाह, अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् । प्रेरणानुमतिभ्याञ्च लभते सम्प्रदानतामिति । अनिराकर्तृ यथ । सूर्यायार्घ्यं ददाति । नात्र सूर्यं प्रार्थयते न वानुमन्यते न च निराकारोति । प्रेरकं यथा । विप्राय गां ददाति । अनुमन्तृ यथा । उपाध्यायाय गां ददाति । ननु दानस्य तदर्थत्वात्तादर्थ्ये चतुर्थी सिद्धैव तत्किं सम्प्रदानसंज्ञया । मैवम् । दानाक्रियार्थं हि सम्प्रदानं न तु दानक्रिया तदर्था कारकाणां क्रियार्थत्वात् । सम्प्रदानार्थं तु दीयमानं कर्मेति वाक्यार्थभूतापादानक्रियाया अतादर्थ्यात्तादर्थ्यचतुर्थ्या अप्राप्तौ संज्ञारम्भादिति हेलाराजः । तदेतत्सूचितम् । त्यागाङ्गं कर्मणेप्सितमिति । कर्मसम्प्रदानयोः करणकर्मत्वे वाच्ये । पशुना रुद्र यजते । पशुं रुद्राय ददातीत्यर्थ । एतच्च वचनं उक्तोदाहरणमात्रविषयम् । अत एव सुव्व्यत्ययेन सिद्धत्वात्प्रत्याख्यायते । लोके तु यजेः पूजार्थत्वात्पशोः करणत्वं सिद्धम् ॥

रुच्यर्थानां प्रीयमाणः ॥ सम्प्रदानं स्यात् ॥ देवदत्ताय रोचने स्वदते मोदक । अत्राह हरि । हेतुत्वे कर्मसंज्ञायां शेष

त्वे वापि कारकम्। रुच्यर्थादिषु शास्त्रेण सम्प्रदानाख्यमुच्यते ॥ अस्यार्थः। अन्यसमवेतोभिलाषो रुच्यर्थः। रोचते। अभिला- षविषयो भवतीत्यवगमात् । विषयीभवन्तं मोदकं देवदत्तः प्रयुङ्क्ते। लौल्यात्तदानुगुण्यमाचरतीति देवदत्तस्य हेतुसंज्ञायां प्राप्तायां सम्प्रदानसंज्ञा कथ्यते। तथा च हेतुसंज्ञाविरहे णिज- भावाद्धेतुसमवायिन्या द्वितीयस्याः क्रियाया अप्रतीतेर्मोदक- स्वक्रियायां धातुवाच्यायां कर्ता भवति न तु कर्म। यदा तु रोचते प्रीणयतीत्यर्थः तदा कर्मसंज्ञायां प्राप्तायां वचनम्। तथा च प्रीयमाण इति विशेषणम्। प्रीञ् तर्पणइत्यस्मात्सकर्मका- त्कर्मणि लट्। दैवादिकस्तु ङिदकर्मकः। तर्प्यमाण इत्यर्थः। यत्तु समर्थसूत्रे रोचयामहइति हरदत्तेन प्रयुक्तं तदस्मिन्नेव प- क्षेऽध्यारोपितप्रेषणपक्षमाश्रित्येत्यवधेयम्। यदा तु देवदत्तस्य योभिलाषस्तद्विषयो भवतीत्यर्थस्तदा शेषत्वात्षष्ठ्यां प्राप्तायां वचनमिति। प्रीयमाणः किम्। देवदत्ताय रोचते मोदकः पथि। कर्मादावविवाधिकरणे मा भूत्। अत एवादित्यो रोचतइत्यत्र दी- प्त्यर्थे संज्ञा न भवति ॥

श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ॥ एषां प्रयोगे बोधयि- तुमिष्टः सम्प्रदानं स्यात्। देवदत्ताय श्लाघते। श्लाघा स्तु- तिः। देवदत्तं स्तौतीत्यर्थः। एवं हि देवदत्तः शक्यते ज्ञाप- यितुम्॥ अन्ये त्वाहुः॥ देवदत्तायात्मानं परं वा। श्लाघ्यं कथय- तीत्यर्थ इति। तथा च भट्टिकाव्यम्। श्लाघमानः परस्त्रीभ्य- स्तत्रागाद्राक्षसाधिप इति। आत्मानं श्लाघ्यं परस्त्रीभ्यः क- थयन्नित्यर्थः। तत्राद्ये पक्षे कर्मत्वे प्राप्ते द्वितीये तु कारकशे- षत्वात् षष्ठ्यां प्राप्तायां वचनम्। ह्नौतिप्रभृतयोत्र स्वार्थोपसर्ज- नज्ञापनावचनत्वात्सकर्मकाः। तथा च ज्ञीप्स्यमान इति सं-

ज्ञिविशेषणमुपात्तमिति हेलाराजः। देवदत्ताय न्हुते देवदत्तं न्हुवानस्तामेव न्हुतिं तमेव बोधयति। सन्निहितमपि देवदत्त धनिकादेरपलपतीत्यर्थः। अथवा न्होतव्यं देवदत्तं बोधयतीत्यर्थः। देवदत्ताय तिष्ठते, ईदृशोऽहमित्यवस्थानेन बोधयतीत्यर्थः। देवदत्ताय शपते, शपथेन किञ्चित्प्रकाशयतीत्यर्थः। ज्ञीप्स्यमानग्रहणाद्देवदत्तः श्लाघते। गार्गिकया श्लाघते पर्यात्यादौ कर्त्रादिविषये संज्ञा न भवति। ज्ञीप्स्यमाने विवदन्तइति शप उपालम्भइति वार्त्तिकोदाहरणव्याख्यायां कैयटः। तत्र यस्मा आख्यायते स ज्ञीप्स्यमान इति मते तु यस्मा आख्यायमानः प्रत्युदाहरणं तस्माद् द्वितीया देवदत्तं श्लाघत इति। आख्यायमानो ज्ञीप्स्यमान इति मते तु यस्मा आख्यायते स प्रत्युदाहरणम्। तस्माच्च षष्ठी। देवदत्ताय श्लाघते विष्णुमित्रो यज्ञदत्तस्येति। ज्ञपमिच्चेति चुरादिकात्सनि कर्मणि शानचि ज्ञीप्स्यमान इति रूपं बोध्यम्। न तु ज्ञाधातोः। तस्य बोधने मित्वाभावात्। तज्ज्ञापयतीत्यादिभाष्यप्रयोगात्। अत एव मारणतोषणेत्यत्र निशानेष्विति पाठो न तु निशामनेष्विति। निशान सनूकरणम्। श्यतेर्ल्युट्। संज्ञपितः पशुरित्युदाहरणम्। आपूज्ञाप्यृधामीदित्यत्र तूभयोरपि ज्ञप्योर्ग्रहणमिति सिद्धान्तः। चौरादिकश्च मारणतोषणनिशामनेषु वर्त्तत इति माधवः॥

धारेरुत्तमर्णः॥ अयमुक्तसंज्ञः स्यात्। धृङ् अवस्थाने। ण्यन्तः। उत्तमर्णो धनस्वामी। उत्कृष्टार्थवृत्तेरुच्छब्दात्तमपि द्रव्यप्रकर्षत्वादामभावः। अर्तेक्तः। ऋणम्। ऋणमाधमर्ण्यइत्यत्र कालान्तरदेयन्द्रव्यविनिमयोपलक्षणार्थमाधमर्ण्यग्रहणम्। तेनोत्तमर्णेऽपि नत्व भवति। अस्मादेव निपातनान्निष्ठान्तस्य परनिपातो बहुव्रीहौ बोध्य। देवदत्ताय शत धारयति। ध्रियमाणं

स्वरूपेणावातिष्ठमान स्वभावादप्रच्यवमान शत प्रयुङ्क्तइत्यर्थः। कारकशेषे षष्ठ्यां प्राप्तायामिदं वचनम्। उत्तमर्णः किम्। देवदत्ताय शतं धारयति ग्रामे। परत्वादिहाधिकरणसंज्ञा भविष्यतीति चेत्। उत्तमर्णेपि तर्हि हेतुसंज्ञा स्यात्॥

स्पृहेरीप्सितः॥ स्पृह ईप्सायां चुरादावदन्तः। अस्य प्रयोगे ऽभिमेत सम्प्रदानं स्यात्। पुष्पेभ्यः स्पृहयति। ईप्सितमात्रे इयं संज्ञा। प्रकर्षे विवक्षायान्तु परत्वात्कर्मसंज्ञा। पुष्पाणि स्पृहयति। यदा त्वीप्सितमीप्सिततमं वा शेषत्वेन विवक्षितं तदा षष्ठ्येवेति हरदत्तादयः। हेलाराजस्तु हेतुत्वे कर्मसंज्ञायामिति प्रागुक्तश्लोकव्याख्यावसरे स्पृहयतियोगे कर्मसंज्ञायाः शेषषष्ठ्याश्च बाधिकेयं सम्प्रदानसंज्ञेत्याह। वाक्यपदीयस्वरसोप्येवम्। अस्मिन्पक्षे परस्परेण स्पृहणीयशोभमिति कर्मण्यनीयर् दुर्लभः। दानीयो विप्र इतिवत्सम्प्रदानएव तु व्याख्येयः। तथा कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति चेति षष्ठ्यप्यसङ्गता। विभक्तिविपरिणामेन कान्ताय स्पृहयन्तीति तु व्याख्येयम्। हरदत्तमते तु यथाश्रुतावेव उक्तप्रयोगौ निर्बाधाविति॥

क्रुधद्रुहेर्ष्यासूयार्थानां यम्प्रति कोपः॥ क्रोधाद्यर्थानां धातूनां प्रयोगे यं प्रति कोपस्तत्कारकं सम्प्रदानं स्यात्। देवदत्ताय क्रुध्यति द्रुह्यति ईर्ष्यति असूयति वा। वाक्चक्षुरादिविकारानुमेयः प्ररूढः। कोपोत्र क्रोध। अपकारो द्रोहः। असहनमीर्ष्या। गुणेषु दोषारोपणमसूया। ननु चित्तदोषार्थानामित्येवास्तु किंक्रोधादीनां विशिष्योपादानेनेति चेन्न। द्विषादावतिप्रसङ्गात्। योस्मान्द्वेष्टीत्यादौ ह्यनभिनन्दन द्विषेरर्थः। अत एवाचेतनेष्वपि प्रयुज्यते औषधं द्वेष्टीति। यंप्रतीत्यादि किम्। भार्या

मीर्ष्यति । मैनामन्योद्राक्षीदिति । नात्र भार्याम्प्रति कोपः किन्तु परैर्दृश्यमानां तां न क्षमतइत्येव । क्रुधद्रुहोरकर्मकतया कारकशेषत्वान्नटस्य शृणोतीतिवत् षष्ठ्यां प्राप्तायां वचनम् । इतरयोस्तु सकर्मकत्वात् द्वितीयायां प्राप्तायाम् ॥

क्रुधद्रुहोरुपसृष्टयोः कर्म ॥ सोपसर्गयोरनयोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं स्यात् । पूर्वसूत्रापवादः । देवदत्तमभिक्रुध्यति अभिद्रुह्यति ॥

राधीक्ष्योर्यस्य विप्रश्नः ॥ एतयोः कारकं सम्प्रदानसंज्ञं स्यात् । यदीयो विविध प्रश्नः क्रियते । कृष्णाय राध्यति ईक्षते वा । पृष्टो गर्गः शुभाशुभ पर्यालोचयतीत्यर्थ । शुभाशुभपर्यालोचनमिह धात्वर्थः । शुभाशुभरूपयोः कर्मणोर्धात्वर्थेनोपसङ्ग्रहादकर्मकावेतौ । षष्ठ्यां प्राप्तायां वचनम् । अत एव राध्यतीति श्यन् । अकर्मकादेव तद्विधानात् । तथा च दिवाद्यन्तर्गणसूत्रं राधोकर्मकाद्वृद्धावेवेति । अस्यार्थः । एवकारो भिन्नक्रमः । राधोकर्मकादेव । यथा वृद्धाविति । अत एव कर्मवत् कर्मणेति सूत्रे राध्यत्योदनः स्वयमेवेति भाष्यं सङ्गच्छते । तत्र हि सिध्यतीत्यर्थः । एतेन न बूये सात्वतीसूनुर्यन्मह्यमपराध्यति । क्रियासमभिहारेण विराध्यन्तं क्षमेत क इति माघप्रयोगौ व्याख्यातौ । एतेनैतयोः कर्मकारकं सम्प्रदान स्यादिति व्याचक्षाणा परास्ताः । यस्येत्यनर्थकं यम्प्रतीत्यनुवृत्त्यैवेष्टसिद्धेः ॥

प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ॥ प्रतिपूर्व आङ्पूर्वश्च शृणोतिरभ्युपगमे वर्त्तते तस्य पूर्वो व्यापारः प्रवर्त्तनक्रिया तस्याः कर्त्ता सम्प्रदानं स्यात् । विप्राय गां प्रतिशृणोति आशृणोति वा । विप्रेण मह्यङ्गा देहीति प्रवर्त्तितः प्रतिजानीतइत्यर्थः । हेतुसं-

ज्ञायां प्राप्तायां देवदत्तेन प्रतिशृणोतीति प्रयोगनिवृत्तये वचनम् । विवक्षान्तरे तु देवदत्तो गां प्रतिश्रावयतीति भवत्येवेति हरदत्तः । अत्रेदं चिन्त्यम् । उक्तरीत्या देवदत्तो रोचयति मोदकमित्यपि प्रयोगो दुर्वारः । न चेष्टापत्तिः । तत्रत्यस्वग्रन्थेन हेलाराजग्रन्थेन च विरोधात्तत्र हेतुत्वबाधान्न णिजिति यदि तर्हि प्रकृतेपि तुल्यम् । तस्मादिह वैषम्यं दुर्वचमिति ॥

अनुप्रतिगृणश्च ॥ अनुपूर्वस्य प्रतिपूर्वस्य गृणातेः कारकं पूर्वस्य कर्तृभूतं सम्प्रदानं स्यात् । अनुप्रतिभ्यां गृणाः अनुप्रतिगृणाः तस्येति विग्रहः । अनुप्रतिपूर्वश्च गृणातिः शंसितुः प्रोत्साहने वर्त्तते तत्र पूर्वो व्यापारः शंसनम् । होत्रे अनुगृणाति प्रतिगृणाति वा । होता प्रथमं शंसति तमध्वर्युः ओथामोदेवेत्यादिभिः शब्दैः प्रोत्साहयतीत्यर्थः ॥

साधकतमं करणम् ॥ क्रियायां प्रकृष्टोपकारकं करणसंज्ञं स्यात् । यद्व्यापारानन्तरं क्रियानिष्पत्तिः तत्प्रकृष्टम् । उक्तञ्च । क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा तत्र करणं तत्तदा स्मृतमिति । काष्ठैः पचति । विवक्ष्यतइत्यनेन स्थाल्यादीनामपि वैवक्षिकं करणत्वमस्तीत्युक्तम् । आह च, वस्तुतस्तदनिर्देश्यं न हि वस्तुव्यवस्थितम् । स्थाल्यापच्यतइत्येषा विवक्षा दृश्यते यतः ॥ ननु कारकाधिकारादेव सिद्धे साधकत्वे पुनः श्रुतिः प्रकर्षार्थास्तु किं तमपा, सत्यम् । अस्मिन्प्रकरणे सामर्थ्यगम्यप्रकर्षो नाश्रीयतइति ज्ञापयितुं तमप् । तेन गङ्गायां घोष इति सिद्धम् । यदा च तीरधर्म आधारत्वं प्रवाहे उपचर्यते तदेदं प्रयोजनं । यदा तु गंगाशब्द एव तीरे वर्त्तते तदा न प्रयोजनम् । तत्राद्ये विभक्तिर्लाक्षणिकी । सुब्विभक्तौ न लक्षणेति तु येनविधिरिति सूत्रएव निराकृतम् । द्वितीये तु प्रकृति-

लाक्षणिकी । ननु उभयं मुख्यमस्तु परंपरासम्बन्धस्तु संसर्गः । मैवम् । कारकविभक्त्यर्थानां प्रकृत्यर्थे साक्षात्सम्बन्धेन विशेष्यतायाः व्युत्पन्नत्वात् । अपादानप्रकरणोक्तानि च बहून्युदाहरणानि तमब्ग्रहणस्य प्रयोजनानीति बोध्यम् ॥

दिवः कर्म च ॥ दिवः साधकतमं कर्मसंज्ञं स्यात्, चकारात्करणसंज्ञम् । करणशब्दानुवृत्त्या वक्ष्यमाणस्यान्यतरस्यांग्रहणस्याकर्षणेन वा संज्ञयोः पर्याये लब्धे समावेशार्थश्चकारः । तेन मनसा दीव्यतीति मनसा देव इत्यत्र कर्मण्यण् करणे तृतीया चेत्युभयं सिध्यति । मनसः संज्ञायामित्यलुक् । किञ्च अक्षैर्देवयते यज्ञदत्तेनेत्यत्र सकर्मकत्वादणि कर्तुर्णौ कर्मत्वं न । अणावकर्मकादिति परस्मैपदं च नेति दिक् । स्यादेतत् । यदि समावेशः, तर्हि अक्षान् दीव्यतीत्यत्र परत्वात्तृतीया स्यात् । तथाहि । करणसंज्ञाया अवकाशः देवना अक्षाः । करणे ल्युट् । कर्मसंज्ञाया अवकाशः । दीव्यन्ते अक्षा । भावकर्मणोरिति यगात्मनेपदे । अक्षानित्यत्र तूभयसंज्ञाप्रयुक्तकार्यप्रसङ्गे परत्वात्तृतीयैव प्राप्नोति । अत्राहुः । कार्यकालपक्षे कर्मणि द्वितीयेत्यत्र पदस्योपस्थानं तस्यानवकाशत्वात् द्वितीयेति । ननु दीव्यन्ते अक्षा इत्यत्र कर्मण्यभिहितेपि करणत्वस्यानभिधानात्तृतीया स्यात् । तथा देवना अक्षा इति ल्युटा करणस्याभिधानेपि कर्मणोनभिधानात् द्वितीया स्यात् । मैवम् । एकैव ह्यत्र शक्तिः संज्ञाद्वयपयोगिनी । तथा चोभयत्राप्यभिधानमेव न त्वनभिहितत्वम् ॥

परिक्रयणे सम्प्रदानमन्यतरस्याम् ॥ नियतकालं वेतनादिना स्वीकरणं परिक्रयणं तस्मिन् साधकतमं कारकं सम्प्रदानसंज्ञं वा स्यात् । शताय शतेन वा परिक्रीतः । परिशब्दः सामीप्यं

द्योतयति । क्रयोनामात्यन्तिकं स्वीकरणं, नियतकालन्तु तस्य समीपमिति भावः ॥

आधारोधिकरणम् ॥ आध्रियन्तेस्मिन् क्रिया इत्याधारः । अध्यायन्यायोद्यावेत्यादिना करणे घञ् । क्रियाश्रययोः कर्तृकर्मणोर्द्धारणात् । परंपरया क्रियां प्रति आधारः तत्कारकमधिकरणं स्यात् । कटे आस्ते । स्थाल्यां पचति । स्यादेतत् । साक्षात्क्रियाधारयोः कर्तृकर्मणोरेव कुतो नेयं संज्ञेति चेन्न । पराभ्यां कर्तृकर्मसंज्ञाभ्यां बाधितत्वात् । अत एवाहुः । कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् । उपकुर्वत्क्रियासिद्धौ शास्त्रेधिकरणं विदुरिति ॥ अत एव भूतले घट इत्यादौ अस्तीत्यस्याध्याहारो नियतः । यथापुष्पेभ्य इत्यत्र स्पृहयतेः । अत एव च नञा सह कारकान्वयं वदन्तः परास्ताः । त्रिविधं चैतदधिकरणमिति संहितायामिति सूत्रे भाष्यं, औपश्लेषिकं वैषयिकमभिव्यापकञ्चेति । कटे आस्ते गुरौ वसति तिलेषु तैलमिति ॥

अधिशीङ्स्थासां कर्म ॥ अधिपूर्वाणामेषां आधारः कर्म स्यात् । अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ॥

अभिनिविशश्च ॥ एतत्पूर्वस्य विशतेराधारः कर्म स्यात् । ग्राममभिनिविशते । अभिनिवेश आग्रहः । तद्वान् भवतीत्यर्थः । अकर्मकोयं तत्राधिकरणस्य कर्मसंज्ञा विधीयते । प्रवेशनार्थे तु सिद्धैव । परिक्रयणेसम्प्रदानमिति सूत्रादिहान्यतरस्यांग्रहणमनुवर्त्तते मण्डूकप्लुतिन्यायेन । व्यवस्थितविभाषा चेयम् । एव्वर्थेन्त्वभिनिविष्टानामिति समर्थसूत्रस्थभाष्यप्रयोगश्चेह मानम् । तेन पापेभिनिवेश इत्यादि सिद्धम् । इह सूत्रे नेरल्पाच्तरस्य परनिपाताकरणमीदृशानुपूर्वीकसमुदायविवक्षार्थम् । तेनेह न । निविशते यदि शूकशिखापदे इति । कर्मत्वविवक्षायान्तु तत्रापि

भवितव्यमेव द्वितीयया ॥

उपान्वध्याङ्वसः ॥ एतत्पूर्वकस्य वसतेराधारः कर्म स्यात् । उपवसति अनुवसति अधिवसत्यावसति वा ग्रामं सेना । वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः ॥ अर्थशब्दो निवृत्तिवचनः । व्यधिकरणे षष्ठयौ । वाच्यवाचकभावः षष्ठ्यर्थः । भोजननिवृत्तेर्वाचको यो वसिस्तस्य नेत्यर्थः । ग्रामे उपवसति । कथमुपोष्य रजनीमेकामिति । कालाध्वनोरिति द्वितीया भविष्यति । कथमेकादश्यां न भुञ्जीतेति । उपपदविभक्तेः कारकविभक्तिर्भविष्यति ॥

कर्तुरीप्सिततमं कर्म ॥ कर्त्रा यदाप्तुमिष्यते तमान्तत्कर्मसंज्ञं स्यात् । यद्व्यापाराश्रयत्वादसौ कर्ता तेनैव व्यापारेणाप्तुमिष्टमिति सन्निधानाल्लभ्यते । तेन क्रियाफलशालित्वं पर्यवस्यति । क्रिया हि फलेच्छापूर्वकेच्छाविषयः फलमेव त्विष्टतमम् । तच्च धातुनोपात्तमिति तद्विशिष्टत्वेनेच्छाविषयोत्र संज्ञी । स च त्रिविधः । उक्तञ्च । निर्वर्त्यञ्च विकार्यञ्च प्राप्यञ्चेति त्रिधा मतम् । तत्रे प्सिततमं कर्म चतुर्धान्यत्तु कल्पितम् ॥ औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् । संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥ तथा । यदसज्जायते सद्वा जन्मना यत्प्रकाशते । तन्निर्वर्त्यं विकार्यन्तु कर्म द्वेधा व्यवस्थितम् ॥ प्रकृत्युच्छेदसंभूतं किञ्चित्काष्ठादि भस्मवत् । किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥ क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥ तत्र निर्वर्त्यं यथा । घटं करोतीति । घटोह्यसन्नेव जायते वैशेषिकादिमते । सङ्ख्यादिसत्कार्यवादिमते तु सन्नेवाभिव्यज्यते इत्यस्ति विशेषलक्षणम् । सामान्यलक्षणन्तु कृधातूपात्तोत्पत्त्या-

रूयफलशालित्वात्। एतेन करोतिर्यत्नार्थक इति मतं मत्युक्तम्। यततइतिवदकर्मकतापत्तेः। न च जानातिवद्विषयत्वापादनपर्यंतार्थाभ्युपगमेनापि निर्वाहः। लाघवेनोत्पादनमात्रपरत्वात्। कर्तृस्थक्रियतया कर्मवद्भावासिद्धिप्रसङ्गाच्च। प्रकृते प्रकृतिभूतस्यात्मन उच्छेदं सम्भूतं प्राप्तम्। तद्यथा, काष्ठं भस्म करोतीति। गुणान्तरोत्पत्त्या यथा, सुवर्णं कुण्डलं करोतीति। इह भस्मकुण्डलयोर्निर्वर्त्यत्वमेवेति बोध्यम्। प्राप्यन्तु आदित्यं पश्यतीति। तथायुक्तमिति द्विविधम्। द्वेष्यमितरच्च। अकथितं चेत्यपरम्। संज्ञान्तरप्रसङ्गे चान्यत्। दिवः कर्मचेत्यादि। तदित्थंसप्त विध कर्मेति स्थितम्। इह प्राप्ये यद्यपि विषयतारूयः क्रियाकृतविशेषोस्त्येव। अन्यथा कर्मत्वानुपपत्तेः। तथापि प्रतिपत्तृव्यतिरिक्तपुरुषापेक्षया विशेषो न गम्यतइत्युक्तम्। विकार्ये तु काष्ठादौ कथं धातूपात्तफलाश्रयतेत्यवशिष्यते। तत्रेदं तत्त्वम्। प्रकृतिविकृत्योरभेदविवक्षया निरूढया उत्पत्त्याश्रयता। यद्वा। काष्ठानि विकुर्वन् भस्मोत्पादयतीन्यर्थः। तण्डुलान् विक्लेदयन्नोदनं निर्वर्त्तयतीतिवत्। एतच्च द्व्यर्थः पचिरिति प्रक्रम्य भाष्ये व्युत्पादितम्। तत्र तण्डुलानोदनं पचतीति प्रयोगे तण्डुलनिष्ठविक्लित्तेरोदनोत्पत्तेश्चानुकूलो देवदत्तनिष्ठव्यापार इत्यर्थः। तण्डुलान्पचतीत्यत्र तु विक्लेदयतीत्यर्थः। ओदनं पचतीत्यत्र तु विक्लित्त्या निर्वर्तयतीत्यर्थः। उक्तञ्च। सम्बन्धमात्रमुक्तञ्च श्रुत्या धात्वर्थभावयोः। तदेकांशनिवेशे तु व्यापारोस्या न विद्यतइति॥ तस्माद्धातुत्वेन धातूपात्तां भावनां प्रति पचित्वेन पच्युपात्ता विक्लित्तिः कर्मतया करणतया वा यथायथं सम्बध्यतइति स्थितम्। इदं त्ववधेयम्। क्रियाया धातुना कर्तुरपि देवदत्तादिशब्देन लाभाद्यथा न द्वितीयार्थता तथेष्टतम-

त्वादेरपि प्रयोगोपाधिमात्रत्वात्। अधिशीङादिवत्। एवञ्च तथायुक्तस्थलइवेहापि धातूपात्तफलाधारमात्रमर्थः। आधेयमेव वा। तच्चाभेदेन फलेनेति। अनन्यलभ्यः शब्दार्थ इति न्यायात्। अन्यथा तथायुक्तत्वानीप्सितत्वयोरपि वाच्यतापत्तौ सकलतान्त्रिकविरोधाच्च। एवन्तु फलाश्रय कर्मेत्येवास्तां किं द्विसूत्र्येत्यवशिष्यते। तत्रेदमुत्तरम्। अग्नेर्माणवकं वारयतीत्यत्र माणवकस्य अपादानसंज्ञां बाधितुमीप्सिततममिति तावद्वक्तव्यं, तस्मिंश्चोक्ते द्वेष्योदासीनयोः सङ्ग्रहार्थं तथायुक्तमित्यपि सूत्रणीयम्। अनीप्सितग्रहणन्तु शक्यं प्रत्याख्यातुम्। तथा च कर्तृकर्मविभक्त्योरुभयोरप्याधारो वाच्यः। आधेयं वा। व्यापारेण फलेन चान्वय इति तु व्यवस्थया शब्दबोधवैषम्यमिति स्थितम्। गोदोहनी पक्ता पक इत्यादिकृदन्तानां नामार्थे ऽभेदान्वयानुरोधादाधार एवार्थः फलभावनयोस्तु विशेषणविशेष्यभावो विपरीत इत्यवधेयम्॥

तथायुक्तञ्चानीप्सितम्॥ ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कर्मसंज्ञं स्यात्। ग्रामं गच्छन् वृक्षमूलान्युपसर्पति। चौरान् पश्यति॥

अकथितञ्च॥ अपादानादिविशेषैरविवक्षितं कारक कर्मसंज्ञं स्यात्। नटस्य शृणोतीत्यादावतिप्रसङ्गं वारयितुं परिगणनं कर्तव्यम्। दुहियाचिरुधिप्रच्छिभिक्षिचित्रामुपयोगनिमित्तमपूर्वविधौ। ब्रुविशासिगुणेन च यत्सचते तदाकीर्तितमाचरितं कविना॥ नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च। द्विकर्मकेषु ग्रहणं कर्तव्यमिति निश्चयः॥ इह प्रच्छीत्यत्र छ्वोरिति तुड् न कृतः। आगमशासनस्यानित्यत्वात् सनाद्यन्ताधातव इको यणचीतिवत्। उपयुज्यतइत्युपयोगो मुख्य कर्म क्षीरा-

दि तस्य निमित्तं गवादि दुह्यादीनां मुख्यकर्मणा सम्बध्यमानमिति यावत्। तथा ब्रुविशास्योर्गुणेन कारकेण कर्मणेति यावत्। कारकाणां क्रियां प्रति विशेषणत्वात्। तत्रापि कर्मण एव प्रकृतत्वात्। यत्सचते सम्बध्यते। पच समवाये। स्वरितेत्। केचित्तु परस्मैपदिभिः सहैनं धातुं पठन्ति। पच समवाये, रप लप व्यक्तायां वाचीति। तन्मते' षच सेवनइत्यस्यानुदात्तेतो धातूनामनेकार्थत्वात्समवाये वृत्तिर्बोध्या। उभयथापि सम्बध्नातेः कर्मव्यापारे सचिर्वर्तते। अत एव कर्तृपदस्य कर्मपदेनार्थकथनं न विरुध्यते। राध्यत्योदन इत्यस्य पच्यतइत्यनेन यथा उभयत्राप्योदननिष्ठाविक्लित्तेर्भानाविशेषात्। कविना मेधाविना सूत्रकारेण तदकीर्तितमित्याचरितं व्यवहृतमित्यर्थः। अपूर्वविधाविति। पूर्वोक्तानामपादानादिसंज्ञानां विषयश्चेन्नास्तीत्यर्थः। न चैवं वक्ष्यमाणयोर्हेतुकर्तृसंज्ञयोर्विषयेतिप्रसङ्गः स्यादिति वाच्यम्। एकसंज्ञाधिकारेण पराभ्यां हेतुकर्तृसंज्ञाभ्यां कर्मसंज्ञाया बाधात्। प्राञ्चस्तु पूर्वग्रहणमन्यमात्रोपलक्षणं तेन वक्ष्यमाणयोर्हेतुकर्तृसंज्ञयोर्विषये नातिप्रसङ्गः। सूत्रेप्यकथितमिति कथननिवृत्तिपरायात्नोदनायां भूतकालो न विवक्ष्यते। यथा पराजेरसोढ इत्यत्रासहिष्यमाणस्याप्यपादानसंज्ञा भवति अध्ययनात्पराजेष्यतइति तथेहापीत्याहुः। तच्चिन्त्यम्। उक्तरीत्या यथाश्रुतेपि सर्वसामञ्जस्यात्। नीवह्योरिति श्लोके गत्यर्थानामित्युत्तरसूत्रोपात्तानामुपलक्षणम्। चकारेण जयत्यादयो गृह्यन्तइति कैयटः। माधवोप्याह। जयतेः कर्षतेर्मन्थेर्मुषेर्दण्डयतेःपचेः। तारेर्ग्राहेस्तथा मोचेस्त्याजेर्दापेश्च सङ्ग्रहः॥ कारिकायाञ्चशब्देन सुधाकरमुखैः कृत इति। एतन्निष्कर्षस्तु करिष्यते। क्रमेणोदाहरणानि। गान्दो-

ग्धि पयः । अविनीतं विनयं याचते । गामवरुणद्धि व्रजम् । माणवकं पन्थानं पृच्छति । पौरवं गां भिक्षते । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । अजां नयति ग्रामं, वहति भारं ग्रामं हरति वा, गमयति ग्राममित्यादि । जयतेः । शतं जयति देवदत्तम् । कर्षति शाखां ग्रामम् । क्षीरधिं सुधां मथ्नाति । मुष्णाति शतं देवदत्तेन । गर्गान् शतं दण्डयति । तण्डुलानोदनं पचति, तारयति कपीन् समुद्रम् । ग्राहयति बटुनेदम् । मोचयति त्याजयति वा कोपं देवदत्तम् । दीपयति शास्त्रार्थं शिष्यान् । स्यादेतत् । दुहादीनामर्थनिबन्धनेयं संज्ञा न तु स्वरूपाश्रया, अहमपीदमचोद्यं चोद्ये इति तद्राजसूत्रभाष्ये पृच्छिपर्यायस्य चुदेरपि द्विकर्मकत्वदर्शनात् । तथा च भट्टिः । स्थास्नुं रणे स्मेरमुचो जगाद मारीचमुच्चैर्वचनं महार्थम् । कालिदासोपि, शिलोच्चयोपि क्षितिपालमुच्चैः । प्रीत्या तमेवार्थमभाषतेवेति भारविश्च । उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्र इति । तथा च भिक्षेरर्थपरत्वाद्याचेरपि सिद्धम् । तुल्यार्थत्वात् । पौरवं गामर्थयतइति यथा, तर्कि पाचेः पृथग्ग्रहणेनेति चेत्, अत्राहुः । अनुनयार्थोत्र याचतिः । विनयं याचते । विनयायानुनयनीत्यर्थात् । अस्तु तर्हि याचेरेव ग्रहणम् । तस्यानेकार्थत्वाद्भिक्षेरपि सिद्धमिति चेन्न । अर्थभेदेन शब्दभेद इति दर्शनमाश्रित्यानुनयार्थस्यैव याचेरिह ग्रहणात् । अत एव हि नयतिग्रहणेनानुनयार्थस्यापि न गतार्थता । स्पष्टार्थं भिक्षेः पृथग्ग्रहणमित्यन्ये । चकारेण पचेर्ग्रह इति यन्माधवादिभिरुक्तं तन्मतभेदेन । तथा च कर्मवत्कर्मणेति सूत्रे दुहिपच्योर्बहुलं सकर्मकयोरितिवार्तिकव्याख्यावसरे पचेर्द्विकर्मकता कैयटेन स्फुटीकृता । यत्तु कर्तुरीप्सिततममिति सूत्रे द्व्यर्थः पचिरित्यादिभाष्यन्तत्तु

मतान्तरेण । अन्यथा तण्डुलानोदनं पचतीति प्रयोगस्य यथाश्रुतस्योपपत्तौ किं मुधा क्लेशेन । अत एव अकथितशब्दो यद्यप्रधानार्थो गृह्येत तदा पाणिना कांस्यपात्र्यां दोग्धि पय इति पाणिकांस्यपात्र्योरतिप्रसङ्गः करणाधिकरणयोस्तु पचत्यादिरवकाशः, न हि तत्रास्य प्रसङ्गो दुहादिपरिगणनादित्यकथितसूत्रे कथयतः कर्मवत्सूत्रे तु पचेर्द्विकर्मकतां ब्रुवतो हरदत्तस्य न पूर्वापरविरोधः । मतभेदपरत्वात् । अत एव पचिधातुनिरूपणे तण्डुलानोदनं पचतीति प्रयोगं द्विकर्मकतयैव माधव उदाहृतवानिति दिक् । तथा ग्राहेर्द्विकर्मकत्वं बहवो न मेनिरे । अत एव तमादौ कुलविद्यानामर्थमर्थविदां वरः । पश्चात्पार्थिवकन्यानां पाणिमग्राहयत्पितेति कालिदासश्लोके पूर्वार्धे ग्रहेर्बुद्ध्यर्थतया गतिबुद्धीतिसूत्रेणाणौ कर्तुर्णौ कर्मत्वात्तमिति योजयित्वा उत्तरार्धे तेनेति विभक्तिविपरिणामेन व्याचख्युः । अत एव च अजिग्रहत्तं जनको धनुस्तद्येनार्दिदद्दैत्यपुरं पिनाकी । जिज्ञासमानो बलमस्य बाह्वोर्हंसस्त्रमोक्षीद्रघुनन्दनस्तदित भट्टिप्रयोगो जयमङ्गलायामित्थं व्याख्यातः । अजिग्रहत् । अनेन धनुषा भगवता त्रिपुरदाहः कृत इति बोधितवानिति । युक्तञ्चैतत्, श्रीरघुपतिं प्रति नियोगकथनानौचित्येन स्वरूपोपस्थापनस्यैव कर्तव्यत्वात् । एतेन अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाकेति व्याख्यातम् । ग्रहेर्बुद्ध्यर्थत्वात् । यद्वा । इषिशब्दयोस्तुमुनन्तसमभिव्याहृतयोर्द्विकर्मकताया भाष्ये स्थितत्वात्सिद्धमेतदिति माधवः । ग्राहेर्द्विकर्मताभ्युपगमपक्षे तु जायाप्रतिग्राहितगन्धमाल्यामिति न सिध्येत् । तत्र हि ण्यन्ते कर्तुश्च कर्मण इति प्रयोज्ये धेनुरूपे कर्मणि क्तः स्यात् । तथा च जायया गन्धमाल्ये प्रतिग्राहिता येति विग्रहे स-

हुव्रीहिरेव न स्यात् । त्रिकतः शेषस्य भाष्ये स्थितत्वात् । सत्यपि वा तस्मिन् पुंवद्भावो दुर्लभः । सिद्धान्ते तु प्रतिग्राहिते गन्धमाल्ये यथेति विग्रहः । जायानिष्ठप्रेरणविषयीभूतं गन्धमाल्यकर्मकं यत्प्रतिग्रहणं तत्कर्त्रीमित्यर्थः । अन्यपदार्थान्तर्भावेणैव विशेषणविशेष्यवैपरीत्येनैवैकार्थीभावकल्पनात् । मा सजातादिवत् । व्यपेक्षापक्षे तु अपष्ठीविभक्त्यर्थे बहुव्रीहौ सर्वत्र व्युत्पत्त्यन्तरकल्पनास्त्येव । प्राप्तोदकामित्यस्य हि उदककर्तृकप्राप्तिकर्मीभूतमर्थः । ऊढरथः । रथकर्मकवहनकर्ता । उपहृतपशुः । पशुकर्मकोपहारसम्प्रदानम् । उद्धृतौदनः । ओदनकर्मकोद्धरणापादानम् । वीरपुरुषकः । वीरपुरुषकर्तृकास्थित्यधिकरणमिति दिक् । स्यादेतत् । अपादानाद्यविवक्षायां द्विकर्मकतास्तु तद्विवक्षायान्तु जायामतिग्राहितेत्यादि सेत्स्यति । मैवम् । हरतेश्चेति चकारेण समुच्चितानां जयत्यादीनामकार्थितसूत्रविषयत्वेपि तथैव चेति समुच्चितानामणौ कर्त्तुर्णौ कर्मताभ्युपगमात् । गत्यर्थैः साहचर्यात् । अत एव तांयादयः पृथगेव सङ्गृहीताः । युक्तञ्चैतत् । ग्रहणकर्तृत्वस्याविवक्षायां प्रयोजकस्य हेतुत्वाभावे णिचो दुर्लभत्वात् । न चैवं दीपिग्रहणवैयर्थ्यमकर्मकत्वादेवाणौ कर्तुर्णौ कर्मत्वसिद्धेरिति वाच्यम् । ण्यन्ताण्णिचि तत्सार्थक्यात् । शिष्याः तत्त्वं दीपयन्ति तानसौ प्रेरयतीत्यर्थः । नन्वेवं त्याजेः सङ्गृहीतत्वाद्यद्यपि त्याजितैः फलमुत्खातैः, मुक्ताहारञ्चिरपरिचितं त्याजितो दैवगत्येत्यादि सिद्धम् । तथापि गवा पयस्त्याजयतीत्यर्थ इति कैयटहरदत्तादिग्रन्थो विरुध्यतइति चैत्रविशेषाविवक्षायां कर्मत्वेपि कर्तृत्वविवक्षायां तस्य निर्बाधत्वात् । स्यादेतत् । कर्तुरीप्सिततमं कर्म तथायुक्तञ्चानीप्सितमिति सूत्राभ्यां सर्वमिदं सिद्धम् । तथाहि।

यथा विक्लिरुपसर्जनं विहेदनं पचेरर्थः, न्यग्भावनं रुहेः, द्विधाभावनं भिदेः, तथा त्यजनोपसर्जनं त्याजनं दुहेः । दापनं याचेः भिक्षेश्च । अङ्गीकारणमपि याचेः । मवेशोपसर्जनमवस्थापनं रुधेः । आख्यापनं पृच्छेः । मोचनं चिञ । मतिवादनं ब्रूञ । तद्विशेषस्तु शासेरित्यादि । एवञ्च धातूपात्तव्यापारविषयाश्रयत्वं गवादेःस्पष्टमेवेति । अत एवाकडारसूत्रे ऽपादानमुत्तराणि, गान्दोग्धीत्यत्र परत्वात्कर्मसंज्ञेति भाष्यं सङ्गच्छते । पञ्चकं प्रातिपदिकार्थ इति पक्षे ऽवधित्वफलाश्रयत्वयोर्युगपद्विवक्षायां चेदम् । अवधिभूता या गौस्तन्निष्ठो यः क्षरणानुकूलव्यापारस्तद्विषयिणी गोपनिष्ठा प्रेरणेत्यर्थात् । अत्रोच्यते । कर्मण· शेषत्वेन विवक्षायां न माषाणामश्नीयादितिवत् षष्ठी बाधितुं सूत्रम् । अपादानत्वमात्रविवक्षायां तु पञ्चम्येव, गोः क्षीरविशेषणत्वे तु षष्ठी भवत्येवेति न कश्चिद्दोषः तथा चेह षष्ठीसम्बन्धमात्रं द्वितीयार्थ इति स्थितम् । अथेदं विचार्यते । कर्मणि विधीयमाना लकृत्यक्तखलर्थाः किं द्विकर्मकेभ्यो मुख्ये कर्मणि स्युर्गौणे वेति । अत्र भाष्यम् । प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण इति ॥ अभिधाने इति शेषः । अत्र द्विकर्मणामित्यनेन नीवह्योर्हरतेश्चेति चशब्दसमुच्चितः कर्षिनयत्यादयश्च त्रय उच्यन्ते। अन्येषां विशेषस्य वक्ष्यमाणत्वात् । तथा दुह्यादीनामित्यनेन कारिकोपात्ताः।चशब्दसमुच्चितेष्वहेतुमण्ण्यन्ता दण्ड्यादयश्चोच्यन्ते । ण्यन्तइत्यनेन तु गत्यादिसूत्रोपात्ताश्चशब्दसमुच्चितास्तार्यादयश्च । तत्र अणौ कर्म तस्याभिधाने लादय इत्यर्थः । तत्रापि बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मणीति मतांतरम्। तथा च भाष्यम् । कथितेभिहिते त्वविधिस्त्वमतिर्गुणकर्म-

णि लादिविधिः सपरे । ध्रुवचेष्टितयुक्तिषु चाथ गुणे तदनल्पमतेर्वचनं स्मरतेति ॥ अत्र प्रधानकर्मणि लादिभिरभिहिते गुणकर्मणि षष्ठीन्येकीयमतदूषणपरः प्रथमः पादः । त्वस्याः ष ष्ठ्याः त्रिधिरितीयं त्वस्य अन्यस्य मतिर्न तु ममेत्यर्थात् । सपरे गत्यादिसूत्रोपात्तसहिते दुह्यादौ गुणकर्मणि लादय । गुणकर्मेति । पुरुषप्रवृत्तेः पयःप्रभृत्यर्थत्वाद् दुहादावप्रधानं गवाद्युच्यते । ण्यन्ते तु शब्दत प्रयोजकव्यापारस्य प्राधान्यम् । प्रयोज्यव्यापारस्य त्वप्राधान्यमिति तदार्थधर्माद्युच्यते । ध्रुवयुक्तयो ऽकर्मकाश्चेष्टितयुक्तयो गत्यर्थाः । एष्वगुणे प्रयोगज्ये । न च वुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मण्यवे स्यात् ण्यन्ते कर्तुश्चेत्यस्य सपरइत्यनेन बाधादिति वाच्यम् । अपर आहेति भाष्येण मतान्तरताद्यवसायात् । अत्रायं सङ्ग्रहः । गौणे कर्मणि दुह्यादेः प्रधाने नीह्वकृष्वहाम् । वुद्धिप्रत्यवसानार्थशब्दकर्मसु चेच्छया ॥ प्रयोज्यकर्मण्यन्येषां ण्यन्तानामिह निश्चितः । लकृत्यक्तखलर्थानां प्रयोगो भाष्यपारगैः ॥ तत्र नीप्रभृतीनां प्रधानकर्मसम्बन्धोन्तरङ्गः । दुह्यादीनान्तु विपरीतम् । तेन तदंशे न्यायसिद्धो नियमः । इतरत्तु सर्वं वाचनिकम् । क्रमेणोदाहरणानि । गौर्दुह्यते पयः दोह्या दुग्धा सुदोहा । अजा ग्राम नीयते नेया नीता सुनया । वोध्यते माणवकं धर्मः माणवको धर्ममिति वा । देवदत्तो ग्रामं गम्यते गमयितव्यः गमितः सुगम इति । यत्तु कौमुद्यां दुह्याच्यर्थेत्यादिना दुह्यादीन् न्यादींश्च द्वैराश्येन पठित्वा न्यादयो मुख्ये दुह्यादयो गौणइत्युक्तम् । तत्र ग्रहेः पाठो निर्मूल एव । जग्राह घृतरुं शत्रमित्युदाहरणञ्चायुक्तम् । इतरेषान्तु द्विकर्मकतामात्रतात्पर्यकः पाठ । न्यादयो दुह्यादयश्चेत्युभयत्राप्यादिशब्दः प्रकारे इति

सिद्धान्ताविरोधेन व्याख्येयम् । यथाश्रुते हि दण्डिमुषिभ्यां मुख्ये स्यात् । तथा च गर्गाः शतं दण्ड्यन्तामिति भाष्यं विरुध्येत शतं ह्यत्र प्रधानं गर्गाः अर्थिनश्च राजानो हिरण्येन भवन्तीति वाक्यशेषात् । दण्डिश्चेह ग्रहणार्थो न तु निग्रहार्थः । अत एव ह्यत्र समुदाये वाक्यसमाप्तिः । गुणानुरोधेन प्रधानावृत्तेः सम्भवात् । तथा मन्थेरपि प्रधाने स्यात् । इष्यते तु गौणे । तथा च भारविः । येनापविद्धसलिलः स्फुटनागसद्मा देवासुरैरमृतमम्बुनिधिर्ममन्थइति । अमृतं ह्यत्रोद्देश्यतया मुख्यम् । अम्बुनिधिस्तु गौणः । यदपि अन्ये तु यथारुचीत्युक्त्वा गोपीहावमकार्यतभावश्चैनायनन्तेनेत्युदाहृतम् । तदपि न । ण्यन्ते कर्तुश्च कर्मण इति सिद्धान्तात् । यद्वा कूविज्ञाने इति चुरादावात्मनेपदी वोपदेवेन पठितः । तस्येदमुदाहरणम् । बुद्ध्यर्थेषु पक्षद्वयस्योपपादितत्वात् । यत्तु श्रीहर्षः मायुङ्क्त । स्वक्रीडाहंसमोहग्रहिलशिशुभृशप्रार्थितोऽछिद्रचन्द्रेति, तच्चिन्त्यम् । शिशुना चन्द्रं प्रार्थितेत्यप्रधाने क्तप्रत्यये बहुव्रीह्ययोगात् । वक्ष्यति हि । अप्रथमाविभक्त्यर्थे चायमिति । न च चन्द्रे क्तः । अप्रधाने दुहादीनामित्युक्तेः । अत एव काकपक्षधरमेत्य याचित इति कालिदास । कृतपूर्वी गुणमुख्याभ्यां कर्मभ्यां प्राप्यते पृथक् । अविशेषाद् द्वितीयावक्तेता ग्रामस्य गोरिति ॥ यत्रस्यैकेन शब्देन भिन्नकक्ष्यद्वयाभिधा । न शक्यते तत्र युक्तमेकस्यैवोपजीवनम् ॥ प्रधाने नियता षष्ठी गुणे त्वुभयथा भवेत् । इत्याह गोणिकापुत्र इति भाष्याद् गुणद्वयम् ॥ नेताश्वस्य स्रुघ्नस्य स्रुघ्नं वा । इह प्रधाने कर्मणि नित्या षष्ठी । भाष्यकारवचनात्तु गुणकर्मणि वैकल्पिकीति स्थितम् । नन्वकर्मकाणां प्राकृतकर्माभावात्कथं द्विकर्मकता । तथा च ण्यर्थकर्मणि प्रत्ययोस्तु

आस्यते माणवक इति । मासमिति तु प्रयोगोऽसङ्गतः । ध्रुव-चेष्टितयुक्तिषु चाप्यगुण इति श्लोके ध्रुवग्रहणञ्च व्यर्थमिति चेन्न । कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् । देशश्चाकर्मकाणामिति भाष्याद्गन्तव्योऽध्वा अध्व गन्तव्यः । अस्मादेव निपातनाद्गन्तव्यशब्दस्य परनिपातः । गन्तव्यतया लोके प्रसिद्धस्य नियतपरिमाणस्य क्रोशयोजनादेरेव ग्रहणम् । तेनाध्वानं स्वपितीति न भवति । मासमास्ते । गोदोहमास्ते । यावता कालेन गौर्दुह्यते तावन्तं कालमास्तइत्यर्थः । क्रोशमास्ते । कुरून् स्वपिति । जन्यमात्रं कालोपाधिरिति पक्षे गोदोहादेर्यद्यपि कालत्वात्सिद्धं तथापि लोके मासादेरेव तथात्वेन प्रसिद्धत्वात्पृथग्भावग्रहणम् । देशशब्देन च ग्रामसमुदायविशेषाः कुरुपञ्चालादयो गृह्यन्ते इति कैयटः । तेनाधिशीङ्स्थासामित्यादेर्वैयर्थ्यं नेति ध्येयम् । कालाध्वनोरत्यन्तसंयोगइति तु गुणद्रव्ययोरर्थे आरम्भणीयम् । क्रोशं कुटिला । मासङ्गुडधानाः । सकर्मकार्थश्च । मासं वेदमधीते । यद्वा आस्यादयस्तत्पूर्वके व्यापने वर्त्तन्ते तथा चोत्सर्गेणैव सिद्धम् । मासमासनेन व्याप्नोतीत्यर्थात् । तथा च द्वितीये भाष्यम् । माकृतमेवेदं कर्मेति । न चैवं सकर्मकेष्वप्यतिप्रसङ्गः । लक्ष्यानुरोधेनाकर्मकाणामेवोक्तप्रकाराभ्युपगमात् । आह च । कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः । सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते इति ॥ हेलाराजस्त्वाह । सकर्मकेष्वपि मासमोदनं पचतीति भवत्येव । अत एवोक्तं सर्वैरिति । अकर्मकैरिति त्वविवक्षितमिति कैयटोऽप्येवम् । अस्मिन्पक्षे मासमास्ते कटे इति कटादेरपि द्वितीया प्राप्ता तथापि कालादेरेव व्यापनकर्मत्वं न तु कटादेरिति हेलाराजः । अनभिधानञ्चेह शरणम् । अधिशीङ्स्थादिसूत्रपरं

वा बोध्यम् । इह च कर्मणि भावे च लकारे देवदत्तेनास्यते मासो मासं चेति रूपद्वयमपीष्टम् । स्यादेतत् । भावेचाकर्मकेभ्य इति वचनान्मासादिकर्मकात्कथं भावे ल इति चेत् । उच्यते । अकर्मकेभ्य इत्यनेनान्तरङ्गं द्रव्यकर्म व्युदस्यते न तु बहिरङ्गं कालादिकर्म । कर्मणीत्यत्र तु व्यक्तिपक्षाश्रयणादन्तरङ्गासन्निधौ बहिरङ्गे कालादिकर्मण्यपि प्रतिरविरुद्धा । जातिव्यक्तिपक्षयोर्लक्ष्यानुरोधेन व्यवस्थेति सिद्धान्तात् । उक्तञ्च हरिणा । शक्तिमपाणसंख्यादेर्द्रव्यधर्मोद्विशिष्यते । क्रियासु कालयोगतः प्राग्योगो द्रव्यकर्मणेति ॥ अतस्तैः कर्मभिर्धातुर्युक्तो द्रव्यैरकर्मकः । लस्य कर्मणि भावे च निमित्तत्वाय कल्पतइति च ॥ एतेन सस्तेमाघमघाभिधानि यमुना गङ्गौघसङ्गे ययेति श्रीहर्षप्रयोगो व्याख्यातः ॥

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता सणौ ॥ गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणां चाणौ यःकर्ता स णौ कर्मस्यात्।नियमार्थमिदम्।णिजर्थेनाप्यमानस्य यदि भवति तर्हि गत्यर्थादीनामेवेति।तेन पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये पूर्वप्रवृत्तकर्तृसंज्ञाया एव निरपवादत्वेनावस्थानात्तृतीया सिद्ध्यति। आह च । गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गत । नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयतइति ॥ कर्तुः स्वधर्मेण तृतीययेत्यर्थः । गमयति माणवकं ग्रामं ग्रामकर्मकं यद्गमनं तदनुकूलव्यापाराश्रय इत्यर्थः । नीवह्योः प्रतिषेधो वक्तव्य ॥ यद्यप्येतयोः प्रापणमर्थो न तु गतिस्तथापि विशेषणतया गतिरपि वाच्यकोटिनिविष्टेत्येतावन्मात्रेण प्राप्तिं मत्वा प्रतिषेध उक्तः । नाययति वाहयति वा भारं देवदत्तेन। वहेरनियन्तृकर्तृकस्यैव प्रतिषेधः॥ नियन्तृकर्तृकस्य प्रयोज्य, कर्मेति वक्तव्यमिति फलितार्थः। वहन्ति वाहाः वा-

हयति वाहान् रथिनं सूतः । या प्रापणइत्यन तु गतिरेव प्रापण-शब्दार्थः । याति गच्छतीत्येकार्थप्रतीतेः । तेन कालं पाचयती-त्यादौ प्रयोज्यस्य कर्मता बोध्या । बुध्यर्थग्रहणेन ज्ञानसामान्य-वाचिन एव गृह्यन्ते न तु तद्विशेषवाचिनः स्मरत्यादयः । अत एव दृशेरुपसङ्ख्यानं करिष्यते । बोधयति माणवकं धर्मम् । प्रत्यवसानं भक्षणम् । भोजयति आशयति माणवकमोदनम् । आ-दिखाद्योः प्रतिषेधो वक्तव्यः ॥ आदयति खादयत्यन्नं वटुना । भ-क्षेरहिंसार्थस्य प्रतिषेधो वक्तव्यः ॥ हेतुमण्णिजन्ते विधिरिति प्र-तिषेधोप्यणावित्ययं सन्निधानात्तद्विषयः । तेन चुरादिणिज-न्तेपि भक्षयतौ प्राप्तिसत्वात्प्रतिषेध उपसङ्ख्यातः । भक्षयत्यन्नं वटुना । अहिंसार्थस्येति किम् । भक्षयन्ति बलीवर्दाः सस्यम् । भ-क्षयति बलीवर्दान् सस्यम् । क्षेत्रस्थानां यवानां भक्ष्यमाणानां हिंसा द्रष्टव्या तस्यामवस्थायान्तेषां चेतनत्वाभ्युपगमात् । शब्दः कर्म-कारकं येषान्ते शब्दकर्माणः न त्विह कर्तरिकर्मव्यतिहारइत्यत्रेव कर्मशब्दः क्रियापरः । गतिबुद्धिप्रत्यवसानशब्दार्थेति वक्तव्ये ऽर्थशब्दात्कर्मशब्दस्य पृथगुपादानात् अध्यापयति पाठयति माणवकं वेदम् । जल्पतिप्रभृतीनामुपसंख्यानम् ॥ जल्पयति वि-लापयति आभाषयति पुत्रं देवदत्तः । दृशेश्चोपसंख्यानम् ॥ द-र्शयति हरिं भक्तान् । यद्यपि दृशेर्ज्ञानसामान्यपरत्वे बुद्ध्यर्थत्वा-देव सिद्धं तथापि ज्ञानविशेषार्थतायां न सिध्यतीत्युपसंख्या-नमारब्धम् । श्रावयति श्लोकं देवदत्तमिति तु शब्दकर्मत्वात्सि-द्धम् । शब्दक्रियाणामिति व्याख्याने तु शृणोतेरुपसंख्येयं स्यात् । ह्वयतिक्रन्दत्योश्च प्रतिषेध्यं स्यात् । ह्वाययति क्रन्दयति वा देवदत्तेन । दृशेस्तूभयथाप्युपसंख्येयं स्यात् । शब्दायतेश्चोभय-था प्रतिषेध्यम् । अकर्मकत्वादपि ह्यत्र प्रसंगः । शब्दलक्षणस्य कर्म-

णौतर्भावात् कर्मान्तरायोगाच्च शब्दाययति देवदत्तेन । अकर्मकग्रहणेन तु येषां कालादिभिन्नं कर्म न सम्भवति ते गृह्यन्ते । न त्वविवक्षितकर्माणोऽपि । तेन मासमासयति देवदत्तमित्यादौ कर्मत्वं सिद्धम् । देवदत्तेन पाचयतीत्यादौ च न भवति । गत्यर्थाकर्मकेति सूत्रेऽप्येवम् । अत एवाविवक्षितकर्मकेभ्यः पचिददातिप्रभृतिभ्यः कर्तरि क्तो न । अन्यथा पक्ववान् दत्तवानित्यर्थे पक्वो दत्त इति स्यात् । लःकर्मणीति सूत्रे तु अविवक्षितकर्मणां असम्भवत्कर्मणां वा ग्रहणम् । अत एवाविवक्षितकर्मणां न भावे लादय इतीह सूत्रे वदतो णेरणावित्यत्र तु नेह पच्यतइति भावे लकार इति ब्रुवतो हरदत्तस्य मतभेदपरत्वान्न पूर्वापरविरोध इति दिक् ॥

हृक्रोरन्यतरस्याम् ॥ हा च क्रा चेति विग्रहः । ह्रस्व क्रुश्चेति वा । अनयोरणौ कर्त्ता णौ वा कर्म स्यात् । नवेतिविभाषासूत्रे उभयत्रविभाषास्विदं वार्तिककृता पठितम् । तथाहि । अभ्यवहारयति माणवकमोदनं माणवकेन वेत्यत्र प्रत्यवसानार्थत्वात्प्राप्ते विकुर्वते छात्राः विकारयति छात्रान् छात्रैर्वेत्यत्राकर्मकत्वात्प्राप्ते इतरत्र त्वप्राप्ते विभाषेयम् । अभिवादिदृशोरात्मनेपदे वेति वक्तव्यम् ॥ अभिवादयतेरप्राप्ते विभाषा । दृशेस्तु बुद्ध्यार्थत्वाद्गुपसङ्ख्यानाद्वा प्राप्ते। अभिवादयति गुरुं देवदत्तः अभिवादयते गुरुं देवदत्तं देवदत्तेन वा । णिचश्चेत्यात्मनेपदम् । परस्मैपदे तु अभिवादयति गुरुं देवदत्तेन । दर्शयते राजानं भृत्यान् भृत्यैर्वा । कर्मसंज्ञाभावपक्षे कर्मान्तरस्याभावाण्णेरणावित्यात्मनेपदमन्यत्र तु णिचश्चेतीति प्राञ्चः । वस्तुतस्तु णिचश्चेत्येव युक्तम् । णेरणावित्यस्य तु नायं विषयः । णिज्वाच्यप्रयुक्तिभेदादिति तत्रैवोपपादितम् ॥

स्वतन्त्रः कर्त्ता ॥ क्रियायां स्वातन्त्र्येण विवक्षितोर्थः कर्ता स्यात् । धातूपात्तव्यापाराश्रयत्वं स्वातन्त्र्यम् । आह च । धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यतइति कर्मकर्तर्यप्यस्तीदम् । फलव्यापारयोर्वैयधिकरण्यमात्रस्य पचात्यौत्सर्गिकस्य परं त्यागः । विश्रकलितशक्तिपक्षे विशिष्टशक्तिपक्षे चेद तुल्यम् । निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितमिति पक्षे तु प्रधानभूतधात्वर्थ एवेह क्रिया धातुत्वं तु भूतपूर्वभावनार्थत्वात् । एतेन कारकाणां क्रियान्वयनियमोपि द्वेधा व्याख्यातः । देवदत्तः पचति । स्थाली पचति । अनन्यलभ्यस्य शब्दार्थत्वादाश्रयो लकारार्थः । देवदत्तेन पच्यते । देवदत्तरूपो य आश्रयस्तद्विशिष्टो विक्लित्त्यनुकूलव्यापार इत्यर्थ । वैशिष्ट्य चाधेयतारूपं संसर्गमर्यादया भासते ॥

तत्प्रयोजकोहेतुश्च ॥ तस्य कर्तुः प्रयोजको हेतुसंज्ञः स्यात्कर्तृसंज्ञः । संज्ञासमावेशार्थश्चकारः । कुर्वन्तं प्रेरयति कारयति हरिं । हेतुत्वात्तद्व्यापारे हेतुमतिचेति णिच् । कर्तृत्वात्कर्तरि लकारः ॥

इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य चतुर्थे पादे तृतीयमान्हिकम् ॥

प्राग्रीश्वरान्निपाता ॥ अधिरीश्वरइत्यतः प्राक् प्राङ्निपाता इत्यधिक्रियते । तन्त्राद्याश्रयणात् । तेन पूर्वं निपातसंज्ञाः सन्तः पश्चाद्गत्यादिसंज्ञा इत्यर्थात्संज्ञासमावेशः सिध्यति । अन्यथा गत्युपसर्गकर्मप्रवचनीयसंज्ञानां निपातसंज्ञायाश्च पर्यायः स्याद् । तन्त्रादौ प्रमाणं तु प्राग्ग्रहणसामर्थ्यमेव अन्यथा रीश्वरादिति पञ्चम्यैव दिक्शब्दाक्षेपात्किं तेन । न च परशब्दाक्षेपप्रसङ्गः । चादयोसत्वे प्रादय इत्येतयोर्विधेययोर्लाभेना

नन्वयापत्तेः । रेफविशिष्टग्रहणं किम् । ईश्वरेतोसुन्कसुनावित्यस्य व्याप्तिन्यायेनाव्ययित्वं मा भूत् । वस्तुतस्तु मास्तु रेफः प्रत्यासत्त्या ऽभिमतसिद्धेः अव्ययीभावस्याव्ययसंज्ञारम्भाच्च । न चासौ समासेष्वव्ययीभाव एवेति नियमार्थ स्यादिति वाच्यम् । गौरवग्रस्तं व्याप्तिन्यायमाश्रित्य नियमार्थत्ववर्णनापेक्षया प्रत्यासत्तेर्विध्यर्थतायाश्च न्याय्यत्वात् । अत एव नलोकेति सूत्रे अव्ययात्पृथक् लोकादीनां ग्रहणमप्युपपद्यतइति दिक् ॥

चादयोसत्वे ॥ चादयो निपातसंज्ञाः स्युः न तु द्रव्ये । निपातत्वादव्ययत्वम् । च वा इत्यादिवस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते । द्रव्यमित्युच्यते सोर्थो भेद्यत्वेन विवक्षितः । लिङ्गसङ्ख्यान्वयि द्रव्यमिति वा । असत्वे किम् । पशुना यजेत, पशुशब्दश्चादिः । चः समुच्चय इत्यपि प्रत्युदाहरणम् । न चात्र प्रकृतिवदनुकरणमित्यतिदेशात् निपातत्वं दुर्वारमिति वाच्यम् । अतिदेशस्यानित्यतायाः ऋलृक्सूत्रएवोपपादितत्वात् । प्रसज्यप्रतिषेधः किम् । वातीति वाः विभातीति विभः । इह क्रियाविशिष्टद्रव्यवाचकतया क्रियायाश्चासत्वरूपत्वान्निपातता स्यात् ततश्च विभशब्दस्याप्यव्ययसंज्ञा स्यात् । प्रयोजनं सर्वनामाव्ययसंज्ञायामित्युक्तत्वात् । अथ चादयः । च वा ह अह एव एवं नूनं शश्वत् युगपत् भूयस् कूपत् प्रश्नवितर्कप्रशंसास्वयम् । एवं सूपदपि । कुविदिति भूयोर्थे योगप्रशंसास्तिभावेषु च । नेदिति शङ्कायाम् । निज्जिह्मायन्तोनरकंपताम । नेदेवसापुनजन्नदेवा इत्यादौ तु न इदिति पदद्वयं पठ्यते । तस्मान्निपातसमुदायोयं बोध्यः । निपातैर्यद्यदीति निघातनिषेधः । प्रतिषेधविचारसमुच्चयेष्वपमिति तु शाकटायनः । चेत् चण् अयं चेदर्थे णित् समुच्चयादौ त्वननुबन्धः । इदं च निपातैर्यद्यदीत्यत्र

स्फुटीभविष्यति । कच्चित् । यत्र । नह निश्चितनिषेधे । हन्त हर्षेनुकम्पायां च । माकिः माकीं एतौ निषेधे । माकिर्नेशन्मा-कीरिषन्माकीसंशारिकेवटेद् किरसम्भावितानिषेधेन किरिन्द्रत्व-दुत्तरः । नकिरेवायथात्वंदिकंनुकम् । सुकआकी नकी नकिः । माकीं माकिः । आकृतमिति वेदनिघण्टुः । आमिश्राणि नवोत्त-राणीति तद्व्याख्यायां यास्कः । माङ् । माङ्लुङितिविशेष-णार्थो ङकार । मा भवतु मा भविष्यतीत्यत्र निरनुबन्धो मा-शब्दः । नञ् । ञकारो नलोपो नञ इति विशेषणार्थः । न-स्येत्युक्ते तु पामनपुत्र इत्यत्रापि स्यात् । न च सिद्धान्तेपि स्त्रैग-पुत्रेतिप्रसङ्गं वारयितुं अलुगुत्तरपदइत्युत्तरपदाक्षिप्तेन पूर्वपदेन नञोवश्य विशेषणीयत्वात्तेनैव पामनपुत्रस्यापि सिद्धेः किं ञ-कारेणेति वाच्यम् । नैकधागमिकर्मीकृतनैकनीवृत्तेत्पादौ निषे-धार्थेन नशब्देन सहसुपेति समासेतिव्याप्ति वारयितु ञित्व-स्याप्यावश्यकत्वात् तथा पूर्वपदस्य विशेषणेपि अनन्यार्थञित्व-स्य निपातस्यैव ग्रहणं न तु वृद्धया चरितार्थञकारस्य तद्धित-स्यापीति तु मार्चां ग्रन्थस्योक्तिसम्भवो बोध्यः । यावत् ताव-त् । स्वै न्वै एतौ वितर्के । श्रौषट् । वौषट् । स्वाहा । वषट् । स्वधा । ॐ । तथा । हिरुक् । खलु । किल । अथ । सुष्टु । आ-दहेति हि सोपक्रमकुत्सनेषु । आदहस्व धामभित्यत्र तु पदका-रा आदिति पृथक् पठन्ति । उपसर्गविभक्तिस्वरप्रतिरूपकाश्च ॥ अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि । सुदत्तमनुदत्तं च नि-दत्तमिति चेष्यते । अच उपसर्गात्त इति घोस्तत्त्वं न भवति । उपसर्गप्रतिरूपकत्वेप्यनुपसर्गत्वात् । विभक्तिप्रतिरूपको य-था । अहम् । शुभम् । अहंयुः । शुभंयुः । अहंशुभमोर्युस् । चिरेण । अन्तरेण । चिराय । अचिरात् । अकस्मात् । चिरा-

य मम । ममत्वं गतराज्यस्य । वेलायां मात्रायामित्यादि । एन गेये केन विनीतौ वामिति व्याख्यातम् । वामित्यस्याव्ययस्य युवामित्यर्थात् । आह आसेत्यादीनि तु तिङन्तप्रतिरूपकाणि । स्वरास्तु सम्बोधनभर्त्सनानुकम्पापादपूरणप्रतिषेधेषु यथासम्भवं बोध्या । अ अपेहि आ एवं मन्यसे । इ इन्द्रं पश्य । ई ईशः । उ ऊपरे बीजं वपति । ए इतो भव । ओश्रावय । ऋ ॠ ऌ ऐ औ एते मन्त्रस्तोमाः । पश्विति सम्यगर्थे । लोधं नयन्ति पशुमन्यमानाः । शुकमिति शीघ्रत्वे । यथा कथाचेत्यनादरे । पाट् प्याट् अङ्ग है हे भो अये इत्यादयः सम्बोधने । घेति हिंसाप्रातिलोम्यपादपूरणेषु । विषु इति नानार्थे । एकपदे इत्यकस्मादर्थे । निहन्त्यरीनेकपदे । पुतइति कुत्सायाम् । कुत्सितमवयवञ्छादयति इति पुच्छ । डः।पुलिति लान्तामिति शाकटायनः । कुत्सित कसति गच्छतीति पुल्कसः । अस्मीत्यहमर्थे । त्वामस्मि वच्मि विदुषां समवायोत्र तिष्ठति । आत इति इतोपीत्यर्थे । इत्यादि । आकृतिगणश्चायम् ॥

प्रादयः ॥ एते निपातसञ्ज्ञाः स्युर्न तु सत्त्वे । प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप एते प्रादयः । तत्र निस्दुस् इमौ सान्तौ । निसस्तपतावनासेवनइतिनिर्देशादिस्युपसर्गस्यायतावीति सूत्रे वृत्तिः । निरः कुपः सुदुरोरधिकरणे इत्याद्यनुरोधाद्रेफान्तावपीति तत्रैव सूत्रे हरदत्तः । अद्रव्ये किम् । विः पक्षी । परा सेनाः ॥

उपसर्गाः क्रियायोगे॥प्रादय क्रियायोगे उपसर्गसंज्ञा स्युः॥

गतिश्च ॥ प्रादयो गतिसंज्ञाः स्युः क्रियायोगे । पुल्लिङ्गोय गतिशब्द । गतिरनन्तर इति लिङ्गात् । अव्युत्पन्नश्चायं क्तिज-

न्तो वा । नक्किचिदीर्घश्चेति तु न प्रवर्तते । अत एव निर्देशात् । उपसर्गसंज्ञया सह समावेशार्थश्चकारः । अन्यथा पर्याय स्यात् । तेन प्रणेयमित्यादौ णत्वं कृदुत्तरपदप्रकृतिस्वरश्च सिध्यति । निपातसंज्ञायास्तु समावेशः प्राग्ग्रहणेन साधित एव । इह यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः । योगग्रहणसामर्थ्यात् । तेन प्रवृद्धं कृतं प्रकृतमित्यत्र गतिरनन्तर इति स्वरो न । कर्मणि क्तान्तं प्रत्यगतित्वात् । कृञर्थविशेषकत्वे तु स्यादेव । तथा प्रवृद्धो भावः प्रभाव इत्यत्र श्रिणीभुवोनुपसर्गइति घञ् सिद्धः । एवं प्रणाययत्यभिपाचयतीत्यादौ प्रकृत्यर्थगतप्रकर्षाभिमुख्यद्योतकतायां णत्वषत्वे स्तः । ण्यर्थविशेषकत्वे तु नेति बोध्यम् । निपातसंज्ञा तु क्रियायोगं विनाप्यस्ति । एतदर्थमेव हि प्रादय इति योगो विभक्त । तेन प्रगत आचार्यः प्राचार्य इत्यत्राव्ययपूर्वपदप्रकृतिस्वरः सिध्यति । उपर्गसंज्ञायां मरुच्छब्दस्योपसंख्यानम् ॥ मरुत्तः । उपसर्गसंज्ञाविधानसामर्थ्यादजन्तत्वाभावेप्यचउपसर्गात्त इति तत्वं प्रवर्ततइत्याहुः । एवं च मरुन्नयतीत्यत्र णत्वमपि प्राप्नोति । तस्मात्तत्वएव संज्ञा वक्तव्या। अत एव कि विधिरङ् च न भवति । निपातसंज्ञा तु नास्त्येष्टा । तेन तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरे कृते मरुत्तब्दो मध्योदात्त । निपातत्वे त्वाद्युदात्तः स्यात् । न चोपसर्गाश्चाभिवर्जमिति फिट्सूत्राद्दोपत्तादवस्थ्यं शंक्यम् । निपाता आद्युदात्ता इत्येव सिद्धे ऽभेः प्रतिषेधमात्रार्थं तत्सूत्रारम्भादिति हरदत्तादयः । अत एव नाभिरित्येव सूत्र्यताम् । मास्तु वा तदपि । एवादिषु अभे सुपठत्वादित्यवोचाम । एवं च तप्पर्वमरुद्भ्यामिति मरुतशब्दव्युत्पादने उपायान्तरं बोध्यम् । तत्र च तपः पित्वमेव सम्यक् । तन्निति निरवपाठस्तु यत्राचित्कः प्रामादिकः । अन्य-

था मरुत्तशब्दस्याद्युदात्ततापत्तौ प्रकृतसूत्रस्थकैयटादिविरोधापत्तेः। मत्वर्थीयप्रकरणे तनो नित्यं मरुत्तशब्दस्याद्युदात्ततां चावलम्ब्य प्रवृत्तो हरदत्तग्रन्थस्तु चिन्त्यः। पर्वतश्चिन्माहि वृद्धो विभाषेत्यादौ पठ्यमानं पर्वतशब्दस्याद्युदात्तत्वं तु द्वेधापि सिध्यति। नञ्विषयस्यानिसन्तस्येति पर्वतशब्दस्याद्युदात्तत्वात्। श्रच्छब्दस्याङ्विधावुपसंख्यानं॥ श्रद्धा। भिदादिपाठात्मज्ञाश्रद्धेतिनिपातनाद्वा सिद्धम्। अन्तःशब्दस्याङ्किविधिणत्वेषूपसंख्यानम्॥ एतच्चान्तरपरिग्रहे इत्यत्र भाष्ये स्थितम्। अन्तर्धा। अन्तर्द्धिः। अन्तर्हण्यात्। हन्तेरत्पूर्वस्येति णत्वं। एवं चान्तरदेशइति न कर्तव्यम्। देशे तु क्षुभ्नादित्वाण्णत्वाभावः। अयनं चेत्यपि न कर्तव्यम्। कृत्यच इति सिद्धेः। देशे तु क्षुभ्नादिता बोध्येति कैयटः। देशे निषेधार्थं सूत्रद्वयमिति तु हरदत्तः। पक्षद्वयेऽपि अन्तर्णयाति अन्तर्भवाणीत्यादौ यथायथं णत्वं बोध्यम्। सुदुरोः प्रतिषेधो नुम्विधितत्वषत्वणत्वेषु॥ सुलभं। दुर्लभम्। उपसर्गात्खल्घञोरिति नुम् न। एतच्च प्रयोजनमापाततः। नसुदुर्भ्यां केवलाभ्यामिति सूत्रस्यावश्यारभ्यत्वात्। अन्यथा ऽतिसुलभमित्यत्र नुम् न स्यात्। तत्त्वं, सुदत्तम्। अचउपसर्गादिति तत्वं मा भूत्। षत्वं, दुःस्थितिः। प्रक्रियाजालदुःस्थम्। सुसिक्तम्। सुस्तुतम्। सुःपूजायामिति तु कर्तव्यमेव पूजायामिति विशेषणार्थम्। तेन सुषिक्तं किं तवात्रेत्यादौ षत्वं भवत्येव। कथं तर्हि फलवद्भावनोद्भूतकथम्भावतिरोहिताः। नैवाङ्गानां कथं भावाः प्रादुष्यन्ति कथं च नेति। सत्यम्। नेदमुपसर्गत्वप्रयुक्तं किन्तूपसर्गप्रादुर्भ्यामित्यत्र प्रादुसः पृथग्ग्रहणप्रयुक्तम्। एतेन प्रादुष्यन्तीति पठित्वा प्र आङ् दुर् इत्युपसर्गत्रिकपूर्वस्य स्यतेरुपसर्गात्सुनोतीत्यादिना षत्वमिति व्या-

चक्षाणाः परास्ताः। दुर उपसर्गतायाः षत्वविधौ निषेधात्। स्यतेरर्थस्य प्रकृतासम्बन्धाच्च । णत्वम् । दुर्नीतम् । दुर्नयः । एतेन दुरः परस्य णत्वं नेति केचिदिति पठित्वा सिद्धान्ते णत्वमिति भ्राम्यन्तः परास्ता । गतिसंज्ञायां कारिकाशब्दस्योपसङ्ख्यानम् ॥ कारिकाकृत्य । कारिकाकृतम् । यत्कारिकाकरोति । तिङि चोदात्तवतीति गतेर्निघातः । निपातत्वादव्ययत्वे सति विभक्तेर्लुक् । कारिका क्रिया । मर्यादा स्थितिरित्यर्थः। यत्न इत्यपरे । धात्वर्थनिर्देशइति ण्वुल् । यस्तु कर्तरि ण्वुलन्तः कारिका दासीति । यश्च श्लोकवाची तयोर्नेह ग्रहणम् । क्रियायोगइति कारिकाशब्दस्य विशेषणात्। क्रियाप्रवृत्तेरेव ग्रहणात्। पुनश्च न सौ छन्दसि गतिसंज्ञाविति वक्तव्यम् ॥ पुनराधेयम् । गतित्वात्समासः । कृदुत्तरपदप्रकृतिस्वरेण यतोनाव इति धेशब्द उदात्तः । पुनरुत्स्यूतं वासः । इहापि गतित्वात्समास । स्वरस्तु मयूरव्यंसकादेराकृतिगणत्वादन्तोदात्तत्वम् । काठकेत्वन्तोदात्तः पठ्यते । शेषनिघातेन पुनःशब्दो ऽनुदात्तः । गतिर्गताविति निघातं वदन् वृत्तिकारस्तु परत्वात्तस्य न्याय्यतां मन्यते । चनोहित ॥ चायेरन्ने ह्रस्वश्चेत्यसुन्नन्तत्वान्निपातत्वाद्वा ऽद्युदात्तस्य चनःशब्दस्य गतिरनन्तर इति प्रकृतिस्वरः ॥

ऊर्यादिच्विडाचश्च ॥ एते गतिसंज्ञाः स्युः क्रियायोगे। कृभ्वस्तियोगे च्विडाचौ विहितौ । तत्साहचर्यादूर्यादयोपि तद्योगएव प्रयुज्यन्ते नान्यत्र । अनभिधानाच्च । तत्राप्याविःप्रादुःशब्दौ मुक्त्वा ऽन्येषां करोतिनैव योग इति प्राञ्चः । यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति तथापीह सामर्थ्यात् च्विडाजन्तग्रहणम् । न हि प्रत्ययमात्रस्य क्रियायोगः संभवति । स्वार्थिकत्वेनानर्थकत्वात् । च्वेरश्रावित्वाच्च । ऊरीकृत्य शुक्लीकृ

त्य पटपटाकृत्य। इहेदमवधेयम्। ऊर्यादीनां स्वाहान्तानां चादिष्वपि पाठादक्रियायोगेपि निपातत्वम्। आविःशब्दस्य साक्षात्प्रभृतिषु पाठात्कृञो योगे विकल्पः। भ्वस्तियोगे त्वनेन नित्यमिति। कथं तर्हि वारुणीमदविशंकमथाविश्चक्षुपोभवदसावित्र इति माघः। अभवद्युगमद्विलोलजिन्हायुगलीढोभयसृक्वभागमाविरिति च। निरंकुशाः कवय इति हरदत्तः। वस्तुतस्तु नेह दोषलेशमपि पश्यामः। तथाहि। गतित्वाद्धातोः प्राक् प्रयोगः प्राप्नोतीति त्वदीयपूर्वपक्षसर्वस्वम्। तच्च भाष्यवार्तिकयोरेव निराकृतप्रायम्। तेप्राग्धातोरिति सूत्रं हि द्वेधा व्याख्यातं प्रयोगनियमार्थं संज्ञानियमार्थं चेति। तत्रान्त्यपक्षे प्राक् चाप्राक् च प्रयोक्तव्याः। प्राक्तु प्रयुज्यमानाः संज्ञां लभन्तइति स्थितम्। इममेव च पक्षमाश्रित्यानुकरणं चेति सूत्रे ऽनितिपरमिति प्रत्याख्यातम्। एवमेव छन्दसिपरेपि व्यवहिताश्चेति सूत्रद्वयमपि प्रत्याख्यातम्। अत एव तेप्रागिति सूत्रे सुकटं कराणि वीणानीति भाष्यं कर्तृकर्मणोश्चभूकृञोरिति सूत्रे स्वायम्भवमिति भाष्यवृत्तिग्रन्थौ। च्व्यर्थयोः किं स्वाढ्येन भूयतइति वृत्तिग्रन्थश्च सङ्गच्छते। एतेन वृत्तेः प्रामादिकतां वदन् आढ्येन सुभूयतइति पाठः कर्तव्य इति शिक्षयन् हरदत्तोप्यपास्तः। पक्षान्तरैरपि परिहारा भवन्तीति न्यायेन संज्ञानियमपक्षे सर्वस्य सामञ्जस्यात्। एतेन पुरोरामस्य जुहवाञ्चकार ज्वलने वपुरिति भट्टिः। तस्य स्थित्वा कथमपि पुर इति कालिदासश्च समर्थितः। न च पुरोव्ययमित्यस्य कृञ्मात्रविषयत्वमिति भ्रमितव्यम्। कृञोनधिकारात्। तुरासाहं पुरोधायेत्यादिप्रयोगाच्चेति दिक्। जरी ऊरी उररी एते त्रयोङ्गीकारे विस्तारे च। विताली भूसी एतौ विस्तारे। शकला संसकला ध्वंसकला भ्रंसक-

ला एते चत्वारो हिंसायाम् । शकला कृतेत्यादि । हिंसित्वेत्यर्थः । गुलुगुधा पीडार्थे । गुलुगुधाकृत्य । पीडयित्वेत्यर्थः। सजूः सहार्थे । फलफली विक्ली आक्ली एते विकारे । अलोष्ट्री केवली सेवाली शेवाली वर्षाली मसमसा भसमसा एते हिंसायाम् । वषट् वौषट् स्वाहा स्वधा पापी करुणाविलापे । पापीकृत्य । करुण विलप्येत्यर्थः । प्रादु प्राकट्ये । श्रत् शीघ्रार्थे । श्रत्कृत्य । आवि प्राकट्ये । आविष्कृत्य । गणरत्ने त्वन्येपि संगृहीताः । तथाहि । पापाली सङ्कला केवासी एते हिंसायाम् । वार्दाली धार्दाली आलम्बी एते प्राकाश्ये हिंसाया च । इत्यूर्यादय ॥

अनुकरणञ्चानितिपरम् ॥ गति स्यात्क्रियायोगे । खाट्कृत्य । अनितिपर किम् । खाडिति कृत्वा निरष्ठीवत् । सति हि गतित्वे प्रयोगनियमपक्षे धातोः प्राक् प्रयोग स्यात् । अनुकरणत्वजात्याक्रान्तस्येतिशब्दे परे ऽयनिषेधः । तेन श्रौषड्वौषडितिकृत्वा निरष्ठीवदित्यत्र श्रौषट्शब्दस्यापि निषधः । सञ्ज्ञानियमपक्षे तु अनितिपरग्रहणं न कर्तव्यमिति । परस्परसञ्ज्ञामात्रेणैवाभावात् ॥

आदरानादरयोः सदसती ॥ क्रमाद्गतिसंज्ञे स्त । सत्कृत्य । असत्कृत्य । प्रीतिपूर्विका प्रत्युत्थानादिविषया त्वादराः। अवज्ञया प्रत्युत्थानाद्यनुपेक्षा त्वनादरः । एतयोः किम् । सत्कृत्वा । असत्कृत्वा । शोभनमशोभन च कृत्वेत्यर्थः ॥

भूषणेऽलम् ॥ गति सञ्ज्ञ स्यात् । अलकृत्य । भूषणे किम् । अलंकृत्वौदनं गतः । पर्याप्तमित्यर्थः । अनुकरणमित्यादयस्त्रयो योगाः स्वभावात्कृञ्विषया इति माधवः ॥

अन्तरपरिग्रहे ॥ स्पष्टम् । अन्तर्हत्य । मध्ये हत्वेत्यर्थः ।

अपरिग्रहे किम्। अन्तर्हत्वा मूषिकां श्येनो गतः। परिगृह्य गत इत्यर्थः। अत्रेदमवधेयम्। हत्वा गमनं द्विधा। हतं त्यक्त्वा परिगृह्य चेति। आद्यमुदाहरणम्। द्वितीयं प्रत्युदाहरणम्। अपरिग्रहे इति च प्रयोगोपाधिर्न तु वाच्यकोटिनिविष्टमिति॥

कणेमनसी श्रद्धाप्रतीघाते॥ गती स्तः। कणेहत्य पयः पिबति। मनोहत्य। कणेशब्दः सप्तमीप्रतिरूपको निपातोभिलाषातिशये वर्तते। मन.शब्दोप्येवम्। अतिशयेनाभिलष्या तन्निवृत्तिपर्यन्तं पिबतीत्यर्थः। ततश्च श्रद्धाया अपगमात्तत्प्रतीघातो धातुगतिसमुदायगम्यः। श्रद्धाप्रतीघाते किम्। कणेहत्वा गतः। मनोहत्वा। सूक्ष्मतण्डुलावयवः कणस्तस्मिन् हत्वेत्यर्थः। मनःशब्दस्तु चेतसि॥

पुरोऽव्ययम्॥ पूर्वाधरावराणामिति व्युत्पादितो ऽसिप्रत्ययान्तोऽव्ययं तथाभूतः पुरःशब्दो गतिसंज्ञः स्यात्। पुरस्कृत्य। नमस्पुरसोरिति सत्वम्। अव्ययं किम्। पूः पुरौ पुर कृत्वा॥

अस्तञ्च॥ अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात्। अस्तङ्गत्य। अव्ययमित्येव। अस्तं काण्डम्। क्षिप्तमित्यर्थः॥

अच्छगत्यर्थवदेषु॥ अव्ययमित्येव। अच्छगत्य। अच्छोद्य। अभिगत्य। अभिमुखमुक्त्वा चेत्यर्थ.। अव्यय किम्। जलमच्छं गच्छति॥

अदोनुपदेशे॥ अदःशब्दस्त्यदादिः सोनुपदेशे गतिः स्यात्। अदःकृत्यादःकृतम्। यदा स्वयमेवेत्थं पर्यालोचयति तदेदमुदाहरणम्। अनुपदेशे किम्। परं प्रति कथने मा भूत्। अदः कृत्वा गतः॥

तिरोन्तर्धौ ॥ तिरोभूय। अन्तर्धौ किम्। तिरोभूत्वा स्थित । पार्श्वतो भूत्वेत्यर्थ ॥

विभाषा कृञि ॥ प्राप्तविभाषेयम् । तिरोन्तधावित्यनुवृत्तेः। तिरःकृत्य तिरस्कृत्य । तिरसोन्यतरस्यामिति वा सत्वम्। प्रत्युदाहरणे तु न सत्वम् । तद्विधौ गतिग्रहणानुवृत्ते । तिरः कृत्वा काष्ठम् । के चित्त्विहापि सत्वमिच्छन्तः पराभवे तिरस्कारशब्दप्रयोगं चानुरुन्धानाः सत्वविधौ गतिग्रहण निवर्तयन्तीति माधवः ॥

उपाजेन्वाजे ॥ एतौ कृञि वा गतिसंज्ञौ स्तः । विभक्तिप्रतिरूपकौ निपाताविमौ दुर्बलस्य सामर्थ्याधाने वर्तेते । उपाजेकृत्य । उपाजेकृत्वा । अन्वाजेकृत्य । अन्वाजेकृत्वा । उपष्टभ्येत्यर्थः ॥

साक्षात्प्रभृतीनि च ॥ एतानि कृञि वा गतिसंज्ञानि स्युः। च्व्यर्थ इति वक्तव्यम् ॥ साक्षात्कृत्य साक्षात्कृत्वा। असाक्षाद्भूतं साक्षात्क्रियते चेत्तदायं प्रयोगः । न तु साक्षाद्भूतस्यैव रूपान्तरापादने। च्व्यन्तेषु तु पूर्वविप्रतिषेधादूर्यादिच्वितिनित्यैव सज्ञा। तेन लवणीकृत्येत्यत्र मान्तत्वं न भवति । तद्विविकल्पसन्नियोगेनेह गणे निपात्यते । यद्वा लवणशब्दस्य लवणमिति मान्त आदेश । तथा च मास्तु पूर्वविप्रतिषेधः । त्रैशब्द्य हि नः साध्यम् । लवणंकृत्य लवणंकृत्वा लवणीकृत्येति । तत्र च्व्यन्ताच्व्यन्तयोः पाक्षिके लवणमादेशे सम रूपं । परेणापि विकल्पेन मुक्ते तु च्व्यन्तस्य नित्या सज्ञेति न कश्चिद्दोषः । इहाग्नौ वशेप्रभृतयो विभक्तिप्रतिरूपका निपाताः। प्रादुराविःशब्दयोरूर्यादित्वात्प्राप्ते विभाषा । साक्षात् मिथ्या चिन्तेति मनोव्यापारे। चिन्ताकृत्य । भद्रा आलोचनाप्रशंसामङ्गलेष्वयम् । रोचनेति

श्रद्धोत्पादे प्रशंसायां च। अमेति रह.साहित्ययोः। आस्था श्रद्धा प्राजर्यावी जर्या जरणक्रियायाम्। प्राजरुहा बीजरुहेति रुहिक्रियायाम्। लवणम् उष्णं शीतम्। उदकम्। आर्द्रं, लवणादीनां पञ्चानां गतिसंज्ञासन्नियोगेन मान्तत्वं निपात्यते मान्तादेशो वेत्युम्। अग्नौ। वशे विकम्पने विकसने प्रहसने सन्तपने। प्रादुस् नमस् आविस्। आकृतिगणोयम्॥

अनत्याधानउरसिमनसी॥ एतौ निपातौ कृञि वा गतिसञ्ज्ञौ स्तः। उरसिकृत्य। उरसिकृत्वा। अभ्युपगम्येत्यर्थ। मनसिकृत्य मनसिकृत्वा। निश्चित्येत्यर्थ। अत्याधानमुपश्लेष। तत्र न। उरसिकृत्वा पाणिं शेते॥

मध्येपदेनिवचने च॥ एते त्रय· कृञि गतिसंज्ञा.वा स्युरनत्याधाने। मध्येकृत्य मध्येकृत्वा। पदेकृत्य पदेकृत्वा। एदन्तावेतौ निपातौ। निवचनं वचनाभावः। अस्याविशेषेण एदन्तन्ता निपात्यते न तु सज्ञासंनियोगेन। व्याख्यानात्। निवचनेकृत्य निवचनेकृत्वा। वाच नियम्येत्यर्थः। अनत्याधाने किम्। हस्तिन· पदे कृत्वा शिर· शेते॥

नित्य हस्तेपाणावुपयमने॥ एतौ निपातौ कृञि नित्यं गतिसंज्ञौ स्त उपयमने। दारकर्मणीत्येके। स्वीकारमात्रइत्यन्ये। हस्तेकृत्य पाणौकृत्य कन्याम्। महास्त्राणि वा। उपयमने किम्। हस्तेकृत्वा सुवर्ण गतो भृत्य॥

प्राध्वम्बन्धने॥ प्राध्वमिति चादिषु पाठान्मान्तमव्ययमानुकूल्ये वर्तते। तत्कृञि नित्यं गतिसंज्ञ स्याद्बन्धनहेतुकं चेदानुकूल्यम्। प्राध्वंकृत्य। बन्धने किम्। प्राध्वंकृत्वा। प्रार्थनादिनानुकूलं कृत्वेत्यर्थः॥

जीविकोपनिपदावौपम्ये॥ कृञि नित्य गतिसञ्ज्ञौ स्तः।

जीवयतीति जीविका जीवनोपायः । जीविकामिव कृत्वा जीविकाकृत्य । उपनिषदमिव कृत्वा उपनिषत्कृत्य । गतिसमासस्य नित्यत्वेपि स्वार्थमात्रनिष्ठत्वादगतिना विग्रहोत एव, तत्र इवशब्दप्रयोगः । औपम्ये किम् । जीविकां कृत्वा ॥

ते प्राग्धातोः ॥ ते गतिसंज्ञा धातोः प्रागेव प्रयोज्याः ॥

छन्दसि परेपि ॥

व्यवहिताश्च ॥ स्पष्टम् । हरिभ्यां याह्योक आ । आमन्द्रैरिन्द्र हरिभिर्याहि । इह संज्ञानियमपक्षोपि भाष्ये स्थितः । ते इत्यनेन प्रादीनुपनिपत्पर्यन्तात् स्वरूपेण परामृश्य धातोः प्राक् प्रयुक्तानामेषां पूर्वसूत्रैकवाक्यतया संज्ञाविधानात् । अस्मिंश्च पक्षे छन्दसिपरेपि व्यवहिताश्चेति सूत्रद्वयम् अनितिपरग्रहणं च न कर्तव्यमिति स्थितम् । सुकटङ्कराणीति भाष्यं च सङ्गच्छते । प्रयोगनियमपक्षे तु कृत्यल्युट इति बहुलग्रहणेन समर्थनीयं स्यात् । यत्तु खलः खित्करणसामर्थ्यादनव्ययस्य प्राक् प्रयोगे निर्णीते सोः परिशेषाद्व्यवधानं सिध्यतीति तच्चिन्त्यम् । सामर्थ्याद्व्यवहिते मुमः सम्भवात् । कृद्ग्रहणे गतिपूर्वस्यापि ग्रहणाच्च । ईषच्छब्दस्यागतिसंज्ञकतयेपदाढ्यम्भव इत्यत्र खलः खित्वस्योपक्षीणत्वाच्चेति दिक् । धातोः किम् । प्रकर्तुमैच्छत् प्राचिकीर्षेदित्यत्र सनः प्राक् प्रयोगो मा भूत् ॥

कर्मप्रवचनीयाः ॥ रीश्वरात्प्रागिदमधिक्रियते । कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः बाहुलकात्कर्तर्यनीयर्, स च भूते । तेन सम्प्रति क्रियां न द्योतयन्तीति लभ्यते । आह च । क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः । नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदक इति ॥ तथाहि । शाकल्यस्य संहितामनुप्रावर्षदित्यत्रानुना न क्रियाविशेषो द्योत्यते । अनुभूयते सुख-

मित्यादौ यथा । नापि षष्ठ्येव सम्बन्ध उच्यते । द्वितीयैव तस्योक्तत्वात् । नापि प्रादेशं विपरिलिखति विमाय परिलिखतीत्यत्र विशब्देन मानक्रियैव क्रियान्तरमाक्षिप्यते, कारकविभक्तिप्रसङ्गात् । किन्तु संहितासम्बन्धिवर्षणमिति द्वितीयावगतः सम्बन्धो लक्ष्यलक्षणभावरूप एवेत्यवगमात्सम्बन्ध एवानुना विशेषवस्थाप्यते । क्व चित्तु क्रियागतविशेषद्योतकेपीयं संज्ञा वचनात्प्रवर्तते । सुः पूजायामतिरतिक्रमणे चेति यथा ॥

अनुर्लक्षणे ॥ लक्षणे द्योत्ये ऽनुः कर्मप्रवचनीयसंज्ञः स्यात् । लक्षणेत्थंभूतेत्यादिना सिद्धे हेतौ तृतीयां बाधितुमिदं सूत्रम् । तथाहि । लक्षणे कर्मप्रवचनीयसंज्ञाया अवकाशः । यो न हेतुः, वृक्षमनुविद्योतते विद्युदिति । हेतुतृतीयाया अवकाशो धनेन कुलमिति । संहितामनुप्रावर्षदित्यत्र तु हेतुभूतसंहितोपलक्षितं वर्षणमित्यर्थाद्धेतुभूते लक्षणे परत्वात्तृतीया स्यात् । पुन. संज्ञाविधानसामर्थ्यात्तु द्वितीयैव भवति । आह च । हेतुहेतुमतोर्योगपरिच्छेदेऽनुना कृते । आरम्भाद्बाध्यते प्राप्ता तृतीया हेतुलक्षणेति । न च तृतीयार्थे इति सूत्रेण गतार्थता शङ्क्या । तस्य पुरस्तादपवादन्यायेन सहयुक्तेऽप्रधानइत्येतन्मात्रबाधकत्वात् ॥

तृतीयार्थे ॥ अस्मिन् द्योत्ये ऽनुरुक्तसंज्ञः स्यात् । नदीमन्ववसिता सेना । नद्या सह सम्बद्धेत्यर्थ. । षिञ् बन्धने ऽस्मात्कर्तरि क्तः ॥

हीने ॥ हीने द्योत्ये ऽनुः प्राग्वत् । अनु हरिं सुरा । हरिमतियोगिकापकर्षरूपसम्बन्धवन्त इत्यर्थः । उत्कृष्टादेव द्वितीया न त्वपकृष्टात् । शक्तिस्वभावात् ॥

उपोधिके च ॥ अधिके हीने च द्योत्ये उपः प्राक्संज्ञः । उपखार्यां द्रोणः । खारीतोधिको द्रोणोस्ति । उभयमस्तीति फलितोर्थः । यस्मादधिकमिति सप्तमी । हीने, उपहरिं सुराः ॥

अपपरी वर्जने ॥ एतौ वर्जने द्योत्ये प्राग्वत् । अपविष्णोः परिविष्णोः संसारः । पञ्चम्यपाङ्परिभिरिति पञ्चमी । परेर्वर्जनइति द्विर्वचनम् । तद्धि पञ्चमीसहितेन कर्मप्रवचनीयेन द्योतितेपि वर्जने भवत्येव । उभयोरपि विधानसामर्थ्यात् । वर्जने किम् । परिषिञ्चति । सर्वत इत्यर्थः । अत्रोपसर्गत्वात्षत्वम् ॥

आङ् मर्यादावचने ॥ आङ् प्राग्वत् । मर्यादाशब्दो यस्मिन्सूत्रे उच्यते तत्रत्यश्चेत् । आङ्मर्यादाभिविध्योरित्यत्रोपात्तो द्व्यर्थ इत्यर्थः । आमुक्तेः संसारः । आबालेभ्यो हरिभक्तिः ॥

लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः ॥ एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः । लक्षणे । वृक्षं प्रति परि अनु वा विद्योतते विद्युत् । कञ्चित्प्रकारं प्राप्त इत्थंभूतस्तदाख्याने यथा । साधुर्देवदत्तो मातरं प्रति पर्यनु वा । भागे । यदत्र माम्प्रति स्यात् । परिस्यात् । अनुस्यात् । योत्र मम भागः स दीयतामित्यर्थः । स्वस्वामिभावो द्वितीयार्थः । वीप्सा व्याप्तुमिच्छा साकल्यमतिपिपादयिषेति यावत् । भूतंभूतं प्रति पर्यनु वा प्रभुः । सकलभूतानामित्यर्थः । न चेत्थंभूताख्यानइत्येव सिद्धम् । इदं तर्ह्युदाहरणं वृक्षंवृक्षं प्रतिसिञ्चति परिसिञ्चति अनुसिञ्चति । इह वीप्सा द्विर्वचनेनैव द्योत्यते । परिशब्दस्तु क्रिययैव सम्बध्यते । न चैवन्तस्य कर्मप्रवचनीयत्वं न स्यादिति वाच्यम् । वीप्सायाः विषयत्वानपायात् । अत एव वीप्सा-

यां विषयभूतायामिति वृत्तिग्रन्थमवतारयन्हरदत्त आह । एते च लक्षणादयो यथा विभक्तिसमीपादयो ऽव्ययार्थाः । नैवं प्रत्यादीनामर्थाः । किन्तर्हि संज्ञायां प्रत्यादीनां विषयत्वेन निर्दिष्टा इत्याहेति । द्वितीया तु कर्मणि । कर्मप्रवचनीयसंज्ञा तूपसर्गत्वनिवृत्त्यर्था । तेनोपसर्गात्सुनोतीति षत्वं न । परिशब्दयोगे पञ्चमी तु न भवति । पञ्चम्यपाङ्परिभिरित्यत्र वर्जनार्थेनापेत्यनेन साहचर्यात् ॥

अभिरभागे ॥ भागवर्जेलक्षणादावभिरुक्तसंज्ञः स्यात् । वृक्षमभिविद्योतते । साधुर्मातरमभि । वृक्षमभिसिञ्चति । अभागे किम् । यदत्र ममाभिष्यात्तद्दीयताम् ॥

प्रतिः प्रतिनिधिप्रतिदानयोः ॥ उक्तसंज्ञः स्यात् । अभिमन्युरर्जुनात् प्रति । तस्य प्रतिनिधिरित्यर्थः । तिलेभ्यः प्रतियच्छति माषान् । प्रतिनिधिप्रतिदाने च यस्मादिति पञ्चमी ॥

अधिपरी अनर्थकौ ॥ उक्तसंज्ञौ स्तः । कुतो ऽध्यागच्छति । कुतः पर्यागच्छति । इहाधिकार्थविरहादनर्थकत्वमधिपर्योः, धात्वर्थमात्रानुवर्तित्वात्तु प्राप्ता गतिसंज्ञा । तद्बाधः संज्ञाफलम् । तेन गतिर्गताविति निघातो न भवति ॥

सुः पूजायाम् ॥ सुसिक्तम् । सुस्तुतम् । अनुपसर्गत्वान्न षः । पूजायां किम् । सुषिक्तं किन्तवात्र । क्षेपोयं न पूजा । कथं तर्हि सुष्टुतिरिति । अतिशयमात्र विवक्षितं न तु पूजेत्याहुः । पठन्ति च । प्रशंसानुमते पूजा भृशकृच्छ्रसुखेषु सुरिति ॥

अतिरतिक्रमणे च ॥ अतिक्रमणे पूजायां चातिः कर्मप्रवचनीयसंज्ञः स्यात् । अतिक्रमणमुचितादधिकस्यानुष्ठानम् । अतिसिक्तं अतिस्तुतम् । बहुतरं समीचीनं वा सिक्तम् स्तुतञ्चेत्यर्थः ॥

अपि पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु ॥ एषु द्योत्ये-

प्वपिरुक्तसंज्ञः । सर्पिषोपि स्यात् । प्रार्थनायां लिङ् । तस्या एव विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिश ब्दः स्यादित्यनेन सम्बध्यते । अनुपसर्गत्वान्न षः । सर्पिष इति षष्ठी तु अपिशब्दबलेन गम्यमानस्य विन्दोरवयवावयविभाव- सम्बन्धे । इयमेव ह्यपिशब्दस्य पदार्थद्योतकता नाम । कर्मप्रव नीययुक्ते द्वितीया तु नेह प्रवर्तते । सर्पिषो विन्दुना योगो न त्व- पिनेत्युक्तत्वात् । सम्भावन नाम शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः । अपिसिञ्चेन्मूलसहस्रम् । अपिस्तुयाद्विष्णुम् । अन्ववसर्गः का- मचारानुज्ञा । अपिसिञ्च । अपिस्तुहि । गर्हायाम् । धिग्देवदत्त- मपिस्तुयाद्वृषलम् । समुच्चये । अपिसिञ्च । अपिस्तुहि । सिञ्च च स्तुहि चेत्यर्थः । यथायथमुपसर्गप्रादुर्भ्यामिति उपसर्गात्सु- नोतीति च प्राप्तं षत्व कर्मप्रवचनीयसज्ञया उपसर्गसज्ञाया वा धितत्वान्न भवति ॥

अधिरीश्वरे ॥ स्वस्वामिभावे द्योत्ये ऽधिः कर्मप्रवचनीयः स्यात् । इह स्वात्स्वामिनो वा पर्यायेण कर्मप्रवचनीयविभक्ति र्न तु हीने उपोधिकेचेत्यत्रैवान्यतरस्मादेव । अधिभुवि रामः । अधिरामे भू । एतच्च संज्ञासूत्र नारम्भणीयम् । उत्तरार्थत्वे तु योगो न विभजनीय इति यस्मादधिकमित्यत्र वक्ष्यामः ॥

विभाषा कृञि ॥ अधिः करोतौ प्राक्संज्ञो वा स्यात् । ईश्व रइत्यनुवर्तते । प्राप्तविभाषेयम् । यदत्र मामधिकरिष्यति । वि नियोक्ष्यतइत्यर्थः । इह विनियोक्तुरीश्वरत्व गम्यते । कर्मत्वाद् द्वितीया । इह तिङिचोदात्तवतीति निघातो न गतिसंज्ञाया बाधितत्वात् । किञ्च मामधिकृत्वेत्यत्र प्रादिसमासो न । कर्म- प्रवचनीयानां प्रतिषेध इत्युक्तेः । पक्षे ऽधिकृत्येति बोध्यम् ॥

लः परस्मैपदम् ॥ लकारस्यादेशाः परस्मैपदसंज्ञाः स्युः ।

पचन्तं पश्य ॥

तङानावात्मनेपदम् ॥ तङ्प्रत्याहारो लादेशावानौ च तत्संज्ञाः स्युः । पूर्वसंज्ञापवादः । आस्ते । आसीनः । चक्राणः । शानच्कानचोरेवेह ग्रहणम् । लादेशत्वात् । न तु शानन्चानशोः, तेन पूङ्यजोः शानन् यजेरकर्तृगेपि फले भवति रसमानसारसेनेत्यादौ परस्मैपादिभ्योपि चानश् भवति ॥

तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः ॥ कृतद्वन्द्वानामेकशेषात् प्रथमेत्यादयः षट् संज्ञाः तिङः षट् त्रिकाः क्रमात्प्रथमादिसंज्ञाः स्युः । शतृक्वस्वोः सावकाशापि परस्मैपदसंज्ञा प्रथमादिसंज्ञाभिर्न बाध्यते सिचि वृद्धिः परस्मैपदेष्विति लिङ्गात् । तथा परस्मैपदे लब्धावकाशापि प्रथमादिसंज्ञा तङ्स्वात्मनेपदसंज्ञया न बाध्यते कृतद्वन्द्वानामेकशेषेण तङ्क्षु प्रतिपदविधेरुक्तत्वात् । न चैवमपि परस्मैपदात्मनेपदसंज्ञाभ्यां पुरुषसंज्ञायाः पर्यायः स्यादिति वाच्यम् । णलुत्तमो वेत्यस्य सामान्यापेक्षज्ञापकत्वात् । इह सूत्रत्रयेपि महासंज्ञाकरणं पूर्वाचार्यानुरोधात् । इह त्रीणित्रीणीत्येकं पदम् । द्वे वेति हरदत्तः । तत्र सत्यामप्यवान्तरपदसंज्ञायां महापदसंज्ञामाश्रित्य संहितैकपदे नित्येत्यस्य प्रवृत्तेः । अन्यथा समासादावपि पृथक्छेदापत्तेः । द्विरुक्तमध्ये पदान्तरप्रयोगापत्तेश्च । अत एव ताता पिण्डानामित्यादौ वेदेऽवग्रहः क्रियते । यथा च द्विरुक्ते महापदसंज्ञाऽवान्तरसंज्ञा च तथा नित्यवीप्सयोरित्यत्र वक्ष्यामः ॥

तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ तानि लब्धपुरुषसंज्ञानि त्रीणित्रीणि एकशः क्रमेण एकवचनादिसंज्ञानि स्युः । तानीत्युक्तिः समावेशार्था । अन्यथा पुरुषवचनसंज्ञयोः पर्यायः स्यात् ततश्चाडुत्तमस्येत्यादिकार्यं पक्षे न भवेनैव । एकश्च

इति प्रथमान्ताद्वीप्सायां शम् ॥

सुपः ॥ सुपस्त्रीणित्रीणि क्रमादेकश उक्त संज्ञानि स्युः । इहान्वर्थतामाश्रित्य द्व्येकयोर्द्विवचनैकवचने बहुषुबहुवचनमिति शक्यं त्यक्तुम् । एकवचनस्यौत्सर्गिकत्वेपि उपसर्जनकर्मप्रवचनीयादिसंज्ञावद्यथासम्भवमन्वर्थतायाः सुवचत्वात् ॥

विभक्तिश्च ॥ सुप्तिङौ विभक्तिसंज्ञौ स्त । चकार पुरुषवचनसंज्ञाभ्यां समावेशार्थः । तिङां विभक्तिसंज्ञायाः प्रयोजनं नविभक्तौतुस्मा इति, सुपां तु त्यदाद्यत्वादिकमपि ॥

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ लकारेण समानाधिकरणे युष्मादि प्रयुक्ते ऽप्रयुक्तेपि मध्यमः स्यात् । त्वं पचसि इहपसे च । समानाधिकरणे किम् । त्वां पश्यति । त्वया दृश्यते । इह युष्मदि मध्यमो ऽस्मद्युत्तम इत्येवास्तु युष्मदस्मादि चयो लकार इत्यर्थे सर्वसामञ्जस्यात् । तथा तु न कृतमित्येव । अत्वं त्व भवति त्वद्भवतीत्यत्र तु न । मध्यमविकृतेरकर्तृत्वात् । प्रकृतिरेव हि विकाररूपापत्तौ कर्त्री । तथा च मन्त्रः । यदग्नेस्यामहं त्वं त्वंवाघास्याअहमिति । अहं त्वं स्याम् । त्व वा अह स्या इति प्रकृत्याश्रय एवेह पुरुषः । स्यादेतत् । भवान् करोतीत्यत्रापि स्थानिन्यपीति मध्यमः स्यात् । अत्राहुः । अलिङ्ग सम्बोधनैकविषयश्च युष्मदर्थः । सलिङ्गः सम्बोध्यासम्बोध्यसाधारणश्च भवदर्थ इति । न च युष्मदः सम्बोधनैकविषयत्वे ततः सम्बोधनएव प्रथमा स्यात् । ततश्च आमन्त्रिताद्युदात्तत्वं पदात्परत्वेन निघातश्च स्यादिति वाच्यम् । सम्बोधनस्य प्रातिपदिकार्थएवान्तर्भावात् । सम्बोधनेचेति सूत्र हि सम्बोधनाधिक्यार्थमिति वक्ष्यते । यत्तु केचिदि ष्टापत्तिं कुर्वाणाः पठन्ति । सम्बोधनार्थं सर्वत्र मध्यमे कैश्चिदि-

प्यते । तथा सम्बोधने सर्वा प्रथमां युष्मदो विदुः ॥ युष्मदर्थस्य सिद्धत्वान्नियता चाद्युदात्तता । युष्मदः प्रथमान्तस्य परश्चेन्न पदादसाविति ॥ तन्न । उक्तन्यायविरोधात् । लक्ष्यविरोधाच्च । दृश्यते हि पादादावप्यन्तोदात्तत्वं पदात्परत्वेऽप्यनियातश्च । तद्यथा, युवं ह गर्भं जगतीषु धत्थः । यूयं यातस्वस्तिभिः । ह ये देवा यूयमिदापयः स्थेति ॥

प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ मन्यधातुरुपपदं यस्य धातोस्तस्मिन्प्रकृतिभूते सति मध्यमः स्यात् परिहासे गम्यमाने मन्यतेरुत्तमः स्यात्स चैकार्थस्य वाचकः स्यात् । द्वयोर्बहुषु च मन्तृषु एकवचनमेव स्यादिति फलितोऽर्थः । एकवच्चेत्यन्वाचये चकारः । तेनैकवद्भावाभावेऽपि प्रधानशिष्टौ मध्यमोत्तमौ स्त एव । सत्यप्योदने परिहासशीलः श्यालकादिः प्रतारयन्प्रयुङ्क्ते । एहि मन्ये ओदनं भोक्ष्यसे भुक्तः सोऽतिथिभिः । एतम् एत वा मन्ये ओदनं भोक्ष्येथे भोक्ष्यध्वे । ओदनं भोक्ष्ये भोक्ष्यावहइत्यादि मन्यसे मन्येथे इत्यादिरर्थः । युष्मद्युपपदइत्याद्यनुवर्त्तते तेनेह न । एतु भवान्मन्यते ओदनं भोक्ष्यइति । श्यना निर्देशान्नेह । एहि मनुषे रथेन यास्यामिति । प्रहासे किम् । यथार्थकथने मा भूत् । एहि मन्यसे ओदनं भोक्ष्यइति भुक्तः सोऽतिथिभिः ॥

अस्मद्युत्तमः ॥ लकारसमानाधिकरणे ऽस्मदि स्थिते स्थानिन्यप्युत्तमः स्यात् । अहं पश्यामि दृश्ये वा । युष्मदस्मद्भ्यां सामानाधिकरण्ये तु परत्वादुत्तम एव । अहं च त्वं च वृत्रहन्त्सयुज्याव सनिभ्यआ ॥

शेषे प्रथमः ॥ मध्यमोत्तमविषयादन्यत्र प्रथमपुरुषः स्यात् । पचति पचतः पचन्ति ॥

परः सन्निकर्षः संहिता ॥ अतिशयितः सन्निधिर्वर्णानां यः स संहितासंज्ञः स्यात् । संज्ञाप्रदेशाः संहितायामित्यादयः ॥

विरामोऽवसानम् ॥ वर्णानामभावोऽवसानसंज्ञः स्यात् । सञ्ज्ञाप्रदेशा वाऽवसानइत्यादयः । अभावस्यापि बुद्धिकृतं पौर्वापर्यमस्त्येव । यथोच्चरितप्रध्वंसिनां नित्यविभूनां वा वर्णानाम् । यद्वा । विरम्यते ऽनेनेति करणे घञ् चरमवर्णश्च संज्ञी । अस्मिन्पक्षे खरवसानयोरित्येकापि सप्तमी विषयभेदाद्भिद्यते । खरि परे रेफस्य विसर्ग, अवसाने च रेफे स्थानिनीति । अत्र वार्त्तिकम् । संहितावसानयोर्लोकविदितत्वात्सिद्धमिति । तथा च सूत्रद्वयं मास्त्वित्यर्थः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणस्य लक्ष्मीधरसूरेः

सूनुना भट्टोजीभट्टेन कृते शब्दकौस्तुभे प्रथमस्याध्या-

यस्य चतुर्थे पादे चतुर्थमाह्निकम् ॥

पादश्चाध्यायश्च समाप्त ॥

अथ द्वितीयाध्याय आरभ्यते ॥

समर्थः पदविधिः ॥ पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः । परिभाषेयम् । समर्थशब्दस्य तदाश्रिते लक्षणा । सामर्थ्यं चेहैकार्थीभावः । प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टैकार्थत्वमिति यावत् । राजपुरुषः । पुत्रीयति । कुम्भकारः । औपगवः । इह गुणः कृतात्मसंस्कारेति न्यायेन महाविभाषायाः सामर्थ्यविशेषणता । विकल्पेनैकार्थीभूतं पश्यन्तं समस्यतइत्याद्यर्थात् । विशेषणबलादेव च व्यपेक्षापक्षोऽपि सम्मतः । वृत्तिस्तु समासादिनियता । अत एव ऋद्धस्येति विशेषणं तत्र नान्वेति । शक्यैकदेशत्वात् । न हि श्वशुरशब्दजन्यप्रतीतौ पितृविशेषणत्वेनोपस्थितायां भार्यायां सुशीलाया इत्यादिविशेषणमन्वेति । न चैवं देवदत्तस्य गुरुकुलमित्यादावनन्वयापत्तिः । तत्रापि कुलेनैव देवदत्तशब्दोत्तरषष्ठ्यर्थस्यान्वयात् । सम्बन्धस्तु उपस्थितगुरुद्वारक एव षष्ठ्यर्थो न तु तदितर । उक्तञ्च । समुदायेन सम्बन्धो येषां गुरुकुलादिना । सस्पृश्यावयवास्ते तु युज्यन्ते तद्वता सहेति ॥ यद्वा । ससम्बन्धिकपदार्थस्यैकदेशत्वेऽपि भवत्येव विशेषणान्वयः । चैत्रस्य नप्तेत्यादौ तथा दर्शनात् । श्वशुरशब्दोपस्थितायां भार्यायां तत्पतेर्विशेषणत्वाच्च । तदंशे उत्थिताकाङ्क्षत्वात् । उक्तञ्च । सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । स्वार्थवत्सा व्यपेक्षास्य वृत्तावपि न हीयतइति ॥ तस्मात्समाससुब्लुक्कृत्तद्धितविशेषणे । न विशेषणसम्बन्धः सापेक्षे तु भवेदयम् ॥ स्यादेतत् । वाक्ये क्लृप्तया ऽवयवशक्त्योपपत्तौ मास्तु शक्त्यन्तरम् । न चैवं विशेषणसम्बन्धापत्तिः । सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति निषेधस्य सम्भवादिति चेत् । सत्य

परः सन्निकर्षः संहिता ॥ अतिशयितः सन्निधिर्वर्णानां यः स संहितासंज्ञः स्यात् । संज्ञाप्रदेशाः संहितायामित्यादयः ॥

विरामोवसानम् ॥ वर्णानामभावोवसानसंज्ञः स्यात् । संज्ञाप्रदेशा वावसानइत्यादयः । अभावस्यापि बुद्धिकृतं पौर्वापर्यमस्त्येव । यथोच्चरितप्रध्वंसिनां नित्यविभूनां वा वर्णानाम् । यद्वा । विरम्यते ऽनेनेति करणे घञ् चरमवर्णश्च संज्ञी । अस्मिन्पक्षे खरवसानयोरित्येकापि सप्तमी विषयभेदाद्भिद्यते । खरि परे रेफस्य विसर्ग, अवसाने च रेफे स्थानिनीति । अत्र वार्त्तिकम् । संहितावसानयोर्लोकविदितत्वात्सिद्धमिति । तथा च सूत्रद्वयं मास्त्वित्यर्थः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणस्य लक्ष्मीधरसूरेः सूनुना भट्टोजीभट्टेन कृते शब्दकौस्तुभे प्रथमस्याध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् ॥

पादश्चाध्यायश्च समाप्त. ॥

---

अथ द्वितीयाध्याय आरभ्यते ॥

समर्थः पदविधिः ॥ पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः । परिभाषेयम् । समर्थशब्दस्य तदाश्रिते लक्षणा । सामर्थ्यं चैकार्थीभावः । प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टैकार्थत्वमिति यावत् । राजपुरुषः । पुनीयति । कुम्भकारः । औपगवः । इह गुणः कृतात्मसंस्कारोति न्यायेन महाविभाषायाः सामर्थ्यविशेषणता । विकल्पेनैकार्थीभूतं पष्ठ्यन्तं समस्यतइत्याद्यर्थात् । विशेषणबलादेव च व्यपेक्षापक्षोपि सम्मतः । वृत्तिस्तु समासादिनियता । अत एव ऋद्धस्येति विशेषणं तत्र नान्वेति । शक्यैकदेशत्वात् । न हि श्वशुरशब्दजन्यप्रतीतौ पितृविशेषणत्वेनोपस्थितायां भार्यायां सुशीलाया इत्यादिविशेषणमन्वेति । न चैवं देवदत्तस्य गुरुकुलमित्यादावनन्वयापत्तिः । तत्रापि कुलेनैव देवदत्तशब्दोत्तरषष्ठ्यर्थस्यान्वयात् । सम्बन्धस्तु उपस्थितगुरुद्वारक एव षष्ठ्यर्थो न तु तदितर । उक्तञ्च । समुदायेन सम्बन्धो येषां गुरुकुलादिना । संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सहेति ॥ यद्वा । ससम्बन्धिकपदार्थस्यैकदेशत्वेपि भवत्येव विशेषणान्वयः । चैत्रस्य नप्तेत्यादौ तथा दर्शनात् । श्वशुरशब्दोपस्थितायां भार्यायां तत्पतेर्विशेषणत्वाच्च । तदंशे उत्थिताकाङ्क्षत्वात् । उक्तञ्च । सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । स्वार्थवत्सा व्यपेक्षास्य वृत्तावपि न हीयतइति ॥ तस्मात्समाससम्बन्धातकृत्तद्धितविशेषणे । न विशेषणसम्बन्ध सापेक्षे तु भवेदयम् ॥ स्यादेतत् । वाक्ये कल्पनया ऽवयवशक्त्योपपत्तौ मास्तु शक्त्यन्तरम् । न चैवं विशेषणसम्बन्धापत्तिः । सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति निषेधस्य सम्भवादिति चेत् । सत्य

म् । बहूना वृत्तिधर्माणां वचनैरेव साधने । स्यान्महद्गौरवं तस्मादेकार्थीभाव आस्थितः ॥ चकारादिनिषेधो ऽथ बहुव्युत्पत्तिभञ्जनम् । कर्तव्यं ते न्यायसिद्धं त्वस्माकन्तदिति स्थितिः ॥ तथाहि । धवखदिराविति द्वन्द्वैव क्रोडीकृतार्थत्वाच्चकारो न प्रयुज्यते । तथा चित्राग्वादौ यत्पदम् । त्वया तु वचन कर्त्तव्यं, निरूढलक्षणा तु शक्तितो नातीव भिद्यते । नैयायिकैश्चकारार्थे तदनभ्युपगमाच्च । अकथितसूत्रे व्युत्पादितरीत्या नामाधेयोरभेदः प्रत्ययार्थः । प्रधानमित्यादिव्युत्पत्तित्यागश्च । प्राप्तोदक इत्यादौ उदककर्तृकप्राप्तिकर्मेत्याद्यर्थाभ्युपगमात् एकार्थीभावे तु लाघवमिति । यद्यपि सिद्धान्ते पद वाक्यं वा शक्तं तथापि प्रक्रियादशायां लाघवादेकार्थीभाव इत्याशयः । यैव ह्यस्माकं प्रक्रिया सा परैः पारमार्थिकतया गृह्यते इति युक्तस्तान् प्रति गौरवोपन्यास इति दिक् ॥ क्वचित्तु सापेक्षत्वेपि भाष्यप्रामाण्याद् वृत्ति । तद्यथा । किमोदनः शालीनाम् । केषां शालीनामोदन इत्यर्थः । सक्त्वाढकमापणीयानाम् । आपणीयानां सक्तूनामाढकमित्यर्थः । कुतो भवान्पाटलिपुत्रकः । द्वे पाटलिपुत्रे । तत्र कस्मात्पाटलिपुत्राद्भवानागत इत्यर्थः । रोपधेतोःप्राचामिति वुञ् । तथा । नञ्समासा अपि केचित्साधवः । अश्राद्धभोजी ब्राह्मण इति यथा । केचित्तु न साधवः । अकिञ्चित्कुर्वाणमिति यथा । किञ्चिदप्यकुर्वाणमित्यर्थः । अत्रेदमवधेयम् । वाक्ये त्रेधा सामर्थ्यम् । भेदः संसर्गो भेदसंसर्गौ चेति । आद्ये ऽतद्व्यावृत्तिमात्रस्य शाब्दत्वम् । संसर्गस्त्वार्थः । द्वितीये विपरीतम् । तृतीये तूभय शाब्दम् । अलौकिके प्रक्रियावाक्ये तु प्रथममुक्तत्रितयान्यतमावगमेपि वृत्तिः कल्प्यते । परिनिष्ठिते विशेषणसम्बन्धाद्यभावदर्शनात् । यथा

शत्रादौ द्वितीयान्तादिसामानाधिकरण्यं दृष्ट्वा लकारे तत्कल्पनेति । अत एव चित्रग्वादेरन्यपदार्थपरतादर्शनादलौकिके प्रक्रियावाक्येपि तत्कल्पना । अन्यपदार्थे इत्यादिसौत्रानुवादेनैव देवताविग्रहवत्तत्सिद्धेश्चेति दिक् ॥

इति श्रीशब्दकौस्तुभे द्वितीयाध्यायस्य प्रथमे
पादे प्रथममाह्निकम् ॥

सुबामन्त्रिते पराङ्गवत्स्वरे ॥ सुबन्तमामन्त्रिते परे पराङ्गवत्स्यात्स्वरे कर्तव्ये । तन्निमित्तग्रहणं कर्तव्यम् । तस्यामन्त्रितार्थस्य यन्निमित्तं तत्प्रतिपादकं यत्तदेव पराङ्गवत्स्यान्नान्यदित्यर्थः । यत्तेदिवोदुहितर्मर्तभोजनम् । इह दिवःशब्दस्य पराङ्गवद्भावादाष्टमिको निघातः । तन्निमित्तग्रहणान्नेह ॥ एतेनाग्ने ब्रह्मणा वावृधस्व । अयमग्ने जरिता । अनेन मित्रावरुणावृतावृधावृतस्पृशाक्रतुंबृहन्तमाशाथेइति । स्यादेतत् । ऋतशब्दस्तावद् घृतादित्वादन्तोदात्तः । तस्य तन्निमित्तग्रहणात्पराङ्गवद्भावो मा भूत् । किन्तु मित्रावरुणावित्यस्यापि न स्यात् । ऋतस्य वर्द्धयितारावित्यर्थे ऽन्तर्भावितण्यर्थाद्वृधेः क्विपि अन्येषामपिदृश्यतइति पूर्वपदस्य दीर्घे सति हि ऋतावृधाविति व्युत्पादितम् । न च तत्र मित्रावरुणौ निमित्तम् । न च मा भूत्पराङ्गवद्भाव इति वाच्यम् । ऋतावृधावित्यस्य निघातानापत्तेः । द्वितीयपादादित्वेनापादादाविति निषेधात् । अत एव हीमंमे गङ्गइत्यत्र पूर्वपूर्वामन्त्रितस्याविद्यमानवद्भावात्सर्वेषां मेशब्दात्परतामुपजीव्य क्रियमाणोपि निघातो गङ्गइत्यादित्रयस्यैव क्रियते न तु शुतुद्रीत्यस्यापि । अत्राहुर्वेदभाष्यकाराः । तन्निमित्तग्रहणं मास्तु । सूत्रेणैव सकलेष्टसिद्धेरिति । युक्तं चैतत् । तथाहि । व्यपेक्षा सामर्थ्यमेकइति समर्थसूत्रस्थभाष्यरीत्येह सामर्थ्यमुपस्थितम् । एकार्थीभावपक्षे

तु सामर्थ्यस्येहानुवृत्तिः । शब्दाधिकारश्च बोध्य । एतदर्थ एव चास्मिन्प्रदेशे एतत्सूत्रारम्भः । तथा च ऋतेन मित्रावरुणावित्येतयोरानशाथेइत्यर्थकेनाशाथे इत्याख्यातेनान्वयात्परस्परमसामर्थ्येन पराङ्गवद्भावाभावान्न षाष्ठ आद्युदात्तः । किंत्वाष्टमिको निघातः । मित्रावरुणावित्यस्य तु पराङ्गवद्भावादृतादृधाविति न पादादिरतो निहन्यतएव । न च सर्पिःकालकादिसिद्धये इसुसोःसामर्थ्ये इत्यत्र पठितं समानाधिकरणमसमर्थवद्भवतीत्येतदिह प्रवर्त्तते।सर्पिष्पीयतइत्यादिसिद्धये अधात्वभिहितमिति विशेषितत्वात् । इह च धात्वभिहितत्वात् । नन्वेवं शुतुद्रिपदमपि निहन्येत पूर्वस्य सरस्वतिपदस्य पराङ्गवद्भावेनापादादित्वादिति चेन्न । सचेतेत्यनेन सर्वेषामन्वयेपि परस्परमसामर्थ्यात् । उक्तं हि । सम्बोधनपदं यच्च तत्क्रियाया विशेषणमिति ॥ न च गङ्गे इत्यादीनामेकवचनान्तानां सचेतेति बहुवचनान्तेन सामानाधिकरण्याभावात्कथमेकवाक्यता । तथा च कथं निघातोपि । तत्र वार्तिककृता समानवाक्याधिकारस्य कृतत्वादिति वाच्यम् । युष्मद्युपपदइति त्रिसूत्र्यां भाष्यवार्त्तिकयोरेव वचनभेदेपि सामानाधिकरण्यस्य समर्थितत्वात् । प्रत्येकपर्यवसन्नैकत्वमकारकबोधविशेष्येष्वपि मिलितेषु संख्यान्तरान्वये बाधकानिरुक्तेश्च । अहं च त्वं च वृत्रहन्त्संयुज्याव सनिभ्य आ, समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः सचेति वेदलोकयोः प्रचुरप्रयोगाच्च । एतेन चन्द्रे कलङ्कः सुजने दरिद्रतेत्यत्र यशो विधातुः कथयन्ति खण्डितामित्यस्यान्वयाय एते इत्यध्याहरन्तः प्रत्युक्ताः । एवं च सत्यध्याहृतेन एतच्छब्देनापि समं कलङ्कादेरनन्वयापत्तेः । गङ्गइत्यादौ निघातानापत्तेश्चेति दिक् । नन्वेवमपि मित्रावरुणावित्यस्य कथं प-

राङ्गवद्भावः । आमन्त्रितं पूर्वमविद्यमानवदित्यविद्यमानवद्भावादिति चेत्, मैवम् । परस्य हि कार्ये कर्त्तव्ये ऽसावातिदेशो न तु स्वस्य कार्येपि । पूर्वग्रहणवैयर्थ्यापत्तेः । न च पराङ्गवद्भावः परस्य कार्यं किन्तु स्वस्य । अत एव वायो याहि, अग्ने नय, इन्द्र देह्यधिरथमित्यादौ आमन्त्रिताद्युदात्तत्वं भवत्येव। तिङ्ङ ऽतिङ इति निघातः परं न भवति ।। अभ्युपेत्यापि ब्रूमः, प्रकृते मित्रावरुणावित्यामन्त्रितं सामान्यवचनं तद्विशेषणतया विशेषवचनमृतावृधाविति । अतो नामन्त्रितेसमानाधिकरणेसामान्यवचनमिति अविद्यमानवद्भावो निषिध्यतइति । नन्वेवमपि मित्रावरुणपदस्य पराङ्गवद्भावात्पादादित्वेनापादादाविति पर्युदासः स्यादिति चेन्न । न ह्ययं कार्यस्यातिदेशः किन्तु तादात्म्यस्य तस्मिंश्चातिदिष्टे विशिष्टमामन्त्रितमिति बुद्ध्या, यद्यत्कर्तुं शक्यं तत्क्रियते । किं च कार्यातिदेशेप्यशास्त्रीयस्य दौर्लभ्यं किमुत तादात्म्यातिदेशे । सुबिति किम् । पीड्येपीड्यमाना । नन्विह एकार्थीभावविरहात् समर्थपरिभाषानुपस्थितावपि समर्थग्रहणानुवृत्त्या पराङ्गवद्भावो न भविष्यति । एवं च अदुपदेशात्परत्वेनानुदात्तस्येटा उदात्तैनैकादेशे पीड्ये इत्यन्तोदात्तं सिद्धम् । मैवम् । सामर्थ्यस्येहापि सत्त्वात् । पीडयमानसम्बोध्यका पीडेति हि वाक्यार्थः । आह च । सम्बोधनपदं यच्च :तत्क्रियाया विशेषणम् । व्रजानि देवदत्तेति निघातोत्र तथा सतीति ।। समानवाक्ये निघातयुष्मदस्मदादेशाः । आख्यातं सविशेषणं वाक्यम् इति वार्तिककारवचनादिति भावः । अङ्गग्रहणं किम् । उभयोः पृथगाद्युदात्तता मा भूत् । वद्ग्रहणं किम् । स्वाश्रयमपि यथा स्यात् । आम् कुण्डेनाटन् । आमएकान्तरमामन्त्रितमनन्तिकइत्येकान्तरता भवति । स्वरइति किम् । कूपे

सिञ्चन् वर्मनमन् पत्वणत्वे प्रति पराङ्गवद्भावो न भवति। समामाधिकरणस्योपसंख्यानमनन्तरत्वात् । तीक्ष्णया सूच्या सीव्यन् । न च परस्य पराङ्गवद्भावे कृते पूर्वस्यापि सूत्रेणैव सिद्धमिति वाच्यम् । स्वरे इत्यवधारणात् । पराङ्गवद्भावे कर्तव्ये तस्य दुर्लभत्वात् । वस्तुतस्तु स्वरे इति न कर्तव्यम् । कूपे सिञ्चन्नित्यत्र स्वाश्रयपदादित्वसत्वात्सात्पदाद्योरिति निषेधसम्भवात् । णत्वं तु पूर्वपदात्संज्ञायामेवेति नियमान्न भविष्यति । समासाभावेपि पूर्वं पदमिति यौगिकार्थमात्रस्य लक्ष्यानुरोधेन ग्रहीतुं शक्यत्वादिति भाष्यम् । यद्वा। आमन्त्रिते इत्यस्योपस्थितत्वादामन्त्रितत्वयुक्तकार्ये प्रत्येव सन्निधानात् पराङ्गवद्भाव. । तथा च पराङ्गवद्भावे सामानाधिकरण्यस्योपसंख्यानं, स्वरग्रहणं चेत्युभयमपि न कर्तव्यमिति स्थितम् । परमपि छन्दसि पूर्वस्याङ्गवद्भवतीति वक्तव्यम् । आ ते पितर्मरुतां सुम्नमेतु ।। प्रतित्वा दुहितर्दिवः । वृणीष्व दुहितर्दिवः । अव्ययप्रतिषेधश्च । उच्चैरधीयान । अव्ययीभावस्य तु नायं निषेध इत्युक्तम् ॥

प्राक्कडारात्समासः ॥ कडाराः कर्मधारयइत्यतः प्राक् समास इत्यधिक्रियते । प्राग्ग्रहणं चावर्तते । तेन पूर्वं समाससंज्ञा ततः संज्ञान्तरमपीति लभ्यते । तेनाव्ययीभावादिसंज्ञाभिः समावेशः सिध्यति । अन्यथा पर्यायः स्यात् ॥

सहसुपा ॥ इह सहेति योगो विभज्यते । सुबन्तं समर्थेन सह समस्यते । कतिपयतिङन्तमात्रविषयोयं योगः । सुप्सुपेति पुनरारम्भात् । अतोतिप्रसङ्गो नोद्भावनीयः । योजातएव पर्यभूषत् । यः शम्बरं अन्वविन्दत् । योगविभागसिद्धस्यासार्वत्रिकत्वान्नेह । सम्प्रयच्छतृण्णा इन्द्राय भागम् । अत एव नित्यं-

क्रीडेत्यधिकारे उदात्तवता गतिमता च तिङा गतेः समास इति वार्तिककृता यदुक्तं तदिहैव योग विभज्य साधितं भाष्ये । एवमिवेन समास इत्यपि सुप्सुपेत्यनेन सिद्धमित्युक्तम् । युक्तं चैतत् । अन्यथा वार्तिकरीत्या नित्यसमासतापत्तौ यआनयत् आयोनयत् सम्भयच्छेत्यादेरसङ्गततरापत्तेः।जीमूतस्येवेत्यादौ तैत्तिरीयाणां पदद्वयत्वेन पाठासङ्गतिमसङ्गाच्च । अत एवोद्वाहुरिवेत्यादौ व्यस्तव्यवहितमयोगोपि सङ्गच्छते । यथोत्तरम्मुनीनां प्रामाण्यात् । तिङ्समासस्तु छन्दस्येव । अत एव कर्मणायमभिमैतीत्यत्रैकपद्यं नेति हरदत्तः। एतदपि असार्वत्रिकत्वादेव सिद्धम् । युक्तं चेदम् । छान्दसत्वेनैव तत्र सुब्लुको वक्तव्यत्वात् । अन्यथा एकवचनमुत्सर्गतः करिष्यते इति भाष्यात्समासात्तत्पन्नस्य सोः पर्यभूपदित्यादौ हल्ङ्याादिलोपसम्भवेपि यत्मकरोतीत्यादौ श्रवणापत्ते । न च नपुंसकताभ्युपगमेन निर्वाहः । यत्मकुरुते इत्यादौ ह्रस्वापत्तेः । मकुर्वीरन्नित्यत्र नलोपापत्तेश्च । तस्मात्काव्यादौ मभवतीत्यादिमयोगेपूपसर्गः पृथक् पदमेव । वागर्थाविवेत्यादाविवशब्दस्तु समस्तः पृथग्वा । उद्वाहुरिव वामनः कचाचितौ विष्वगिवागजौ गजानित्यादौ पृथगेवेति तत्त्वम् । यत्तु कश्चिदिवेन समासश्छान्दस इत्याह । तन्निर्मूलम् । तैत्तिरीयपृगक्पाठविरुद्ध च । इवसमासे समासगां श्रौतीमुपमामुदाहरतां आलङ्कारिकाणां मतिकूलं च । किञ्च । हरीतकीं भुङ्क्ष्व राजन्मातेव हितकारिणीम् । अद्वैतमप्यनुमवामि करस्थबिल्वतुल्य शरीरमहिनिर्ल्वयनीव वीक्ष्य इत्यादय समस्तमयोगा नह्यस्ति प्रथमान्तेनैवेत्यन्यपदार्थमूत्रस्थभाष्यसम्पन्नाः । अत एव अग्निरिव राजो वायुरिव पाश इत्यादि परिशिष्टोदाहरणमपि सङ्गच्छते इत्यास्तां तावत् । इदं त्वत्रशिष्यते । निह्म-

मासे कृते परमपि तिङ्ङ तिङ इतिनिघातं बाधित्वा सतिशिष्टत्वा-त्समासान्तोदात्तता प्राप्नोति । न चेष्टापत्तिः । पर्यभूषत् त-देवानुभाविशादित्यादौ क्वापि अन्तोदात्तपाठदर्शनात् । अत्रेदं तत्त्वम् । तिङि चोदात्तवतीति गतेर्निघातविधानं ज्ञापकं ति-ङ्समासे अन्तोदात्ताभावस्येति । भाष्यमते तु गतिकारकोपप-दात्कृदिति सूत्रे कृद्ग्रहणस्य मत्याख्यातत्वान्न कश्चिद्दोष इ-ति । इहेदमवधेयम् । सहेति तिङ्समासे सुप्सुपेति विहिते च वागर्थाविव पूर्वं भूतो भूतपूर्व इत्यादौ अव्ययीभावादिविशेषसं-ज्ञा संस्पेव न । तत्तदधिकारेष्वस्यापाठात् । एवं विस्पष्टपटु काकतालीय इत्यादावपि तत्रापि सुप्सुपेत्यस्य प्रवृत्तेः । विस्प-ष्टादीनि गुणवचनेषु समासाचतद्धितयादित्यादयः स्वरछमत्य-यार्थमारभ्यमाणा अपि वृद्धकुमारीवरन्यायेन समाससाधका इत्यस्मिन्नपि पक्षे विशेषसंज्ञाविरहस्तुल्य एव । समासश्चतुर्द्धे-ति तु प्रायोवादमात्रम् । अत एव पठन्ति, कः समास इति प्रश्ने विस्पष्टपटुगोचरे । समासमात्रं ये ब्रूयुर्विस्पष्टपटवो हि ते ॥ इह विस्पष्टमिति पाटवस्य विशेषणम् । एकदेशान्वयस्याप्यत्र स्वीका-रः एवं पूर्वपदार्थप्रधानोऽव्ययीभाव इत्यादि पूर्वाचार्यपरि भाषितम् । यद्यपीह तदीयमहासंज्ञाव्यवहारसामर्थ्यात्स्वी-क्रियते । तथापि तत्सर्वमौत्सर्गिकमेव । अर्द्धपिप्पल्या-देस्तत्पुरुषस्य पूर्वपदार्थप्राधान्यात् । उन्मत्तगङ्गमित्यव्ययी-भावे ऽन्यपदार्थप्राधान्याच्चेति दिक् । यद्यपि 'जहत्स्वा-र्थायां वृत्तौ वर्तिपदयोरानर्थक्यम् । अजहत्स्वार्थायां तूभयोर-पि विशिष्टार्थता । तथापि एकार्थीभावात्पूर्वस्यामवस्थायां यौ पृथक्पदार्थौ तयोर्वृत्तौ प्राधान्याप्राधान्याभ्यां प्रवेशमाश्रित्यो-क्तानामौत्सर्गिकव्यवहाराणां निर्वाहो बोध्यः । षोढा चायं

समासः । तथाहि । सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा । सुबन्तेनेति च प्रोक्तः समासः षड्विधो बुधैः ॥ सुपां सुपा राजपुरुषः । तिङा पर्यभूषत् । नाम्ना कुम्भकारः । धातुना कटप्रूः । अजस्रम् । तिङान्तिङा पिबतखादता । तिङां सुपा । जहिजोड । इह समासे पूर्वपदोत्तरपदपुरस्कारेणायं विभागः तेन मध्यमानामव्यवस्थितत्वेपि अदोषः । एहि रे याहि रे इत्यस्य सुबन्तपूर्वोत्तरपदत्वात् । सर्वेष्वमीषु पूर्वपदस्य पदत्वमव्यभिचारि । अत एव समासग्रहणं नियमार्थमित्ययं ग्रन्थो यत्र पूर्वोभाग पदं तद्विषयकः । तेन बहुपटव इत्यत्र टकाराकारस्योदात्तता सिध्यतीत्यर्थवत्सूत्रे व्युत्पादितम् । इवेन समासो विभक्त्यलोपः ॥ पूर्वपदप्रकृतिस्वरत्वं च ॥ इह उक्तयोगाभ्यां सिद्धं समासमनूद्य विभक्तिलोपाभावस्वरौ विधीयेते । तिङन्तापेक्षया इवशब्दस्य परनिपातस्तु राजदन्तादेराकृतिगणत्वात् । वाससीव वेधसः । जीमूतस्येव भवति । येषां विशिष्य लक्षणं नास्ति ते समासाः सहसुपेत्याभ्यां सिध्यन्तीति स्थितम् ॥

अव्ययीभावः ॥ अधिकारोयम् ॥

अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ॥ अव्ययमिति योगो विभज्यते इति गभीराऽव्यः अव्ययीभावाचेति सूत्रे न्यासकारः । तेन दिशोर्मध्यमपदिशमिति सिद्धम् । शरदादित्वाट्टच् । क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियामित्यमरः ॥ वस्तुतस्तु योगविभागं विनापीष्टसिद्धिरिति सूत्रशेषे वक्ष्यामः । विभक्तिरिह कारकशक्तिः । विभज्यतेनया प्रातिपदिकार्थ इति व्युत्पत्तेः । वचनशब्दः कर्मसा-

धन'। स च प्रत्येकं विभक्त्यादिभिः सामानाधिकरण्येन संबध्यते। पूर्वनिपाताभावः सौत्रः। एष्वर्थेषु द्योतकतया वर्तमानं सुबन्तमव्ययं सुबन्तेन सह एकार्थीभूतं सत् समाससंज्ञं भवत्याततोऽव्ययीभावसंज्ञमित्यर्थः। यद्यपि सुप्सुपेत्येव समासः सिद्धस्तथापि तस्यासार्वत्रिकता पुनः समासविधिभिर्ज्ञाप्यते। अत एव महाविभाषातः प्राक्पाठेपि अव्ययीभाववन्न तस्य नित्यसमासता। तथा च स्वपदविग्रह एव तत्र भवति। तथा च भूतपूर्वेचरडिति सूत्रे वृत्तिः। पूर्वं भूतो भूतपूर्वः। सुप्सुपेति समास' इति। तथा शाकलसूत्रे सिन्नित्यसमासयोः शाकलप्रतिषेध इति नित्यग्रहणेन नार्थः। इदमपि सिद्धं भवति। वाप्यामश्वो वाप्यश्वः नद्यामातिर्नद्यातिरिति भाष्यं कैयटो व्याख्यत्। सुप्सुपेति समासः। संज्ञायामिति हि समासस्य नित्यत्वात्सिद्ध प्रतिषेध इति। तथा ऽनुदात्तं पदमेकवर्जमिति सूत्रे असिद्धवदत्रेति च सूत्रे कैयटेन स्वपदविग्रहो दर्शितः। ननूक्तरीत्या संज्ञायामितितत्पङ्कजादिष्वपि अविग्रहत्वं स्यादिति चेत्। स त्यम्। यौगिकार्थमात्रेण साम्यमाश्रित्य विग्रहकथनेपि पद्मत्वस्य समासैकगम्यतया वस्तुतस्तस्येष्टत्वात्। एतेन कृष्णसर्पलोहितशाल्यादयो व्याख्याताः। प्रकृतमनुसरामः। विभक्तौ, हरौ इत्यधिहरि। येन सुबन्तेन समासस्तद्घटकीभूतैव विभक्तिर्गृह्यते सन्निधानात्। तदर्थद्योतकश्चेह अधिशब्दः। न चैवमलौकिके सप्तम्येव दुर्लभा। निपातेनाधिकरणस्याभिहितत्वात्। तिङ्कृत्तद्धितसमासैरिति परिगणनस्य प्रत्याख्यास्यमानत्वादिति वाच्यम्। अर्थेन चतुर्थीसमासस्थले यथा वचनसामर्थ्यादुक्तार्थस्यापि प्रयोगः तथेह वचनसामर्थ्यादभिहितेपि सप्तमीत्यभ्युपगमात्। अभक्षन्यायेन वचनग्रहणसामर्थ्येन च विभक्त्य-

र्थमात्रवृत्तेरव्ययस्य ग्रहणान्नेह । गृहस्योपरि ग्रामस्य पुरः । उपर्यादयो हि दिग्देशकालेष्वपि वर्तन्ते । न तु विभक्त्यर्थमात्रे । अत एव क्रमादमुं नारद इत्यबोधि स इत्यादौ नातिमसङ्गः । इतिशब्दस्य सर्वनामवत्प्रकृतपरामर्शकत्वेन कर्मत्वमात्रानभिधायकत्वात् । एवञ्च विभक्तिशब्दः सप्तम्यां पर्यवस्यति । अत एव परिशिष्टे अधिकरणे इत्येव सूत्रितम् । पाणिनिस्तु मात्रालाघवमभिमेत्य विभक्तिशब्दं प्रायुङ्क्त । निपातेनाभिहितत्वात् प्रथमान्तेनैवायं समासः षष्ठ्यन्तेन वेत्यपि मतद्वय परिशिष्टे स्थितम् । तदपि विभक्तिग्रहणे अधिकरणग्रहणे चाविशिष्टम् । समीपे, कृष्णस्य समीपमुपकृष्णम् । अव्ययीभावइत्यन्वर्थसञ्ज्ञाश्रयणादसत्त्वरूपाव्ययार्थप्राधान्य एवायं समासः । समीपवर्तिप्राधान्ये तु बहुव्रीहिं वक्ष्यति संख्ययाव्ययासन्नेति । उपदशा इति यथा । ननु समया ग्रामं निकषा लङ्कां आराद्वनादित्यादावतिप्रसंग इति चेत् । अत्राह रक्षितः । अभितः परितः समयानिकषान्यारादितं द्वितीयापञ्चम्योर्विधानसामर्थ्यान्नाव्ययीभाव इति । यत्तूक्तं दुर्घटवृत्तौ । चित्रस्य ग्राम समयेत्यादौ सापेक्षत्वादसमासे चारितार्थ्याद्विभक्तिविधानस्य सामर्थ्यं नास्तीति । तन्न । समासस्य नित्यतया वृत्तस्य विशेषणयोगो नेत्यस्यैव प्रवृत्त्यापत्तेः । अन्यथा स्थूलस्य कुंभस्य कार इत्याद्यपि स्यात् । समृद्धौ तु मद्राणां समृद्धिः सुमद्रम् । उत्तरपदार्थप्राधान्ये तु कुमतीति तत्पुरुष । समृद्धा मद्राः सुमद्रा इति यथा । वृद्धौ दुर्यवनम् । न चार्थाभावेनेह सिद्धिः । येन समस्यते तदीयार्थाभावे हि समासः । इह तु यवनानां नाभाव किं तु तदीयाया वृद्धेः । अर्थाभावे, निर्मक्षिकं अविघ्नम् । संसर्गाभावेयं समासः न त्वन्योन्याभावे-

पि। अर्थग्रहणसामर्थ्येन समस्यमानपदजन्यप्रतीतिविशेष्यविरोधिन एवाभावस्य ग्रहणात्। अन्योन्याभावस्य प्रतियोगितावच्छेदकेनैव सह विरोधात्। तस्य च प्रकारत्वेऽप्यविशेष्यत्वात्। ये तु वदन्ति। घट पटो नेत्यत्रापि पटत्वात्यन्ताभाव एवार्थः। आकृत्यधिकरणन्यायेन जातेः पदार्थत्वादिति तेषामपि मते ऽर्थग्रहणसामर्थ्यादेवाक्षिप्तधर्म्यभावेयं समासो न तु धर्माभाव इति फलं तुल्यमेव। एष एवात्रत्यहरदत्तग्रन्थस्याप्याशयः। एतेन भूतले घटो नेत्यत्र घटाभावं व्याचक्षाणाः परास्ताः। नित्यसमासप्रक्तयसक्तया ऽसाधुतापत्तेः। कारकविभक्तेरयोगाच्च। अत एव सिद्धान्ते क्रियाध्याहारेण कारकविशिष्टक्रियाप्रतीतौ तस्या एव निषेधः शाब्द भूतलाधारकघटाद्यभाव एवार्थः। गौरवं च प्रामाणिकं व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावस्थायम्। अत एव शशशृङ्गं नास्तीत्यत्रापि शब्दसाधुतार्थसाधुता चेष्यतएव। शशशृङ्गास्तित्वञ्च शब्दबलात्प्रतीतं निषिध्यते। अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हीत्यभ्युपगमात्। अयोग्यतानिश्चयस्तु न प्रतिबन्धकः। अन्यथा व्युत्पत्त्यवि शब्दो मूकएव स्यात्प्रतिवादिनः शब्दाद्वाक्यार्थप्रतीतौ तत्खण्डनकथाप्युच्छिद्येत। आहार्यः शाब्दो बोध इति वास्तु। एतेन नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः। न चैनं क्लेदयन्त्यापो न शोषयति मारुत इत्यादि व्याख्यातम्। अन्यथा आत्मकर्मकच्छेददाहक्लेदशोषाप्रसिद्ध्यापार्थतापत्तेरिति दिक्। अत्ययो, हिमस्यात्ययः अतिहिमम्। अत्ययो ध्वंसः। ध्वंसत्वं चाभावत्वव्याप्यमखण्डमेवेत्यर्थाभावान्पृथगुपादानम्। संप्रतीत्यव्ययं अधिकरणशक्तिप्रधानम्। तथा चोक्तममरेण, एतर्हिसम्प्रतीदानीमधुना साम्प्रतं तथेति॥ न जातु अधिकरणकार-

काशिका युज्यतइत्येषा क्रिया निषिध्यते निद्रा इदानीं न युज्यते इत्यतिनिद्रम् । वृत्तौ तु अतितैसृकमाच्छादनमित्युदाहृतम् । तिसृका नाम ग्राम· । तिसृभवि संज्ञायां कन्युपसंख्यानम् । तत्र भवं तैसृकमाच्छादनम् । तच्च विशिष्टकाले उपभोग्यम् । उष्णे शीते वा । तथा च नेदानीमुपभोगार्थं तैसृकमाच्छादनमित्यर्थः । इह वृत्तावुपभोगक्रिया अन्तर्भूता दध्युपसिक्त ओदनो दध्योदन इत्यत्रोपसेको यथा । आच्छादनापेक्षस्यापि तैसृकशब्दस्य गमकत्वात्समास इति हरदत्तः । शब्दप्रादुर्भावे इतिहरि । इतिशब्दः स्वरूपपरः । तस्य प्रकाश इति षष्ठ्यन्तेन विग्रहः । पश्चादर्थे अनुरथ्यम् । रथानां पश्चादित्यर्थः । व्यृद्धिशब्दस्याल्पाच्तरस्यापूर्वनिपातेनास्यानित्यत्वज्ञापनादिह वाक्यस्य साधुतेत्याहु· । समीपादिवृत्तिभिरतद्धितान्तै· साहचर्यात्तथाविधस्यैवेह ग्रहणम् । ततः पश्चात्स्रंस्यते ध्वंस्यतेचेति भाष्याच्च । अनेकमन्यपदार्थे इति सूत्रे सर्वपश्चादिति भाष्यप्रयोगाच्चेति तु तत्त्वम् । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । अनुरूपम् । रूपस्य योग्यमित्यर्थः । वीप्सायां· प्रत्यर्थम् । अर्थमर्थं प्रतीत्यर्थ· । इह वाक्यमपि साधु । न ह्यत्राव्यय वीप्सावृत्ति । किं तु कर्मप्रवचनीयत्वात्सम्बन्धमवच्छिनत्ति वीप्सा तु द्विर्वचनेन प्रोक्ता । यद्वा । प्रतिशब्दस्य वीप्सार्थे कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्तद्योगे द्वितीयागर्भं वाक्यमपि भविष्यति । यथाशक्ति । शक्तिमनतिक्रम्येत्यर्थः । हरेः सादृश्यं सहरि । अनुपूर्वस्याभाव आनुपूर्व्यम् । ब्राह्मणादित्वात् ष्यञ् । ष्यञ· षित्करणात् स्त्रियामपि प्रयुज्यते । अनुज्येष्ठं ज्येष्ठानुपूर्व्येणेत्यर्थः । यौगपद्ये सचक्रम् । सहशब्दस्य समासः । अव्ययीभावेचाकाले इति सभावः । एवमग्रेपि ।

सादृश्ये, सदृशः सख्या ससखि । वृत्तौ तु सकिखी-त्युदाहृतम् । अपचितपरिमाणा शृगाली किखी । यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेपि सादृश्ये यथा स्यादित्येवमर्थम् । सदृशः सख्या ससखीत्यत्र हि सादृश्यवतः प्राधान्यम् । तेनाव्ययार्थप्राधान्याभावात्समृद्धा मद्राः सुमद्रा इत्यत्रेवाव्ययीभावो न स्यात् । संपत्तिरनुरूप आत्मभावः । सब्रह्मगर्गाणां तेषामनुरूपो ब्रह्मभाव इत्यर्थ. । साकल्ये, सतृणमभ्यवहरति । न किञ्चित्परित्यजतीत्यर्थः । न त्वत्र तृणभक्षणे तात्पर्यम् । अन्तवचने, साग्न्यधीते । अग्न्यादयः शब्दास्तदर्थे ग्रन्थे वर्तन्ते । तदानीं परिगृहीतस्य प्रदेशस्याग्न्यादिरन्तो न तु तत परेणाध्ययनं नास्तीति । अतः साकल्यात्पृथगन्तग्रहणम् । अग्नेरन्तत्वमिति षष्ठ्यन्तेनास्वपदविग्रहः । इह वचनशब्दोतिरिच्यते । तेन द्वन्द्वसाकल्यात्पृथगन्तग्रहणमाश्रित्य योगविभागफलीभूतमपादिशमित्यादि सुसाधमिति तु निष्कर्षः ॥

यथासादृश्ये ॥ पूर्वेण सिद्धे सादृश्यनिरासायेदम् । यथेत्येतदसादृश्यएव समस्यते । न तु सादृश्यइत्यर्थः । तेनेह न । यथा हरिस्तथा हरः । हरेरुपमानत्व यथाशब्दो द्योतयति । तत्र सादृश्यइति वा यथार्थइति वा पूर्वेण प्राप्तं निषिध्यते ॥

यावदवधारणे ॥ इयता परिच्छेदे वर्तमानं यावदित्येदव्ययं सुपा सह समस्यते सोव्ययीभावः । यावदमत्रं ब्राह्मणानामन्त्रयस्व । यावदित्यव्ययस्य नित्यसमासेपि तद्धितान्तेनानव्ययेन स्वपदविग्रहः । यावन्त्यमत्राणीति । अवधारणे किम् । यावद्दत्तं तावद्भुक्तम् । कियद् भुक्तमिति नावधारयामीत्यर्थ ॥

सुप्प्रतिना मात्रार्थे ॥ मात्रा बिन्दुः स्तोकमित्यल्पपर्यायाः ।

मात्रार्थे वर्त्तमानेन प्रतिना सह सुबन्तं समस्यते सोऽव्ययीभावः। शाकस्य लेशः शाकप्रति। सूपप्रति। मात्रार्थे किम्। वृक्षं प्रति विद्योतते विद्युत्। सुप्ग्रहणमव्ययाधिकारनिवृत्त्यर्थम्। अन्यथा हि दोषामन्यमहर्दिवामन्या रात्रिरिति वृत्तिविषये सत्वप्रधानतादर्शनात्तादृशाव्ययान्येव मात्रार्थे प्रतिना समस्येरन्निति भावः॥

अक्षशलाकासंख्याः परिणा॥ एताः परिणा समस्यन्ते सोऽव्ययीभावः। द्यूतकारव्यवहारे चायं समास इष्यते। पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति। तत्र यदि सर्वे उत्तानाः पतन्त्यवाञ्चो वा तदा पातयिता जयत्यन्यथा तु जीयते। तत्र पराजयएवायं समासः। अक्षेण विपरीतं वृत्तं अक्षपरि। शलाकापरि एकपरि। द्विपरि। त्रिपरि। परमेण चतुःपरि। पञ्चसु त्वेकरूपेषु जय एव भविष्यति। अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत्॥ किं तव व्यवहारे स्यादेकत्वेक्षशलाकयोः॥ परमेणेत्यादेर्वृत्तिग्रन्थस्यायमर्थः। परमेण अतिशयेनान्यतः परं पञ्चपरीति न भवतीति यावत्। अस्योपपादनाय श्लोकः पञ्चस्विति एकरूपेष्विति। पुमान्स्त्रियेत्येकशेषः। तृतीयान्ता इति। कर्तृत्वादिति भावः। पूर्वं परिभाषितस्य यथा एकरूपं वर्त्तनं सम्प्रति यदि तन्नेत्यर्थः। विपरीतवर्तने परिणा द्योत्ये समास इति यावत्। एकत्वइति। अन्यथा राजपुरुष इत्यादाविवाभेदैकत्वमवगम्येत न तु शुद्धमेकत्वम्। प्रकरणादिना द्वित्वाद्यवगमे च प्रसज्येत। भवद्भिरामवसरप्रदानाय वचांसि न इत्यादाविवेति भाव॥

विभाषा॥ अधिकारोयम्॥

अपपरिबहिरञ्चवः पञ्चम्या॥ एते पञ्चम्या वा समस्यन्ते

सोऽव्ययीभावः। अपहरि संसारः अपहरेः । परिहरि परिहरेः। वहिर्ग्रामम् वहिर्ग्रामात् । प्राग्ग्रामम् प्राग्ग्रामात् । इहापपरी परस्परसाहचर्याद्वर्जनार्थौ । तौ च कर्मप्रवचनीयौ । अपपरी वर्जनइति । तद्योगे पञ्चम्यैव भाव्यम् । पञ्चम्यपाङ् परिभिरिति । अञ्चतिरप्यपपरिसाहचर्यादव्ययमेव गृह्यते तद्योगेप्यञ्चूत्तरपदलक्षणया पञ्चम्या भाव्यम् । इत्थंस्थिते पञ्चम्येति ज्ञापनार्थं वहिर्योगे षष्ठ्यर्थे पञ्चमी भवतीत्यस्य ॥

आङ् मर्यादाभिविध्योः ॥ एतयोराङ् पञ्चम्यन्तेन वा समस्यते सोऽव्ययीभावः । आमुक्ति आमुक्तेर्वा संसारः । आवालं हरिभक्ति आवालेभ्य । इह मर्यादाभिविध्योरिति शक्यमकर्तुम् । कर्मप्रवचनीयेनैव ह्याङा योगे पञ्चमी विहिता कर्मप्रवचनीयता च एतयोरेवार्थयोः आङ्मर्यादावचनइति । तत्र हि वचनग्रहणं मर्यादोक्तिमात्रे यथा स्यादित्येवमर्थम् । अस्तु वा तत्रैवाभिविधिग्रहणम् ॥

लक्षणेनाभिप्रती आभिमुख्ये ॥ आभिमुख्यद्योतकावभिप्रती चिन्हवाचिना सह वा प्राग्वत् । अभ्यग्नि शलभाः पतन्ति । प्रत्यग्नि अग्निमभि । अग्निं प्रतीति विग्रहः । अभिरभागे लक्षणेत्थंभूतेति चाभिप्रत्योः कर्मप्रवचनीयत्वाद् द्वितीया । इहाभिप्रती लक्ष्यलक्षणभावमाभिमुख्यं चेत्युभयं द्योतयतः । लक्षणेन किम् । स्रुघ्नं प्रतिगतः । स्रुघ्नादागतस्तमेव प्रतिनिवृत्त इत्यर्थः । अत्र स्रुघ्नः कर्मीभूतो न तु लक्षणम् । अभिप्रती किम् । येनाग्निस्तेन गतः येन देशेनाग्निर्गतस्तेन गत इति प्रतीतेर्भवति गमनस्याग्निर्लक्षणम् । आभिमुख्यमप्यस्तीति येनतेनशब्दयोरग्निशब्देन सह समासः स्यात् । आभिमुख्यइति किम् । अ-

भ्यङ्गाः गावः प्रत्यङ्गाः । अभिनव प्रतिनवञ्चाङ्क आसामिति वहुव्रीहिः । अङ्कोत्र भवति गवां लक्षणम् । आभिमुख्यं तु नास्ति । नन्वव्ययार्थप्राधान्ये ऽव्ययीभाव इत्युत्सर्ग इत्युक्तम्।। तत्कथमिह प्रसङ्गः । सत्यम् । इह प्रकरणे बहुव्रीहिविषयेप्यव्ययीभावो भवतीति ज्ञापनार्थमिदम् । तेन संख्यावंशेन, द्विमुनि व्याकरणमित्यादि सिद्धम् ॥

अनुर्यत्समया ॥ यं पदार्थं समया तेन लक्षणभूतेनानुः समस्यते सोऽव्ययीभावः । सूत्रे तु यदिति समान्ये नपुंसकम् । अनुवनमशनिर्गतः । वनस्यानु । वनस्य समीपं गत इत्यर्थः । अनुरिति किम् । वनं समया । यत्समयेति किम् । वृक्षमनु विद्योतते विद्युत् । अव्यय विभक्तीत्येव सिद्धे विभाषार्थं सूत्रम् ॥

यस्य चायामः ॥ यस्यायामोनुना द्योत्यस्तेन लक्षणभूतेनानुः समस्यते सोऽव्ययीभावः । आयामो दैर्घ्यम् । अनुगङ्गं वाराणसी । गङ्गाया अनु । इहायामो लक्षणत्वं चानुना द्योत्यते । लक्ष्यं तु समासार्थः । अत एव वाराणस्या सामानाधिकरण्यम् । गङ्गाया यद्दैर्घ्यं तदुपलक्षितेत्यर्थात् । गङ्गा च दैर्घ्यद्वारोपलक्षणम् । तेन गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षिता काशी उदीर्यतीति फलितोर्थः ॥

तिष्ठद्गुप्रभृतीनि च ॥ एतानि निपात्यन्ते । तिष्ठन्ति गावो यस्मिन् कालविशेषे स तिष्ठद्गु दोहनकालः । चकार एवकारार्थे । तेनैषां वृत्त्यन्तरं न भवति । परमतिष्ठद्गु इत्यादि न भवतीत्यर्थः । कथं तर्हि आतिष्ठद्गु जपन् सन्ध्यां पश्चिमामायतीग वमिति भट्टिरिति चेत्, अव्ययीभावविलक्षण समासान्तर व्यावर्त्यते । आङ्मर्यादाभिविध्योरितीहाव्ययीभावस्तु

भवत्येवेति जयमङ्गला। इदं चायतीगवमित्येतदनुरोधेनावश्यं वाच्यम्। आतिष्ठद्गु इत्यत्र तु पृथक्पदत्वं पञ्चम्याश्च लुगित्यपि सुवचम्। नाव्ययीभावादत इति निषेधादमृत्वपञ्चम्या इत्युक्तेश्चायतीगवादिति केचित्पेठुः। खलेयवादीनि प्रथमान्तानि। प्रातिपदिकार्थमात्रे एषां प्रयोगो नान्यत्रेत्यर्थः। तिष्ठद्गु वहद्गु। शत्रादेशो निपातनात्। गोस्त्रियोरिति ह्रस्वः। आयतीगवम्। इह शत्रादेशः पुंवद्भावाभावः समासान्तश्च निपात्यते। खलेयवं खलेबुसम्। सप्तम्या अलुक्। लूनं यवम्। लूयमानयवम्। लूयमानबुसम्। संह्रियमाणबुसम्। एते कालशब्दाः। समभूमि समपदाति। समत्वं भूमेरिति पूर्वपदार्थप्राधान्ये ऽव्ययीभावः। सम्म्भूमि सम्म्पदातीति पाठान्तरम्। तत्र पूर्वपदस्य मुमागमः। सम्भूमि संपदातीत्यपरः पाठः। तत्र समस्यान्तलोपः। संशब्देन वा समासः। सुषमं विषमं दुःषमं निःषमम्। अपसमम्। इह समस्य शोभनत्वं विगतत्वं निर्गतत्वमपगतत्वं चेति विग्रहः। आयतीसमा आयतीसमम्। शत्रादेशः पूर्ववत्। पुंवद्भावाभावश्च। समा संवत्सरः। एवं पापसमम्। पुण्यसमम्। प्राह्णम्। प्रमृगम्। प्रस्थम्। प्रदक्षिणम्। एषु चतुर्षु प्रगतत्वमन्ह इत्यादिविग्रहः। सङ्गतत्वं प्राति गतस्य सम्प्राति विपरीतमसम्प्राति। इच् कर्मव्यतिहारे। दण्डादण्डि। अयमेव द्विदण्ड्यादिष्वपि विधीयतइति तत्राप्यव्ययीभावत्वं बोध्यम्॥

पारेमध्ये षष्ठ्या वा॥ पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते सोऽव्ययीभावः। एदन्तत्वं चानयोर्निपात्यते। पक्षे षष्ठीतत्पुरुषः। महाविभाषया ह्येकार्थीभावस्य पाक्षिकतामात्रं लभ्यते सति त्वेकार्थीभावे ऽव्ययीभावस्तत्पुरुषं बाधेत॥ अतः पाक्षिकं तत्पुरुषं लब्धुमिह पुनर्वाग्रहणम्। व्यपेक्षां सा-

मर्थमेकइति पक्षे तु यत्रोत्सर्गापवादं महाविभापया विकल्प्यते तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्त्ततइति ज्ञापनार्थेदम् । एवं उदश्वितोन्यतरस्यामित्यपि । तेन पूर्वं कायस्येत्येकदेशिसमासेन युक्ते षष्ठीसमासो न भवति । दक्षस्यापत्यं दाक्षिरितीञा युक्ते ऽण् न भवति किं तूभयत्र वाक्यमेव । एकारान्तत्वनिपातनं तु यत्र सप्तम्यर्थो न सम्भवति तदर्थम् । पारेगङ्गान्मध्येगङ्गादानयेति यथा । सप्तम्यर्थसम्भवे तु तत्पुरुषे कृति बहुलमिति बहुलग्रहणादलुक्यपि सिद्धम् ॥

संख्या वंश्येन ॥ वंशो द्विधा । विद्यया जन्मना च । तत्र भवो वंश्यः । तद्वाचिना सह संख्या वा समस्यते सोऽव्ययीभावः । द्वौ मुनी पाणिनिकात्यायनौ वंश्यौ द्विमुनि । व्याकरणस्य त्रिमुनि । जन्मना यथा । एकविंशति भारद्वाजम् । कथं तर्हि त्रिमुनि व्याकरणमिति सामानाधिकरण्यमिति चेत् । विद्यया सह तद्वतामभेदोपचारादिति वृत्तिकाराः । लक्षणेनाभिप्रतीति सूत्रे आभिमुख्यग्रहणादेव तत्सिद्धमिति तु प्रागेवोक्तम् ॥

नदीभिश्च ॥ नदीभिः संख्या प्राग्वत् ॥ समाहारे चायमिष्यते । सप्तगङ्गम् । द्वियमुनम् । स्वरूपस्य संज्ञा । नद्याश्च नेह ग्रहणम् । बहुवचननिर्देशात् ॥

अन्यपदार्थे च संज्ञायाम् ॥ अन्यपदार्थे विद्यमानं सुबन्तं नदीभिः सह नित्यं समस्यते सञ्ज्ञायां सोऽव्ययीभावः । विभाषाधिकारेपि वाक्येन सञ्ज्ञानवगमादिह नित्यसमासतेति वृत्तिः । शाकलसूत्रे कैयटस्वरसोऽप्येवम् । न चैवं न्यायसाम्याद्बहुव्रीहेरपि नित्यतापत्तिः । चित्रा यष्टीः मैत्रेयेत्यत्र वाक्येपि यष्टिधरमतीतेरिति दिक् । उन्मत्तगङ्गं नाम देश । लोहितगङ्गम् । तूष्णींगङ्गम् । शनैर्गङ्गम् । अन्यपदार्थे किम् । कृष्णे...

किम् । शीघ्रगङ्गो देश ॥

तत्पुरुषः ॥ अधिकारोयम् । प्राग्बहुव्रीहे ॥

द्विगुश्च ॥ द्विगुरपि तत्पुरुषसञ्ज्ञः स्यात् । संख्यापूर्वो द्विगुश्चेति चकारपाठमात्रेण संज्ञासमावेशसिद्धेरिदं सूत्रं व्यर्थम् । द्विगोस्तत्पुरुषत्वे टजचौ प्रयोजनम् । पञ्चराजम । राजाहःसखिभ्य इति टच् । उत्तरपदस्यानकारान्तत्वात् स्त्रीत्वाभावः । समासार्थोत्तरपदान्ताः समासान्ता इति पक्षे तु पात्रादित्वं बोध्यम् । वृत्तौ तु पञ्चराजीति क्वाचित्कोपपाद्यः । द्व्यह । अन्हष्टखोरेवेति टिलोपः । रात्रान्हाहाः पुंसि । पञ्चगवम् । गोरतद्धितलुकीति टच् । प्राग्वत् स्त्रीत्वाभाव । द्व्यङ्गुलम् । तत्पुरुषस्यांगुलेःसंख्याव्ययादेरित्यच् ॥

द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह समस्यते स तत्पुरुष । कृष्णं श्रितः कृष्णश्रित । दुःखमतीतो दु खातीतः । कूपपतितः । अत एव निपातनादिट् । अन्यथा तनिपतीतिविकल्पितेट्कत्वाद्यस्यविभाषेति निषेधः स्यात् । यद्वा कृतीप्रभृतीनां सेसिचीत्यादि नेडभिकल्पात्रिष्ठायामनिट्कत्वे सिद्धे इदित्करणं यस्यविभाषेत्य स्यानित्यतां ज्ञापयति । अत एव धावितमिभराजधियेत्यादि सिध्यति । ग्रामगतः । तुहिनात्यस्तः । सुखप्राप्तः । सुखाप न्नः । इह श्रितादिषु गत्यर्थत्वात्कर्त्तरि क्तः । अत्यासो व्यतिक्रमो गतिविशेष एव । प्राप्तिरपीह गतिरेव न तु फलम् । एव मापत्तिरपि । यद्वा । श्रित इत्यादावादिकर्मणि क्त । स्यादेतत् । कर्मणि क्तान्तेन सह तृतीयार्थे बहुव्रीहिणापि कृष्णाश्रितादिरूपसिद्धौ किमनेन सूत्रेण कृष्णकर्मकश्रयणकर्तेति बोधस्योभयत्राविशेषात् । ननु कर्मणि क्त इति पक्षे प्रत्ययार्थः कर्म श्रयण

प्रति विशेष्यं स्यादिति चेन्न । विशेषणविशेष्यभावव्यत्यासेनैव बहुव्रीहिस्थले एकार्थीभावोवश्याभ्युपेय इत्यकथितसूत्रएवोक्तत्वात् । एतत्सूत्रे भाष्ये तथैवोक्तत्वाच्च । न च स्वरे भेदः । तत्पुरुषेपि हि श्रितपतितगतेभ्यः पूर्वपदं प्रकृतिस्वरं भवति । अहीने द्वितीयेति वचनात् । अतीतादिभिस्तु स्वरसिद्धये विधीयतां तत्पुरुषः । तथाहि । तैस्तत्पुरुषे थाथादिस्वरेण भाव्यम् । न त्वहीनस्वरेण । अतीतात्यस्तयोरहीनइति निषेधात् । प्राप्तापन्नयोस्त्वहीने द्वितीयानुपसर्गे इति वचनात् । बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण भाव्यमिति । तस्माच्छ्रितपतितगतैः समासो न विधेयः । एवं चाहीने द्वितीयेति सूत्रमपि मास्त्विति महदेव लाघवम् । नन्वेवं जात्यादिभ्यः परेषु श्रितादिषु स्वरे दोषः स्यादेव । जातिकालसुखादिभ्योनाच्छादनात्, क्तोकृतमितप्रतिपन्ना इत्यन्तोदात्तप्रसङ्गात् । तत्पुरुषारम्भपक्षे हि बहुव्रीहेरन्तोदात्तता तत्पुरुषस्य पूर्वपदप्रकृतिस्वरश्चेति द्वैस्वर्यं सिद्ध्यति । प्रत्याख्यानपक्षे त्वन्तोदात्त एवेति वैषम्यादिति चेन्न । बहुव्रीहावेव द्वैस्वर्यस्य सुसाधत्वात् । तथाहि । वाजातइत्यत्र वाजातश्रितपतितगतोष्विति वक्तव्यम् । न चैवं लाघवे विशेषो नेति वाच्यम् । अहीनेद्वितीयेत्यस्यानारम्भेण लाघवस्य स्पष्टत्वात् । एतावांस्तु विशेषः । तव समासद्वये द्वैस्वर्यं मम तु बहुव्रीहिणैव द्वैस्वर्यमिति । अत्राहुः । बहुव्रीहिणा कृष्णश्रित इत्यादि न सिध्यति निष्ठेति पूर्वनिपातप्रसङ्गात् । जातिकालसुखादिभ्यो हि निष्ठायाः परनिपात उपसंख्यातो न तु जात्यादिभ्योन्यत्रापि । किञ्च जात्यादावपि रूपं भिद्येत् । पूर्वपदप्रकृतिस्वरपक्षेपि पाक्षिकशैषिककप्प्रसङ्गात् । त्वया बहुव्रीहावेव द्वैस्वर्यस्य सूत्रितत्वात् । सिद्धान्ते तु तत्पुरुषे ऽहीने द्वि-

तीयेति स्वरोस्ति न तु कप् । बहुव्रीहौ तु कबस्ति न तु पूर्वपदस्वरः । तथा चोक्तस्वरकपौ न क्वापि समाविशतः । तस्माद्यथान्यासमेवास्तु । गौरवं च प्रामाणिकमिति स्थितम् । गमिगाम्यादीनामुपसंख्यानम् । ग्रामं गमी ग्रामगमी गमेरिनिरित्यौणादिक इनिः । स च भविष्यत्काले भविष्यति गम्यादय इत्युक्तेः । यस्तु आङिचर्षीर्दतीनिः सोपि गम्यादिपाठाद्भविष्यति । णित्वाद्वृद्धिः । आगामी । बाहुलकात्केवलादपि । तेन गामीति माधवः । ग्रामं गामी । ग्रामगामी । अकेनोर्भविष्यदाधमर्ण्ययोरिति कृद्योगलक्षणषष्ठीनिषेधात् कर्मणि द्वितीया । केचित्तु आवश्यके णिनिः । अभाविष्यदर्थत्वेपि गत्यर्थकर्मणीत्यत्र द्वितीयाग्रहणमपवादविषयेपि विधानार्थमिति कृत्प्रयोगेपि द्वितीयैवेत्याहुः । तत्तु भाष्यविरुद्धम् । भाष्ये गत्यर्थसूत्रस्य प्रत्याख्याततया कृद्योगे षष्ठ्या एव स्वीकारात् । एतेन तथाविदूराद्रिरदूरताङ्गमी । यया स गामी तव कोलिशैलतामिति श्रीहर्षप्रयोगो व्याख्यातः । अत्र बुभुक्षुरन्नबुभुक्षुरित्यादि ॥

स्वयं क्तेन ॥ स्वयमित्येतत्सुबन्तं क्तान्तप्रकृतिकेन सुबन्तेन समस्यते स तत्पुरुषः । ऐकपद्यं समासप्रयोजनम् । तेनाप्येकान्तरमिति निघातनिषेधः । स्वायंकृतिरिति तद्धितश्च सिध्यति । द्वितीयाग्रहणं तूत्तरार्थतयानुवृत्तमपि नेह सम्बध्यते । स्वयमित्यस्यात्मनेत्यर्थकस्य कर्त्रर्थकतया द्वितीयान्तत्वानुपपत्तेः ॥

खट्वा क्षेपे ॥ खट्वाप्रकृतिकं द्वितीयान्तं क्तान्तप्रकृतिकेन सुबन्तेन समस्यते निन्दायाम् । खट्वारूढो जाल्मः । जाल्मोसमीक्ष्यकारी स्यादित्यमरः । वेदं व्रतानि च समाप्य समावृत्तेन हि खट्वारोढव्या । ब्रह्मचर्यएव भूमिशयनार्होपि यः खट्वामारोहति स जाल्मः । रूढत्वापम् । तेन खट्वामारोढुमा या नि-

पिद्धानुष्ठानपरः सर्वोपि खट्वारूढ उच्यते । अत एव विभाषाधिकारेपि नित्यसमासोयम् । न हि वाक्येन निन्दा गम्यतइति वृत्तिकृतः ॥

सामि ॥ सामीत्येतदव्ययमर्द्धशब्दपर्यायः । तस्यासत्ववाचित्वाद् द्वितीयया नास्ति सम्बन्धः । तत्सुबन्तं क्तान्तेन वा समस्यते स तत्पुरुषः । सामिकृतम् ॥

कालाः ॥ कालवाचिनो द्वितीयान्ताः क्तेन सह प्राग्वत् । अनत्यन्तसंयोगार्थं वचनम् । मासप्रमित प्रतिपच्चन्द्रः । माङ् माने आदिकर्मणि कर्तरि क्त । मासं परिच्छेतुमारब्धवानित्यर्थ । इह प्रतिपच्चन्द्रेण नास्त्यत्यन्तसंयोगः ॥

अत्यन्तसंयोगे च ॥ अक्तान्तार्थं वचनम् । कालवाचिनः शब्दाः द्वितीयान्ताः अत्यन्तसंयोगे सुपा सह प्राग्वत् । मुहूर्तं सुखं मुहूर्तसुखम् । मुहूर्तमपापीत्यर्थः । कालाध्वनोरत्यन्तसंयोगइति द्वितीया ॥

तृतीया तत्कृतार्थेन गुणवचनेन ॥ तत्कृतेति पृथक् लुप्ततृतीयाकम् । तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेन अर्थशब्देन च सह समस्यते स तत्पुरुषः । तच्छब्देन तृतीयान्तपरामर्शिना तदर्थो लक्ष्यते । तदर्थकृतत्वं च गुणवचनस्यार्थद्वारकं विशेषणम् । तथा च तृतीयान्तार्थकृतो यो गुणस्तद्वचनेनेति फलितोर्थः शंकुलया खंडः शकुलाखंडः । किरिणा काणः किरिकाण । खडिभेदने, कणनिमीलने आभ्यां घञि व्युत्पादितावेतौ क्रियारूपापन्ने गुणे वर्तित्वा पश्चान्मतुब्लोपादभेदोपचाराद्वा तद्वति द्रव्ये वर्तेते इति गुणवचनौ भवतः । धान्येनार्थो धान्यार्थः । अर्थ्यतइत्यर्थ, प्रयोजनम् । अर्थनं वा अर्थः, प्रार्थना । अभिलापः । सर्वत्र करणे तृतीयायाः समासः । तत्-

कृतेनेति किम् । अक्ष्णा काणः । किञ्च यत्र शष्कुलाखण्डादौ पूर्वोत्तरपदार्थयोः क्रियाकारकभावः सम्बन्धस्तत्र चरितार्थं वचनं यथा दध्ना भुङ्क्ते पटुरित्यादौ न भवति । असामर्थ्यात् । तथेहापि न स्यात् । दध्ना पटुः कुङ्कुमेन लोहितं मुखमिति । इह हि गम्यमानया करोतिक्रियया करणस्य सम्बन्धः । तस्माद्यत्रोत्तरपदे क्रिया न गम्यते तत्रापि तत्कृतत्वे सति यथा स्यात् भोजनादिद्वारके सामर्थ्ये मा भूदिति तत्कृतग्रहणम् । गुणवचनेनेति किम् । गोभिर्वपावान् । गोसम्बन्धिदध्यादिभोजनाद्देवदत्तस्य वपावत्त्वं पविरन्वास्त्यिति तत्कृतत्व न त्वसौ गुणवचनः । वचनग्रहणं किम् । यावता अर्थेन समासासम्भवात्तद्वाची ग्रहीष्यते । अत्राहुः । गुणमुक्तवान् गुणवचनः । कृत्यल्युटोबहुलमिति भूते कर्तरि ल्युट् । गुणमुक्तवता सम्प्रति गुणोपसर्जनद्रव्यवाचिनेत्यर्थ । तेन घृतेन पाटवमिति गुणमात्रनिष्ठेन न भवतीति । गुणश्चात्र सत्त्वे निविशतेपैतीतिवक्ष्यमाणो गृह्यते ॥

पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः । एतैः सह तृतीयान्तं प्राग्वत् । अस्मादेव वचनात्पूर्वादियोगे तृतीया । हेतौ वा द्रष्टव्या । मासेन पूर्वः मासपूर्वः । मात्रा सदृशः मातृसदृशः । मातृसमः । इह समसदृशाभ्यां योगे तुल्यार्थैरिति तृतीया । स्यादेतत् । तुल्यार्थयोगे पक्षे षष्ठ्यप्यस्ति । ततः षष्ठीसमासेनैव सिद्धे किमिह सदृशग्रहणेन । न च तत्पुरुषेतुल्यार्थतृतीयेतिपूर्वपदप्रकृतिस्वरार्थं तत् । सदृशप्रतिरूपयोः सादृश्यइति तत्सिद्धेः । न च तत्र सदृशग्रहणमेव मास्त्विति वाच्यम् । षष्ठीसमासपक्षे अन्तोदात्तत्वं वारयितुं तत्स्वीकारावश्यम्भावात् । न चानभिधानात्षष्ठीसमास एव मास्त्विति वाच्यम् । दास्याः

सदृश इति रूपासिद्धिप्रसङ्गात् । इह हि षष्ठ्या आक्रोश इत्य-लुक्समासः स्वीकृतो भाष्ये । नन्वेवमपि हेतुतृतीयान्तेन समासार्थं प्रकृते सदृशग्रहणमस्तु । विद्यया हेतुना सदृशो विद्यासदृश इति नह्यत्र तुल्यार्थैरिति षष्ठी लभ्यते । प्रतियोगिन्येव तद्विधानादिति चेत् । न । तत्कृतत्वात्पूर्वेणैव सिद्धेः । यो हि विद्यया सदृशः तस्य विद्याकृतं सादृश्यमस्तीति । सत्यम् । प्रत्याख्यातमेवेदं षष्ठे वार्तिककृता । ऊनार्थे माषोनं कार्षापणम् । माषविकलम् । पूर्वसूत्रे अर्थशब्देन समासस्य साधितत्वादिह अर्थग्रहणमभिधेयनिर्देशार्थम् । तच्च ऊनशब्देनैव सम्बध्यते न तु पूर्वादिभिः । अत एव समसदृशौ पृथगुपात्तौ । वाक्कलहः । आचारनिपुणः । गुडमिश्रः । आचारश्लक्ष्णः । मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम् । गुडसंमिश्रा धानाः । मिश्रंचानुपसर्गमसन्धावित्यत्र अनुपसर्गग्रहणाज् ज्ञापकादेतत् सिद्धम् । अवरस्योपसंख्यानम् ॥ समासेनावरो मासावरः ॥

कर्तृकरणे कृता बहुलम् ॥ कर्तरि करणे च तृतीया कृदन्तेन सह बहुलं प्राग्वत् । हरिणा त्रातो हरित्रातः । नखैर्भिन्नो नखभिन्नः । कृद्ग्रहणे गतिपूर्वस्यापि ग्रहणान्नखनिर्भिन्नः । कर्तृकरणे किम् । भिक्षाभिरुषितः । हेतावियं तृतीया । बहुलग्रहणाच्छतृशानचक्त्वतुमभृतिभिर्न । हस्तेन कुर्वन् भुञ्जानः कृतवान्वा । क्वचिद्विभक्त्यन्तरमपि समस्यते बहुलग्रहणादेव । पादहारकः । ह्रियतइति हारकः । बाहुलकात्कर्मणि ण्वुल् । पादाभ्यामित्यपादानपञ्चम्यन्तस्य समासः । गलेचोपकः । चुप मन्दायां गतौ । हेतुमण्णिजन्तात्कर्तरि ण्वुल् । गलेचोपकः । अमूर्धमस्तकादित्यलुक् । कृतेति किम् । काष्ठैः पचतितराम् ॥

कृत्यैरधिकार्थवचने ॥ स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचम् । तत्र कर्तरि करणे च तृतीया कृत्यैः सह प्राग्वत् । पूर्वसूत्रस्यैव प्रपञ्चोयम् । काकपेया नदी । शक्यार्थे कृत्यः । पूर्णतोयत्वात्तटस्थैरपि पातुं शक्येति स्तुतिः । काकैरप्येषा पातुं शक्या ऽल्पतोयत्वादिति निन्दा वा ॥

अन्नेन व्यञ्जनम् । संस्कारद्रव्यं संस्कार्येण सह प्राग्वत् । दध्ना उपसिक्त ओदनो दध्योदनः । इह वृत्तावुपसेकक्रियान्तर्भवति स्वभावात् अतो नासामर्थ्यम् । न च कारकाणां परस्परमसम्बन्धेपि वचनसामर्थ्यादसमर्थसमास एवात्रास्तु इति वाच्यम् । किन्दध्ना ओदनो भुज्यतामित्यादावतिप्रसङ्गात् ।

भक्ष्येण मिश्रीकरणम् ॥ खरविशदमभ्यवहार्यं भक्ष्यम् । खरं कठिनम् । विशदं विभक्तावयवं यत्प्रत्ययान्तस्य एरजन्तस्य च भक्षयतेस्तत्रैव प्रयोगात् । अब्भक्ष इत्यादौ तु नोक्तप्रत्ययान्त किं तु कर्मण्यणन्तः । तत्र गौण एवेत्यन्ये । भक्ष्येण सह मिश्रीकरणं प्राग्वत् । गुडेन मिश्रा धाना गुडधानाः । इह वृत्तौ मिश्रणक्रियान्तर्भावो बोध्यः ॥

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ चतुर्थ्यर्थतादर्थ्य यत्तद्वाचिना अर्थशब्दादिभिश्च चतुर्थ्यन्तं समस्यते स तत्पुरुषः । तदर्थेन प्रकृतिविकृतिभाव एव समास इष्यते बलिरक्षितग्रहणाज्ज्ञापकात् । हितसुखग्रहणं तु न ज्ञापकं हितयोगे चतुर्थी वक्तव्या । चतुर्थीचाशिषीति अतादर्थ्येपि चतुर्थीसम्भवात् । यूपाय दारु यूपदारु । कुण्डलाहिरण्यम् । नेह रन्धनाय स्थाली । कथं तर्हि अश्वघासः । हस्तिविधेजिविधा अत्र विशेप । अत्र भाष्य अश्वघासादयः षष्ठीसमासा इति । स्यादेतत् । चतुर्थीसमास एव तर्ह्यस्तु । न चैवं चतुर्थीतदर्थइति पूर्वपदप्रकृतिस्वरप्रसङ्गः । प्रकृ-

तिविकारभावे एतत्प्रवृत्तेः अन्यथा गोरक्षितमित्यत्र चतुर्थी-तदर्थइत्येव सिद्धे क्तेचेति व्यर्थं स्यात्। न च हीनार्थं तत्। गोहितमित्यत्र तादर्थ्याभावादिति वाच्यम्। हितेचेति वक्तव्ये क्तेचेतिसामान्यवचनस्य ज्ञापकत्वात्। अत एव कुबेरबलिरित्यादौ प्रकृतिविकृतिभावाभावात् न पूर्वपदप्रकृतिस्वरः किं तु समासान्तोदात्तत्वमेवेति सिद्धान्तः। रन्धनाय स्थालीत्यादौ तु यदि षष्ठीसमास इष्टः तर्हि चतुर्थीसमास एवेष्यतां यथा गोग्रासः लीलाम्बुजं क्रीडासरः वासभवनं नाट्यशालेति। यदि तु रन्धनस्थाल्यादौ षष्ठीसमासस्यानभिधानं तर्हि चतुर्थीसमासस्यापि तदस्तु। एवं च बलिरक्षितग्रहणमपि व्यर्थं ज्ञाप्याभावात्। किं च यूपदार्वादावपि षष्ठीसमाससम्भवात्सूत्रमेवेदं मास्तु। चतुर्थीतदर्थइत्येतत्तु षष्ठीतदर्थइति क्रियतां ज्ञापकाच्च स्वरस्य व्यवस्था भविष्यति। अत्राहुः। हितशब्देन तावत् षष्ठीसमासो न सम्भवति। तद्योगे चतुर्थ्या नित्यत्वादिति चतुर्थीसमास एव वक्तव्यः। ततश्च क्तेचेत्यत्रापि चतुर्थीग्रहणं कर्तव्यं गोहितमित्याद्यर्थं एवं च गोरक्षितमित्यत्र न स्यात्। चतुर्थ्या असम्भवात् षष्ठीतदर्थइत्यस्य चाप्रसङ्गः। प्रकृतिविकृतिभावात्। अतो रक्षितेनापि चतुर्थीसमास एव विधेयः। अर्थशब्देनापि योगे तादर्थ्यसम्बन्धस्य नियमेन प्रतीयमानत्वाच्चतुर्थ्या भवितव्यमिति तेनापि चतुर्थीसमास एव वक्तव्यः। तथा बलिसुखग्रहणमपि कर्तव्यम्। तादर्थ्यस्य समासान्नियतप्रतीतिर्यथा स्यादित्येवमर्थम्। तस्मादारब्धव्यमेवेदं सूत्रम्। प्रकृतिविकारभावएवेत्यस्य प्रयोजनं तु चिन्त्यमिति। अत्रेदं वक्तव्यम् तादर्थ्यस्य भानं द्विधा सम्बन्धत्वेन तद्व्याप्यतादर्थ्यत्वारूपविशेषरूपेण चेति। तच्चाश्वानां घासोऽश्वेभ्यो घास इति

वाक्ये तावद्व्यवस्थितम् । तत्राद्ये समासः । द्वितीये तु नेष्यत-इति भाष्यवार्तिकादिप्रामाण्येन निर्णीयते यथा न भाषाणामशी-यादित्यादौ सम्बन्धसामान्ये षष्ठी । कर्मत्वरूपविशेषे तु द्वितीया यथा वा मदीयतान्दाशरथाय मैथिलीत्यत्र सम्बन्धिसामान्येण् । अपत्यरूपताद्विशेषे तु इञेव । यथा वा अभून्नृपो विबुधसख इ-त्यादौ भूतसामान्यविवक्षायां लुङ् । अनद्यतनत्वविवक्षायां तु लङेवेति । अत एवातोनुपसर्गेक इति सूत्रे जीवद्वंश्यत्वरूपविशे-षाविवक्षायां प्रोवाच भगवान्कात्य इति प्रयुक्तं भाष्ये । अत एव कृतलब्धक्रीतकुशला इत्यत्र जातलब्धाभ्यां कृतक्रीतयोर्न ग-तार्थता प्रकारभेदादिति चतुर्थे वृत्तिकारः । त्वयापि तत्र तथैवो-पपादयिष्यते । तत्र भव इत्येव सिद्धे प्रायभवः, सोस्यनिवा-स इति सूत्रयोरप्येषैव गतिः । तथा च प्रयोजने स्पष्टे कथ-ञ्चिन्त्यतां ब्रूपे । ननु अश्वघास इत्यादावपि प्रकरणाद्विशेषा-ध्यवसायो भवत्येवेति चेत् । सत्यम् । न तु तत्र विशेषप्रकार-को बोधः । लुप्तं स्मृतं बोधकमिति मते स्मृतषष्ठ्या सम्बन्धत्व-प्रकारकबोधस्यैव जननात् । यः शिष्यते स लुप्यमानार्थाभि-धायीति सिद्धान्तरीत्यापि चतुर्थीलोपाभावेन विशेषप्रकारक-बोधे असामर्थ्यात् । अत एवार्थप्रकरणाद्यभिज्ञस्यापि दाशर-थशब्दान्नापत्यत्वप्रकारिका धीः किं तु सम्बन्धित्वप्रकारिकैवे-त्यादिशाब्दन्यायविदां स्पष्टम् । अत एवाहु । भेद्यभेदकस-म्बन्धोपाधिभेदनियंत्रितम्, साधुत्वमिति । तस्मादश्वास्वश-ब्दयोरिव स्वविषयादन्यत्रासाधुता क्व चित्साधुतया न विरु-ध्यतइत्यवधेयम् । एवं स्थिते बलिरक्षिताद्रिग्रहण ज्ञापकमि-त्यादि प्रागुक्तमेव सम्यक् । यत्तु तादर्थ्यस्य समासान्नियमेन प्रतीत्यर्थं बलिसुखग्रहणमित्युक्तम् । तदपि न । तत्रापि पा-

क्षिकषष्ठीसमासस्य दुर्वारतया नियतप्रतीततादर्थ्येन चतुर्थीविभक्तिराक्षिप्यते। तस्मैहितमित्यतो वानुवृत्त्यसिद्धेः। पूर्वपक्षावसरे त्वयैव तथोक्तत्वाच्चेति दिक्। अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्॥ द्विजायायं द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। तत्र नित्यत्वं न्यायसिद्धम्। चतुर्थ्या तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहो न भविष्यति परवल्लिङ्गतां बाधितुं विशेष्यलिङ्गतामात्रं वाच्यम्। स्यादेतत्। तदर्थं विकृतेः प्रकृतावित्यत्र तदर्थसमर्थामिति सूत्रं क्रियताम्। तादर्थ्येन चतुर्थीविभक्तिराक्षिप्यते। तस्मैहितमित्यतो वानुवर्तते। चतुर्थीसमर्थात्तदर्थेऽभिधेये सर्थप् स्यात्। आदिर्ञिटुडवः पः प्रत्ययस्येति द्विपकारकनिर्देशात्सकारस्येत्संज्ञा। सितिचेति पदत्वम्। पित्वादनुदात्तः। राजार्थः। गवार्थः। एवं चार्थे इति पूर्वपदप्रकृतिस्वरो न विधेयः। प्रत्ययत्वाच्च न तेन विग्रहः। तद्धितत्वादभिधेयलिङ्गता च सिद्धेति। मैवम्। षःप्रत्ययस्येत्यत्र सकारप्रश्लेषे मानाभावात्। वुञ्छणादिसूत्रेण तृणादिभ्यः सप्रत्यये तृणस इत्यादावतिव्याप्तश्च। किं च। सर्थपः प्रत्ययत्वे श्वश्वर्थौ श्वर्थमित्यत्रेयङुवङोः प्रसङ्गः। स्यादेतत्। ब्राह्मणोऽर्थः प्रयोजकोऽस्य स ब्राह्मणार्थ इति बहुव्रीहिरस्तु। यो हि ब्राह्मणार्थं सूपस्तस्य ब्राह्मणोऽर्थः प्रयोजक इति यावत्। एवं च चतुर्थ्यन्तेन विग्रहाभावः। पूर्वपदप्रकृतिस्वरत्वं विशेष्यलिङ्गता चेति सर्वं सिध्यति। नैतत्। महदर्थमित्यत्रात्वकपोः प्रसङ्गात्। स्यादेतत्। चतुर्थीतदर्थेतियोगो विभज्यते। ततः अर्थ इत्यनेनांशेन तदर्थवाचिन उत्तरपदस्यार्थादेशो विधीयते। स च वैकल्पिकः। महाविभाषाधिकारात्। तेन यूपार्थं दारु यूपदार्विरत्युभयं भवति। न चार्थादेशेनोक्तार्थत्वाद्दारुशब्दप्रयोगानुपपत्तिः। अर्थादेशस्य सकलप्र-

ब्दसाधारणतया विशेषस्फुटीकरणार्थन्तत्सम्भवात् । ततो बलिरक्षितयोरपि विभाषार्थशब्द आदेशो भवति । कुबेरार्थो बलिः कुबेरबलिरित्यादि पूर्वेण सिद्धे ज्ञापनायेदं प्रकृतिविकृतिभावादन्यत्र नित्योर्थादेश इति । तेन रन्धनार्था स्थालीत्यादि भवति । न तु रन्धनस्थालीत्यादि । अश्वघासादयस्तु पूर्ववत् । तथा चार्थशब्दस्यादेशत्वाचेन विग्रहो न भविष्यति । स्थानिलिङ्गं च भविष्यति । स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वात् । स्थानिवद्भावाच्च । अर्थ इति पूर्वपदप्रकृतिस्वरस्तु विधेय एवेति । नैतदपि । उदकार्थो वीवध इत्यत्र वीवधशब्दस्यार्थादेशे कृते स्थानिवद्भावेन मन्थौदनादिसूत्रेणोदादेशप्रसङ्गात् । इयुवौ सर्थे पि स्यातां बहुव्रीहौ कवाच्च हि । अर्थादेशे तूदभावो यथान्यासं वरं ततः ॥

पञ्चमी भयेन ॥पञ्चम्यन्तं भयप्रकृति केन सुबन्तेन सह प्राग्वत् । चौरभयम् । भयभीतभीतिभीभिरिति वाच्यम् ॥ वृकभीतः । नेह, वृकेभ्यस्त्रासः । पूर्वस्यैव बहुलग्रहणस्यायम्प्रपञ्चस्तेन ग्रामनिर्गतो धर्मजुगुप्सुरित्यादि सिद्धम् ॥

अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥ एतैः सह अल्प पञ्चम्यन्तं समस्यते स तत्पुरुषः । अल्पश इत्यत्र बह्वल्पार्थादिति कर्मणि शस् । यद्यपि बह्वल्पार्थान्मङ्गलामङ्गलवचनमिति वक्ष्यति तथाप्यत एव निपातनाच्छसित्याहुः । सुखापेतः । कल्पनापोढः । चक्रमुक्तः । स्वर्गपतितः । तरङ्गापत्रस्तः । अल्पशब्द इत्युक्तेर्नेह, प्रासादात्पतितः।बहुलग्रहणस्यैवायं प्रपञ्चः॥

स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥ एतानि क्तेन सह प्राग्वत् । स्तोकान्मुक्तः अल्पान्मुक्तः । अन्तिकादागत । अभ्यासादागतः । दूरादागत । कृच्छ्रान्मुक्तः

पञ्चम्या. स्तोकादिभ्य इत्यलुक् । परःशतशब्दस्तु नाञ्झलात्रि- स्यत्र व्युत्पादितः । एवं परःसहस्रोपि ॥

सप्तमी शौण्डैः ॥ सप्तम्यन्तं शौण्डादिभिस्सह प्राग्वत् । अक्षशौण्डः । बहुवचननिर्देशादाद्यर्थावगतिः । ननु अर्थनिर्देशार्थं बहुवचनम्, तेन समासार्थे वा बहुवचनं किन्न स्यादिति चेन्न । गणपाठवैयर्थ्यापत्तेः । स्यादेतत् । कारकाणां क्रिययैव सम्बन्ध इति तावत्स्थितम् । तदिह अक्षशौंड इत्यादौ सप्तम्यर्थ क्वान्वेतु क्रियायाः अश्रवणात् । सत्यम् । प्रसक्तिरूपा क्रिया वृत्ताविहान्तर्भवति तद्द्वारकमेव च सामर्थ्यं यथा दध्योदनगुडधानादिषु अन्तःशब्दोत्र पठ्यते । तद्योगे अवयविन आधारत्वविवक्षायां सप्तमी । यथा वृक्षेशाखेति । वने ऽन्तर्वनान्तः। अस्य वैकल्पिकत्वात्पक्षे ऽव्ययीभावः । अन्तर्वणम् । प्रनिरन्तरिति णत्वमिति हरदत्तः । अत्रेदं वक्तव्यं, नायं विभक्त्यर्थे ऽव्ययीभावस्य विषयः विभक्त्यर्थमात्रवृत्तेरव्ययस्य स इत्युक्तत्वात् । अत्र मध्यस्यापि प्रतीतेः । कथमन्यथा ऽवयवावयविभावमवोचः । किं चाऽव्ययीभावस्य नित्यत्वात्तदुपदर्शितो वने अन्तरिति विग्रहोपि न संगच्छेत । तस्मादधिकरणत्वमात्रवृत्तिना अन्तःशब्दान्तरेणाव्ययीभावो न तु मध्यवाचिनेत्यवधेयम् अधिशब्दोत्र पठ्यते । तस्याधिकरणप्राधान्येव्ययीभावः अधिस्त्रीति । आधेयप्राधान्ये त्वनेन तत्पुरुष ब्राह्मणाधीन इति अध्युत्तरपदात्ख । ब्राह्मणेष्वधीति विग्रहः । शौंड, धूर्त कितव, व्याड, प्रवीण, संवीत, अन्तर, अधिकरणप्रधान एवायमिह पठ्यते । अधि, पटु, पण्डित, कुशल चपल, निपुण । वृत् ॥

सिद्धशुष्कपक्वबन्धैश्च ॥ एतैः सप्तमी प्राग्वत् । साङ्काश्य

सिद्धः । काम्पिल्यसिद्धः । सङ्काशेन निर्वृत्तं वनं साङ्काश्यम् । कम्पिलेन कांपिल्यम् । चातुरर्थिकः सङ्काशादिभ्यो ण्यः । तत्र तपसा सिद्ध इत्यर्थः । आतपशुष्कः । स्थालीपक्वः । चक्रबन्धः । बन्धेचाविभाषेत्यलुक् ॥

ध्वाङ्क्षेण क्षेपे ॥ ध्वाङ्क्षवाचिना सह सप्तम्यन्तं प्राग्वन्निन्दायाम् । तीर्थे ध्वांक्ष इव तीर्थध्वाङ्क्षः । तीर्थकाकः । यथा ध्वाङ्क्षास्तीर्थे चिरं नावतिष्ठन्ते तथान्योपि कार्येष्वनवस्थित एवमुच्यते । इवार्थस्य वृत्तावन्तर्भावान्न पृथक् प्रयोगः । क्षेपे किम् । तीर्थे ध्वाङ्क्षास्तिष्ठति ॥

कृत्यैर्ऋणे ॥ सप्तम्यन्तं कृत्यप्रत्ययान्तैः सह प्राग्वदावश्यके । ऋणग्रहणमावश्यकोपलक्षणार्थम् । यत्प्रत्ययान्तेनैवेष्यते । अल्पश इत्यनुवृत्तेः । कृत्यैरिति बहुवचनं तु प्रकृतिभेदाभिप्रायम् । मासे देयमृणम् । पूर्वाह्णे गेयं साम । तत्पुरुषेकृतीत्यलुक् ॥

संज्ञायाम् ॥ सप्तम्यन्तं सुपा प्राग्वत्संज्ञायाम् । नित्यसमासोयम् । वाक्येन संज्ञानवगमात् । अरण्येतिलकाः । अरण्येमाषाः । वनेकसेरुकाः । हलदन्तात्सप्तम्या इत्यलुक् ॥

क्तेनाहोरात्रावयवाः । अन्होरात्रेश्चावयवाः सप्तम्यन्ताः क्तान्तेन सह प्राग्वत् । पूर्वाह्णकृतम् । अपराह्णकृतम् । पूर्वरात्रकृतम् । अपररात्रकृतम् । अवयवग्रहणं किम् । अन्हि दृष्टम् । कथं तर्हि रात्रिवृत्तमनुयोक्तुमुद्यतेति । कर्तृकरणेकृताबहुलमिति भविष्यति ॥

तत्र ॥ तत्रेत्येतत्सप्तम्यन्तं क्तान्तेन सह प्राग्वत् ॥ तत्रभुक्तम् । तत्रकृतम् । यद्यपि अभिहितः सोर्थोन्तर्भूत इति तत्रशब्दात्प्रथमैव युक्ता तथापि तत्रभवानित्यादौ विभक्त्यन्तरेपि दर्शनादधिकरणप्रतिपादने तत्रशब्दादपि सप्तम्येवापेक्ष्येति वृ

त्तिकृतो मन्यन्ते । वस्तुतस्तु स्वयंक्तेनेत्यत्र द्वितीयाधिकार इवे-हापि सप्तम्याधिकारो बाध्यते । पूर्वपदप्रकृतिस्वरस्याव्ययत्वेनापि सिद्धेः । सप्तम्या अपि लुका विभक्त्यन्तरसाधारण्यात्तु-द्वाराच्चेति दिक् ॥

क्षेपे ॥ सप्तम्यन्तं क्तान्तेन प्राग्वत् निन्दायाम् । अवतप्ते-नकुलस्थितं तएतत् । यथा तप्ते प्रदेशे नकुला न चिरमवति-ष्ठन्ते एवं कार्याण्यारभ्य यश्चापलेन न चिरं तिष्ठति स एव-मुच्यते । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति नकुलस्थितश-ब्देन समासः । उदकेविशीर्णम् । प्रवाहेमूत्रितम् । भस्मनिहु-तम् । निष्फलमित्यर्थः । तत्पुरुषेकृतिबहुलमित्यलुक् ॥

पात्रेसमितादयश्च ॥ एते निपात्यन्ते क्षेपे । येचात्र क्तान्तास्तेषां पूर्वेण सिद्धे पुनः पाठो युक्तारोह्यादित्वसिद्ध्यर्थः । युक्तारोह्यादिषु हि पात्रेसमितादयश्चेति पठ्यते । पात्रेसमिताः भोजनसमयएव संगता इत्यर्थः । पात्रेबहुलाः । भोजनएव संघीभवन्ति न कार्यइत्यर्थः । उदुम्बरमशकः । योल्पे तृप्तः नास्मात्परमस्तीति मन्यते अदृष्टविस्तारत्वात् स एवमुच्यते । उदुम्बरकृमिः । कूपकच्छपः । कूपमंडूकः । कुम्भमण्डूकः । उदपानमण्डूकः । नगरकाकः । मातरिपुरुषः । पिंडीशूरः । पिंडी ओदनपिंडः । तत्रैव शूरो नान्यत्रेत्यर्थः । गेहेशूरः । गेहेनर्दी । गेहेछेडी । गेहेविजिती । गेहेव्याडः । गेहेधृष्टः । गर्भेतृप्तः । आखनिकबकः । आखनिको जलस्रोतः खातं तस्मिन् बक इव । यत्किंचिदात्मीये आखनिके लभते तद्भक्षयति तथान्येपीत्यर्थः । गोष्ठेशूरः । गोष्ठेविजिती । गोष्ठेछेडी । गोष्ठेपटुः । गोष्ठेपण्डितः । गोष्ठेप्रगल्भः । कर्णेटिरिटिरा । कर्णेचुरुचुरा । आकृतिगणोयम् । चकारोवधारणार्थः । तेन

सिद्धः । काम्पिल्यसिद्धः । सङ्काशेन निर्वृत्तं वनं साङ्काश्यम् । काम्पिलेन काम्पिल्यम् । चातुरर्थिकः सङ्काशादिभ्यो ण्यः । तत्र तपसा सिद्ध इत्यर्थः । आतपशुष्क । स्थालीपक्वः । चक्रबन्ध । बन्धेचाविभाषेत्यलुक् ॥

ध्वाङ्क्षेण क्षेपे ॥ ध्वाङ्क्षवाचिना सह सप्तम्यन्तं प्राग्वन्निन्दायाम् । तीर्थे ध्वांक्ष इव तीर्थध्वाङ्क्षः । तीर्थकाक । यथा ध्वाङ्क्षास्तीर्थे चिरं नावतिष्ठन्ते तथान्योपि कार्येष्वनवस्थित एवमुच्यते । इवार्थस्य वृत्तावन्तर्भावान्न पृथक् प्रयोगः । क्षेपे किम् । तीर्थे ध्वाङ्क्षास्तिष्ठति ॥

कृत्यैर्ऋणे ॥ सप्तम्यन्तं कृत्यप्रत्ययान्तैः सह प्राग्वदावश्यके । ऋणग्रहणमावश्यकोपलक्षणार्थम् । यत्प्रत्ययान्तेनैवेष्यते । अल्पश इत्यनुवृत्तेः । कृत्यैरिति बहुवचनं तु प्रकृतिभेदाभिप्रायम् । मासे देयमृणम् । पूर्वाह्णे गेयं साम । तत्पुरुषेकृतीत्यलुक् ॥

संज्ञायाम् ॥ सप्तम्यन्तं सुपा प्राग्वत्संज्ञायाम् । नित्यसमासोयम् । वाक्येन संज्ञानवगमात् । अरण्येतिलका । अरण्येमाषाः । वनेकसेरुकाः । हलदन्तात्सप्तम्या इत्यलुक् ॥

क्तेनाहोरात्रावयवाः । अन्होरात्रेश्चावयवा सप्तम्यन्ताः क्तान्तेन सह प्राग्वत् । पूर्वाह्णकृतम् । अपराह्णकृतम् । पूर्वरात्रकृतम् । अपररात्रकृतम् । अवयवग्रहणं किम् । अन्हि दृष्टम् । कथं तर्हि रात्रिवृत्तमनुयोक्तुमुद्यतेति । कर्तृकरणेकृताबहुलमिति भविष्यति ॥

तत्र ॥ तत्रेत्येतत्सप्तम्यन्तं क्तान्तेन सह प्राग्वत् ॥ तत्रभुक्तम् । तत्रकृतम् । यद्यपि अभिहितः सोर्थोन्तर्भूत इति तत्रशब्दात्प्रथमैव युक्ता तथापि तत्रभवानित्यादौ विभक्त्यन्तरेपि दर्शनादधिकरणप्रतिपादने तत्रशब्दादपि सप्तम्येवापेक्ष्येति वृ

त्त्विकृतो मन्यन्ते । वस्तुतस्तु स्वयंक्तेनेत्यत्र द्वितीयाधिकार इवे-हापि सप्तम्यधिकारो बाध्यते । पूर्वपदप्रकृतिस्वरस्यान्ययत्वेनापि सिद्धेः । सप्तम्या अपि लुका विभक्त्यन्तरसाधारण्यानुद्धाराच्चेति दिक् ॥

क्षेपे ॥ सप्तम्यन्तं क्तान्तेन प्राग्वत् निन्दायाम् । अवतप्तेनकुलस्थितं तएतत् । यथा तप्ते प्रदेशे नकुला न चिरमवतिष्ठन्ते एवं कार्याण्यारभ्य यश्चापलेन न चिरं तिष्ठति स एवमुच्यते । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति नकुलस्थितशब्देन समासः । उदकेविशीर्णम् । प्रवाहेमूत्रितम् । भस्मनिहुतम् । निष्फलमित्यर्थः । तत्पुरुषेकृतिबहुलमित्यलुक् ॥

पात्रेसमितादयश्च ॥ एते निपात्यन्ते क्षेपे । येचात्र क्तान्तास्तेषां पूर्वेण सिद्धे पुनः पाठो युक्तारोह्यादित्वसिद्ध्यर्थः । युक्तारोह्यादिषु हि पात्रेसमितादयश्चेति पठ्यते । पात्रेसमिताः भोजनसमयएव संगता इत्यर्थः । पात्रेबहुलाः । भोजनएव संघीभवन्ति न कार्यइत्यर्थः । उदुम्बरमशक । योल्पे तृप्त नास्मात्परमस्तीति मन्यते अदृष्टविस्तारत्वात् स एवमुच्यते । उदुम्बरकृमिः । कूपकच्छपः । कूपमंडूकः । कुंभमण्डूक । उदपानमण्डूकः । नगरकाकः । मातरिपुरुषः । पिंडीशूरः । पिंडी ओदनपिंडः । तत्रैव शूरो नान्यत्रेत्यर्थः । गेहेशूरः । गेहेनर्दी । गेहेछेडी । गेहेविजिती । गेहेव्याडः । गेहेधृष्टः । गर्भेतृप्तः । आखनिकबकः । आखनिको जलस्रोतः खातं तस्मिन् बक इव । यत्किंचिदात्मीये आखनिके लभते तद्भक्षयति तथान्येपीत्यर्थ । गोष्ठेशूरः । गोष्ठेविजिती । गोष्ठेछेडी । गोष्ठेपटुः । गोष्ठेपण्डितः । गोष्ठेप्रगल्भः । कर्णेटिरिटिरा । कर्णेचुरुचुरा । आकृतिगणोयम् । चकारोवधारणार्थः । तेन

परमाः पात्रे समिता इति वाक्यमेव भवति न तु सन्महदित्यादिना समासान्तरम् ॥

पूर्वकालैकसर्वजरत्पुराणनवकेवलास्समानाधिकरणेन ॥ एते सप्त सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते स तत्पुरुषः । पूर्वकालइत्यर्थनिर्देशः । अन्येषां षण्णां स्वरूपग्रहणम् । पूर्वकालोपरकालेन समस्यते । पूर्वत्वस्य ससम्बन्धित्वात् । विशेषणंविशेष्येणेति सिद्धे पूर्वकालादीनां पूर्वनिपातनियमार्थं वचनम् । एकशब्दस्य तु दिक्संख्येसंज्ञायामिति नियमात्प्राप्त्यर्थमेव । पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः । अत्र क्रियाशब्दत्वान्पाचकपाठकवत्पर्यायः प्राप्तः । एकशाटी । शाटशब्दाज्जातिलक्षणो ङीप् । सर्वयाज्ञिकाः । जरत्तार्किकाः । पुराणमीमांसकाः । नवपाठकाः । केवलवैयाकरणाः । समानाधिकरणे किम् । एकस्याः शौक्ल्यं, षष्ठीसमासस्त्विह न भवति । गुणेन नेति निषेधात् ॥

दिक्संख्ये संज्ञायाम् ॥ समानाधिकरणेनेत्यापादपरिसमाप्तेरनुवर्तते विशेषणंविशेष्येणेति सिद्धे नियमार्थमिदम् । दिक्संख्येसंज्ञायामेव समानाधिकरणे‌न समस्येते नान्यत्र । पूर्वेषुकामशमी । पञ्चाम्रः । सप्तर्षयः । नेह । उत्तरावृक्षाः पञ्चब्राह्मणाः । पूर्वसूत्रमित्यादौ त्वदिग्वा‌चित्वात्समासः ॥

इति श्रीशब्दकौस्तुभे द्वितीयस्या‌ध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

तद्धितार्थोत्तरपदसमाहारे च ॥ तद्धितार्थे विषये उत्तरपदे च परत समाहारे च वाच्ये दिक्संख्ये समानाधिकरणेन सह समस्येते स तत्पुरुष । पूर्वस्यां शालायां भवः पौर्वशालः । समासे कृते दिक्पूर्वपदादसंज्ञायां ञः । एवमापरशा-

लः । उत्तरपदे, पूर्वशालाप्रियः । इह त्रिपदे बहुव्रीहौ कृते प्रियशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषे सति समासान्तोदात्तत्वं लकाराकारस्य भवति असति त्वत्रान्तरतत्पुरुषे पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वं स्यात् । दिक्षु समाहारो नास्ति । अनभिधानात् । संख्यायास्तद्धितार्थे ॥ षाण्मातुरः पाञ्चनापितिः ॥ अनपत्यइत्युक्तत्वान्न लुक् । पंचकपालः । संस्कृतम्भक्षा इत्यण् । द्विगोर्लुगनपत्ये इति लुक् । पञ्चगवधनः । अत्रापि त्रिपदे बहुव्रीहौ धनशब्दउत्तरपदे पूर्वयोस्तत्पुरुषे गोरतद्धितलुकीति टच् । ननु पाक्षिकं पञ्चगोधन इति दुर्वारम् । महाविभाषाधिकारेण तत्पुरुषस्य वैकल्पिकत्वात् । अत एव नित्यत्वमुपसंख्यातं वार्तिककृता द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनमिति । अत एव वाक् च दृषच्च प्रिये अस्य वाग्दृषदप्रियः, छत्रोपानहप्रिय इति त्रिपदे बहुव्रीहौ पूर्वयोर्नित्यं द्वंद्वः । तेन समासांतोपि नित्यमेव । स्यादेतत् । समुदायस्यैकार्थीभावे सति अवयवयोरावश्यक इत्युपसंख्यानं व्यर्थमिति चेत् । नैवम् । त्रयाणां समासे कृते ऽन्यपदार्थोपसंक्रमेण परस्परसम्बन्धाभावात् सति तूपसंख्याने वचनसामर्थ्याद्द्वन्द्वतत्पुरुषयोः प्रवृत्तेः । न चैवं त्रिपदे बहुव्रीहौ चित्राजरद्गुरित्यत्रापि तत्पुरुषे चित्राशब्दस्य पुंवद्भावापत्तिः । उपसंख्यानस्य तद्धितार्थोत्तरपदेति सूत्रोक्ततत्पुरुषमात्रविषयत्वात्तस्यैवोत्तरपदे प्रतिपदोक्तत्वात् । अत एव स्वादिरेतरशाम्यामित्यत्र पुंवद्भावसिद्धये कर्मधारयोत्तरपदो बहुव्रीहिर्न तु त्रिपदे इति समर्थसूत्रेपि कैयटः । यत्तु पूर्वतन्त्रे वाक्यलक्षणे पृष्ठस्य युगपद्द्विवैरेकाहवद्द्विसामत्वामित्याधिकरणे पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्य इत्युदाहृत्य द्वन्द्वं कृत्वा बहुव्रीहिः कार्य इति कात्यायनवचनमुपष्टम्भकमाश्रित्य पूर्वपक्षितं यच्च

स्यात्। पञ्चगवम्। गोरतद्धितलुकीति टच् न स्यादिति चेत्। मैवम्। न तद्धितलुक्यतद्धितलुकीत्येतस्थाने समाहारशब्दपाठेन सर्वसामञ्जस्यात्। तथाहि। अपरिमाणबिस्ताचितकम्बल्येभ्यः समाहारे नियमार्थमिदम्। एभ्यः समाहार एवेति। पञ्चानामश्वानां समाहारः पञ्चाश्वी। नेह। पञ्चभिरश्वैः क्रीता पञ्चाश्वा। तथा, गोः। गोन्तात्तत्पुरुषाट्टच् स्यात् पुङ्गवः। ततः समाहारे। गोरित्यनुवर्तते सजातीयापेक्षो नियमः। गोन्ताद् द्विगोस्समाहारएव टच् स्यात्। पञ्चगवम्। नेह। पञ्चभिर्गोभिः क्रीतः पञ्चगुः। तदेतत्सकलमभिसन्धायोक्तं वार्तिककृता समाहारसमूहयोरविशेषात्समाहारग्रहणानर्थक्यं तद्धितार्थेन कृतत्वादिति। समाहारसमूहयोरिति शब्दपरो निर्देशः। अतो नैकशेषः। अविशेषादिति। अर्थाविशेषादित्यर्थः। अत्र भाष्यकाराः। एवं सति पञ्चकुमारी दशकुमारीत्यत्र लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक् स्यात्। तस्मात्तद्धितनिवृत्त्यर्थं समाहारग्रहणम्। पृथक्समाहारग्रहणाद्धि समासस्यैव समाहारो वाच्यो न तु तद्धितस्येति व्याख्यानात्तद्धितो नोत्पद्यतइति सिद्धमिष्टम्। अत एव च ज्ञापकात्तद्धितार्थे विषये इति व्याख्यातं न तु वाच्येइति। अत एव पाञ्चनापितिरित्यादौ तद्धित उत्पद्यते। समासेनैव तदर्थस्योक्तौ तु तद्धितो नोत्पद्येत। अत एव द्विगोर्लुग्वचनमपि सङ्गच्छतइति दिक्। ननु पञ्च गावोस्य सन्ति पञ्चगुः पुरुष इत्यत्र मत्वर्थस्य तद्धितार्थत्वादयं समासः प्राप्नोति न तु बहुव्रीहिः। अशेषत्वात्। तस्य तु चित्रग्व्यादिरवकाशः। यत्र दिक्संख्ये न स्तः। सति चास्मिन्समासे मतुपः श्रवणं स्यात्। न च द्विगोरिति लुक्। अप्राग्दीव्यतीयत्वात्। अत्रोच्यते। परत्वाद्बहुव्रीहिः। त्रिकतः शेषस्य भाष्यसम्मतत्वात्। वार्तिक-

कृता तु वचनमेवारब्धम् । मत्वर्थे प्रतिषेधः ॥

सङ्ख्यापूर्वो द्विगुः ॥ तद्धितार्थेत्यत्रोक्तः संख्यापूर्वः समासो द्विगुसंज्ञः स्यात् । पञ्चकपालः । संस्कृतम्भक्षा इत्यनेनोत्पन्नस्याणो द्विगोर्लुगनपत्यइति लुक् । पञ्चनावमियः । नावो द्विगोरिति समासान्तष्टच् । पञ्चमूली । द्विगोरिति ङीप् । अनन्तरस्येति न्यायात्पूर्वसूत्राविषयएवेयं संज्ञा । एतदर्थमेव तत्र योगविभागः । अन्यथा दिक्संख्ये संज्ञा तद्धितार्थोत्तरपदसमाहारेष्वित्येव ब्रूयात् । तेन सप्तर्षय इत्यत्र इगन्तकालेति पूर्वपदप्रकृतिस्वरो न भवति । समासान्तोदात्त एव हि पठ्यते । सप्तरूपयस्तपस्तेपे निषेदुरिति यथा । कथन्तर्हि एकापूपीति । अत्राहुः । नायं पूर्वकालैकेति समासः किं तु पूर्वसूत्रेण समाहारे । तथाहि । एकमप्यपूपं कश्चित्कृपणो दददनेकं मन्यते । तथा दाने श्रद्धातिशयादपूपमहत्त्वाद्वानेकरिमन्निव यः संभ्रमस्तमेकस्मिन्नपि करोति । अनेन प्रतिग्रहीता कृपणो व्याख्यात । तत्रारोपितबहुत्वाश्रय समाहारः । तत्र समासे कृते द्विगुत्वे सति अकारान्तोत्तरपदो द्विगुः स्त्रियामिति स्त्रीत्वे द्विगोरिति ङीप् सिध्यति ॥

कुत्सितानि कुत्सनैः ॥ कुत्स अवक्षेपणे । मत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्तमाने क्त । बहुवचननिर्देश उभयत्रापि स्वरूपग्रहणनिरासार्थः । कुत्स्यमानवाचीनि कुत्सनैः सह प्राग्वत् । शब्दप्रवृत्तिनिमित्तकुत्सायामेवायमिष्यते । सन्निधानात् । विशेष्यस्य पूर्वनिपातार्थोऽयमारम्भः । वैयाकरणखसूचिः। सूचयतेरिच्चेतीकार । यः पृष्ट सन् प्रश्न विस्मारयितुं सूचयति निरीक्षते कथयति वा अहो निर्मलं गगनमिति स एवमुच्यते अत्र व्याकरणस्य वेदाङ्गत्वात्तदध्ययन स्वरूपेण यद्यपि प्रशस्त

तथापि प्रतिभानाभावेन निष्फलत्वात्कुत्स्यते । याज्ञिककितवः । किन्त्वास्तीति पृच्छन् धनमात्रोद्देशेन जात्यादिनिरपेक्षो द्यूते प्रवर्तमानः कितवः । तथा च श्रुतिः सभामेति कितवः पृच्छमानो जेष्यामीत्यादि । इह तु कितव इव कितव, यो याज्ञिको दक्षिणामात्रतत्परः सन्नयाज्यमपि याजयति स एवमुच्यते । मीमांसकदुर्दुरूढः । दुल उत्क्षेपे । दुर्दूरः । औणादिकः कूढः प्रत्ययः । बहुलमन्यत्रापीति णिलुक् । रलयोरेकविषयत्वस्मरणाद् दुर्दुरूढः । प्रवृत्तिनिमित्तकुत्सायां किम् । वैयाकरणो दरिद्रः ॥

पापाणके कुत्सितैः ॥ एते सुबन्ते कुत्सितैः सह प्राग्वत् । पापाणकशब्दौ कुत्सनाभिधायिनौ । तयोः पूर्वसूत्रेण समासे परनिपातः स्यात् । तस्मात्पूर्वनिपातार्थमिदम् । पापनापितः । पापकुलालः । अणकनापितः । अणककुलाल ॥

उपमानानि सामान्यवचनैः ॥ उपमानोपमेयसाधारणधर्मवचनै. सहोपमानानि प्राग्वत् । घनश्यामः । इह पूर्वपदं तत्सदृशे लाक्षणिकम् । अत एव सामानाधिकरण्यान्मृगीव चपला मृगचपलेत्यादौ पुंवद्भाव । सादृश्यं चोत्तरपदोपस्थितश्यामत्वचापलादिद्वारकमेव गृह्यते । तथैव व्युत्पत्तेः । श्रुत विहायाश्रुतकल्पने गौरवापत्तेश्च । अत एव हि व्यस्तेपि वागर्थाविवेत्यादिस्थले सम्पर्कप्रभृतिसन्निहितद्वारकमेव सादृश्यं प्रतीयते । पूर्वनिपातनियमार्थं चेदं सूत्रम् । विशेषणविशेष्येणेति समासे हि पूर्वनिपातः पर्यायेणोभयोः स्यात्पाचकपाठकादिवत् । तत्पुरुषेतुल्यार्थेति सूत्रे प्रतिपदोक्तस्यास्यैवोपमानग्रहणेन ग्रहणार्थमपीदं सूत्रम् । अत एव मयूरव्यंसकादित्वात्समासे उपमानस्वरो न प्रवर्ततइति सिद्धान्त । उपमीयतेनेनेत्युपमानम् । उपपूर्व-

कान्माङः करणे ल्युट्। प्रादिसमासः। उपपूर्वकश्च माङ् सादृश्यहेतुके परिच्छेदे रूढः। येन वस्त्वन्तरं सादृश्येन परिच्छिद्यते तदुपमानम्। तद्यथा गौरिव गवयं इति। इह हि गौः करणं पुरुषः परिच्छेत्ता। स हि गोसादृश्येन गवयं परिच्छिनत्ति। घनश्यामादौ तु घनादयः शब्दा यद्यपि घनादिसदृशे उपमेये संक्रान्तास्तथापि भूतपूर्वगत्या उपमानवाचिता द्रष्टव्या। इदमेव दर्शयितुं लौकिके विग्रहवाक्ये इवशब्दः प्रयुज्यते न त्वसौ प्रक्रियोपयोगीत्यवधेयम्। सामान्यवचनत्वमपि तद्विशिष्टोपमेयपरत्वमेव बोध्यम्॥

उपमितं व्याघ्रादिभिः सामान्याप्रयोगे॥ उपमेयं व्याघ्रादिभि सह प्राग्वत् साधारणधर्माप्रयोगे ऽसति। विशेष्यस्य पूर्वनिपातार्थोयमारम्भः। पुरुषो व्याघ्र इव पुरुषव्याघ्रः। व्याघ्रादिराकृतिगणः। सामान्याप्रयोगे किम्। पुरुषोयं व्याघ्र इव शूरः। कथं तर्हि भाष्याब्धि कातिगम्भीर इति कैयटः। अत्राहु। नेह गाम्भीर्यं साधारणधर्मत्वेन विवक्षितं किंतु विततदुरवगाहत्वादि। तस्य चाप्रयोगोऽस्त्येवेति निर्बाध समास इति॥

विशेषणं विशेष्येण बहुलम्॥ भेदकं समानाधिकरणेन भेद्येन बहुल प्राग्वत्। नीलमुत्पलम्। नीलोत्पलम्। बहुलग्रहणात्क चिन्नित्यसमासः। कृष्णसर्पः। लोहितशालिः। क चिन्न, रामो जामदग्न्यः। व्यासः पाराशर्यः। विशेषणविशेष्ययोः ससम्बन्धिकतया ऽन्यतरोपादानमात्रेणेतराक्षेपसम्भवे उभयोपादानं स्पष्टार्थं कुत्सितानिकुत्सनैरित्यादाविवेति कैयटमतम्। हरदत्तस्त्वाह। विशेष्येणेत्युक्त्या विशेषणं लब्धम्। तस्य पुनर्विशेषणत्वोक्तिर्विशेष्यते इति व्युत्पत्त्या विशेष्यत्वलाभार्थं,

तथा च समस्यमानपदद्वयजन्यबोधप्रकारयो· परस्परव्यभिचारित्वे समासोयं यथा नीलोत्पलादौ । तक्षकः सर्प इत्यादौ तु न भवति । नहि तक्षकत्वं सर्पत्वव्यभिचारीति । अत्रेदं वक्तव्यम् । शब्दशास्त्रसहकारपादपादीति मयुक्तानेन प्रकृतसूत्रएव शिंशपावृक्ष इति समासो भवत्येवेति वदता त्वया ऽपि शिंशपावृक्षादिभ्यस्तक्षकः सर्प इत्यादौ विशेषो वक्तव्य· । ननूक्त एवासौ, लुब्योगाप्रख्यानादितिसूत्रस्वरसेन शिंशपादिशब्दानां फलेपि मुख्यतया शिंशपात्वस्य वृक्षत्वव्यभिचारादित्युपपादितत्वादिति चेन्न । तक्षको नागवर्धक्योरिति नानार्थकोशानुरोधेन तक्षकशब्दस्यापि वर्धकौ रूढतया तक्षकत्वस्य सर्पत्वव्यभिचार इत्यविशेषात् । तक्षकत्वं सर्पत्वव्याप्यं भिन्नमेव । तच्च न व्यभिचारीति चेत् । तत्किं शिंशपात्वं वृक्षत्वफलत्वयोर्व्याप्यं नानेति न पर्यालोचयेः । किं च रामो जामदग्न्यः अर्जुन कार्तवीर्य इत्यादि प्रकृतसूत्रएव वृत्तौ प्रत्युदाहृतम् । तत्र यदि रामत्वमर्जुनत्वं च दाशरथिधनञ्जयादिव्यावृत्तं भिन्नमेव तच्च व्याप्यमित्याशयस्तर्हि समं शिंशपात्वे । अथ शिंशपात्वं फलवृक्षयोरेकं तर्हि नानार्थोच्छेदः तक्षकरामार्जुनादावतिप्रसङ्गश्च । उभयसाधारणजातिसाधकं नास्तीत्यादि तु तुल्यमेव । तस्मादिह कैयटमतमेव प्रामाणिकमित्यवधेयम् । अत एव कैलासाद्रिः, मन्दराद्रिः, भावपदार्थः, तर्कविद्या, व्याकरणशास्त्रमित्यादयः प्रयोगास्सङ्गच्छते । इदं त्ववधेयम् । विशेषणविशेष्यभावे कामचारात्पाचकपाठकादावित्र नीलोत्पलादावपि अव्यवस्थित· पूर्वनिपातः प्राप्तो । तत्रायं सिद्धान्तः । उपसर्जनमिति ताव· दन्वर्थसंज्ञेत्युक्तमप्रधानमुपसर्जनमिति । तदिह जातिगुणशब्दयोः सन्निपाते गुण एव विशेषणं तस्य द्रव्यावच्छेदद्वारैव क्रिया·

निर्वर्तकत्वात् । श्रौतव्यवहारोऽप्येवम् । श्वेतं छागमालभेतेति हिं चोदनायां श्वेतच्छागालाभे कृष्णच्छाग आलभ्यते न तु श्वेतमपि पश्वन्तरं, क्रियाजात्योरप्युपनिपाते एवमेव । तेन नीलोत्पलं पाचकब्राह्मण इति व्यवस्थित एव प्रयोगः । यत्र तु गुणशब्दयोः क्रियाशब्दयोः गुणक्रियाशब्दयोर्वोपनिपातस्तत्रानियम एव । खञ्जकुब्जः । कुब्जखञ्जः । पाचकपाठकः । पाठकपाचकः । खञ्जपाचकः । पाचकखञ्ज इति । शिंशपावृक्ष इत्यत्र तु शिंशपात्वस्य व्याप्यत्वात् वृक्षत्वस्य च व्यापकत्वात् विशेषणविशेष्यभावव्यवस्था स्पष्टैवेति दिक् ॥

पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ॥ एते सुबन्ताः समानाधिकरणेन सुपा सह प्राग्वत् । पूर्वेणैव सिद्धे पूर्वनिपातानियमार्थमिदम् । गुणक्रियाशब्दैः सह समासे पूर्वादीनामेव पूर्वनिपातो यथा स्यात् । पूर्ववैयाकरणः । अपराध्यापक इत्यादि । अपरश्चासावर्द्धश्च पश्चार्द्धः । पश्चादिति सूत्रे पठिष्यमाणेनार्द्धेचेति वार्तिकेनापरस्य पश्चभावः । पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायमिति कालिदासः । अथ कथं दृप्तं सराजन्यकमेकवीर इति । इह हि पूर्वकालैकेति वाधित्वा परत्वादनेन समासे वीरैक इति स्यात् । सत्यम् । पूर्वविप्रतिषेधोऽत्र वक्तव्य इति दुर्घटवृत्तिकारादयः । न त्वत्रोपष्टम्भकं मुनित्रयवचः पश्यामः बहुलग्रहणं वा शरणीकर्त्तव्यम् ॥

श्रेण्यादयः कृतादिभिः ॥ अर्थः प्राग्वत् । श्रेण्यादिषु च्व्यर्थे वचनम् ॥ अश्रेणयः श्रेणयः कृताः श्रेणिकृताः । एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समूहः श्रेणि । श्रेण्यादयः पठ्यन्ते । कृतादिराकृतिगणः । च्व्यन्तानां तु कुगतीति नित्यं स

मासः परत्वात् । श्रेणि, एक, पूग, मुकुन्द, राशि, विषय, निचय, निधन, इन्द्र, देव, मुण्ड, भूत, श्रवण, वदान्य, अध्यापक, अभिरूपक, ब्राह्मण, क्षत्रिय, पटु, पण्डित, कुशल, चपल, निपुण, कृपण, इति श्रेण्यादिः ॥

क्तेन नञ्विशिष्टेनानञ्॥ नञ्मात्राधिकेन क्तान्तेनानञ् क्तान्तं समस्यते स तत्पुरुषः । कृतं च तदकृतं च कृताकृतम् । एकमेव वस्तु एकदेशकरणात्कृतमेकदेशान्तरस्याकरणाच्चाकृतमित्युच्यते । पीतापीतम् । उदितानुदितम् । नुडिडाविषयेऽपीष्यते । अशितानशितं, क्लिष्टाक्लिशितम् । नुडिड्ग्रहणमर्थाभेदकस्य विकारस्याप्युपलक्षणम् । शाछोरन्यतरस्यां, छाताच्छितम् । पूर्वनिपातनियमार्थं सूत्रारम्भः । कृतापकृतादीनामुपसंख्यानम् ॥ कृतापकृतम् । भुक्तविभुक्तम् । पीतविपीतम् । गतप्रत्यागतम् । भावे क्तः । तत्क्षणभुवा प्रत्यागमनेन सहचरितं गमनं गतप्रत्यागतम् । यातं च तदनुयातं च तदानीमेव पुनर्गमनात् यातानुयातम् । क्रयाक्रयिका । अल्पइति कप्रत्यय । तदन्तश्च स्वभावात्स्त्रियाम् । अन्येषामपि दृश्यतइति दीर्घ । महान् क्रयः क्रयशब्देनोच्यते । गोबलीवर्दन्यायात् । एवं पुटापुटिका फलाफलिका मानोन्मानिकेति । समानाधिकरणाधिकारे शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् ॥ शाकप्रियः पार्थिवः शाकपार्थिवः । पृथिव्या ईश्वरः । तस्येश्वर इत्यञ् । लक्षणया सिद्धे उत्तरपदलोपो नोपसंख्येय इत्याहुः ॥

सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥ एते पूज्यमानैः सह प्राग्वत् । गुणक्रियाशब्दैः सह समासे सदादीनां पूर्वनिपातनियमार्थं सूत्रम् । सत्पाठकः । महावैयाकरण इत्यादि । पूज्यमानैः किम् । उत्कृष्टो गौः । कर्दमादुद्धृत इत्यर्थः । महाजनो महोदधि-

वलिना । वलिशब्दः पामादिः।युवजरन् युवजरतीति । जीर्यतेरतृन्। उगितश्चेति ङीप् । युवत्यामेव जरतीधर्मोपलम्भेन तद्रूपारोपात्सामानाधिकरण्यम् । यत्तु एवं सति पुंस्येव स्त्रीत्वारोपेण जरतीसामानाधिकरण्यं सम्भवतीति परिभाषाज्ञापनं कथमिति हरदत्तेनोक्तं, तत्रेदमुत्तरम् । आरोपं विनोपपत्तौ किं तेन । नहि एकमगत्या आरोपितमिति सर्वमेवारोपणीयम् । लक्ष्यानुरोधेन परिभाषाज्ञापनस्यैवौचित्यात् । कुमारः श्रमणादिभिरिति वा ज्ञापकमस्तु । श्रमणादिषु स्त्रीलिङ्गानामेव बहूनां पाठात् । अश्वादिभ्यः फञ्विधौ पुंसिजात इति गणसूत्रे पुंसीत्युक्तिर्ज्ञापिकेति तु तत्त्वम् । युवशब्दस्य पूर्वनिपातनियमार्थं वचनम् । अनियमो हि प्रसक्तः । गुणशब्दत्वात् ॥

कृत्यतुल्याख्या अजात्या ॥ कृत्यप्रत्ययान्तास्तुल्यपर्यायाश्चाजातिवचनेन सह प्राग्वत् । भोज्योष्णम् । भोज्यलवणम् । तुल्यश्वेतः । सदृशश्वेतः । पूर्वनिपातनियमार्थं वचनम् । अजात्येति किम् । भोज्य ओदनः । प्रतिषेधसामर्थ्याद्विशेषणमित्यपि न भवति । तुल्यमहानित्यादौ तु परत्वादनेन सन्महदिति बाध्यते । तस्य तु अकृत्यतुल्याख्या अवकाशः । कथं तर्हि तस्य सत्कृत्यशालिन इति भट्टिः । सन्महदित्यस्मात्परत्वादनेन समासे कृत्यसदिति स्यात् । सत्यम् । सतां कृत्यमिति षष्ठीसमासो बोध्यः । एवं परमपूज्य इत्यत्र ॥

वर्णो वर्णेन ॥ समानाधिकरणेन सह प्राग्वत् । कृष्णसारङ्गः । सारङ्गश्चित्रः । स चाकृष्णोपि सम्भवति । अतः कृष्णो विशेषणम् । न चासम्भवः । नानारूपसमाहारश्चित्रमित्यभ्युपगमात् । चित्रत्वं रूपत्वव्याप्यं नीलत्वादिविरुद्धं जात्यन्तरमेवेति पक्षे तु कृष्णावयवके कृष्णशब्दस्य लक्षणा बो-

ध्या । स्यादेतत् । तृतीयातत्कृतेतीह सिद्धम् । सारङ्गत्वस्य कृष्णादिकृतत्वात् । एवं च वर्णोवर्णेष्विति पूर्वपदप्रकृतिस्वरोपि न विधेयः । तत्पुरुषे तुल्यार्थतृतीयेत्येव गतार्थत्वात् । मैवम् । कृष्णशुक्लो हरितशुक्ला इत्याद्यर्थं समासस्यावश्यंविधेयत्वात् । न हीह तत्कृतत्वमस्ति । तथा स्वरसूत्रमप्युभाभ्यां वक्तव्यम् । इह मा भूत्, कृष्णैतो लोहितैत इति । तथा चानेत इति निषेधार्थं विध्यर्थं वेति परं संशयः । तत्र कृष्णशुक्लादौ विध्यर्थमेवेति स्थितम् । प्रतिपदोक्तस्य समासस्य ग्रहणसंभवात्स्वरसूत्रे वर्णोनेत इत्येवास्तु वर्णेष्विति न कर्तव्यमिति तु तत्त्वम् । वस्तुतस्तु वर्णो वर्णेष्विति यथान्यासमस्तु । प्रकृतसूत्रमेव तु न कर्तव्यं विशेषणं विशेष्येणेत्येव समासस्य सिद्धत्वादिति ध्येयम् । मत्वर्थीयचिकीर्षायां न कर्मधारय इति वक्तव्यम् ॥ वीरपुरुषवान् ग्राम इति मा भूत् । तथा च प्रथमत एव मत्वर्थविवक्षया बहुव्रीहिरेव भवति । न्यायसिद्धं चेदमिति भाष्यम् । बहुव्रीहिमात्रेण लभ्यर्थे मतुबादेर्गौरवपराहतत्वात् । कृष्णसर्पवान्वल्मीकः । लोहितशालिमान् ग्राम इत्यादि तु भवत्येव । कर्मधारयं विना जातिविशेषस्याप्रतीतेः । सर्वशब्दस्य त्वकारान्तैः कर्मधारय इष्यते । तस्माच्च ठनं वाधित्वेनिरेवेति वक्तव्यम् । सर्वधनी सर्वबीजी सर्वकेशी ॥

कुमारः श्रमणादिभिः ॥ पूर्वनिपातनियमार्थं सूत्रम् । येत्र स्त्रीलिंगाः पठ्यन्ते श्रमणा, प्रव्रजिता, कुलटेत्येवमादयस्तैः सह स्त्रीलिङ्ग एव कुमारशब्दः समस्यते । ये तु पुंलिङ्गा अध्यापकादयस्तैरुभयथा । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् । कुमारी श्रमणा कुमारश्रमणा । श्रमणा । प्रव्रजिता । कुलटा । गर्भिणी । तापसी । दासी । बन्धकी । अध्यापक ।

अभिरूपक । पण्डित । पटु । मृदु । कुशल । चपल । निपुण ॥

चतुष्पादो गर्भिण्या ॥ जातिरिति मण्डूकप्लुत्यानुवर्तते चतुष्पाज्जातिवाचिनः सुबन्ता गर्भिणीशब्देन सह प्राग्वत् । गोगर्भिणी अजगर्भिणी । जातिः किम् । कालाक्षी गर्भिणी । चतुष्पात्किम् । ब्राह्मणी गर्भिणी । गर्भिणीशब्दस्य परनिपातार्थं वचनम् । प्रत्युदाहरणे तु विशेषणमितिसमासे पूर्वनिपातो बोध्यः ॥

मयूरव्यंसकादयश्च ॥ एते समुदाया निपात्यन्ते । चकारोवधारणार्थः समासान्तरं व्यावर्तयति । व्यंसको धूर्तः । मयूरश्चासौ व्यंसकश्चेति विग्रहः । व्यंसकशब्दस्य गुणवचनत्वात्पूर्वनिपाते प्राप्ते वचनम् । एवं छात्रव्यंसकादीनां यवनमुण्डपर्यन्तानाम् । अन्ये त्वाहुः । मयूर इव व्यंसकः छात्र इव व्यंसकः कम्बोज इव मुण्डः यवन इव मुण्डः । उपमानसमासोयम् । तत्रोपमानानिसामान्यवचनैरित्येव सिद्धे पुनर्विधानं तत्पुरुषेतुल्यार्थतृतीयेति पूर्वपदप्रकृतिस्वरो मा भूदिति । स ह्युपमानसंशब्देनेन विहिते समासे विधीयते । मयूरव्यंसकः । छात्रव्यंसकः । कम्बोजमुंडः । यवनमुंडः । पादगृह्य, हस्तगृह्य, लाङ्गूलगृह्य, पुनर्दाय, एते चत्वारश्च छन्दसि । यत्साक्षिणाः पितर पादगृह्य । अग्निर्होता हस्तगृह्या निनाय । पुनर्दाय ब्रह्मजाय्याम् । पुनश्चनसौछन्दसीति गतिसंज्ञा तु वार्तिककारोक्ता न तु सूत्रारूढेति गणकारेणेदं पठितम् । एहीडादयोन्यपदार्थे ॥ एहीडेति यस्मिन्कर्मणि तदेहीडम् । एवमेहियवम् । एहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजा । एवमपेहिवाणिजा । प्रेहिवाणिजा । एहि स्वागतमिति यस्यां क्रियायां सा एहिस्वागता । ऊह वितर्के, लोण्मध्यमैकवचनम् । मोह कटमिति यस्यां

सा मोहकरटा। निपातनात्परस्मैपदम्। मोहकटा। मोहकर्दमा, उद्धरचूडा। आहरवसना। आहरवनिता। कृन्तविचक्षणा। कृती छेदने। लोट्। सेर्हिः मुचादित्वान्नुम्। कृन्त विचक्षण इति यस्यां क्रियायां सेत्यर्थः। गणरत्ने तु कृन्धि विचक्षणेति पाठः। तत्र कृती वेष्टनइति रुधादिर्बोध्यः। उद्धर कोष्ठात् उत्सृज देहीति यस्यां क्रियायां सा उद्धरोत्सृजा। आख्यातमाख्यातेनेति सिद्धे असातत्यार्थं वचनम्। एवमुद्धमविधमा। उत्पचनिपचा। उत्पतनिपता। इहैषां समासानामन्यपदार्थे स्त्रीलिङ्गत्वाट्टाप्। एवमग्रेपि। उदक् च अवाक् च उच्चावचम्। उच्चैश्च नीचैश्चोच्चनीचम्। आचितं चापाचितं च आचोपचम्,आचपचम्,निश्चितं च प्रचितं च निश्चप्रचम्। एते सर्वे निपात्यन्ते। न विद्यते किं चन यस्यासावकिञ्चनः। सकिञ्चनः। स्नात्वाकालकः। इह समासान्तोदात्तत्वं ल्यबभावश्च निपात्यते समानकर्तृकत्वं तु अन्तर्भूतक्रियापेक्षं बोध्यम्। स्नात्वाकालकः संपन्न इत्यर्थावगमात्। पीत्वास्थिरकः भुक्त्वासुहितः। प्रोष्य पायान् उत्पत्य या कला उत्पतन कृता या पाण्डुर्भवति सोच्यते हस्तिज्वरः पाकल। तद्विशेषस्तु कूटपाकलः कलभं कठोर इव कूटपाकल इति भवभूतिप्रयोगात् हस्तिशास्त्रे तथादर्शनाच्चेत्यन्ये। निपत्यरोहिणी निपद्यश्यामा अपेहिप्रघसा। जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति॥ जहीति लोण्मध्यमैकवचनान्तम्। तत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्यमाने समासेन चेत्कर्ताभिधीयते। जहिजोडमित्याभीक्ष्ण्येन य आह स जहिजोडः। जहिस्तम्बः। उज्जहिस्तम्बः। आख्यातमाख्यातेन क्रियासातत्ये॥ अश्नीतपिबतेत्येवं यत्र सततमभिधीयते सा ऽश्नीतपिबता। एवं, पचतभृज्जता। खादत-

अभिरूपक । पण्डित । पटु । मृदु । कुशल । चपल । निपुण ॥

चतुष्पादो गर्भिण्या ॥ जातिरिति मण्डूकप्लुत्यानुवर्तते चतुष्पाज्जातिवाचिनः सुबन्ता गर्भिणीशब्देन सह प्राग्वत् । गोगर्भिणी अजगर्भिणी । जातिः किम् । कालाक्षी गर्भिणी । चतुष्पात्किम् । ब्राह्मणी गर्भिणी । गर्भिणीशब्दस्य परनिपातार्थं वचनम् । प्रत्युदाहरणे तु विशेषणमितिसमासे पूर्वनिपातो बोध्यः ॥

मयूरव्यंसकादयश्च ॥ एते समुदाया निपात्यन्ते । चकारोवधारणार्थः समासान्तरं व्यावर्तयति । व्यंसको धूर्तः । मयूरश्चासौ व्यंसकश्चेति विग्रहः । व्यंसकशब्दस्य गुणवचनत्वात्पूर्वनिपाते प्राप्ते वचनम् । एवं छात्रव्यंसकादीनां यवनमुण्डपर्यन्तानाम् । अन्ये त्वाहुः । मयूर इव व्यंसकः छात्र इव व्यंसकः कम्बोज इव मुण्डः यवन इव मुण्डः । उपमानसमासोयम् । तत्रोपमानानिसामान्यवचनैरित्येव सिद्धे पुनर्विधानं तत्पुरुषेतुल्यार्थतृतीयेति पूर्वपदप्रकृतिस्वरो मा भूदिति । स ह्युपमानसंशब्दनेन विहिते समासे विधीयते । मयूरव्यंसकः । छात्रव्यंसकः । कम्बोजमुंडः । यवनमुंडः । पादगृह्य, हस्तगृह्य, लाङ्गूलगृह्य, पुनर्दाय, एते चत्वारश्च छन्दसि । यस्माक्षिणाः पितरं पादगृह्य । अग्निर्होता हस्तगृह्या निनाय । पुनर्दाय ब्रह्मजायाम् । पुनश्चनसौछन्दसीति गतिसंज्ञा तु वार्तिककारोक्ता न तु सूत्रारूढेति गणकारेणेदं पठितम् । एहीडादयोन्यपदार्थे ॥ एहीडेति यस्मिन्कर्मणि तदेहीडम् । एवमेहियवम् । एहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजा । एवमपेहिवाणिजा । प्रेहिवाणिजा । एहि स्वागतमिति यस्यां क्रियायां सा एहिस्वागता । ऊह वितर्के, लोण्मध्यमैकवचनम् । मोह कपटमिति यस्यां

सा मोहकरटा । निपातनात्परस्मैपदम् । मोहकटा । मोहकर्दमा, उद्धरचूडा । आहरवसना । आहरवनिता । कृन्तविचक्षणा । कृती छेदने । लोट् । सोऽहिः मुचादित्वान्नुम् । कृन्त विचक्षण इति यस्यां क्रियायां सेत्यर्थः । गणरत्ने तु कृन्धि विचक्षणेति पाठः । तत्र कृती वेष्टनइति रुधादिर्बोध्यः । उद्धर कोष्ठात् उत्सृज देहीति यस्यां क्रियायां सा उद्धरोत्सृजा । आख्यातमाख्यातेनेति सिद्धे असातत्यार्थं वचनम् । एवमुद्धमविधमा । उत्पचनिपचा । उत्पतनिपता । इहैषां समासानामन्यपदार्थे स्त्रीलिङ्गत्वाट्टाप् । एवमग्रेपि । उदक् च अवाक् च उच्चावचम् । उच्चैश्च नीचैश्चोच्चनीचम् । आचितं चोपाचितं च आचोपचम्, आचपचम्, निश्चितं च प्रचितं च निश्चप्रचम् । एते सर्वे निपात्यन्ते । न विद्यते किं चन यस्यासावकिञ्चनः । सकिञ्चनः । स्नात्वाकालकः । इह समासान्तोदात्तत्वं ल्यबभावश्च निपात्यते समानकर्तृकत्वं तु अन्तर्भूतक्रियापेक्षं बोध्यम् । स्नात्वाकालकः संपन्न इत्यर्थाद्... । पीत्वास्थिरकः भुक्त्वासुहितः । प्रोष्य पापीयान् उत्पत्य ...ला उत्पतन कृत्वा या पाण्डुर्भवति सोच्यते हस्तिज्वरः पाकल । तद्विशेषस्तु कूटपाकलः कलभं कठोर इव कूटपाकल इति भवभूतिप्रयोगात् हस्तिशास्त्रे तथादर्शनाच्चेत्यन्ये । निपत्यरोहिणी निपत्यश्यामा अपेहिप्रघसा । जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति ॥ जहीति लोण्मध्यमैकवचनान्तम् । तत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्यमाने समासेन चेत्कर्ताभिधीयते । जहिजोडमित्याभीक्ष्ण्येन य आह स जहिजोडः । जहिस्तम्बः । उज्जहिस्तम्बः । आख्यातमाख्यातेन क्रियासातत्ये ॥ अश्नीतपिबतेत्येवं यत्र सततमभिधीयते सा ऽश्नीतपिबता । एवं, पचतभृज्जता । खादत-

मोदता । खादतवसता । आहरनिचया । आहरनिष्कषा । उत्पचनिपचा । भिन्धिलवणा। भिन्धि लवणमिति यस्यामभिधीयते सा क्रिया तथा । एव पचलवणा । आकृतिगणोयम् । तेनान्येपि ज्ञेयाः । तत्र के चिद्गणरत्नकृता संगृहीताः । तद्यथा नास्ति कुतोपि भयं यस्य सः अकुतोभयः । कान्दिशं गच्छमीति य आह स कान्दिशीकः । गणपाठसामर्थ्यादीकण् द्वीतीयाया अलुक । कान्दिशीको भयद्रुत इत्यमरः । अहोपुरुषोहमिति यो मन्यते तस्य भाव आहोपुरुषिका ।। मनोज्ञादित्वाद्वुञ् । अहं शक्तोहं शक्त इति यस्यां साहमहमिका । या इच्छा अभिप्राय इति यदृच्छा । एहिपाहिरा । एहि रे पाहि रे इति यस्यां सा तथेत्यर्थः । गणपाठादात्वम् । एहिरां पाहिरे नीतायेन निश्चमचा अपि । तत्कर्मि दग्धुं सेवेथा गोविन्दमकुतोभयम्।। उन्मृड्ढि अवमृड्ढीति यस्यां सा उन्मृजावमृजा । अत एव निपातनादनयोरिहैव साधुत्वम् । अन्यद् द्रव्यं द्रव्यान्तरम् । अन्तरशब्दो भिन्नवाची । भिन्नश्चाभेदे संबन्धेन पूर्वपदार्थे विशेषणम् । पूर्वपदजन्यबोधप्रकाराश्रयप्रतियोगित्वं भेदे व्युत्पत्तिसिद्धम् । अवश्यकार्यम् । तदेव तन्मात्रम् । मात्रं कात्स्न्र्येवधारणे इत्यादि ॥

इति श्री शब्दकौस्तुभे द्वितीयाध्यायस्य
प्रथमे पादे तृतीयमाह्निकम् ॥
पादश्चायं समाप्तः ॥

पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥ अवयविना सह पूर्वादयः समस्यन्ते स तत्पुरुषः एकत्वसंख्याविशिष्टश्चेदवयवी भवति । पूर्वं कायस्येति पूर्वकायः । अपरकाय इत्यादि । षष्ठीसमासापवादोयम् । तथा च कायपूर्वं इति प्रयो-

गोनेन व्यावर्त्यते । पूर्वकाय इति प्रयोगस्तु पूर्वश्चासौ कायश्चेति कर्मधारयेणापि सिद्धः । समुदायेषु हि वृत्ताः शब्दा अवयवेपि वर्तन्तइति न्यायात् ऊर्ध्वकाय इतिवत् । ननु षष्ठीसमासव्यावृत्तयेपि सूत्रं न कार्यं षष्ठ्या एवेह दुर्लभत्वात् । पञ्चम्या हीह भाव्यम् । दिशि दृष्टः शब्दो दिक्शब्द इति व्याख्यानेन सम्प्रत्यदिग्वृत्तिनापि योगे पञ्चमीस्वीकारात् । सत्यम् । अवयववृत्तिभिर्योगे षष्ठ्येवेष्यते । तस्यपरमाम्रेडितमिति लिङ्गात् । एकदेशिशब्दोयमवयवे रूढः । अत एव ततो मत्वर्थीयः कृष्णसर्पवान्वल्मीक इति यथा । यद्यपीह एकगोपूर्वादिति ठञ् प्राप्तस्तथाप्यत एव निर्देशादिनिर्बोद्धव्यः । एकदेशवाचिनि तु एकदेशीयशब्द एव बहुव्रीहिलभ्येर्थे मतुवादयो नेत्युक्तत्वात् । एकदेशिना किम् । पूर्वं नाभेः कायस्य । नाभे पूर्वो भागः स कायस्य सम्बन्धीत्यर्थः । नाभेरिति दिग्योगलक्षणपञ्चमी । अत्र पूर्वस्य भागस्य नाभिरवधिर्न त्वेकदेशी अतो न नाभ्या समासः । कायेन तु स्यादेव, पूर्वकायो नाभेरिति । पूर्वशब्दस्य नित्यसापेक्षत्वात् । एकाधिकरणे किम् । पूर्वं छात्राणामामन्त्रयस्व, नेयं निर्धारिणे षष्ठी किन्तु समुदायसमुदायिसम्बन्धे । बहुवचनं तूद्भूतावयवभेदसमुदायविवक्षया यथा छात्राणां पञ्चम इति, ततश्च छात्राणामेकदेशित्वमस्त्येव । किं त्वेकत्वसंख्याविशिष्टं नास्तीति समासाभावः । कथन्तर्हि मध्याह्नः सायान्ह इति । अत्राहुः । सर्वस्यैकदेशवाचिनोन्हा समासः । संख्याविसायेतिज्ञापकात् । नत्यन्यथा सायपूर्वत्वमन्हस्योपपद्यते । केचित्तु नेदं विशेषापेक्षं ज्ञापकमन्हेति किन्तु सामान्यापेक्षम् । सर्व एकदेशवाची कालेन समस्यतइति ज्ञाप्यशरीरम् । तेन मध्यरात्र । उपारताः पश्चिमरात्रगोचरा इत्यादि सिद्धम् । न चोर्ध्व-

कायवत्सामानाधिकरण्येन सायान्हमध्यरात्रादेर्निर्वाहः शङ्क्यः । अहःसर्वैकदेशेत्यादिना विहितस्याचोन्होन्हएतेभ्य' इत्यन्हा· देशस्य चैकदेशिसमास विनानुपपत्तेः । कथन्तर्हि दिनमध्यो रात्रिमध्य इति । ज्ञापकसिद्धं न सर्वत्रेत्यदोष ॥

अर्धं नपुंसकम् ॥ नित्यक्लीबोऽर्धशब्द एकद्रव्ये विद्यमानेनावयविवाचिना सह प्राग्वत् । भित्तं शकलखण्डे वा पुस्यर्धोर्ध समेंशकइत्यमरः ॥ इह काकाक्षिन्यायेन वापुंसीति पूर्वोत्तराभ्यां सम्बध्यते । तत्र शकलखण्डे इति नपुंसकत्वस्य रूपभेदान्निर्णये पुस्याविकल्पादस्त्रियामिति फलितम् । न च स्त्री· लिङ्गरूपमेव किन्न स्यादिति वाच्यम् । भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात् । शकलश्चास्त्रीति निर्देशेनैव निर्णया त् । अर्ध इत्यत्र तु रूपभेदात्पुंस्त्वावगतौ सत्यां वापुंसीति तद्वि· कल्पेनाविशेषात्स्त्रीनपुंसके लभ्येते । तथा चार्धशब्दस्त्रिष्विति फ लितोर्थः । समेंशके तु अर्धं नित्यनपुंसकमित्यर्थः । अर्धं पिप्पल्या, अर्धपिप्पली । एकविभक्तावषष्ठ्यन्तवचनमिति पिप्पलीशब्दस्या· नुपसर्जनत्वान्न ह्रस्वः । एकाधिकरणे किम् । अर्ध पिप्पलीना म् । कथं तर्ह्यर्धपिप्पल इति । अर्धानि पिप्पलीनामिति विग्रहे मा भूत् । खण्डसमुच्चये तु भविष्यति । अर्धपिप्पलीच अर्धपिप्पली चेत्यादि विग्रहात् । एकदेशिनेति किम् । अर्धं पशोर्देवदत्तस्य । देवदत्तोत्र स्वामी नत्ववयवीति न तेन समास । पशुना तु स्या· देव । अर्धपशुर्देवदत्तस्येति । देवदत्तस्वामिकं पशोरर्धमित्यर्थः । नपुंसक किम् । ग्रामार्धो नगरार्धः । अर्धमिति निर्देशादेव सिद्धे नपुंसकग्रहण सूत्रे लिङ्गनिर्देशो न विवक्षित इति ज्ञापयितुं तेन तस्येदमिति लिङ्गत्रयेपि भवति । एतत्सूत्रं परवल्लिङ्गमित्यत्र भाष्ये प्रत्याख्यातम् । तथाहि । अर्धपिप्पलीति कर्मधारयेण सि

द्धम् । समुदाये दृष्टाः शब्दा अवयवेपि वर्तन्ते इति न्यायात् । समप्रविभागादन्यत्र हि तत्राप्येषैव गतिः । अर्धाहार । अर्धहारः । अर्धजरतीयम् । अर्धवैशसम् । अर्धोक्तम् । अर्धविलोकितमित्यादिदर्शनात् । न च समप्रविभागे षष्ठीसमासं बाधितुमिदं सूत्रमिति वाच्यम् । षष्ठीसमासस्यापीष्टत्वादिति । तथा च कालिदासः प्रायुङ्क्त । प्रेम्णा शरीरार्धहरां हरस्येति ॥

' द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥ एतानि एकदेशिना सह वा प्राग्वत्स्युरेकं चेद् द्रव्यम् । द्वितीयं भिक्षायाः द्वितीयभिक्षा । भिक्षाद्वितीयम् । तृतीयभिक्षा । भिक्षातृतीयमित्यादि । एकदेशिना किम् । द्वितीयं भिक्षाया भिक्षुकस्य । एकाधिकरणे किम् । द्वितीयं भिक्षाणाम् । स्यादेतत् । पूर्वसूत्रवदिदमपि मत्याख्यायताम् । तथाहि । समुदायशब्दस्यावयवे वृत्तौ कर्मधारयेण द्वितीयभिक्षेत्यादि सिद्धम् । भिक्षाद्वितीयमित्यादि तु षष्ठीसमासेन सिद्धम् । मैवम् । पूरणेतिषष्ठीसमासनिषेधात् । सिद्धान्ते त्वस्मिन् सूत्रेन्यतरस्यांग्रहणसामर्थ्यात्पक्षे षष्ठीसमासो लभ्यते । वाक्यस्य महाविभाषयैव सिद्धेः । नन्वेतत्सूत्रं विनापि पूरणाद्भाग इति स्वार्थेन्प्रत्यय कृत्वा तदन्तेन षष्ठीसमासं करिष्याम इति चेन्न । तत्रापि प्रतिषेधसाम्यात् । पूरणेत्यत्र हि अर्थग्रहणं न तु पूरणाधिकारविहितप्रत्ययग्रहणम् । अर्थशब्दस्य प्रत्येकमभिसम्बन्धात् । स्वार्थिकाश्च प्रकृत्यर्थेनार्थवन्त इति अन्नन्तस्यापि पूरणार्थतास्त्येवेति भाष्ये स्थितम् । अत एव तान्युच्चपष्ठाङ्कितसैकतानीत्यत्र समासः प्रामादिक इत्याहुः । वस्तुतस्तु परवल्लिङ्गमितिसूत्रे तत्पुरुषग्रहणं द्विगुप्राप्त्येत्यादि वार्त्तिकं पूर्वापरेत्यादित्रिसूत्री च भाष्ये प्रत्याख्याता । तथा च भिक्षाद्वितीयादिसिद्धये संज्ञाप्रमाणत्वादिनिर्देशानां सामान्यापेक्षज्ञापकताश्रय-

णीया पूरणेत्यादिनिषेधो ऽनित्य इति । एवञ्चोञ्छषष्ठेत्यपि साधितेति दिक् । तुरीयस्यापीष्यतइति वृत्तिकाराः । एतच्च भाष्यादौ नास्ति ॥

प्राप्तापन्ने च द्वितीयया ॥ एतौ द्वितीयान्ते सह प्राग्वत् । पक्षे द्वितीयाश्रितेतिसमासः । प्राप्तो जीविका प्राप्तजीविकः । जीविकाप्राप्त इति वा । आपन्नजीविकः । जीविकापन्नः । यद्यपि प्राप्ता जीविका येनेति कृत्वा कर्मणि क्तान्तेन बहुव्रीहौ प्राप्तजीविक इत्यादि सिध्यति, तथापि समासान्तोदात्तार्थं वचनं प्राप्तसुख इत्याद्यर्थञ्च । इह हि बहुव्रीहौ जातिकालसुखादिभ्य इति निष्ठायाः परनिपातः स्यात् लिङ्गविशिष्टपरिभाषया प्राप्तशब्दस्याप्ययं समासः । प्राप्ता जीविका प्राप्तजीविकेति । नन्वेकविभक्तौ्युपसर्जनतया जीविकाशब्दस्य- ह्रस्वोस्तु नाम, प्राप्ताशब्दस्य तु कुतः सः । अत्र भाष्यम्, अचेति पूर्वपदस्याकारोपि सूत्रेस्मिन् विधीयते, चकारेण समुच्चयार्थेनाकारप्रश्लेषस्यानुमानादिति प्राप्तापन्ने समस्येते, अ च, अत्वं च भवति प्राप्तापन्नयोः । सौत्रत्वाच्च प्रकृतिभावो नेति भाव इति भाष्यः । वस्तुतस्तु द्वितीयेत्यस्यानन्तरमकारप्रश्लेषो बोध्यः । एव हि प्रकृतिभावप्रसङ्ग एव नास्तीति बोध्यम् ॥

कालाः परिमाणिना ॥ परिमीयते परिच्छिद्यते येन तत्परिमाणन्तद्वान्परिमाणी, परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते स तत्पुरुष । मासो जातस्य यस्य स मासजात । ननु जातो देवदत्तः तस्य च दिष्ट्यादि परिच्छेदक न तु कालः । तस्य क्रियामात्रपरिच्छेदकत्वादिति चेत् । सत्यम् । साक्षात्क्रियां परिच्छिन्दन्नपि कालस्तद्द्वारा देवदत्तं परिच्छिनत्ति यस्य हि जननादूर्ध्वं मासो गतः स मासजात इति व्यवह्रिय-

ते तत्र व्यवहारकालजननक्षणयोरन्तरालभावी मासो जननद्वारा जातमपि परिच्छिनत्त्येव । विग्रहे षष्ठीनिर्दिष्टस्यापि वृत्तौ प्राधान्यमिह बोध्यम् । दण्डी चित्रगुरित्यादाविव विशेषणविशेष्यभावव्यत्यासेनैव एकार्थीभावाभ्युपगमात् । तथा च हरिणा । क्व चिद् गुणप्रधानत्वमर्थानामविवक्षितमित्युपक्रम्य, आख्यातं तद्धितार्थस्य यत्किञ्चिदुपदर्शकम् । गुणप्रधानभावस्य तत्र दृष्टो विपर्यय इति, वदता आक्षिकवैयाकरणाद्युदाहरणानि स्पष्टीकृतानि । तथा च मासजात इत्यस्य मासप्राग्भाविजननाश्रय इत्यर्थः । अत एव मासजातो दृश्यतामित्यादिक्रियायोगो जातस्यैव भवति न तु अर्धपिप्पल्यादाविव पूर्वपदार्थस्य । द्व्यहजातः । द्वयोरन्होः समाहारः । राजहःसखिभ्यष्टच् । नसंख्यादेः समाहारइत्यन्हादेशप्रतिषेधः । कथन्तर्हि द्व्यन्हजात इति । उच्यते । नायं समाहारे द्विगुः किन्तूत्तरपदे द्वे अहनी जातस्य यस्येति त्रिपदतत्पुरुषाभ्युपगमात् । ननु सुप्सुपेत्येकत्वस्य विवक्षितत्वात्कथमेतदिति चेत् । वचनादित्यवेहि । उक्तं हि वार्त्तिककृता । उत्तरपदेन परिमाणिना द्विगोः समासवचनमिति ॥ अस्यार्थः । परिमाणिवचनेनोत्तरपदेन द्विगोः सिद्धये समासो वक्तव्यः । अर्थाद् द्वयोर्युगपदिति गम्यते । तथा च वचनाद्बहूनामप्ययं तत्पुरुषो भवति. एवं द्वौ मासौ जातस्य पूर्वयोस्तत्पुरुषे सति कालान्ते द्विगाविति पूर्वपदप्रकृतिस्वरो भवति द्वयोर्मासयोः समाहारो द्विमासम् । पात्रादिः, द्विमासं जातस्येति तु विगृह्य समासे क्रियमाणे सतिशिष्टत्वात्समासान्तोदात्तत्वं स्यात् । स्यादेतत् । यावद्वचनं वाचनिकमिति परिमाणिमात्रेण त्रिपदतत्पुरुषः । अन्यत्र तु द्विपद एवेति स्थितम् । तथा च कथं त्रिलोकनाथेन सतां मखद्विप इति कालिदासः । नवरसरुचि-

रमिति च काव्यप्रकाशकारः । इह हि त्रिलोकनवरसशब्दयोर्न तावद्विशेषणं विशेष्येणेति समासः । दिक्संख्येसंज्ञायामिति नियमात् । नापि समाहारे द्विगु । द्विगोरिति ङीप्प्रसङ्गात् । न च पात्रादित्वं कल्प्यम् । त्रिलोकीति प्रयोगस्यासाधुतापत्तेः । तथा च परिशेषात्त्रिपदत्वपक्ष एवावशिष्यते द्विमासजातः । त्रिपदे तत्पुरुषे जातशब्दे उत्तरपदे परतः स चोक्तरीत्या दुष्ट एवेति । अत्रोच्यते लोकशब्दोऽत्र समुदायपरः । तथा च त्र्यवयवो लोक इति मध्यमपदलोपी तत्पुरुषः । इदञ्च द्विगोर्लुगनपत्यइत्यत्र भाष्यएव स्पष्टम् । त्रयाणां लोकनाथ इति वा । नवरसा चासौ रुचिरेति बहुव्रीहिगर्भः कर्मधारयोपि सुवचः । प्रकृतमनुसरामः । राजपुरुष इत्यादौ यद्यप्यभेदैकत्वसंख्या भासते तथापि मासजाते न तथा किन्तु शूर्पेण क्रीतः शौर्पिक इत्यत्र शूर्पस्येव मासस्य मुख्यमेवैकत्वम् । अक्तपरिमाणस्य वाचके तथव व्युत्पत्तेरिति ध्येयम् ॥

नञ् ॥ नञ् सुपा सह समस्यते । अब्राह्मणः । अवृषलः । उत्तरपदार्थप्रधानोयम् । तथाहि । आरोपितत्वं नञा द्योत्यते । तच्चोत्तरपदप्रवृत्तिनिमित्तम् । तथा चारोपितं यद् ब्राह्मणत्वं तद्विशिष्टे समास शक्तः विशेषणविशेष्ययोः संसर्गस्त्वारोप एव तेन· ब्राह्मणाभिन्नत्वबोध आर्थः । अत एवानुपसर्जनत्वादतस्मिन्नित्यादिसर्वनामकार्यनिर्वाहः । स्यादेतत् । विघ्नानामभावो ऽविघ्नमित्यत्रापि परत्वात्तत्पुरुषः स्यात् । अव्ययीभावस्तु निर्मक्षिकमित्यादौ सावकाशः । मैवम् । उत्तरपदार्थप्राधान्यएवास्य प्रवृत्तेः । उक्तं हि प्राक् । अव्ययीभावादिमहासंज्ञाव्यवहारेण पूर्वाचार्योक्तार्थनियमोप्युन्सर्गत स्वीक्रियतइति । नन्वेवमनुपलब्धिरित्यादौ का गतिः ।

शृणु । रक्षोहागमलध्वसन्देहा इति भाष्यप्रयोगात्पक्षे तत्पुरुषोपीष्यते । अत एव भूवादिसूत्रे अथासंहितयेति विरामोवसानमिति सूत्रे त्वद्रुतायामसंहितमिति द्विधापि भाष्यवार्तिकयोः प्रयुक्तम् । यद्वा । अनुपलब्ध्यसन्देहादावपि लाक्षणिक आर्थो वा तदभावबोधः । स्यादेतत् । अन्यपदार्थप्राधान्येयं समासः । भावप्रधानो ह्यत्र निर्देशः । न ब्राह्मणत्व यस्मिन्नित्यर्थादुन्मत्तगङ्गादावव्ययीभाव इवेह तत्पुरुषो बहुव्रीहेर्बाधक इति। फलन्तु अकर्ता ऽभोक्तेत्यादौ नञ्तश्चेति कबभावः स्यात् । मैवम् । अतस्मिन्नित्यादौ सर्वनामकार्यगणकार्ययोरसिद्धिप्रसङ्गात् । अवर्षा हेमन्त इत्यत्र हेमन्तस्येव तद्विशेषणस्याप्येकवचनापत्तेश्च।अधनो ब्राह्मण इत्यादावपि न्यायसाम्यात्तत्पुरुषपरवल्लिङ्गतापत्तेश्चेति दिक् । मतान्तरन्तु तपः श्रुतञ्च योनिश्चेत्येतद्ब्राह्मणकारणम्। तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव स, इत्यादिवचनप्रामाण्यात्सर्वे समुदायशब्दाः तत्तव्यक्तिभिरिव तदीयगुणसमुदायेनाप्युपहितायाः सत्ताया जातित्वात् तथा च अपूर्णो ब्राह्मणो ऽब्राह्मण ·इति सर्वथाप्युत्तरपदार्थप्राधान्यं निर्बाधम् । अत्र च लिङ्गम् । एतत्तदोरिति सूत्रे ऽनञ्समासग्रहणम् । एवञ्च अनेकमन्यपदार्थइत्यादावेकवचन सिद्धम् । माघश्च सेव्यतेनेकया सन्नतापाङ्गयेति । कथन्तर्हि पतन्त्यनेके जलधेरिवोर्मय इति । अत्राहुः । अध्यारोपितैकत्वानां प्रकृत्यर्थतया तत्र वास्तवबहुत्वाभिप्रायं बहुवचनं न विरुध्यतइति । अनेकश्चानेकश्चेत्येकशेषो वा । यत्तु तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥ यथा अब्राह्मणः, अपापं , अनश्वः, अनुदरा कन्या, अपचसि, अधर्म, इति । तत्तु यथायथ-

मार्थिकार्थमभिप्रेत्येति बोध्यम् । निरूढलक्षणायाः शक्तिसमकक्ष्यतया सिद्धान्ते त्वतिरिक्तशक्तेरुक्ततया वृत्तिविशेषे तदर्थान्तर्भाव इति वा कथं चिन्नेयम् । इह न ब्राह्मणस्य भाव इति युगपदेव भावेनारोपितत्वेन च सम्बन्धे विवक्षिते समास एव प्रथमम् । न तु परावपि त्वतलौ प्रकृत्यर्थस्य सापेक्षत्वेनासामर्थ्यात् । नञ्समासस्तु प्रधानस्य सापेक्षत्वान्निर्बाधः । तन्त्रश्च सतिशिष्टः प्रत्ययस्वरो लित्स्वरश्च भवति न तु तत्पुरुषे तुल्यार्थेत्ययम् ॥

ईषदकृता ॥ स्पष्टोर्थः । ईषत्पिङ्गलः । नन्वीषद्रक्तमीषदुन्नतमित्यादावव्याप्तिः । ईषद्गार्ग्यादावतिव्याप्तिश्च । सत्यम् । अत एव वार्तिककृतोक्तं, ईषद्गुणवचनेनेति । अकृतेत्यपनीय तत्स्थाने गुणवचनेनेति पूरणीयमित्यर्थः । अतो नाव्याप्त्यतिव्याप्ती । यद्यपि गर्गापत्यत्वे उत्कर्षापकर्षौ न स्तस्तथापि तदेकार्थसमवायिनां क्रियागुणानान्तौ बोध्यौ । तथा च प्रयुज्यते गार्ग्यतरो गार्ग्यकल्प इत्यादि ॥

षष्ठी ॥ षष्ठ्यन्तं समर्थेन सुबन्तेन सह प्राग्वत् । राजपुरुषः । कृद्योगा च षष्ठी समस्यत इति वाच्यम् ॥ इध्मप्रव्रश्चनः । प्रतिपदविधाना चेति निषेधस्यायमपवादः । वस्तुतस्तु स निषेधोऽपि तदपवादश्चेत्युभयमपि न वक्तव्यमिति वक्ष्यते ॥

याजकादिभिश्च ॥ एभिः षष्ठी समस्यते । तृजकाभ्यां कर्तरीत्यस्य प्रतिप्रसवोऽयम् । ब्राह्मणयाजकः । याजक, पूजक, परिचारक, परिषेचक, स्नातक, अध्यापक, उत्सादक, उद्वर्तक, होतृ, पोतृ, भर्तृ, रथगणक, पत्ति, गणक । इत् । गुणात्तरेण तरलोपश्चेति वक्तव्यम् ॥ इदञ्च वार्तिकं भाष्ये सर्वं गुणकार्त्स्न्ये इति

सूत्रे पठितम्। तरबन्तं यद् गुणवाचि तेन समास इत्यर्थः। ननिर्धारणइति निषेधस्यायमपवाद इति वृत्तिकाराः। पूरणगुणेति गुणनिषेधस्येति भाष्यकाराः। सर्वेषां श्वेततरः सर्वश्वेतः। सर्वेषां महत्तरः सर्वमहान्॥

न निर्धारणे॥ निर्धारणे या षष्ठी सा न समस्यते। नृणां द्विजः श्रेष्ठः। अत्र द्विजशब्देन समासप्रसङ्गः। तदपेक्षा हि षष्ठी। कथं पुरुषोत्तम इति. अत्र समाधानं, द्विवचनविभज्येति सूत्रे स्थित्वा कैयट आह यस्मान्निर्धार्यते यश्चैकदेशो निर्धार्यते यश्च निर्धारणहेतुरेतत्त्रितयसन्निधाने निर्धारणं भवतीति तत्रैवायं निषेधो न तु त्रितयसन्निधानाभावेपीति। यद्वा, पुरुषेषूत्तम इति निर्धारणसप्तम्यां संज्ञायामिति समासः। यत्त्वेवं सति ननिर्धारणइति सूत्रं व्यर्थं स्यादिति। तन्न। स्वरे भेदात्। सप्तमीसमासे हि तत्पुरुषेतुल्यार्थेति पूर्वपदप्रकृतिस्वरः षष्ठीसमासे त्वन्तोदात्तत्वं स्यात्। प्रतिपदविधाना च षष्ठी न समस्यतइति वाच्यम्॥ सर्पिषो ज्ञानम्। ज्ञोविदर्थस्येति षष्ठी, सा च प्रतिपदविधाना षष्ठीशेषइति विहायान्यस्याः सर्वस्या अपि तथात्वात्। न चैवमनेनैव गतार्थत्वान्निर्धारणइति व्यर्थमिति शङ्क्यम्। यतश्चानिर्धारणमिति सूत्रं हि षष्ठीं न विधत्ते किन्तु सप्तमीमेव। षष्ठी तु तया मा बाधीति प्रतिप्रसूयतइत्यन्यदेतत्। एवं स्वामीश्वरेत्यादिष्वपि। तेन गृहस्वामी सर्वेश्वर इत्यादि सिद्धम्। वस्तुतस्तु ज्ञोविदर्थस्येत्यादिचतुर्दशसूत्रीमध्ये दिवस्तदर्थस्येत्यादिषट्सूत्रीं विहायावशिष्टायामष्टसूत्र्यां शेष इति वर्त्तते। तथा च न माषाणामश्नीयादित्यादाविव षष्ठी शेषइत्येव सिद्धे नियमार्थं प्रकरणं, षष्ठी भवत्येव, श्रूयतएव न तु लुप्यते। तथा च लुक्प्रयोजिका समाससंज्ञैव न भवतीति

फलितोर्थः । तस्मात्प्रतिपदविधाना नेति वचनं न कर्तव्यम् । एवं स्थिते कृद्योगा चेत्यपि मास्तु । कर्तृकर्मणोः कृतीत्यत्र हि शेषइति निवृत्तम् । तथा च षष्ठीविध्यर्थमेव तदिति कुत समासनिवृत्तिप्रसङ्गः । आह च । साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः । प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तयइति ॥ कथन्तर्हि हरिस्मरणं, विशेषस्मृतिहेतवः, पदात् पदार्थस्मरणमित्यादीति चेत्, कर्मणिषष्ठ्या समासस्यानिषेधादिति गृहाण । तथा चेह कारकषष्ठ्या समासात्कृदुत्तरपदप्रकृतिस्वरो भवति । शेषषष्ठीसमासे त्वन्तोदात्तता स्यात् । एवञ्चान्तोदात्तनिवृत्तये प्रकरणं मातुःस्मृतमित्यादौ समासाभावार्थं च । न हि तत्र कारकषष्ठी लभ्यते । नलोकेति प्रतिषेधादिति निष्कृष्टोर्थः । आह च । निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते । शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यतइति ॥

पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥ पूरणाद्यर्थैस्त्रिभिः सदादिभिश्च षष्ठी न समस्यते । पूरणे, सतां षष्ठः । अत्र पूरणार्था प्रत्यया एव गृह्यन्ते न तु पूरणोम्भनादिशब्दा अपि । तेन कुम्भपूरणभवः पटुरुच्चैरित्यादि सिद्धम् । अत्र च ज्ञापकं लोपेचेत्पादपूरणमिति सूत्रप्रयोगः । पूरणाधिकारस्तु न गृह्यते । भागेनप्रत्यये सति तदन्तेनापि निषेधस्य द्वितीयतृतीयेति सूत्रे भाष्यएव स्पष्टत्वात् । अत एव भिक्षाद्वितीयमित्यादावन्यतरस्यांग्रहणसामर्थ्यात्समास इत्युक्तम् । अत एव च तान्युञ्छषष्ठाङ्कितसैकतानीति कालिदासस्य प्रमाद इत्याहुः । षष्ठ इत्याख्यातः षष्ठः । आख्यातण्यन्तादेरजिति वा समाधेयम् । गुणश्चेह सत्त्वे निविशतेपैतीति लक्षितो गृह्यते । केवलगुणस्य गुणोपसर्जनद्रव्यस्य च प्रतिपादकः व्याप्तिन्यायात् । काकस्य

कार्ण्यम् । ब्राह्मणस्य शुक्लाः । यदा ऽर्थात्मकरणाद्वा दन्तादि विशेष्यं निर्ज्ञातं तदेदमुदाहरणम् । कथं तर्हि गोसहस्रमिति । अत्राहु । संख्यया नायं निषेधः शतसहस्रान्ताच्चनिष्कात् कोशशतजनशतयोरुपसंख्यानम् । खारीशतमपि न ददातीत्यादिमुनित्रयप्रयोगात् । अनित्यश्चायं गुणेन निषेधः । संज्ञाप्रमाणत्वात्, उत्तरपदार्थप्राधान्यमित्यादिनिर्देशात् । तेन करणपाटवं, अर्थगौरवं, बुद्धिमान्द्यमित्यादि सिद्धम् । चन्दनगन्ध इत्यादौ तु नायं निषेधः । तत्स्थैश्च गुणैरिति समासस्य प्रतिप्रसवात् । गन्धत्वेन प्रतीयमानो हि गन्धो न कदापि गुणिसमानाधिकरणः । किन्तु स्वप्रधान । यस्तु वहति जलमयं पिनष्टि गन्धानिति प्रयुज्यते स चन्दनत्वादिजातिनिमित्तको न तु गुणशब्दः । मालतीकुसुमादिष्वदर्शनादिति । एवं घटरूपमित्यादि । सुरभिशुक्लादिशब्दास्तु न तत्स्थगुणप्रतिपादकाः । तेन रूपेण प्रतीयमानस्य गुणिसामानाधिकरण्यदर्शनात् । एवं शौक्ल्यमित्यादावपि बोध्यम् । शौक्ल्यसौरभादिशब्दैर्हि शुक्लत्वसुरभित्वादिप्रकारक एव गुणबोधः । तद्रूपापन्नस्य च द्रव्यसामानाधिकरण्यमस्त्येव शुक्लः सुरभिरित्यादावित्ति दिक् । सुहितार्थास्तृप्त्यर्थाः । फलानां सुहितः । करणस्यैव शेषत्वविवक्षया षष्ठी । न च न लोकेतिनिषेधः शंक्यः । तस्य कृद्योगलक्षणषष्ठीविषयकत्वात् । इह सुहितार्थयोगे करणस्य शेषत्वविवक्षैव नियतेत्याहुरिति हरदत्तः । तत्राहुरित्यपरितोषोद्भावनम् । तद्बीजन्तु नियमे प्रमाणाभावः । नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः । नान्तकः सर्वभूतानां न पुंसां वामलोचनेत्यादिप्रयोगाणां पाक्षिक्यापि विशेषत्वविवक्षया सिद्धत्वात् । अत एव करणत्वविवक्षया तृतीयां भट्टिः प्रायुङ्क्त । फलैर्नानाविधैश्चित्रैः स्वादुशीतैश्च वारिभिः । तृप्ता-

स्तां भ्राजथुमन्तीं पप्रच्छुः कस्य पुरियमिति । नन्वेवं षष्ठीसमासे निषिद्धेपि तृतीयातत्पुरुषेण फलतृप्त इति स्यादेवेति चेत् । इष्टापत्तेः न चैवं निषेधवैयर्थ्यम् । स्वरे विशेषात् । तथाहि । षष्ठीसमासेन्तोदात्तत्वं स्यात् तृतीयासमासे तु थाथादिस्वरापवाद स्तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वर । तृपिश्च सकर्मकोप्यस्ति । पितॄनताप्र्सीत्समस्त वन्धुनीति भट्टिप्रयोगात्, तेनास्मात्कर्मणि क्तो नास्तीति न शङ्कनीयम् । फलतर्पणमित्यादौ तु स्पष्ट एव स्वरे भेद । कारकात्परत्वेन कृदुत्तरपदप्रकृतिस्वरात् । सत् । द्विजस्य कुर्वन् कुर्वाणो वा । किंकर इत्यर्थः । शेषे षष्ठी । चोरस्य द्विषन् । इह द्विषःशतुर्वावचनमिति पाक्षिकी कर्मणिषष्ठी । अव्यय । ब्राह्मणस्य कृत्वा । तादर्थ्यरूपसम्बन्धस्य सामान्यरूपेण विव क्षायां षष्ठी । ब्राह्मणसम्बन्धिनी क्रियेत्यर्थः । पुरा सूर्यस्योदेतोरित्यप्यव्ययोदाहरणम् । इह कर्त्तरि षष्ठी । अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेध इति वचनात् । अत्र सत्त्वाभ्यां साहचर्या त्कृदव्ययेनैव समासो निषिध्यते । तेन तदुपरीत्यादि सिद्धमिति रक्षितः । तथा च भट्टिप्रभृतयः प्रयुञ्जते । यस्कृतेरीभिरुल्लीमः । आदेयाः किंकृते भोगाः कुम्भकर्ण त्वया विना, भवत्कृतेखञ्जनमञ्जुलाक्षीति, तस्याणिमारूमोपरि पातु कान्तु , किमुतदन्तरुभौ भिषजौ दिव इत्यादि च । तथा अनेकमन्यपदार्थइति सूत्रे सर्वपश्चादिति भाष्यप्रयोगोपीहानुकूलः । कैयटहरदत्तौ तु अव्ययप्रतिषेधे वृक्षस्योपरीत्युदाहरन्तौ कृदव्ययेनापि निषेधं मन्येते तत्तु भट्टिश्रीहर्षादिप्रयोगाणां प्रतिकूलम् । यद्वा । अस्मिन्पक्षे कृच्छब्दः सम्पदादिक्विन्तः कार्यपर । ततश्चतुर्थी । आत्मन उपरि पातुक इति विग्रह । तस्यां यन्मध्यन्तत्रेत्यर्थे सप्तमीशौण्डैरिति सूत्रे

क्तरीत्या सप्तमीतत्पुरुषोऽव्ययीभावो वेति दिक्। तव्य। ब्राह्मणस्य कर्तव्यम्। निरनुबन्धकस्य सूत्रे ग्रहणात्तव्यता समासो भवत्येव। स्वकर्तव्यम्। स्वरे भेदः। गतिकारकोपपदादिति कृदुत्तरपदप्रकृतिस्वरः। तत्र तव्यतास्तित्त्वेनान्तस्वरितता। तव्यस्य त्वाद्युदात्तत्वान्मध्योदात्तं पदमिति। समानाधिकरणेन। तक्षकस्य सर्पस्य। विशेषणसमासस्त्विह बहुलग्रहणान्नेत्युक्तम्। स्यादेतत्। इह षष्ठीसमासः प्राप्नोत्येव न। वाक्यसम्बन्ध्यपेक्षा हीयं षष्ठी। तथा च कटोपि कर्म भीष्मादयोपीति न्यायेन द्वयोरपि षष्ठ्यन्तयोर्विषमभृतिनान्वये सति पश्चात्प्रातिपदिकार्थमात्रयोः पार्ष्णिकः सम्बन्धो वाच्यः। तथा च तक्षकस्येति सर्पस्येति च परस्परमसमर्थं कथं समस्यताम्। अत एव नीलोत्पलस्य मेरुमहीभृत इत्यादावपि प्रथमान्तयोर्विशेषणसमासे ततः षष्ठीतिन्याय्यं न तु षष्ठ्यन्तयोर्विशेषणसमासः। उक्तरीत्या ऽसामर्थ्यात्। किं च यथा चित्रगुरित्यादौ सम्बन्धस्याभिहितत्वात्प्रथमा तथेहापि षष्ठ्यन्तयोः समासे ततः प्रथमैव स्यान्न तु षष्ठी। उच्यते। कट एव कर्म भीष्मादयस्तु तत्सामानाधिकरण्यमात्रात्तद्विभक्तिं लभन्तइति पक्षे इदं बोध्यम्। समानाधिकरणेन निषेध एव चैतत्पक्षज्ञापकः। अत एव विशेषणविभक्तिः साधुत्वार्थेत्युद्द्योतोपि सङ्गच्छते। न चैवमपि समासात्षष्ठी न स्यादिति वाच्यम्। पञ्चकपक्षे द्वितीयादेरिवोपपत्तेः। सकलविभक्तिसाधारणेन कर्मधारयेणान्यतरस्य स्फुटमनभिधानात्। एवं च वैयधिकरण्यस्थले सर्वेषां गतिः। तथाहि। राज्ञः कुमार्या राजकुमार्या इति षष्ठ्यन्तस्य समासे पूर्वनिपातानियमप्रसङ्गे प्वेयापर्सजनसंज्ञाया अन्वर्थतामाश्रित्य समाहितमाकरे। न च तत्र

त्वदुक्तस्यासामर्थ्यस्योक्तिसम्भवोपि, येन प्रथमान्तमेव समस्येत । तथा च राज्ञः कुमारी कुमार्यै इत्यादय एव विग्रहा इति उपसर्जनसंज्ञाविधायकयोः सूत्रयोः काशिकादौ स्पष्टम् । अनेकमन्यपदार्थइति सूत्रे तत्पुरुषेतुल्यार्थइति सूत्रे च भाष्यकैयटयोरपि स्पष्टमेवेदम् । तथा च प्रथमान्तेन विग्रह इति नियमाभावात्सर्वत्र तत्पुरुषोपरि द्वितीयादिविभक्तयः पञ्चकपक्षवदेवोपपादनीया इति तत्त्वम् । राजपुरुषादौ सङ्ख्याया इवोत्तरपदार्थप्रविष्टसम्बन्धस्यापि वृत्तावप्रवेशाच्च । प्रयोगार्हे विग्रहे परं समासोत्तरविभक्तिसजातीयायाः प्रयोगात् । पचन्तीति पाचका इतिवत् । वाक्यसंस्कारपक्षेऽलौकिकेपि बहुवचनवत्षष्ठ्यादिकल्पनाया एव न्याय्यत्वादिति दिक् । यत्तु वृत्तावुदाहृतं शुकस्य माराविकस्य राज्ञः पाटलिपुत्रकस्येति । तत्र मारावीत्याहेति माराविकः । तदाहेतिमाशब्दादिभ्य उपसंख्यानमिति ठक् । शब्दनक्रियायाः प्रतिषेधको माराविकः । माराविदस्येति पाठे मारादिशब्दं ददातीति स एवार्थः । एवं पाटलिपुत्रे भवः पाटलिपुत्रकः । इत्थंस्थिते यदीह समासोनिष्टः स्यात्तदेदं समानाधिकरणइत्यस्योदाहरणं सङ्गच्छेत । समास इष्ट इति तु वदता तेनैव नेदमुदाहर्तुं युक्तम् । यत्तु तत्रैव समर्थितम् । षष्ठीसमासे सति पूर्वनिपातानियमः स्यात् । विशेषणसमासे तु विशेषणस्यैव पूर्वनिपातः सिध्यतीति । तत्रेदं वक्तव्यम् । विशेषणविशेष्यभावस्याव्यवस्थितत्वेनातिप्रसङ्गे प्राप्ते ऽप्रधानमुपसर्जनं आर्थं चाप्राधान्यमित्यादिक्रमेण द्रव्यगुणादिशब्देषु व्यवस्थेष्यते । तच्च षष्ठीसमासेपि सुवचमिति किन्तन्निषेधेनेति । वस्तुतस्तु गोधेनोः भोज्योष्णस्य कुमारश्रमणायागो गर्भिण्या इत्यादीनीहोदाहार्याणि । पोटायुवतीत्यादीनां विभक्त्यन्तरे वि-

शेषणसमासं चाधित्वा चरितार्थानां परेण षष्ठीसमासेन वाधापत्तेः। तथा च विशेषणस्यैवोपसर्जनतया पूर्वनिपातेऽप्यनिष्टं स्पष्टमेवेत्यवधेयम् ॥

क्तेन च पूजायाम् ॥ मतिबुद्धीति सूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते। स हि पूजायां वर्तमानाद्विहित इत्येतावन्मात्रेण पूजाग्रहणं तस्योपलक्षणं गृहस्येव काकः। तेन मतिबुद्ध्यर्थाभ्यां क्तस्याप्ययं निषेधः। राज्ञां मतो बुद्धः पूजितो वा। क्तस्यचवर्त्तमानइति षष्ठी। कथन्तर्हि कलहंसराममहितःकृतवानिति भट्टिः। मह पूजायां, रामस्य महित इत्यर्थः। तथा राजपूजित इत्यादि। अत्राहुः। क्तेनचपूजायामित्यादिषु कारकषष्ठ्या एव समासो निषिध्यते। यदा तु कर्त्रादेरेव शेषत्वविवक्षया षष्ठी तदा भवत्येव समासः। स्वरे च विशेषः। कारकषष्ठ्या समासे हि कृदुत्तरपदप्रकृतिस्वरः शेषषष्ठ्या तु समासान्तोदात्तत्वमिति। अनुन्यासकारस्त्वाह। यदा वर्तमाने क्तस्तदा षष्ठी। समासनिषेधश्च। यदा तु भूते क्तस्तदा कर्तरि तृतीया। यथा पूजितो यः सुरासुरैरिति। तस्याः कर्तृकरणेकृतावहुलमिति समासः। न च तक्रकौण्डिन्यन्यायाद्वर्त्तमाने क्त इह भूते क्तं वाधतइति वाच्यम्। तेनेत्यधिकारे उपज्ञातइति निर्देशेनावाधज्ञापनात्। न च ज्ञानार्थमात्रविषयकं ज्ञापकम्। उदाहृतप्रयोगानुरोधेन सामान्यविषयकत्वस्यैव न्याय्यत्वादिति ॥

अधिकरणवाचिना च ॥ क्तेन षष्ठी न समस्यते। इदमेषामासितं गतं भुक्तं वा। क्तोधिकरणेचेति क्तः। अधिकरणवाचिनश्चेति कर्तरि षष्ठी। अधिकरणेचेत्येव सिद्धे वाचिग्रहणं स्पष्टार्थम्। कथं तर्हि किंवृत्तं यद्वृत्तमिति। अत्राहुः। नायमधिकरणे क्तः किन्तु भावे। किमो वृत्तं यस्मिन्निति

व्यधिकरणपदो बहुव्रीहिः। यद्वा। कर्तरि क्तः। किंवा कृतं निष्पन्नमिति च विग्रहः॥

कर्मणि च॥ चकार इतिशब्दार्थः। कर्मणीतिशब्दमुच्चार्य विहिता परिशेषिता वा या षष्ठी सा न समस्यते। चित्रङ्गवान्दोहो ऽगोपेन। यद्यनेन कर्मषष्ठीमात्रं न समस्यते इत्यभिमतं स्यात्तर्हि तृजकाभ्यां निषेधं नारभेत। यत्र हि कर्तरि तृजकौ तत्र कर्मणिषष्ठ्या भाव्यं। शब्दानुशासनमित्यादौ यथा न समासनिषेधस्तथोक्तं पस्पशायाम्॥

तृजकाभ्यां कर्तरि॥ कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः। कर्तरीत्यकस्यैव विशेषणं न तु तृचोपि। अव्यभिचारात्। अपां स्रष्टा। पुराम्भेत्ता। वज्रस्य भर्ता। यद्यपि भर्तृशब्दो याजकादिषु पठितस्तथापि रूढेर्बलीयस्त्वात्पतिपर्यायस्य तत्र ग्रहणम्। यौगिकस्य तु निषेध एव। ओदनस्य पाचकः। कर्तरि किम्। इक्षूणां भक्षणमिक्षुभक्षिका। पर्यायार्हर्णोत्पत्तिषुण्वुच् धात्वर्थनिर्देशेण्वुल्वा। कथं तर्हि घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः, अत्र न्यासकारः। तृन्नन्तमेतत्। नलोकेति षष्ठीनिषेधस्त्वनित्यः। ण्वकाभ्यामिति वक्तव्ये तृचः सानुबन्धकस्योपादानाज्ज्ञापकात्। कैयटस्तु शेषषष्ठ्या समास इत्याह। जनिकर्तुःप्रकृतिस्तत्प्रयोजकोहेतुश्चेति ज्ञापकादनित्योयं प्रतिषेध इति तु बहवः॥

कर्तरि च॥ कर्तृषष्ठ्याः अकेन न समासः। भवतः शायिका। पर्यायार्हर्णेति ण्वुच्। पूर्वत्र द्वन्द्वेन निर्दिष्टोपि तृच् नेहानुवर्तते। तद्योगे कर्तुरभिहिततया कर्तृषष्ठ्या असम्भवात्॥

नित्यं क्रीडाजीविकयोः॥ एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते। उद्दालकपुष्पभञ्जिका। क्रीडाविशेषस्येयं संज्ञा। संज्ञायामिति भावे ण्वुल् पुष्पाणामिति कर्मणिषष्ठी। जीविकायाम्।

न्तलेखकः। तत्र क्रीडायां विकल्पे प्राप्ते जीविकायां कर्तरीति निषेधे प्राप्ते वचनम्। जयादित्यस्तु तृजकाभ्यामिति सूत्रे कर्तरीत्येतदनुवृत्तायाः षष्ठ्या विशेषणं। तृजुत्तरार्थ इत्युक्त्वा कर्तरिचेति सूत्रे कर्तृग्रहणं तृजकयोर्विशेषणतया व्याख्याय नित्यंक्रीडेति सूत्रे अकप्रत्ययमेवोदाजहार। तत्रेदं वक्तव्यम्। प्रथमसूत्रे कर्तृग्रहणं तृजकयोरेव विशेषणं युक्तम्। तयोः श्रुतत्वात्। न तु षष्ठ्याः। एवं च तृजुत्तरार्थ इत्यपि न कल्प्यम्। अकस्यैव चोत्तरत्रानुवृत्तिर्न तु तृचः, असम्भवात्। तथा च सूत्रद्वयस्य व्यत्यासेनार्थ उचित इति। वामनस्तु अके जीविकार्थइति सूत्रे अकइति किम्। रमणीयकर्तेति। जीविकायां तृच प्रत्युदाजहार। तस्यायमाशय। मा भूत्क्रीडायां तृच्। लक्षणाभावात्। जीविकायान्तु ण्वुल्तृचाविति ण्वुलि तृजपि सुलभ एवेति। एतन्मते नित्यंक्रीडेत्यत्र तृज्ग्रहणासम्भवेन्यथशङ्कावारणार्थं तृजुत्तरार्थ इत्यादि कुसृष्ट्यादरणमित्याहुः॥

कुगतिप्रादयः॥ कुशब्दा गतिसंज्ञाः प्रादयश्च समर्थेन नित्यं समस्यन्ते। कुः पापार्थे। कुपुरुषः। नित्यसमासविषयस्याप्यस्य पूर्वपदप्रकृतिस्वरार्थमव्ययत्वमिष्यते। तथा च वार्त्तिकम्. अव्यये नञ्कुनिपातानामिति। तस्मादयं स्वरादिषु बोद्धव्यः। स एव चेह गृह्यते न तु पृथिवीवृत्तिः। गत्यादिसाहचर्यात्। गति-। ऊरीकृत्य। प्रादिग्रहणमगत्यर्थं तद्विषयविभागार्थानि तु बहूनि वार्त्तिकानि। तथाहि। दुर्निन्दायाम्। दुःपुरुषः। स्वती पूजायाम्। सुपुरुषः अतिपुरुष.। आङीषदर्थे। आपिङ्गलः। प्रायिकं चैतदुपाधिवचनम्। अन्यथा ईषदर्थेचेति कोः कादेशविधानमनुपपन्नं स्यात्। कोष्णं दुष्कृतं। दुरत्रकृच्छ्रार्थे। अनभिधानात्तु भूते खलू न भवति। सुष्टुतम्। सुशब्दोतिशये न तु पूजायाम्। अ-

एवोपसर्गनिबन्धनं षत्वम् । अतिस्तुतम् । अतिरतिक्रमणेचेति कर्मप्रवचनीयत्वाभावः। प्रादयो गताद्यर्थे प्रथमया ॥ वृत्तिविषये गताद्यर्थवृत्तयः प्रादयो गतित्वाभावेपि प्रादिग्रहणेन समस्यन्तइत्यर्थः । प्रगत आचार्य प्राचार्य । प्रान्तेवासी । अत्यादयः क्रान्ताद्यर्थे द्वितीयया ॥ अतिक्रान्तो मालामतिमालः । अवादयः क्रुष्टाद्यर्थे तृतीयया ॥ अवक्रुष्टः कोकिलया अवकोकिलः । पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ॥ परिग्लानोध्ययनाय पर्यध्ययनः। अलं कुमार्यै अलंकुमारि ॥ नित्यसमासत्वेपि चतुर्थीविधानसामर्थ्यात्पक्षे वाक्यमिति रक्षितः । एतेनैकविभक्तिचापूर्वनिपातइति सूत्रे अलंकुमारिरिति भाष्यं पर्यादयोग्लानाद्यर्थइति समास इति कैयटवचनं च व्याख्यातम् । तदेव भाष्यमनित्यतायां ज्ञापकमिति वास्तु । वस्तुतस्तु नेहानेन समासः । अलमोऽप्रादित्वात् । प्रादिसमासस्य त्वयं प्रपञ्च इत्याकरः। किन्तु द्विगुप्राप्तापन्नालम्पूर्वेत्यनेन ज्ञाप्यमानोऽलंपूर्वस्तत्पुरुषः पृथग्गतिग्रहणात्पर्याप्त्यर्थेनापि भवन्नभिधानानुरोधाच्चतुर्थ्यन्तेनैव भवति । तस्य चानित्यसमासत्वं निर्बाधमेवेत्यवधेयम् । निरादयः क्रान्ताद्यर्थे पञ्चम्या ॥ निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः । प्रादिग्रहणस्य अगत्यर्थत्वादतिप्रसङ्गे प्राप्ते कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः । वृक्षम्प्रति विद्योतते विद्युत् । कथन्तर्हि अधीत्येति । इह हि अधिपरी अनर्थकाविति कर्मप्रवचनीयत्वम् । उच्यते । अध्यापकधूर्तैरितिनिर्देशादनित्यः प्रतिषेधः । अत एव सुस्तुतमतिस्तुतमिति षत्वाभावेपि समास उदाहृतः । स्वती पूजायामिति वचनाद्वा तन्सिद्धिः ॥

उपपदमतिङ् ॥ उपपदं सुबन्तं समर्थेन नित्यं समस्यते । अतिङन्तश्च समासः । कुम्भं करोतीति कुम्भकारः। इह कुम्भ-

अम् कार इत्यलौकिकं प्रक्रियावाक्यम्। लडर्थाद्याधिक्येप्यदूर-विप्रकर्षेण तुक्तं लौकिकं वाक्यं बोध्यम्। अतिङ् किम्। मा भवान् भूत्। माङिलुङिति सप्तमीनिर्देशान्माङुपपदम्। ननु सुपेत्यधिकारात्तिङन्तेन न भविष्यति। सत्यम्। तन्निवृत्तिरनेन ज्ञाप्यते। तत्फलं त्वनुपदमेव स्फुटीकरिष्यामः। प्रथमान्तन्तु सुप्ग्रहणमिहानुवर्ततएव। अत एव राजदर्शीत्यादौ पूर्वपदे नलोपादिपदकार्यं सिध्यति। सुप्सुपेतीह नानुवर्त्ततइति भाष्यवृत्त्यादिग्रन्थास्तु मिलित नानुवर्ततइत्येवंपराः। अतिङिति नोपपदस्य विशेषणं किन्तु समासस्येति। यद्यपीह भाष्ये न स्पृष्टं तथापि अनवक्लृप्त्यमर्षयोरिति सूत्रे भाष्यएव स्पष्टम्। तत्र हि किंवृत्तस्यानधिकारादकिंवृत्तग्रहणानर्थक्यमित्युक्त्वा उपपदसंज्ञार्थं तर्हीत्याशंक्यातिङिति समासप्रतिषेधात्संज्ञानर्थक्यमिति सिद्धान्तितम्। एवं पूर्वसूत्रेपि गतिग्रहणं पृथक्कृत्य तेनाप्यतिङ्ग्रहणं सम्बन्धनीयम्। गतिः समस्यते अतिङन्तश्च समासं स्यादिति। तेन प्रपचतीत्यादौ तिङन्तेन समासो न। अतिङ्ग्रहणाच्च सुपेति तृतीयान्तं निवर्त्तते। तथा च गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति प्राचां परिभाषा एकदेशानुमतिद्वारा समान्यापेक्षज्ञापकभूतेन अतिङ्ग्रहणेन लभ्यते। गतीनां कारकाणामुपपदानां च कृद्भिः सह यः समासः स उत्तरपदात्सुबुत्पत्तेः प्रागेव कार्य इत्यर्थः। पूर्वपदन्तु सुबन्तमेवेत्युक्तम्। गतीनां तावत्। व्याजिघ्रतीति व्याघ्री। आतश्चोपसर्गइतिकः। पाघ्राध्मेति शप्रत्ययस्तु न भवति। जिघ्रतेः संज्ञायां प्रतिषेधो वक्तव्य इत्युक्तेः। व्याङोर्घ्रशब्देन गतिसमास। स च यदि घ्रशब्दस्य सुबन्ततामपेक्षेत तर्हि सुबुत्पत्तये संख्याकर्मादियोगो विवक्षणीयः। तद्योगाच्च प्रागेव लिङ्गयोगः स्वार्थमभिधायेत्यादिन्या-

यात् । ततश्च लिङ्गनिमित्तः प्रत्ययो भवन् टाबेव स्यात् न तु ङीप्। घ्रशब्दमात्रस्य अजातिवाचित्वात्।ततश्च व्याङोघ्रशब्देन समासः । ततो व्याघ्रशब्दस्य जातिवाचित्वेऽप्यनकारान्तत्वाज्जातिलक्षणो ङीप् न स्यात् । सुबुत्पत्ते'प्रागेव जायमानस्तु समासो लिङ्गयोगानपेक्षत्वेन अन्तरङ्गत्वाद्भवति । ततो ङीप्पूर्वपदस्य तु सुबन्तत्वात्पदकार्याणि स्युरेव । निर्गत इति रुत्वं सर्य्यन्तेति परसवर्णविकल्प इत्यादि । कारकाणाम्। अश्वैः क्रीता। अल्पैरभ्रैर्लिप्ता । कर्तृकरणेकृताबहुलमिति समासः । स यद्युत्तरपदस्य सुबन्तस्य स्यात्तर्हि पूर्ववट्टाप् स्यात् । ततश्च क्रीतात्करणपूर्वात् क्तादल्पाख्यायामिति ङीप् न स्यात् । अत इत्यधिकारात् । वचनसामार्थ्यात्स्यादिति चेत्तर्हि वाक्यावस्थायां स्यात् । पूर्वशब्दस्य व्यवस्थावचनत्वसम्भवात् । अत इत्यधिकारो वा व्यवच्छिद्येत । तथा च सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसीति भट्टिप्रयोगो न सिध्येत्। सिद्धान्ते तु कर्तृकरणेकृतेत्यत्र बहुलग्रहणात्क्व चित्सुबन्तेन समासः, अतो न ङीप्। उपपदानाम् । कच्छेन पिबतीति कच्छपी । व्याघ्रीवत् । सुपीति योगविभागात्क इत्यादि । यत्त्वतिङ्ग्रहणमुपपदविशेषणमिति । तन्न । तथा सति प्रथमान्तसुब्ग्रहणस्य निवृत्त्यापत्त्या बहुविप्लवापत्तेः । एतेनातिङ् किम् एधानाहारको व्रजतीति प्रत्युदाहरणमपि प्रत्युक्तम् । यदपि कौमुद्यां कुगतीति सूत्रे उक्तं, अत्र सुप्सुपेत्यनुवृत्तेस्तिङापि समास' ऊरीकरोतीत्यादि । तदप्यसत् । तत्र शेषीकृतेनातिङ्ग्रहणेनैव विरोधात् । तिङ्समासस्तु सहेति योगविभागवल्लभ्यो वार्तिकोक्तविशेषविषयच्छान्दसश्चेति प्रागेव प्रपञ्चितम् ॥

अमैवाव्ययेन ॥ अमैव तुल्यविधानं यदुपपदन्तदेवा-

व्ययेन सह समस्यते । स्वादुङ्कार मुक्ते । संपन्नकारं लव-णकारम् । स्वादुमि णमुल् स्वादुमीत्यत एव निपातनात्पूर्वपद-स्य मान्तत्वम्। स्वादुमीत्यर्थग्रहण सम्पन्नलवणशब्दावपि स्वादुप-र्यायौ येन वाक्येनामेव केवलो विधीयते न तु प्रत्ययान्तरस-हितः तास्मिन् वाक्ये सप्तमीनिर्देशबलेन यस्योपपदसंज्ञा तद-मैव तुल्यविधानामित्युच्यते । सूत्रे च तुल्यविधानमित्य या न्द्रियते नियमाङ्गभूतस्त्वेवकारो नियमस्वभावादेव लभ्यते न तु सूत्रारूढ । अमैव च यत्तुल्यविधानं तस्य प्रत्ययान्तरं प्रति उपपदत्वमेव नास्तीति अव्ययान्तरेण सह समासो नाशङ्कनी-यः । सूत्रस्य प्रयोजनन्तु कालसमयवेलासु तुमुन्, काल सम-यो वेला वा भोक्तुमित्यत्र समासानिवृत्तिः । अमैवेति किम् । अ-ग्रेभोजं अग्रेभुक्त्वा, विभाषाग्रेप्रथमपूर्वेष्विति क्त्वाणमुलौ । अमा चान्येन च तुल्यविधानमेतम् । अव्ययेनेति किम् । कुम्भका-रः । असति ह्यव्ययग्रहणे अमैव यत्तुल्यविधानन्तदेव समस्ये त । न च पूर्वसूत्रस्यानवकाशत्वादव्ययविषय एव नियम इति वाच्यम् । तथासत्यमैव नियमापत्ते । अमन्तेनोपपदस्य य-स्समास सोमैव तुल्यविधानस्येति । तथा चाग्रेभोजमित्यत्र मा भूत् । अग्रेभुक्त्वा कालो भोक्तुमित्यत्र तु स्यादेव ॥

तृतीयाप्रभृतीन्यन्यतरस्याम् । उपदंशस्तृतीयायामित्यादी न्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते । उभयत्र विभा-षेयम् । यदमैव तुल्यविधानं तस्य प्राप्ते यथोपदंशस्तृतीयाया मिति । यत्पुनरमा चान्येन च तुल्यविधानं तस्याप्राप्ते यथा व्यये यथाभिप्रेताख्याने कृञः क्त्वाणमुलाविति । मूलकोपदंशम्भु ङ्क्ते मूलकेनोपदंशम् । उच्चैःकारमाचष्टे । इह समासपक्षे कृदुत्तरपदप्रकृतिस्वरः आदिर्णमुल्यन्यतरस्यामित्याद्युदात्तत्व-

म् । असमासपक्षे तु उच्चैरित्यन्तोदात्तम् । स्वरादिषु तथा पाठात्कारमित्याद्युदात्तम् । अमेत्येव । पर्याप्तिवचनेष्वलमर्थेषु, पर्याप्तो भोक्तुम् ॥

क्त्वा च ॥ क्त्वाप्रत्ययेन सह तृतीयाप्रभृतीन्युपपदानि वा समस्यन्ते । अव्ययेयथाभिप्रेताख्यानेति क्त्वाप्रत्ययः । समासपक्षे ल्यप् । उच्चै कृत्य । उच्चै कृत्वा । तृतीयाप्रभृतीनीत्येव । अलङ्कृत्वा । खलुकृत्वा ॥

शेषो बहुव्रीहिः ॥ अधिकारोयम् । शेष किम् । उन्मत्तगङ्गम् । प्राक्कडारात्परङ्कार्यमिति पाठे परत्वाद्बहुव्रीहिसंज्ञा मा भूत् । उपयुक्तादन्यः शेष । शिष असर्वोपयोगे । कर्मणि घञ् । येषां पदानां यस्मिन्नर्थेऽव्ययीभावादिसंज्ञा नोक्ता स बहुव्रीहिरित्यर्थः । एकसंज्ञाधिकारे तु त्रिकत शेषो ग्राह्यः । तथाहि । सप्तसु सुपां त्रिकेषु यस्य त्रिकस्य शृङ्गिग्राहिकया समासो नोक्तः स शेषः । प्रथमेति यावत् । ततश्च प्रथमान्तानां बहुव्रीहिरित्यर्थात्समानाधिकरणानां भवति । कण्ठेकाल इत्यादौ तु सप्तमीविशेषणइति ज्ञापकात्सिद्ध इति ॥

इति श्री शब्दकौस्तुभे द्वितीयस्याध्यायस्य
द्वितीये पादे प्रथममान्हिकम् ॥

अनेकमन्यपदार्थे ॥ अनेकं सुबन्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः । पदेन प्रकृत्यर्थोपसर्जनः प्रत्ययार्थोभिधीयतइति स्थिते त्रिकतः शेषस्योक्ततया अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति फलित त्रिकतः शेषो हि प्रथमा तदन्य पदार्थश्च कर्मादिरिति । प्राप्तमुदक यं प्राप्तोदको ग्रामः । उदककर्तृकप्राप्तिकर्मीभूत इत्यर्थः । यद्यपि क्तप्रत्ययार्थस्य कर्तुर्धात्वर्थं प्रति विशेष्यतोचिता तथापि व्यपेक्षावादिभिरगत्या

समासे भिन्नैव व्युत्पत्तिः स्वीकरणीया । सिद्धान्ते तु एकार्थीभावाभ्युपगमात्सर्वं सुस्थमित्युक्तम् । ऊढरथोनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । चित्रगुः । वीरपुरुषको ग्रामः । प्रथमार्थे तु न भवति । वृष्टे देवे गतः । अनेकोक्तेर्बहूनामपि, चित्राजरतीगुः । तन्वीदीर्घोजङ्घः । इह प्रथमो न पुंवत् । उत्तरपदत्वाभावात् । द्वितीयोपि न । अपूर्वपदत्वात् । उत्तरपदे नित्यसमासस्य तु नायं विषय इत्युक्तम् । एतच्च केषा चिन्मतम् । परमार्थस्तु पाष्ठभाष्यादिपर्यालोचनया नेह पूर्वपदमाक्षिप्यते । आनङ् ऋत इत्यत्र यथा । इष्टसिद्ध्यनुरोधेन पूर्वपदं क्व चिदाक्षिप्यते न तु सर्वत्रेति ओजःसहोम्भ इति सूत्रे हरदत्तेनोक्तत्वाच्च । तेनोपान्त्यस्य पुंवदेव । चित्राजरद्गुरित्यादि । अत एव चित्राजरत्यौ गावौ यस्येति विग्रहेप्येवमेव । अदृष्टसदृशप्रजामिति तु कर्मधारयोत्तरपदो द्वयोरेव बहुव्रीहिः । अपि च परमस्वधर्मः । स्वशब्दस्य निरपेक्षपूर्वपदत्वाभावात्ततो धर्मशब्दः परो न तु केवलादिति नानिच् । कर्मधारयपूर्वपदे तु भवत्येवेति वक्ष्यते । किञ्च सुसूक्ष्मजटकेशेन सुनताजिनवाससा । समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति ॥ अयं श्लोकः समर्थसूत्रे भाष्ये पठितः । सुष्ठु सूक्ष्मा जटाः केशा यस्येति चतुर्णां बहुव्रीहौ ङ्यापोः संज्ञाछन्दसोर्बहुलमिति बहुलवचनाद्ध्रस्वत्वम् । यद्वा जटावन्तो जटा । अर्शआद्यच् जटाः कृता जटा इति वा तत्करोतीति ण्यन्तादेरच् । एवं सुष्ठु नतं अजिनं वास आच्छादनं यस्य तेन समन्तानि शितीनि रन्ध्राणि यस्येति विग्रहः । द्वयोर्वृत्तौ हि केशवासो रन्ध्रेभ्यः पूर्वं उदात्तः स्यात् । इष्यते तु सुसमन्तयोः प्रकृतिस्वर इति भावः । एवं नीलो-

ज्ज्वलवपुः । इहापि नीलशब्दस्य प्रकृतिस्वरः । न च चित्रगुरित्यत्र उत्तरपदस्याप्युपसर्जनसंज्ञार्थमनेकग्रहणमिति वाच्यम् । प्रथमानिर्दिष्टत्वं विनापि एकविभक्तीत्यनेन तत्सिद्धेः । प्रधानस्यान्यपदार्थस्य नानाविभक्तियोगेपि वर्तिपदयोर्नित्यं प्रथमान्तत्वात् । न चैवं राजकुमारीं पश्येत्यादावप्यतिप्रसङ्गः । तत्र द्वितीयाद्यन्तेनापि कुमारीशब्देन विग्रहाभ्युपगमात् । अन्यग्रहणं किम् । बहुव्रीहितत्पुरुषयोर्विषयविभागो यथा विज्ञायेत । स्वपदार्थे हि सावकाशं तत्पुरुषं परत्वादन्यपदार्थे बहुव्रीहिर्बाधते । असति त्वन्यग्रहणे कण्ठेकाल इत्यादौ व्यधिकरणपदे बहूनां समुदाये च सावकाशं बहुव्रीहिं स्वपदार्थे इवान्यपदार्थेपि नीलोत्पलं सर इत्यादौ समानाधिकरणे तत्पुरुषो बाधेत । पदग्रहणं किम् । ग्राहवती नदी । इह हि तत्र मा स्नासीदिति वाक्यार्थो गम्यते । अर्थग्रहणं किम्, यावता पदे पदान्तरस्य वृत्त्यसम्भवादेव पदार्थे भविष्यति । सत्यम् । कृत्स्ने पदार्थे यथा स्यात् । अन्यथा चित्रगुरिति षष्ठ्यर्थसम्बन्धमात्रपरं स्यात् । तथा च देवदत्तादिभिः सामानाधिकरण्यं न स्यात् । समानाधिकरणानामेव बहुव्रीहिः । त्रिकतः शेषस्योक्तत्वात् । तेनेह न । पञ्चभिर्भुक्तमस्य पञ्च भुक्तवन्तोस्येत्यादौ तु न भवत्यनभिधानात् । अव्ययानां वाच्यः ॥ उच्चैर्मुखः । उच्चैःशब्दस्याधिकरणप्रधानत्वाद्व्यधिकरण्याद्वचनमित्याहुः । त्रिकतः शेष इत्युक्तरीत्या प्रथमान्तस्यापेक्षितत्वात्तस्य चेहापि सत्वाच्छयमकर्तुमिदं वचनम् । अत एव वाक् च दृषच्च मिथो यस्येति त्रिपदबहुव्रीहौ कृते अवान्तरद्वंद्वोभ्युपगतः । प्रादिभ्यो धातुजस्य बहुव्रीहिर्वक्तव्यः ॥ वा चोत्तरपदलोपः ॥ प्रपतितपर्णः प्रपर्णः । नञोस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपः ॥ अविद्यमा-

नपुत्रः अपुत्रः । अस्तिक्षीरादीनामुपसंख्यानमसुबन्तत्वात् ॥ अव्ययत्वात्सिद्धम् । तथाहि । विभक्तिप्रतिरूपकत्वान्निपातसंज्ञा निपातोऽव्ययमित्यव्ययसंज्ञा । इह द्वौ द्रोणौ अर्द्धद्रोणश्च अर्द्धतृतीया द्रोणा इति व्यवह्रियते तत्र अर्द्धतृतीयो येषामिति बहुव्रीहिः । उद्भूतावयवभेदः समुदाय समासार्थ इति वहुवचन द्रोणशब्दश्च द्रोणयोरर्द्धद्रोणे च लक्षणया वर्त्ततइति सामानाधिकरण्यम् ॥

संख्ययाऽव्ययासन्नादूराधिकसंख्या संख्येये_ संख्येयार्थया संख्यया अव्ययादयः समस्यन्ते स बहुव्रीहिः । दशानां समीपे ये वर्तन्ते तउपदशाः । नव एकादश वेत्यर्थः । सामीप्यप्राधान्ये त्वव्ययीभाव इत्युक्तम् । उपविंशाः । बहुव्रीहौ संख्येयइति डच् । तिविंशतेर्डिति । आसन्नदशाः । अदूरदशाः । अधिकदशाः । द्वौ वा त्रयो वा द्वित्राः । वार्थेयं समासः । ततश्च वैकल्पिकौ द्वौ त्रयश्चेति पञ्च अस्माच्छब्दात्प्रतिपद्यन्ते । अत एव बहुवचनम् । उक्तं च सैषा पञ्चाधिष्ठाना वागिति । कार्यान्वये हि विकल्पो न त्वेतच्छब्दजन्यबोधविषयत्वेपीति भावः । त्रिचतुराः । चतुरोच्प्रकरणे त्र्युपाभ्यामुपसंख्यानमित्यच् । द्विराद्वृत्तौ दश द्विदशाः । अत्र वृत्तौ द्विशब्देन दशत्वावृत्तिगता द्वित्वसंख्योच्यते । ननु द्वित्रा इत्यत्र वार्थः । द्विदशा इत्यत्र सुजर्थश्चान्यपदार्थ इति पूर्वेणैव सिद्धम् । न च मत्वर्थे पूर्वयोगः अमत्वर्थार्थ चेदमिति वाच्यम् । माषोदकादिषु मत्वर्थं विनापि तत्स्वीकारात् । सत्यम् । अन्यपदार्थप्राधान्ये पूर्वयोगः । इह तु वार्थसुजर्थौ न प्रधानम् ॥

दिङ्नामान्यन्तराले ॥ दिशो नामान्यन्तराले वाच्ये समस्यन्ते स बहुव्रीहिः । दक्षिणस्याः पूर्वस्याश्च दिशोरन्तरालं द-

क्षिणपूर्वा। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्य इति भाष्यम्॥ अत एव ठक्छसोश्चेति वार्तिकस्योक्तिसम्भवः। यद्यपि तत्र शसा साहचर्याद्भवतष्ठगेव गृह्यतइति नकोपधाया इति सूत्रे कैयटहरदत्ताभ्यामुक्तम्। युक्तं चैतत्। गन्त्र्या चरति धावन्त्या चरतीति प्राग्वहतीये ठकि गान्त्रिको धावन्तिक इति यथा स्याद्गान्तुको धावत्को मा भूदिति। तथापि भाष्यं दृष्ट्वा वार्तिककृतोप्रवृत्तेः। अत एव हि एकतद्धितेचेति सूत्रस्याप्युक्तिसम्भवो लभ्यतइति दिक्। भवन्मयः। सर्वकाम्यति। सर्वकभार्यः। सर्वेमिय इत्यादिवृत्तौ पूर्वभागतया प्रविष्टस्यैवायं पुंवद्भावः। नत्वन्यस्या भस्त्रेषाद्वेति लिङ्गात्। तेनाकचि एकशेषवृत्तौ च न। सर्विका सर्वाः। न चान्तरालस्यान्यपदार्थत्वात्पूर्वेणैव सिद्धमिति वेद्य। अप्रथमार्थे तदित्युक्तत्वात्। वैयधिकरण्याच्च विभाषादिक्समासइत्यत्र प्रतिपदोक्तस्यास्यैव ग्रहणार्थमपीदम्। तेन या पूर्वा सोत्तरा यस्य मुग्धस्य तस्मै उत्तरपूर्वायेत्यत्र न विकल्पः। कबभावार्थं च। तथा हि। शेषाद्विभाषेत्यत्र तन्त्रावृत्त्याद्याश्रयणेन एकः शेष उपयुक्तादन्यः अपरः शेषाधिकारः। तेनोत्तरपूर्वादौ न कप्। इह शेषग्रहणाननुवृत्तेः। द्वितीयशेषग्रहणात्तु प्रियपथः प्रियधुर इत्यादौ न कप्। यत्तु तत्रतेनेदमिति सूत्रे कैयटेनोक्तं शेषाधिकार एव गृह्यते न तूपयुक्तादन्य इति। तत्तु तत्रत्यभाष्यस्योक्तिसम्भवमात्रपरम्। नामग्रहणं रूढ्यर्थम्। इह मा भूत्। ऐन्द्र्याश्च कौबेर्याश्चान्तरालमिति॥

तत्र तेनेदमिति सरूपे॥ सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषयइदं युद्धमित्यर्थे समस्येते कर्मव्यतिहारे स बहुव्रीहिः। इतिकरणाल्लौकिकविवक्षातात्पर्यकात् ग्रहणप्रहरणकर्मव्यतिहारयुद्धानि लभ्यन्ते। गृह्यतेस्मिन्निति ग्रहणं के-

शादिप्रहरणं दण्डादिकर्मव्यतिहारः। परस्परग्रहणं परस्परप्रहरणं च। केशेषु केशेषु गृहीत्वा युद्धं प्रवृत्त केशाकेशि। मुष्टीमुष्टि। दण्डैश्च दण्डैश्च प्रहृत्य युद्धं प्रवृत्तं दण्डादण्डि। इच्कर्मव्यतिहारइतीच्समासान्तः। तदन्तमव्ययं तिष्ठद्गुप्रभृतिष्विच्प्रत्ययस्य पाठेन अव्ययीभावत्वात्। अन्येषामपि दृश्यतइति पूर्वपदस्य दीर्घः। अत एव मुष्टामुष्टीति प्रामादिकम्। न च सूत्रे इदंशब्दात् प्राक् आकारः प्रश्लिष्यतामिति वाच्यम्। भाष्यकैयटाद्यसम्मतत्वात्। अस्यसीत्यादावतिप्रसङ्गाच्च। परिशिष्टे तु आच्च गुणिन इति सूत्रितम्। गुणोस्त्यस्येति गुणी नामीति व्याख्याय मुष्टामुष्टीत्युदाहृतं तदपाणिनीयम्। सरूपग्रहणं किम्। हलैश्च मुसलैश्च युद्धम्। इदमपि सूत्रे वैयधिकरण्यार्थं प्रथमाविभक्त्यर्थं एकशेषबाधनार्थं च। कव्भावार्थं चेति तु भाष्येभ्युच्चयमात्रम्। शेषग्रहणस्य प्रागुक्तपरतायाः पञ्चमे स्पष्टत्वात्॥

तेन सहेति तुल्ययोगे॥ सहेत्येतत्तुल्ययोगे वर्तमानं तृतीयान्तेन सह वा समस्यते स बहुव्रीहिः। सपुत्र आगतः। सह पुत्रः। वोपसर्जनस्येति सभावः। नन्वत्र पिताप्रधानमन्यपदार्थः। सत्यम्। व्यधिकरणयोः प्रथमार्थे च यथा स्यात्। कप् च मा भूदित्येवमर्थं वचनम्। तुल्ययोगेति किम्। सहैव दशभिः पुत्रैर्भारं वहति गर्दभी। विद्यमानतावाची सहशब्दः दशसु पुत्रेषु विद्यमानेष्वित्यर्थः। तुल्ययोगवचनं प्रायिकम्। ज्ञापकात्। यदयं विभाषासाकांक्षे विभाषासपूर्वस्येत्यादिनिर्देशात्। तेन सकर्मकः सलोमक इत्यादि सिद्धम्॥

चार्थे द्वन्द्वः॥ प्रागुक्तसमासमनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। परस्परनिरपेक्षस्यानेकस्यैकस्मिन्प्रति सम्बन्धि-

न्यन्वयः समुच्चयः । यथा अहरहर्नयमानो गामश्वं पुरुषं पशुं वैवस्वतो न तृप्यति सुराया इव दुर्मदी इति. अत्र नयतिक्रियायामेकस्यां गवादीनां समुच्चय । गम्यमानत्वात् चशब्दस्याप्रयोग । यदा तु एकस्य प्राधान्यमितरस्यानुषाङ्गिकता तदान्वाचयः । यथा भिक्षामट गां चानयेति । अत्र हि अदर्शनाद्गामनानयन्नपि भिक्षामटत्येव । अनटंस्तु भिक्षां न । गामानयति तथा अटन्नपि नान्विष्य गामानयति । मिलितानामन्वय इतरेतरयोगः । समूहः समाहारः । तत्र समुच्चयान्वाचययोर्न समासः । असामर्थ्यात् । एकार्थीभावे हि सति पुष्पवन्तौ पश्येत्यादाविव एकपदोपात्तौ मिलितावेव अन्वियातां न तु प्रत्येकम् । धवखदिरौ । वागृहिपदम् । शेषः किम् । नीलोत्पलम् । इह हि एकस्मिन्धर्मिणि अनेकधर्मसमुच्चयात् द्वन्द्वः स्यात् । न चेष्टापत्तिः । पटुश्चासौ खञ्जश्चेत्यादावपि द्वन्द्वे सति द्वन्द्वेऽवीन्यादिनियमापत्तेः । विशेषणमित्यादिना तत्पुरुषे तु काणखञ्जवदनियम सिद्ध्यति । परं कार्यमिति पाठे चेदम् । एकसंज्ञाधिकारे तु विशेषविहितत्वात्तत्पुरुषसंज्ञैव भवति । सामानाधिकरण्याभावे तु द्वन्द्व एव । यथा प्रमाणप्रमेयेत्यादौ साधर्म्यवैधर्म्याभ्यामित्यत्र च । न ह्यत्राभेदान्वयो विवक्षितः । यद्यपि सामान्यविशेषयोर्वाचनिको द्वन्द्वनिषेधस्तथाप्यनित्यः स इति त्यदादिकशेषसूत्रएवोपपादितम् । अनेकं किम् । होतृपोतृनेष्टोद्गातारः । न ह्यत्र द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्व कर्तुं शक्यः । होतृपोत्रोरप्यानङापत्ते । वाक्त्वक्स्रग्दृपदमित्यादौ स्रगादेरपि टजापत्तेश्च । न चोत्तरपदे नित्यसमासोपसंख्यानात्तथापि तदापत्तिः । सकृत्समुदाये प्रवृत्तस्य द्वन्द्वस्य एकाज्द्विर्वचनन्यायेनावयवे पुनरप्रवृत्तेः । उप-

संख्यानस्यान्यत्रोपक्षयात्। न चैवं वाक्त्वचस्रग्दृषद होतापोतानेष्टोद्गातार इत्यादि न स्यादेवेति वाच्यम्। द्वयोर्द्वयोरेव सहविवक्षया द्वन्द्वे समुदाययोः पुनः सहविवक्षायां तदुपपत्तेः। पूर्वत्राप्यनेकग्रहणफलं दत्तमेव। तस्माद्यथायथं समासान्तपुंवद्भावस्वरानङां प्रवृत्तिरप्रवृत्तिश्चानेकग्रहणफलं स्थितम्। अनेकस्य चार्थे वृत्तिस्तु जहत्स्वार्थायां वृत्तौ मिलितस्यैव। पक्षान्तरे तु प्रत्येकम्। तदेतदुच्यते। युगपदधिकरणवचने द्वन्द्व इति। अधिकरणं वाच्यपदार्थः। तस्य युगपद्वचन इत्यर्थः। अत एव आङ्गश्च वाङ्गश्च कालिङ्गश्चेत्यत्र सहविवक्षायां तेनैव बहुष्विति लुकि अङ्गवङ्गकालिङ्गा इति सिध्यतीति लुक्प्रकरणे भाष्यएव स्पष्टम्। यत्त्विह सूत्रे सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा चेति भाष्यउक्तम्। तस्यायमाशयः। अस्तु जहत्स्वार्थता तथापि धवौ च खदिरौ चेत्यादिविग्रहो ऽसङ्गतः प्रक्रियादशायामपि प्रथमप्रवृत्तस्यैकवचनस्य त्यागायोगात्। अन्यथा षष्ठीतत्पुरुषादेरपि प्रथमप्रथमैव राजा चासौ पुरुषश्चेत्यादिविग्रहापात्तेः। तत्पुरुषेतुल्यार्थेत्यादीनां निर्विषयतापत्तिश्च। स्यादेतत्। भूतपूर्वगत्या तन्निर्वाह उत्तरपदार्थप्राधान्यादिवत् अलुक्समासे तु षष्ठ्या आक्रोशइत्याद्यनुवादसामर्थ्यादेव निमित्तापायन्यायो नाश्रयिष्यते। मैवम्। ज्ञापकस्य सामान्यविषयतायां लाघवेन द्वन्द्वावयवेष्वपि द्विवचनाद्यलाभात् निमित्तापायन्यायस्यानित्यत्वाच्च। न चैवं तद्राजलुगसिद्धिः। तेनैवेति सौत्रमंशं बहुवचने परइति व्याख्यां न प्रत्याख्याय बहुषु वर्तमानस्येत्यर्थस्य स्थापयिष्यमाणत्वात्। अत एव जहत्स्वार्थायामपि लुक् सिध्यति। सम्प्रति प्रतीयमाने यद्बहुत्वं तदाश्रयस्य तद्राजेन

प्रागभिधानात् भूतपूर्वगतेश्च त्वयापि वाच्यत्वात्। न हि तद्धि-तवृत्तौ एकशेषवृत्तौ च तद्राजोऽर्थवान्। तद्राजास्तद्राजद्वन्द्वे तु वैकल्पिको लुगिति वक्ष्यते। एवं स्थिते द्वन्द्वैकशेषयोरलौकिक-वाक्येपि द्विवचनादि दुर्लभम्। लौकिके विग्रहे तु दूरापास्तं तदिति तु खेत्यनेनोक्तम्। एतेन राजा चासौ पुरुषश्चेत्येव विगृह्णन्तो मीमांसकाः परास्ता इति दिक्। इह एकविंशति-द्वाविंशतिरित्यादौ राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु संख्येति पूर्वपदप्रकृतिस्वर इष्टस्तस्मात् द्वन्द्व एवायम्। स च समाहारे। नेतरेतरयोगे। अनभिधानात्। पुंस्त्वन्तु लोकात्। यदा त्वे-काधिका विंशतिरिति शाकपार्थिवादिसमासः क्रियते तदा समा-सान्तोदात्तत्वमपीष्यतइति पाञ्चमिकभाष्ये बहुव्रीहौसंख्येये-डजित्यत्र स्थितम्॥

उपसर्जनं पूर्वम्॥ समासे उपसर्जनं पूर्वं प्रयोज्यम्। कृष्णश्रितः॥

राजदन्तादिषु परम्॥ एषु पूर्वप्रयोगार्हं परं स्यात्। द-न्तानां राजा राजदन्तः। वनस्याग्रे अग्रेवणम्। वनम्पुरगे-त्यादिना णत्वम्। इहैव गणे निपातनादलुक्। एवञ्चा-लुगिव णत्वमप्यस्तु। तथा च तत्र सूत्रे अग्रेग्रहणं शक्यमकर्तुम्। आकृतिगणोऽयम्। धर्मादिष्वनियम इष्यते। अर्थधर्मौ धर्मा-र्थावित्यादि। गणमध्यएव जम्पतीदम्पतीजायापतीति पाठात् जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते॥

द्वन्द्वे घि॥ द्वन्द्वे घ्यन्तं प्राक् स्यात्। हरिहरौ। अने-कप्राप्तावेकत्र नियमोऽनियमः शेषे॥ हरिगुरुहराः। हरिहर-गुरवः। हरश्च हरिगुरू चेति विग्रहे तु हरस्य पूर्वनिपातः। अल्पाच्तरत्वात्॥

अजाद्यदन्तम् ॥ इदं द्वन्द्वे पूर्वं स्यात् । बहुष्वनियमः । अश्वरथेन्द्राः । इन्द्राश्वरथाः । घ्यन्तादजाद्यदन्तं विप्रतिषेधेन ॥ इन्द्राग्नी ॥

अल्पाच्तरम् ॥ अत एव निपातनात्स्वार्थे तरप् कुत्वसुत्वयोरभावश्च । द्वन्द्वे अल्पाच् पूर्वं स्यात् । धवखदिरौ । कथं तर्हि प्रासादे धनपतिरामकेशवानामिति । धनपतेश्च रामकेशवयोश्चेति विग्रहः । पूर्वाभ्यामल्पाच्तरं विप्रतिषेधेन ॥ वागग्नी वागिन्द्रौ । एवमग्रेऽपि । कथं तर्हि अधीतिबोधाचरणप्रचारणैरिति । अधीत्या च बोधादिभिश्चेति विग्रहे भविष्यति । यद्वा । अनित्यमिदं प्रकरणम् । लक्षणहेत्वोः क्रियाया, इः समुद्राभ्राद्घ इत्यादिनिर्देशात् । तेन ससौष्ठवौदार्यविशेषशालिनीम्, लोचनाधरकृताहृतरागेत्यादि सिद्धम् । ऋतुनक्षत्राणां समानाक्षराणामानुपूर्व्येण निपातो वक्तव्यः ॥ हेमन्तशिशिरवसन्ताः । कृत्तिकारोहिण्यौ । समाक्षराणां किम् । ग्रीष्मवसन्तौ । लघ्वक्षरं पूर्वम् ॥ कुशकाशम् । अभ्यर्हितञ्च ॥ मातापितरौ । वासुदेवार्जुनाभ्यां वुञिति निर्देशेनेद ज्ञाप्यतइति चतुर्थे भाष्यम् । वर्णानामानुपूर्व्येण ॥ ब्राह्मणक्षत्रियविट्शूद्राः । भ्रातुश्च ज्यायसः ॥ युधिष्ठिरार्जुनौ । संख्याया अल्पीयस्याः ॥ एतच्च द्वन्द्वाद्वन्द्वविषयकम् । द्वित्राः । द्वाविंशतिः । द्व्येकयोरिति तु सौत्रो निर्देशः ॥

सप्तमीविशेषणे बहुव्रीहौ ॥ सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोक्तव्यम् । कण्ठेकालः । यदा कण्ठे किञ्चिदस्तीति निर्ज्ञाते काल इति विशेषणं तदेदं बोध्यम् । अन्यदा तु सप्तमीग्रहणं विनापि विशेषणत्वादेव सिद्धम् । सर्वनामसंख्ययोरुपसंख्यानम् ॥ सर्वश्वेतः । द्विशुक्लः । कथं तर्हि तः

परो यस्मात्स तपर इति, कथं च जहत्स्वार्थेति । इह हि जहत् स्वं पदं यं स जहत्स्वः सोर्थो यत्रेति बहुव्रीहिगर्भो बहुव्रीहिः । तथा च स्वपरशब्दयोः सर्वनामत्वात्पूर्वनिपातः स्यात् । सत्यम् । सूत्रभाष्यादिप्रयोगाद्राजदन्तत्वं बोध्यम् । मिथोनयोः समासे तु संख्यापूर्वं शब्दपरविप्रतिषेधात् ॥ एतदर्थमेव हि संख्यासर्वनाम्नोरिति नोक्तम् । द्व्यन्यः । त्र्यन्यः । वा प्रियस्य पूर्वत्वम् ॥ गुडप्रियः प्रियगुडः । गड्वादेः परा सप्तमीष्टा ॥ गडुकण्ठः । क्वचिन्न । बहेगडुः । आकृतिगणोयम् ॥

। निष्ठा ॥ निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । कृतकृत्यः । जातिकालसुखादिभ्यः परा निष्ठा बोध्या ॥ जातिकालसुखादिभ्योनाच्छादनादिति ज्ञापकात् । सारङ्गी जग्धोनया सारङ्गजग्धी । क्तादल्पाख्यायामित्यनुवर्तमाने अस्वाङ्गपूर्वपदाद्वेति ङीप् । मासजाता । सुखजाता । कथं तर्हि कृतकटः । पीतोदकः । गड्वादेरितिवत्प्राप्तबाधमात्रे तात्पर्यमिति वृत्तिकारः । कथं चाशस्मितमिति । नपुंसकेभावेक्त इत्यस्य न पूर्वनिपातः । निष्ठाशब्दोपादानेन विहितस्यैवेह ग्रहणादित्याहुः ॥

वाहिताग्न्यादिषु ॥ एषु निष्ठान्तं वा पूर्वं स्यात् । आहिताग्निः । अग्न्याहितः । आकृतिगणोयम् । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ वक्तव्ये ॥ अस्युद्यतः । दण्डपाणिः । इहापि प्राप्तबाधमात्रं बोध्यम् । विवृतासिः ॥

कडाराः कर्मधारये ॥ कडारादयः शब्दाः कर्मधारये पूर्वं प्रयोज्याः । कडारजैमिनिः । जैमिनिकडारः । कडार, गडुल, काण, खञ्ज, कुण्ड, खोड, खलति, गौर, वृद्ध, भिक्षुक, पिङ्ग, पिङ्गलतनु, जठर बधिर, मठर, कुब्ज, बर्बर, । कर्मधारये किम् । कडारपुरुषको ग्रामः ॥

इति श्रीशब्दकौस्तुभे द्वितीयाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥ पादश्चायं समाप्तः ॥

अनभिहिते ॥ अधिकारोयम् । तिङ्कृत्तद्धितसमासैरिति वक्तव्यम् ॥ तेन तिङाद्युक्ते कर्मणि द्वितीया न । तिङ्, सेव्यते हरिः । कृत्, कृतः कटः । तद्धितं, शतेन क्रीतः शत्य शतिकः । शताच्चठन्यतावशते । समासः, प्राप्तमुदकं यं प्राप्तोदको ग्रामः । परिगणनं किम् । कटं करोति भीष्ममुदारम् । इह विशेष्यात्कटादुत्पन्नया द्वितीयया गतार्थत्वाद्विशेषणात् द्वितीया न स्यात् । परिगणनसामर्थ्यात्तु भवति । स्यादेतत् । कटोपि कर्म भीष्मादयोपीति पक्षे सर्वेभ्यो द्वितीया उचितैव । अरुणैकहायनीन्यायेन हि पार्ष्णिकः परस्परावच्छेदः । अत एव हि सक्थ्ल्वावित्यादौ कारकपूर्वत्वप्रयुक्तो यण् सिध्यति । पूरणगुणेत्यत्र समानाधिकरणग्रहणाज्ज्ञापकात् । अभेदान्वयस्थले विशेष्यविभक्तिर्विशेषणादपि भवतीति पक्षेप्येवम् । सक्थ्ल्वाविति तु कारकेणाभेदेनान्वयतो विशेषणस्यापि कारकत्वानपायात्समाधेयम् । तस्मान्नार्थः परिगणनेन । किञ्चानभिहिताधिकारेणापि नार्थः । नहि कट कृत इत्यादावतिव्याप्तिः । क्तप्रत्ययेनैव कर्मत्वस्योक्तत्वात् । उक्तार्थानामप्रयोगात् । तद्यथा बहुपटुरित्यादौ बहुचोक्तार्थत्वान्न कल्पबादय । किं च कटं करोतीत्यादौ सावकाशा द्वितीया कृतः कट इत्यादिषु प्रथमया बाधिष्यते । निरवकाशत्वात् । न च वृक्ष प्लक्ष इत्यादिरवकाशः । तत्रापि प्रतीयमानास्तिक्रियां प्रति कर्तृत्वेन तृतीयाप्रसङ्गात् । अथ नीलमिदं न तु रक्तमित्यादौ विशेषणान्तरनिवृत्तितात्पर्यकेप्यस्तिक्रियाया अनावश्यकत्वात् प्रथमाया अवकाशं ब्रूषे । तर्हि विप्रतिषेधात् प्रथमास्तु । न च ततोपि परत्वात् षष्ठीप्रसङ्गः ।

अशेषत्वात् । उच्यते । परिगणनं तावत्प्रत्याख्यातमेव भाष्ये । सूत्रं तु कर्तव्य कट इत्यादिसिद्धये । इह हि प्रथमां बाधित्वा कर्तृकर्मणो कृतीति षष्ठी स्यात् । न च कृत्येनोक्तार्थत्वान्नेह षष्ठीति वाच्यम् । संख्याविभक्त्यर्थ इति पक्षे सूत्रारम्भात् । कर्मणि यदेकत्वं तत्र कृद्योगे षष्ठ्येकवचनमिति हि वाक्यार्थः । तथा च षष्ठीवाच्यस्य कर्मैकत्वादेः कृत्येनानुक्तत्वात् दुर्वारा षष्ठी । कारकं विभक्त्यर्थ इति पक्षे तु मास्तु सूत्रमिति स्थितम् । आरब्धे तु सूत्रे पर्युदासोयं न तु प्रसज्यप्रतिषेधः । असमर्थसमासापत्तेः । वाक्यभेदापत्तेश्च । प्रासादआस्तइत्यत्र सादिक्रियाया आसिक्रियायाश्चैकमधिकरणं प्रासादाख्यं तच्च सदेः परेण घञा अभिहितमिति सप्तमीनिषेधापत्तेश्च । पर्युदासे तु आसिक्रियानिरूपितमधिकरणशक्तिमनभिहितामाश्रित्य सप्तमीविधिः प्रवर्त्तते । आसने आस्ते शयने शेते इत्यादौ तु ल्युटः प्रकृतिभ्यां क्रियोपस्थितौ तद्योग्यम् अनुद्भूतशक्तिकं वस्तुमात्रं कृता उच्यते । तस्य च वर्तमानैककर्तृकतिङ्प्रकृत्युपस्थाप्यक्रियानिरूपितशक्त्युद्भवप्रतिपादनाय सप्तमीति दिक् । स्यादेतत् । यद्ययं पर्युदासस्तर्हि पक्त्वौदनो भुज्यतइति न सिद्ध्येत् । भुजिप्रत्ययेनाभिहितेप्योदने क्त्वाप्रत्ययेनानाभिधानमाश्रित्य द्वितीयापत्तेः । भावे हि क्त्वेति वक्ष्यते । प्रसज्यप्रतिषेधे तु भुजिप्रत्ययेनाभिधानमाश्रित्य प्रसज्यप्रतिषेधः सुवच । किन्तु प्रागुक्तदोषानिस्तारः । अत्रोच्यते । प्रधाननिरूपितशक्त्यभिधाने प्रथमैव । अभिहिते नेति प्रसज्यप्रतिषेधात् । आसने आस्ते शयने शेतइत्यत्र तु न प्रधानशक्तेरभिधानं येन प्रथमा स्यात् । एतच्च स्वादुमि णमुलिति सूत्रे कैयटादौ स्पष्टम् । हरिरप्याह । प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् । शक्तिर्गुणाश्रया तत्र प्रधानम-

नुरुध्यते ॥ प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते। यदा गुणे तदा तद्वदनुक्तापि प्रतीयतइति ॥ यतइति। पर्युदासेप्यनभिहितां प्रधानशक्तिमाश्रित्यैव विधिः प्रवर्त्तते। एतेनपक्वं भुङ्क्ते दत्तं गृह्णातीत्यादिपक्षद्वयेपि समर्थितं भवति। वस्तुतस्तु पक्त्वा भुज्यतइत्यादौ ओदनस्य पचिभुजिभ्यां न युगपच्छाब्दोन्वयबोधः। किन्त्वन्यतरेण शाब्दः, अपरेणार्थः। तत्र च प्रथमाद्वितीययोर्व्यवस्थैव। पक्त्वा भुज्यते ओदनः। अर्थादोदनमेव पक्त्वेति। न हीष्टका पक्त्वेत्यादि सम्भवति। न चोपस्थितपरित्यागोनुपस्थितकल्पना च न्याय्या। ओदनं पक्त्वेति प्रयोगे तु भुज्यतइत्यत्रार्थे ओदनस्य कर्मता। अत एव घटं कर्तुं शक्यतइत्यपि भवत्येवेति पस्पशायां कैयटः। तस्मात्पर्युदासे एकवाक्यत्वं समाससौष्ठवं चेत्येव। गुणरूपन्तु पक्षद्वयेपि तुल्यमिति स्थितम्। एतेन विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतमिति व्याख्यातम्। साम्प्रतमिति निपातेनाभिहितत्वात्। युक्तमिति हि तदर्थः। परिगणनं तु प्रत्याख्यातमेव। इह हरदत्तेन भाट्टमते कारकविशिष्टा संख्या विभक्त्यर्थ इत्युक्तं तत्तु कर्त्रधिकरणस्थयथाश्रुतभाष्यस्वरसमनुसृत्य कथञ्चिन्नेयम्। वस्तुतस्तु भाट्टमते प्रकृत्यर्थेन संख्यया च करणत्वादिशक्तयो विशेष्याः। अत एवैकशक्तिक्रोडीकृतानेकविधिस्तत्रतत्र स्वीकृत इति दिक् ॥

कर्मणि द्वितीया ॥ द्वितीयादयः शब्दाः सुपां त्रिकेषु वर्त्तन्ते। समं स्यादश्रुतत्वादिति न्यायात्। पूर्वाचार्यव्यवहाराच्च। इह स्वादिसूत्रेणैकवाक्यतया विधिः भिन्नवाक्यतया नियमो वा। सोपि प्रकृतानर्थानपेक्ष्य प्रत्ययनियमो वार्थनियमो वेति सर्वे पक्षाः साधवः। उक्तं च। सुपां कर्मादयोप्यर्थाः संख्या चैव तथा तिङाम्। प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु चेति व्या-

स्याते चेदं प्रथमे॥ इह च तिङामिति स्वरसात्सुप्स्वपि कर्मा-
द्येव वाच्यं न तु कर्मत्वम् । न च तिङ्प्वपि कर्मत्वमेवार्थ इति
वाच्यम् । तयोरेवेत्युत्तरसूत्रेपि तथात्वापत्तौ घटः कृत इ-
त्यादावभेदान्वयानुपपत्तिप्रसङ्गात् । तथा च लःकर्मणि,
कर्मणि द्वितीयेति सूत्रस्वरसोपि सङ्गच्छते ।
घटमित्यत्र च घटः कर्मेत्यभेदान्वये आनयनादौ कर्मत्वेन संस-
र्गेण विशेषणत्वम् । तथा च प्रकारतया संसर्गविधयावेति द्विधा
कर्मत्वादिभानमित्येकः पक्षः । शक्तिः कारकमिति भाष्यस्व-
रसात्सैव वाच्येत्यपरः । अनन्यलभ्यस्य शब्दार्थतया आधा-
र आधेयं वा द्वितीयार्थः । ओदनं पचतीत्यत्र हि ओदनरूपो
य आधारस्तद्विशिष्टा विक्लित्तिर्भासते वैशिष्ट्यं त्वाधेयता ओ-
दनाधेया वा विक्लित्तिरर्थः । आधेयरूपप्रत्ययार्थस्य प्रकृत्यर्थं
प्रति विशेष्यत्वात् । आधेयत्वमेव च संसर्ग इति पक्षान्तरम् ।
आकृत्यधिकरणन्यायेनाधारत्वाधेयत्वे एवार्थ इति चापरम् ।
संसर्गा एवैते । तात्पर्यग्राहिका एव पर विभक्तय इति मता-
न्तरम् । सर्वेप्यमी पक्षा हेलाराजीयादौ तत्रतत्र स्थिता भा-
ष्यादिसम्मताश्चेति दिक् । ओदनं पचतीत्यादौ, उभसर्वत-
सोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोन्य-
त्रापि दृश्यते ॥ अस्यार्थः । उभयशब्दसर्वशब्दयोस्तसिलन्त-
योः प्रयोगे द्वितीया कार्या । उभशब्देन उभयशब्दो लक्ष्य-
ते अन्यथा तसिलसम्भवात् । उभशब्दो हि द्विवचनटाब्विषय
इत्युक्तम् । धिगित्यत्र सप्तम्या लुक् । प्रकृतिवदनुकरणमि-
त्यतिदेशात् । न त्वविभक्तिकः । गवित्ययमाहेत्यत्र यथा
पदान्तत्वाभावाल्लोपः शाकल्यस्येत्यस्याप्रवृत्तिस्तथेह जश्त्वाप्र-
वृत्तिप्रसङ्गात् । न चायं गान्त एवेति वाच्यम् । कस्य च दइत्य-

स्याभवृत्तौ धकिदित्यस्यासिद्धिप्रसङ्गात् । आम्रेडितान्तेष्विति । कृतद्विर्वचनेष्वित्यर्थः । उभयत कृष्णं गोपा । सर्वत कृष्णम् । धिक् कृष्णाभक्तम् । उपर्युपरि लोकं हरि । अध्यधि लोकम् । अधोधो लोकम् । कथं तर्हि, उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धय । उच्यते । उपरिबुद्धीनां उत्तानबुद्धीनामुपरि चरन्तीत्यर्थः । एव चाम्रेडितान्तत्वाभावान्न द्वितीया । यद्वा । प्रतिपदोक्तस्योपर्यध्यधस सामीप्यइति कृतद्विरस्यात्र ग्रहणम् । तेन वीप्साद्विर्वचने सति नास्य प्रवृत्तिः । ततोन्यत्रापीत्युक्तम्, तान्परिगणयति वृत्तिकारः, अभितःपरित समयानिकपाहाप्रतियोगेपीति । अभितः कृष्णम् । उभयत इत्यर्थः । परितः कृष्णम् । सर्वत इत्यर्थ । पर्यभिभ्याञ्चेति तासिल् । आभिमुख्यवृत्तेरपि विभक्तिप्रतिरूपको निपातो ऽभितःशब्दोस्ति सोपीह गृह्यते । समयानिकपाशब्दौ समीपपर्यायौ । ग्रामं समया निकपा वा । हाशब्दः शोकवृत्तिः । हा कृष्णाभक्तम् । तस्य शोच्यतइत्यर्थः । षष्ठ्यपवादो द्वितीया । सम्बोधने त्वन्तरङ्गत्वात्प्रथमैव । हा ताततेति यथा । एतेन धिङ्मूर्खेति प्रयोगो व्याख्यातः । बुभुक्षित न प्रतिभाति किंचित् । एप प्रतिशब्दः क्रियाविशेषकत्वादुपसर्गो न तु कर्मप्रवचनीय । एवमन्येपि वृत्तिग्रहणात्साधनीयाः । तद्यथा, चैत्रं यावच्छीतमिति । परमपुरुषाराधनमृते इति च । तथा च चान्द्रसूत्रम्, ऋते द्वितीयाचेति, चकारात्पञ्चमी । सा चास्मच्छास्त्रे अन्यारादित्यनेन विधास्यते ॥

तृतीया च होश्छन्दसि ॥ जुहोतेः कर्मणि तृतीया स्यात् द्वितीया च छन्दसि । यवाग्वाग्निहोत्रं जुहोति । अग्निहोत्रशब्दोत्र हविपि वर्तते । यस्याग्निहोत्रमधिश्रितममेध्यमाप-

द्यते इत्यादिप्रयोगदर्शनात् । अग्नये हूयतइति व्युत्पत्तेश्च । जुहोति प्रक्षेपे । अस्मिन्नेव च प्रयोगे यवागूशब्दात्तृतीया । अग्निहोत्रशब्दाच्च द्वितीया । विरुद्धार्थकविभक्त्यनवरुद्ध त्वान्नामार्थयोरभेदान्वयः । यवाग्वाख्यं हविरग्नौ देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः । एतत्सूत्रं भाष्ये प्रत्याख्यातम् । अग्निहोत्रशब्दो हि ज्योतिष्यपि वर्तते । अग्निहोत्रं प्रज्वलितमिति दर्शनात् । हूयतेस्मिन्निति व्युत्पत्तेश्च । जुहोतिश्च प्रीणने । तद्यदा यवागूशब्दात्तृतीया तदा यवाग्वाग्निं प्रीणयतीत्यर्थः । यदा तु द्वितीया तदा यवाग्वाख्यमग्निहोत्रं हविर्द्रव्यं प्रक्षिपतीत्यर्थ इति । मीमांसकास्त्वाहुः । अग्निहोत्रशब्द कर्मनामधेयं तत्प्रख्यं चान्यशास्त्रमिति न्यायात् । दृश्यते च स एष यज्ञः पञ्चविधोग्निहोत्र दर्शपूर्णमासावित्यादि । एवं स्थिते भावार्थाधिकरणन्यायेन करणकोटिनिक्षिप्ते होमे सामानाधिकरण्यापन्नस्याग्निहोत्रस्य करणत्वात्तृतीयायां प्राप्तायां पक्षे द्वितीयार्थमिदं वचनमिति तत्तु सूत्रसन्दर्भविरुद्धम् । कर्मणीति ह्यनुवर्तते ॥

अन्तरान्तरेण युक्ते ॥ आभ्यां योगे द्वितीया स्यात् । अन्तराशब्दः सप्तम्यन्तस्य मध्यइत्येतस्यार्थे वर्तते । अन्तरेणशब्दस्तु तत्र च विनार्थे च । अन्तरा त्वां मां च हरिः । मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं सः । अन्तरेण हरिं न सुखम् । ननु मध्यस्यावध्यपेक्षतया यथावधिभूताभ्यां युष्मदस्मदर्थाभ्यां चामरद्वयेन च योगस्तथा आधेयेनापि सह । तस्मादाधेयादपि द्वितीया स्यात् । नैवम् । तत्रान्तरङ्गतया प्रथमाया एवोत्पत्तेः । तस्माद्विशेषणादिव षष्ठ्यपवादभूता द्वितीया न तु विशेष्यादपीति स्थितम् । अथ टान्तेनान्तरा

शब्देन तृतीयान्तेनान्तरेणेत्यनेन च योगे कुतो नेति चेत्। प्रतिप-दोक्ततया तयोरेवेह ग्रहणात् परस्परसाहचर्याच्च। तद्यथा, गुरु-भार्गवावित्युक्ते ग्रहयोरेव प्रतीतिर्नत्वाचार्यपरशुरामयोः। तेन किमनयोरन्तरेण गतेनेति सिद्धम्। किमनयोर्विशेषेण ज्ञाते-नेत्यर्थः। युक्तग्रहणान्नेह। अन्तरा त्वां मां च कृष्णस्य मूर्तिः। इह कृष्णान्न द्वितीया। अन्तरेत्यनेनानन्वयात्॥

कालाध्वनोरत्यन्तसंयोगे॥ इह द्वितीया स्यात्। मास-मास्ते। यद्यपीह कर्मत्वादेव सिद्धम्। कालभावाध्वगन्त-व्याः कर्मसंज्ञा ह्यकर्मणामित्युक्तेस्तथापि सकर्मकार्थे गुणद्रव्या-भ्यां योगार्थं चेदम्। मासमधीते। मासं कल्याणी। मासं गुडधानाः। क्रोशमधीते। क्रोशं कुटिला नदी। क्रोशं पर्वतः। अत्यन्तसंयोगे किम्। मासस्य द्विरधीते। कृत्वोर्थप्रयोगे का-लेऽधिकरणइति षष्ठी॥

अपवर्गे तृतीया॥ अपवर्गः फलप्राप्तिस्तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात्। अह्ना क्रोशेन वा नुवाकोधीतः। अपवर्गे किम्। मासमधीतो नायातः॥

सप्तमीपञ्चम्यौ कारकमध्ये॥ शक्तिद्वयमध्ये यौ का-लाध्वनौ ताभ्यां सप्तमीपञ्चम्यौ स्तः। अद्य भुक्त्वायं द्व्य-हे द्व्यहाद्वा भोक्ता। कर्तृशक्त्योर्मध्येयं कालः। इहस्थोयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्। कर्तृकर्मणोर्मध्येयं देशः। कालाध्वभ्यां विभक्त्योर्यथासंख्यं न भवति। अस्वरित-त्वात्॥

कर्मप्रवचनीययुक्ते द्वितीया॥ स्पष्टोर्थः। हरिं प्रति पर्यनु वा॥

यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी॥ कर्मप्रवच-

नयियुक्ते इत्यनुवर्तते। यस्मादधिकं तदस्मिन्नधिकमिति च निर्देशादधिकशब्दयोगे पर्यायेण पञ्चमीसप्तम्यौ स्तः। प्रकृतसूत्रार्थस्तु यस्मादधिकं यस्य चेश्वरवचनं कर्मप्रवचनीययुक्ते तत्र सप्तमी स्यात्। उपपरार्द्धे हरेर्गुणाः। परार्द्धादधिका इत्यर्थः। ऐश्वर्ये तु स्वस्वामिनोः पर्यायेण सप्तमी। तथाहि। ईश्वर इत्युच्यते येन तदीश्वरवचनं ऐश्वर्यम्। अथ वेश्वरशब्दो भावप्रधानः। यस्य स्वामिन ईश्वरत्वमुच्यते इत्यर्थः। अथ वा यस्येति स्वं निर्दिश्यते यस्य स्वस्य ईश्वर उच्यते ततः स्यादित्यर्थः। पर्यायेण चेयं विभक्तिः शेषविषये कर्मप्रवचनीयविभक्त्यारम्भात् विशेषणादेवोत्पन्नया सप्तम्या द्विष्ठस्यापि सम्बन्धस्याभिधानात्। प्रत्ययार्थस्य प्रकृत्यर्थं प्रति विशेष्यतया विशेषणादेव प्रत्ययौचित्याच्च। विशेष्यात्तु प्रथमैव। अधिरामे भूः। सप्तमीशौण्डैरिति समासपक्षे तु रामाधीनेति भवति। अषडक्षेत्यादिना खः। विभक्त्यर्थवृत्तित्वे त्वव्ययीभावः। अधिरामम्। स्वाद्विभक्तौ अधिभुवि रामः। इह सूत्रे यस्यचेश्वरवचनमित्यंश. प्रत्याख्यातो भाष्ये। तथाहि। स्वामिन्याधारे भूः स्थिता तस्यां च स्वामी तत्र यदा यदधिकरणत्वेन विवक्ष्यते तदा तत्र सप्तमी भविष्यति। एव चाधिरीश्वरइति संज्ञासूत्रमपि न कर्तव्यम्। न चा गत्युपसर्गत्वबाधार्थं तत्। ऐश्वर्यविषयस्य अधेः क्रियायोगाभावेनैव तदप्राप्तेः। उत्तरार्थमिति चेत्तर्हि योगविभागो न कार्यः॥

पञ्चम्यपाङ्परिभिः॥ एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। अपविष्णो परिविष्णोः संसारः। अपेन साहचर्यात्परेर्वर्जनार्थस्य ग्रहणम्। तेन लक्षणादिषु न भवति। वृक्षं परि विद्योतते विद्युत्। आङ्मर्यादावचने। आपाटलिपुत्राद्वृष्टो देवः॥

प्रतिनिधिर्मेतिदाने च यस्मात् ॥ तत्र कर्मप्रवचनीययुक्ते पञ्चमी स्यात्। प्रद्युम्नः कृष्णात्प्रति। तिलेभ्यः प्रतियच्छति माषान्। इह सूत्रे अनेनैव यस्मादिति पञ्चमी ॥

गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायां सत्याम्। ग्रामं ग्रामाय वा गच्छति। गत्यर्थेति किम्। ओदनं पचति। कर्मणीति किम्। अश्वेन व्रजति। चेष्टायां किम्। मनसा हरिं व्रजति। अनध्वनीति किम्। पन्थानं गच्छति। आस्थितप्रतिषेधो वक्तव्यः ॥ आस्थितः। सम्प्राप्तः। गन्त्रा अधिष्ठित इत्यर्थः। तेन यदा उत्पथात्पन्था एवाक्रमितुमिष्यते तदा भवत्येव चतुर्थी। उत्पथेन पथे गच्छति। अजां नयति ग्राममित्यत्र तु न चतुर्थी। अगत्यर्थत्वात्। प्रतीयते ह्यत्र गतिः। न त्वसौ नयतेरर्थः। प्रापणवाचित्वात्। एवं स्त्रियं गच्छतीत्यत्रापि न चतुर्थी। असम्प्राप्तप्रेप्साभावात्। अनध्वनीति ह्यपनीय असम्प्राप्त इति पूर्यते। द्वितीयाग्रहणमपवादविषयेऽपि यथा स्यात्। तेन कृद्योगलक्षणा षष्ठी न भवति अन्यथा चतुर्थ्येव ब्रूयादिति वदन् वृत्तिकारो ग्रामं गन्तेति तृजन्तयोगे उदाजहार। इदन्तु भाष्यविरुद्धम्। तथाहि। सन्दर्शनादिभिराप्यमानत्वात्क्रियापि कृत्रिमं कर्मेति क्रिययाभिप्रेयमाणस्य सम्प्रदानत्वं सिद्धं सन्दर्शनादीनां गमनस्य च भेदाविवक्षायां तु द्वितीयापि सिद्धेति सूत्रमिदं प्रत्याख्यातं भाष्ये। एवं हि वदता कृद्योगे षष्ठ्येवेष्यते। अत एवाकेनोरिति सूत्रे ग्रामं गामीत्युदाहृतं भाष्ये ॥

चतुर्थी सम्प्रदाने ॥ स्पष्टम्। विप्राय गां ददाति। तादर्थ्ये उपसंख्यानम् ॥ यूपायदारु। इह दारुशब्दाद्धेताविति तृतीया तु न भवति। षष्ठीविषये हि सा। प्रातिपदिकार्थमात्रे प्रथमै-

च । ननूपसंख्यानस्यावश्यकत्वे सूत्रं व्यर्थमेवेति चेन्न । हरये रोचतइत्याद्यर्थं तस्याप्यावश्यकत्वात् । क्लृपि सम्पद्यमाने च ॥ विकारवाचकाच्चतुर्थीत्यर्थः । स हि सम्पद्यते प्रादुर्भवति । भक्तिर्ज्ञानाय कल्पते । प्रकृतिविकारयोर्भेदविवक्षायां चतुर्थी अभेदविवक्षायान्तु प्रथमैव । भक्तिर्ज्ञानं कल्पतइति केचित् । अन्ये त्वभेदविवक्षायामपि चतुर्थीत्याहुः । जनिकर्तुरित्यपादानत्वविवक्षायान्तु पञ्चमी । भक्तेर्ज्ञानं कल्पतेइति । केचित्तु तत्रापि चतुर्थीमिच्छन्ति । उत्पातेन ज्ञापिते च ॥ प्राणिनां शुभाशुभयोः सूचको भूतविकार उत्पातः । वाताय कपिला विद्युत् । हितयोगे च ॥ चतुर्थीसमासविधानाज्ज्ञाप्यते । ब्राह्मणाय हितम् ॥

क्रियार्थोपपदस्य च कर्मणि स्थानिनः ॥ उपपदं कृत्रिमन्तच्च क्रियार्थक्रियारूपं तुमुन्ण्वुलोरेव सम्भवतीति विशेषणमहिम्ना । विशेष्यन्तुमुन् ण्वुलन्तमेव लभ्यते । अप्रयुज्यमानस्य कर्मणि चतुर्थी स्यात् । फलेभ्यो याति । फलान्याहर्तुमित्यर्थः । स्थानिशब्दो ऽप्रयुज्यमानपरतया वैयाकरणगृहे प्रसिद्धः ॥

तुमर्थाच्च भाववचनात् ॥ भाववचनाश्चेति सूत्रेण ये विहितास्तदन्ताच्चतुर्थी स्यात् । यागाय याति । पाकाय पचनाय भक्तये । भाववचनेनैव तादर्थ्यस्य द्योतितत्वात्तादर्थ्ये चतुर्थी न स्यादिति सूत्रारम्भः ॥

नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ॥ एभिर्योगे चतुर्थी स्यात् । हरये नमः । उपपदविभक्तेः कारकविभक्तिर्बलीयसी । प्रधानभूतक्रियासम्बन्धस्यान्तरङ्गत्वात् । नमस्करोति देवान् । कथन्तर्हि नमश्चकार देवेभ्य इति, रावणाय नमस्कुर्या इति च भट्टिः । अत्र माधवः साक्षात्प्रभृतिषु पाठाद्वैकल्पिकं नमःशब्दस्य गतित्वम् । तत्र गतिसंज्ञापक्षे उपसर्गवद् द्योतकतया कृञ एव

प्रणतिरर्थः । तत्कर्मणि द्वितीया नमस्यति देवानितिवत् । अगतित्वे तु करोतिक्रियाकर्मभावापन्नं विशेष्यभूतं प्रणाममाचष्ट इति देवादावकर्मणि नमःस्वस्तीति चतुर्थ्येवेति । अत्रेदं वक्तव्यम् । उक्तरीत्या चतुर्थीसमर्थनेपि नमसो गतिसंज्ञाभावान्नमस्पुरसोर्गत्योरिति सत्वं न स्यात् । तथा च प्रयोगानिर्वाहस्तदवस्थः । तस्मात्क्रियार्थोपपदस्यचेति चतुर्थी बोध्या । देवान् प्रसादयितुमित्यर्थात् । वर्धमानस्तु, श्राद्धाय निगलभतइतिवत्क्रियाग्रहणं कर्तव्यमिति चतुर्थीत्याह । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्य. स्वधा । अलं मल्लो मल्लाय । अलमिति पर्याप्त्यर्थग्रहणं तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि । कथन्तर्हि प्रभुर्बुभूषुर्भुवनत्रयस्येति माघः । उच्यते । पर्याप्त्यर्थस्यैवालमो ग्रहण न तु अलं रोदनेनेत्यादौ वारणार्थस्यापीतिव्याख्यानान्तर भाष्ये स्थितम् । एवञ्च व्याख्याभेदात्प्रभ्वादियोगे षष्ठ्यपि साधु. । अत एव सूत्रकारो द्वेधा निरादिक्षत् । तस्मै प्रभवति सन्तापादिभ्यः, सप्तम्यांग्रामणीरिति च । तथाच भट्टि । नामोर्थीदस्य कश्च न पुमोथास्मै न कश्चनेति । प्रोथृ पर्याप्तावित्यस्य रूपम् । अलं रोदनेनेत्यत्र तु करणे तृतीया । रोदनेन न किं चित्साध्यमित्यर्थावगमात् । वषडिन्द्राय । चकारः पुनर्विधानार्थः । तेनाशीर्विवक्षायामपि षष्ठीं बाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूयात् । अन्यथा स्वस्तियोगे चतुर्थ्या अवकाशः । स्वस्तिजाल्मायास्तीति । तत्त्वकथने कुशलार्थैराशिषीत्यस्यावकाशः । स्वस्तिभिन्नाः कुशलार्थाः । उभयप्रसङ्गे परत्वात् पक्षे षष्ठी स्यात् ॥

मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ॥ प्राणिवर्जे मन्यते

कर्मणि चतुर्थी वा स्यात्तिरस्कारे । न त्वां तृणं मन्ये तृणाय वा । मन्यतिग्रहणं किम् । न त्वां तृणं चिन्तयामि । श्यना निर्देशान्नेह । न त्वां तृणं मन्वे । मनु अवबोधने । तनादेरुः । न च मन्येति यका निर्देशः किं न स्यादिति वाच्यम् । अनभिहितइत्यधिकारात् । नहि यका योगे अनभिहितं कर्म सम्भवति । श्यन्नपि दैवादिकधातूपलक्षणमात्रं न तु स्वयं विवक्षितः । तेन तृणाय मत्वा रघुनन्दनोपि बाणेन रक्षः प्रधनान्निरास्थदिति भट्टिप्रयोगः संगच्छते । अनादरश्चात्र नादराभावमात्रमपि तु तिरस्कारः, कुत्सेति यावत् । अधर्मानृतादिवन्नञः प्रतिपक्षवाचित्वात् । स च द्वेधा । उत्कृष्टस्यापकृष्टेनोपमानात् । यथा तृणाय मत्वेति । तृणमिव मत्वेत्यर्थः । क्वचित्तु निषेधयोगेनोपमानायोग्यत्वप्रतीतेः । यथा न त्वां तृणं मन्यइति । तृणतुल्यमपि त्वां न मन्यइत्यर्थः । इयांस्तु विशेषः । अत्रात्यन्तमनादरः पूर्वत्र त्वनादरमात्रम् । उभयत्रापि सूत्रेण सिद्धम् । वार्त्तिककारस्त्वाह । प्रकृष्य कुत्सितग्रहणं कर्त्तव्यमिति । यद्याचिनश्चतुर्थी ततोपि यदि कुत्सा न तु साम्यमात्रं तदा चतुर्थीत्यर्थः । एवञ्च प्रतिषेधयुक्तायामेव कुत्सायां चतुर्थीविधानात् प्रागुक्तभट्टिप्रयोगो विरुध्यते सूत्ररीत्या तु सः । तथा चापि शलिरपि मन्यकर्मण्यनादरउपमाने विभाषा,प्राणिष्वित्यसूत्रयत् । अप्राणिष्वित्यपनीय अनावादिष्विति पाठ्यमिति भाष्यम् । नौकाकान्नशुकशृगालाः नावादयः । तेन न त्वां नावमन्नं वा मन्यइत्यत्राप्राणित्वेपि चतुर्थी न । न त्वां शुने मन्य इत्यत्र तु प्राणित्वेपि चतुर्थी भवत्येवेति दिक् । अनादरेति कर्मणो विशेषणम् । अनादरद्योतकं यत्कर्मेति । तेन तृणादेरेव चतुर्थी न तु युष्मदः, व्यवस्थितविभाषाविज्ञानाद्वा ॥

इति श्रीशब्दकौस्तुभे द्वितीयस्याध्यायस्य
तृतीयपादे प्रथममान्हिकम् ॥

कर्तृकरणयोस्तृतीया ॥ रामेण बाणेन हतो वाली । प्रकृत्यादिभ्य उपसङ्ख्यानम् ॥ प्रकृत्याभिरूपः । क्रियाया अश्रवणात् कर्तृकरणयोरभावात् षष्ठीह प्राप्ता । ननु गम्यमानकरोतिक्रियाकरणत्वात् सिद्धम् । करणान्तरव्युदासाय हि प्रकृतेरेव करणत्वं विवक्षितम् । स्वभावेनायमभिरूप कृतो न त्वलङ्कारादिनेत्यर्थात् । इदन्तर्हि प्रायेण याज्ञिका । प्रायशब्दो बह्वर्थः । बहवो याज्ञिका इत्यर्थः । ननु याज्ञिकशब्दाभिधेयमध्ययनं प्रति बाहुल्यं करणम् । सङ्घीभूय यज्ञमधीयत इत्यर्थात् । यत्रापि विशिष्टवेषं कञ्चिद्दृष्ट्वा प्रायेणायं याज्ञिक इत्यध्यवस्यति । तत्रापि गम्यमानज्ञानाक्रियां प्रति करणत्वात् सिद्धम् । आचारादिबाहुल्येन याज्ञिकोयमिति जनैर्ज्ञाप्यतइत्यर्थात् । केचित्तु प्रायेणशब्दो विभक्तिप्रतिरूपको निपातो नूनमित्यर्थे वर्त्ततइत्याहुः । दृश्यते च प्रायेण सामग्र्यविधौ गुणानामिति । प्रायेण निष्क्रामति चक्रपाणाविति च । इदं तर्हि गोत्रेण गार्ग्यः, प्रथमा षष्ठी वा प्राप्नोति । नन्विहापि अनेनाहं ज्ञाये इत्यर्थात्सिद्धम् । इहन्तर्हि समेन विषमेणेति, अत्र समविषमाभ्यां द्वितीया प्राप्ता । ननु पथोपि गमने करणत्वात् समेन पथेत्यर्थोस्तु । इदन्तर्हि । द्विद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून् गृण्हाति । द्वयोर्द्रोणयोः समाहार इति द्विद्रोणं पात्रादिः । द्वौ द्रोणौ कृत्वेत्यर्थः । इह द्वितीया षष्ठी वा प्राप्ता । पञ्च परिमाणमस्य पञ्चकः सङ्घः । तत्र सङ्घसङ्घिनोरभेदविवक्षायां पशूनित्यनेन सामानाधिकरण्यात् द्वितीया प्राप्ता । एतदपि प्रत्याख्यातं

भाष्ये । द्विद्रोणाद्यर्थे मूल्ये द्विद्रोणादिशब्दः तस्य च क्रयं प्रति करणत्व द्विद्रोणादीनां च यन्मूल्यं तेन द्विद्रोणाद्येव क्रियतइत्यर्थभेदोपि नास्तीति ॥

सहयुक्ते ऽप्रधाने ॥ सहार्थेन युक्ते ऽप्रधाने तृतीया स्यात् । पुत्रेण सहागतः पिता । पितुरत्र क्रियासम्बन्धः शाब्दः, पुत्रस्य तु आर्थ इति तस्याप्राधान्यम् । सहे ऽप्रधानइत्येव वाच्ये युक्तग्रहणादर्थग्रहणम् । पुत्रेण सार्धम् । विनापि सहशब्देन तदर्थावगतौ स्यादेव, तथा च सौत्र प्रयोग । वृद्धो यूनेति । प्रधानग्रहणं शक्यमकर्तुम् । न चैवं 'पितुरपि तृतीयापत्तिः । तत्र प्रातिपदिकमात्रापेक्षत्वादन्तरङ्गत्वेन प्रथमोपपत्तेः ॥

येनाङ्गविकारः ॥ येन शरीरविकारो लक्ष्यते ततस्तृतीया स्यात् । अर्शआद्यजन्तः सूत्रे अङ्गशब्दः । तद्विकारलक्षकश्च प्रकृत्यर्थभूतोवयव एव गृह्यते सन्निधानात् । स चार्थाद्विकृत एव न ह्यविकृतेनावयवेन शरीरस्य विकारः सम्भवति । तदेतदभिसन्धाय वृत्तावुक्तम् । येनाङ्गेन विकृतेनेत्यादि । अक्ष्णा काणः । पादेन खञ्जः । पाणिना कुणिः । सामान्योपक्रमे वाक्ये अक्ष्णेत्युक्ते भवत्याकाङ्क्षा, निरूपयति वा काणो वेति । तत्र काण इत्यादिप्रयोगो न विरुध्यते । यद्यप्यक्ष्येव काण तथापि तद्योगाच्छरीरेपि व्यवहारो निरूढः । पद्मपत्रादो योगः । अक्षिसम्बन्धिकाणत्ववानित्यर्थात् ॥

इत्थम्भूतलक्षणे ॥ कञ्चित् प्रकारं प्राप्त इत्थम्भूतस्तल्लक्षणे तृतीया स्यात् । जटाभिस्तापस । जटाज्ञाप्यतापसत्ववान् ॥

संज्ञोन्यतरस्यां कर्मणि ॥ सम्पूर्वस्य जानातेः कर्मणि तृतीया वा स्यात् । पित्रा पितरं वा सञ्जानीते । सम्प्रतिभ्यामनाध्यान इति तङ् । कृद्योगे तु परत्वात्षष्ठी । पितुः संज्ञाता ।

यन्तु हरदत्तेनोक्तम्, आध्याने परत्वादधीगर्थेति षष्ठी मातुःसञ्जानातीति । तन्न । तत्र शेषाधिकारात् । कर्मत्वविवक्षायां तृतीयाद्वितीययोरवश्याभ्युपेयत्वात् । भिन्नविषयया षष्ठ्या विप्रतिषेधस्यान्याय्यत्वाच्चेति दिक् ॥

हेतौ ॥ हेत्वर्थे तृतीया स्यात् । धनेन कुलम् । विद्यया यशः । हेतुरिह लौकिकः फलसाधनभूतं न तु तत्प्रयोजको हेतुश्चेति कृत्रिमः । तस्य चकारेण कर्तृसंज्ञाविधानात्कर्तृकरणयोरित्येव तृतीयायाः सिद्धत्वात् । न च लौकिकहेतोरपि करणत्वात्तुल्यो दोष इति वाच्यम् । लौकिकस्य द्रव्यादिसाधारण्यात् । निर्व्यापारसाधारण्याच्च । करणस्य तु क्रियामात्रविषयत्वात् व्यापारनियतत्वाच्च । आह च । द्रव्यादिविषयो हेतुः कारकं नियतक्रियमिति ॥ अनाश्रिते तु व्यापारे निमित्तं हेतुरुच्यतइति च । तथा फलमपीह हेतुशब्देन गृह्यते । अध्ययनेन वसति । इदञ्च प्रत्यय इति सूत्रे कैयटे स्पष्टम् ॥

अकर्तर्यृणे पञ्चमी ॥ कर्तृवर्जितं यदृणं हेतुभूतं तत पञ्चमी स्यात् । तृतीयापवादः । शताद्बद्धः । अकर्तरीति किम् । शतेन बन्धितः । शतमिह उत्तमर्णाय धार्यमाणत्वादृणन्तत्प्रयोजको हेतुश्चेति चकारेण कर्तृसंज्ञं च । ननु पूर्वसूत्रे लौकिकस्य हेतोर्ग्रहणमित्युक्तम् । अयन्तु शास्त्रीयः । सत्यम् । शास्त्रीयस्यापि लौकिकत्वमस्त्येव । व्यापकं हि लौकिकं न तु विरुद्धम् । अथ वा इष्टार्थतया पूर्वसूत्रेपि सामान्यग्रहणमस्तु ॥

विभाषा गुणे ऽस्त्रियाम् ॥ गुणहेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्याज्जाड्येन वा बद्धः । पाण्डित्यात्पाण्डित्येन, वा मुक्तः । गुणइति किम् । धनेन कुलम् । अस्त्रिया किम् । बुद्ध्या मुक्तः । इह सत्वे निविशतेपैतीति लक्षितो गुणो गृह्यते ।

तदनुरूपत्वादुदाहरणप्रत्युदाहरणयोः । इह विभाषेति योगो विभज्यते। तेनागुणेपि क्वचिद्भवति एवं स्त्रियामपि। एतच्च हेतुमनुष्येभ्य इतिसूत्रे हरदत्तग्रन्थे स्पष्टम् । केचित्तु । गुणशब्दोत्र परतन्त्रमात्रपरः । यस्य द्विगुणस्य भावादित्यत्र यथा । तेन वन्हिमान्धूमादित्यादावपि पञ्चमी सिद्धेत्याहुः । कथन्तर्हि नास्तीह घटोनुपलब्धे रिति । अत्राहुः। स्त्रियामपि क्वचिद्भवति विभाषागुणइतियोगविभागात् । बाहुलकं प्रकृतेस्तनुदृष्टेरिति वार्त्तिकप्रयोगश्चेह ज्ञापक इति ॥

षष्ठी हेतुप्रयोगे ॥ हेतौ द्योत्ये षष्ठी स्यात् । अन्नस्य हेतोर्वसति ॥

सर्वनाम्नस्तृतीया च ॥ सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च । केन हेतुना वसति कस्य हेतोः। निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम् । किन्निमित्तं वसति । केन निमित्तेन । कस्मै निमित्तायेत्यादि । एवं किं कारणम् । को हेतुः । किं प्रयोजनमित्यादि । असर्वनाम्नोप्येतत्प्रवर्तते । वृत्तिकारेणेह पाठेपि भाष्यकारेण हेतावित्यत्र पठितत्वात्। प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः । अन्नेन कारणेन वसति। अन्नाय कारणायेत्यादि। वार्त्तिकेपर्यायो पादानं प्रपञ्चार्थम् । प्रयोजनादिशब्दानुरोधेनार्थपरत्वस्वीकारात् ॥

अपादाने पञ्चमी ॥ स्पष्टम् । ग्रामादागच्छति । ल्यब्लोपे कर्मण्यधिकरणे चोपसंख्यानम् ॥ प्रासादात्प्रेक्षते आसनात्प्रेक्षते । प्रासादमारुह्य आसने उपविश्य प्रेक्षतइत्यर्थः । गम्यमानापि क्रिया कारकविभक्तिनिमित्तं प्रविशपिण्डीमितिवत् । तेन कुतो भवान्, पाटलिपुत्रादित्यादि सिद्धम्।इह हि प्रत्यासत्तिसिद्धमागमनमुपजीव्यापादानेव प्रश्नोत्तरे प्रवर्तते । एतेन प्रश्नाख्यानयोश्

ति वार्तिकं प्रत्याख्यातम्। अपेक्षितक्रियाया दानत्वेनैव सिद्धत्वात्। अन्यथा कश्चन्द्र इत्यादावतिव्याप्तेश्च। यतश्चाध्वकालनिर्माणं तत्र पञ्चमी तद्युक्तादध्वनः प्रथमासप्तम्यौ कालात्सप्तमी च वक्तव्या वनाद्ग्रामो योजनं योजने वा। कार्त्तिक्या आग्रहायणी मासे। कृत्तिकाभिर्युक्ता पौर्णमासी कार्त्तिकी। पौर्णमास्या लुब्विशेषइति लुङ् न भवति। सास्मिन्पौर्णमासीत्यधिकारे विभाषाफाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्य इति निर्देशात्। अग्रे हायनमस्या इति आग्रहायणी। प्रज्ञादेराकृतिगणत्वात् स्वार्थिकोण्, आग्रहायण्यश्वत्थादिनिपातनाण्णत्वम्। तद्युक्तादिति। तेन पञ्चम्यन्तेन अर्थद्वारेण युक्तात्काले वर्त्तमानान्मासादिशब्दादित्यर्थः। अत्र भाष्ये कार्त्तिक्याः प्रभृतीति प्रयोगात्प्रभृतियोगे पञ्चमीति कैयटः। प्रभृतीत्यर्थग्रहणम्। तत आरभ्येत्यर्थ इति कैयटात। स्कन्धात्प्रभृत्येव सपल्लवानीति कुमारः॥

अन्याराादितरर्त्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते॥ एतैर्योगे पञ्चमी स्यात्। अन्य इत्यर्थग्रहणम्। इतरग्रहणन्तु प्रपञ्चार्थम्। न चेतरस्त्वन्यनीचयोरित्यमरोक्तेर्नीचार्थकस्येदं ग्रहणमिति वाच्यम्। अस्मात्तारो मन्दो वेत्यादाविव पञ्चमीविभक्तइत्यनेनैव सिद्धत्वात्। देवदत्तादन्यो भिन्नो विलक्षणोर्थान्तरं वेत्यादि। न चैवं घटः पटो नेत्यत्रातिप्रसङ्गः। नञोप्यन्योन्याभावार्थकत्वात्। घटाद्भेद इत्याद्यनुरोधेन धर्मिपर्यन्तविवक्षाया अयोगादिति वाच्यम्। नञो द्योतकताया उक्तत्वात्। आराद्देवदत्तात्। इह दूरान्तिकार्थैःषष्ठ्यन्यतरस्यामिति प्राप्तः। आराद्दूरसमीपयोः। ऋते कृशानोर्न हि मन्त्रपूतम्। अत्र ऋतेयोगे पाक्षिकी द्वितीयापीत्युक्तं प्राक्। दिशि दृष्टः शब्दो दिक्शब्दः। तेन सम्प्रति देशकालवृत्तिनापि योगे भवति। ग्रामात्पूर्वो देशः। चैत्रात्पूर्वः

फाल्गुनः । कथन्तर्हि पूर्वं कायस्येति । उच्यते । अवयववाचिभियोगे नभवति तस्यपरमाम्रेडितमिति निर्देशात् । अञ्चूत्तरपदस्य दिक्शब्दत्वेपि षष्ठ्यतसर्थप्रत्ययेनेत्येतद्बाधनार्थं पृथग्ग्रहणम् । प्राङ् प्रत्यग्वा ग्रामात् । न च तेन सध्र्यङ्ङित्यादौ पञ्चम्यर्थं तत्किम स्यादिति वाच्यम् । दिक्शब्दसाहचर्येण प्रागादीनामेव ग्रहणात् । आच्, दक्षिणा ग्रामात् उत्तरा वा । आहि, दक्षिणाहि उत्तराहि ग्रामात् । दक्षिणादाच् । आहिचदूरे उत्तराच्चत्याजाहौ ॥

षष्ठ्यतसर्थप्रत्ययेन ॥ एतद्योगे षष्ठी स्यात् । दक्षिणतो ग्रामस्य । उत्तरतः । दक्षिणोत्तराभ्यामतसुच् । एवं पुरःपुरस्तादुपर्युपरिष्टात् ॥

एनपा द्वितीया । एनबन्तेन योगे द्वितीया स्यात् । षष्ठ्यपीष्यते । सा त्वेनपेति योगं विभज्य साधनीया । दक्षिणेन ग्रामं ग्रामस्य वा । एवमुत्तरेण । एनबन्यतरस्यामदूरेपञ्चम्या इत्येनप् । कथन्तर्हि तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम् । स्त्यधिकारात्परेण वासरूपविधिनावश्यं भवतीत्यादि । एनबपि परशब्दात्पाक्षिकः । यदा तद्धितावुत्तराधरदक्षिणादिति नानुवर्तते । सत्यम् । अत एव चिन्त्यमेवेदमिति हरदत्तः । उत्तरेणेति तृतीयैकवचनान्तं तोरणेनेत्यनेन समानाधिकरणमित्यन्ये । अपरे तु धनपतिगृहानिति शसन्त पठन्ति ॥

पृथग्विनानानाभिस्तृतीयान्यतरस्याम् ॥ अन्यतरस्यांग्रहणं समुच्चयार्थम् । निपातानामनेकार्थत्वात् । मण्डूकप्लुत्या पञ्चम्यनुवर्तते । एभिर्योगे तृतीयापञ्चम्यौ स्तः । वृत्तिकारस्त्वाह । पृथग्विनानानाभिरिति योगाविभागाद् द्वितीयापीष्यतइति । पृथग्रामेण रामाद्रामं वा । एवं विना नाना ।

हिरुङ् नाना च वर्जनइत्यमरः। नानानारीर्निष्फला लोकयात्रेति प्रयोगः ॥

करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्ववचनस्य ॥ अद्र-व्यार्थेभ्य एभ्यः करणे तृतीयापञ्चम्यौ स्तः । स्तोकेन स्तोकाद्वा मुक्तः । असत्त्वेति किम् । स्तोकेन विषेण हतः ॥

दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ॥ एतैर्योगे षष्ठी स्यात्पञ्चमी च । पृथग्विनेत्यत्र पञ्चमी समुच्चीयतइत्युक्तम् । इहाप्येकमयद्वक्तत्वात्तथैवेति द्रष्टव्यम् । दूरमन्तिकं वा ग्रामस्य ग्रामाद्वा ॥

दूरान्तिकार्थेभ्यो द्वितीया च ॥ एभ्यो द्वितीया स्याच्चकारात्पञ्चमीतृतीये। प्रातिपदिकार्थे विधिरयम्। ग्रामस्य दूरं दूराद्दूरेण वा । अन्तिकमन्तिकादन्तिकेन वा । उत्तरत्राप्येतदनुवृत्त्या तद्विषयेपि द्वितीयादयः स्युः । तथा चाधिकरणेपि प्रयुज्यते । दूरादावसथान्मूत्रमिति । आवसथस्य दूरइत्यर्थः। असत्ववचनग्रहणमनुवर्तते। तेनेह न। दूरः पन्थाः। दूराय पथे देहि । दूरस्य पथः स्वमिति ॥

सप्तम्यधिकरणे च ॥ चकाराद् दूरान्तिकार्थेभ्यः। कूटे आस्ते । दूरान्तिकार्थेभ्यः प्राग्विभक्तित्रयमुक्तम् । अनेन च सप्तमीति तेभ्यश्चतस्रो विभक्तयः फलिताः । क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम् ॥ इनिति इन्नन्तः शब्दः । विषयो वृत्तिभूमिर्यस्य क्तान्तस्य तस्येत्यर्थः। अधीती व्याकरणे। अधीतमनेनेति विग्रहः । श्राद्धमनेन भुक्तमित्यतो ऽनेनेति वर्त्तमाने इष्टादिभ्यश्चेति सूत्रेण कर्त्तरीनिप्रत्ययः । ततस्तद्धितार्थेन सहैकार्थीभूतस्याधीतस्य निष्कृष्य व्याकरणादिना सम्बन्धाभावात् । क्तप्रत्ययेनानाभिहितं व्याकरणम् । तत्र कृ-

तत्पूर्वांकटमितिवद् द्वितीया मास्तु । गुणभूतयापि हि अध्ययनक्रियया कर्मणः सम्बन्धो न विरुद्धः । सहाधीतवान् व्याकरणमित्यादौ यथा । आह च, अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः । क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थितेति ॥ न विविच्य ग्रहो यस्याः सा अविग्रहा । गुणीभूतेत्यर्थः । ननु कालकर्मणोपि सप्तमी प्राप्नोति मासमधीतो व्याकरणइत्यादौ । मैवम् । तस्य बहिरङ्गत्वात् । न चैवं तत्र द्वितीयापि न स्यादिति वाच्यम् । तद्विधाने लक्ष्यानुरोधेन व्यक्तिपक्षस्याश्रयणात् । साध्वसाधुप्रयोगे च ॥ साधुः कृष्णो मातरि असाधुर्मातुले । अत्र साधुत्वासाधुत्वयोर्मात्रादिविषयत्वेपि क्रियाया अभावेनाधिकरणत्वाभावाद्वचनम् । साधुनिपुणाभ्यामित्येव सिद्धे अनर्चार्थमत्र साधुग्रहणम् । तेन तत्त्वकथनेपि भवति । सूत्रे अर्चाग्रहणन्तु निपुणार्थम् । साधुग्रहणन्तु तत्र वार्तिकं दृष्ट्वा सूत्रस्याप्रवृत्तेरिति ध्येयम् । अर्हाणां कर्तृत्वे अनर्हाणामकर्तृत्वे तद्वैपरीत्ये च । सत्सु तरत्सु असन्त आसतइत्यादि । यद्यपीदं यस्यचभावेनेत्येव सिद्धम् । तथापि लक्ष्यलक्षणभावाविवक्षायामपि यथा स्यादिति वचनमित्याहुः । निमित्तात्कर्मयोगे ॥ निमित्तमिह फलम् । तद्वाचिनः सप्तमी स्यात् । यदि तस्य कर्मणा सह योगो योगविशेषः संयोगसमवायात्मकः । चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ चर्मफलकं द्वीपिकर्मकं हननमित्यर्थः । अत्र हेतुतृतीया प्राप्ता । तत्र हि फलमपि हेतुशब्देन गृह्यते । अध्ययनेन वसतीत्यादिसिद्धयइति, मत्पप इति सूत्रे कैयटे स्थितम् । अत्र द्वीपिचर्मणोः समवायः संबन्धः । चमरशब्दाज्जातिलक्षणो ङीप् । पुष्कलकः शङ्कुः । ससीम्नि सीम-

ज्ञानार्थ हतो निहतः निर्खेत इत्यर्थ । निहन्यमानेन शङ्कुना सह सीम्नः संयोग संबन्ध इति हरदत्तादयः । दुर्गवाक्यप्रबोधे तु कुलचन्द्रस्त्वाह । सीमा अण्डकोशः पुष्कलको गन्धमृगः । उक्त च मेदिनीकोशे, सीमा घाटस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियामिति । अथ पुष्कलको गन्धमृगे क्षपणकीलयोरिति च । कर्मयोगे किम् । वेतनेन धान्यं लुनाति ॥

यस्य च भावेन भावलक्षणम् ॥ यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् । निर्ज्ञातकाला क्रिया अनिर्ज्ञातकालायाः क्रियाया कालपरिच्छेदकत्वात् लक्षणमित्युच्यते । गोषु दुह्यमानासु गत । एवं देशपरिच्छेदिकापि सति गुणे द्रव्यत्वमस्ति ॥

षष्ठीचानादरे ॥ अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्त । इह सूत्रे अनादरइति पूर्वेण सत्सप्तमी । अनादरे सति यो भावं लक्षयतीति । तथाच तदाधिक्यं फलितम् । रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य सन्यस्तवानित्यर्थः ॥

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ एतै सप्तभिर्योगे षष्ठीसप्तम्यौ स्त ॥ षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थ वचनम् । गवां गोषु वा स्वामी, ईश्वरो वेत्यादि । दायमादत्ते इति दायादः । सोपसर्गादप्यत एव निपातनात्कः । गवामित्येतत्तु यद्यपि समुदायस्य विशेषणं तथापि दीयतइति दाय इति व्युत्पत्त्या अवयवार्थभूतमंशं स्पृशत्येव । तेन गवात्मकस्यांशस्यादातेति फलितोर्थः । गवां प्रसूतः । गाः एवानुभवितुं जात इत्यर्थ ॥

आयुक्तकुशलाभ्यां चासेवायाम् ॥ आभ्यां योगे षष्ठीसप्त-

म्यौ स्त आसेवायां गम्यमानायाम् । आसेवा तात्पर्यम् । आयुक्तो व्यापारित । कुशलो निपुणः । आयुक्तः कुशलो वा हरिभजनस्य हरिभजने वा । आसेवायां किम् । आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः ॥

यतश्च निर्द्धारणम् ॥ जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणं,यतो निर्द्धारणं ततः षष्ठीसप्तम्यौ स्त। नृणां नृषु वा ब्राह्मणः श्रेष्ठ । गवां गोषु वा कृष्णा बहुक्षीरा। गच्छतां गच्छत्सु वा धावन् शीघ्रः । अमीषां छात्राणां देवदत्तः पटु ॥

पञ्चमी विभक्ते ॥ विभागो विभक्तं निर्द्धार्यमाणस्य यत्र भेद एव न तु शब्दोपात्तसामान्यरूपाक्रान्तता तत्र निर्द्धारणाश्रयात् पञ्चमी स्यात्। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। न ह्यत्र गवां कृष्णेत्यादिष्विव सामान्यविशेषभावः किन्तु शब्दोपात्तधर्मयोर्विरोध एव । इदञ्च सूत्रं बुद्धिकल्पितमपायमाश्रित्यापादानप्रकरणे प्रत्याख्यातम्। आह च। बुद्ध्या समीहितैकत्वान् पञ्चालान् कुरुभिर्यदा । पुनर्विभजते वक्ता तदापाय प्रतीयतइति ॥

साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥ आभ्या योगे सप्तमी स्यादर्चायां गम्यमानायां न तु प्रतेः प्रयोगे। मातरि साधुर्निपुणो वा । पुण कर्मणि शुभे । अस्मान्निपूर्वादिगुपधलक्षणः क । अर्च पूजायामस्माद्गौवादिकाद्गुरोश्चहल इत्यप्रत्ययः । चौरादिकात्तु ण्यासश्रन्थेति युच् स्यात्। अर्चायां किम्। निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्यम्। साधुशब्दप्रयोगे त्वनर्चायामपि सप्तमी भवत्येव । साध्वसाधुप्रयोगे चेति वार्त्तिकादिति प्रागेवोक्तम्। अप्रत्यादिभिरिति वक्तव्यम् ॥ नेह। साधुर्निपुणो वा मातरम्प्रति पर्यनुवा ॥

प्रसितोत्सुकाभ्यां तृतीया च ॥ आभ्यां योगे तृतीया स्याच्चात्सप्तमी । प्रसित उत्सुको वा हरिणा हरौ वा । तत्परे प्रसितासक्ताविल्यमरः । उत्सुकसाहचर्यात्प्रसितोपि तत्पर एवेह गृह्यते तेन प्रकर्षेण सितः शुक्ल इत्यर्थे न भवति ॥

नक्षत्रे च लुपि ॥ नक्षत्रे प्रकृत्यर्थे सति यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीया सप्तम्यौ स्तोऽधिकरणेर्थे । मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् ॥ मूले श्रवणे इति वा । नक्षत्रेण युक्तः काल इत्यणो लुबविशेषइति लुप् । अधिकरणे किम् । पुष्यः । पुष्यं प्रतीक्षते । पुष्याय स्पृहयति । अत्र केचित् सूत्रे पञ्चम्यर्थे सप्तम्यौ । लुबन्तान्नक्षत्रवाचिन इति व्याचख्युः तेषां लुबन्तविशेषणाप्र स्यात्, उत्तराभ्यां फाल्गुनीभ्यां नोत्तराभ्यां गच्छेदिति यथेति हरदत्तः ॥

इति श्रीशब्दकौस्तुभे द्वितीयस्याध्यायस्य
तृतीयपादे द्वितीयमाह्निकम् ॥

प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ प्रातिपदिकार्थमात्रे लिङ्गमात्रादिषु च प्रथमा स्यात् । द्वन्द्वान्ते श्रुतत्वात्प्रत्येकं मात्रशब्दः सम्बध्यते । स चावधारणे। मात्रं कार्त्स्न्येवधारणइत्यमरः । प्रातिपदिकार्थादीन्येव तन्मात्रमित्यस्वपदविग्रहः । मयूरव्यंसकादयश्चेति समासः । प्रातिपदिकार्थ सत्ता। उक्तं हि । तस्यां सर्वे शब्दा व्यवस्थिता इति। तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते इति च ॥ उच्चैः । नीचैः । अत्र हि परिमाणविशेषोपहितं सत्तामात्रं प्रतीयते इत्याहु । अन्ये तु नियतोपस्थितिक प्रातिपदिकार्थ इत्याहुः । अस्मिन्पक्षे वृक्षः कुड्यं भित्तिरित्यादीनां नियतलिङ्गानां प्रातिपदिकार्थमात्रे प्रथमेत्येव सिद्धम् । लिङ्गमात्रइति तु तटस्तटी तटमित्याद्यर्थम्, । न

अत्र पुंस्त्वादि नियतोपस्थितिकम् । अतः लिङ्गमात्राधिक्येपि
विधीयते । परिमाणमात्रे द्रोणो व्रीहिः । इह हि द्रोणलक्षणं
यत्परिमाणन्तत्परिच्छिन्नो व्रीहिरित्यर्थः । प्रकृत्यर्थस्य द्रोण-
स्य प्रत्ययार्थे परिमाणे अभेदेन संसर्गेण विशेषणता प्रत्ययार्थश्च
व्रीहिषु परिच्छेद्यपरिच्छेदकभावेन संसर्गेण विशेषणमिति
बोध्यम् । वचनमात्रे, एकः द्वौ बहवः। वचनं सङ्ख्या । तथैव प्रा
चां व्यवहारात् । तत्र प्रकृत्या उक्तायामपि सङ्ख्यायां यथा
स्यादित्येतदर्थमिदं वचनम् । इह सूत्रे अर्थलिङ्गयोः प्रथमेत्येता
वदेवावश्यकम् । इतरत्तु व्यर्थम् । तथाहि । प्रातिपदिकग्र
हणं तावद्व्यर्थम् । ङ्याप्प्रातिपदिकाद्धि स्वादयो विधीयन्ते ।
तत्रार्थे इत्यपेक्षाया यस्मात्स्वादिविधिस्तदर्थ इति लभ्यते एव । प-
रिमाणमप्यनर्थकं, गौर्वाहीक इत्यादाविव मुख्यार्थमात्रे प्रथमायां
सत्यां पदान्तरसमभिव्याहारेण गौणार्थप्रतीत्युपपत्तेः । वाही-
के गोत्वस्येव व्रीह्यादौ द्रोणत्वादेरारोपसम्भवात् । एवं वचनग्र-
हणमपि व्यर्थम् । न केवला प्रकृतिः प्रयोक्तव्येति प्रत्ययः पर-
श्चेति सूत्रे वक्ष्यमाणतया प्रत्ययस्यावश्यकत्वात् । अनन्वित-
वचनप्रयोगापेक्षया अनुवादकप्रयोगस्यैव न्याय्यत्वात् । मात्रग्र
हणमपि व्यर्थम् । सम्बोधने चेति ज्ञापकेन कर्माद्याधिक्ये प्र
थमाया अप्रवृत्तेः । ननु वीर पुरुष इत्यादौ अभेदसंसर्ग-
स्याधिकस्य भानात् प्रथमा न स्यादिति चेन्न । संसर्गस्य वा
क्यार्थत्वेन बहिरङ्गत्वात् प्रथमप्रवृत्तसंस्कारबाधानुपपत्तेः । वा-
र्त्तिककारस्त्वाह । अभिहिते प्रथमेति । वृक्षस्तिष्ठति कृतः
कटः शत्यः प्राप्तोदको ग्राम इत्यादौ तिङादिभिरभिहिते कर्त्रा-
दौ प्रथमा भवतीत्यर्थः । एवञ्च वीरः पुरुष इत्यादौ सत्य
प्याधिक्यअभिहितत्वात् प्रथमा सिद्धेति । न च वृक्ष वृक्ष

इत्यादावव्याप्तिः । अस्तीत्यध्याहारात् । अत्र भाष्यम् । अभिहितेनाभिहितेतिप्रसङ्ग इति । तथाहि । प्रासादआस्तइत्यत्र सदिक्रियायाश्चासिक्रियायाश्चैकमधिकरणं प्रासादाख्यं तच्च सदेरुत्पन्नेन घञाभिहितम् । आसेर्लटा त्वनभिहितम् । तत्र सप्तमीं बाधित्वा परत्वात्प्रथमा स्यात् । अतिङ्समानाधिकरणे प्रथमेत्युच्येत । तदपि न । देवदत्तः पचतीत्यादिषु तिङां दौर्लभ्यापत्तेः । तथाहि । देवदत्त पच लट् इति स्थिते यावत्तिङो न कृतास्तावत्तिङसामानाधिकरण्याभावात् प्रथमैवेति नियमो न प्रवर्तेत । तथा च देवदत्तशब्दादविशेषोत्पन्ना सर्वे स्वादयः सन्त्वेवेति शतृशानचौ स्याताम् । तन्निमित्तभूतस्याप्रथमान्तेन सामानाधिकरण्यस्य सत्वात् । तिङ्विधेस्तु लिङादिष्ववकाशः । स एव प्रथमैवेति नियमस्यापि विदोलटोवेत्यादेस्तु विदिमात्रप्रयोगे चरितार्थता । यथा वेत्थ वेदेत्यादि । स्थानिन्यपि मध्यमोत्तमयोर्विधानादर्थात्प्रकरणाद्वा निर्ज्ञातस्य प्रयोगानावश्यकत्वाच्च । पाक्षिकश्चायं दोषः । शत्रादिविधौ हि अप्रथमेत्यादि पर्युदास प्रसज्यप्रतिषेधो वेति द्वैतम् । तत्र द्वितीये उक्तदोषस्यासङ्गतेः प्रथमाया अपि सत्वेन शत्रादिनिषेधसम्भवात् । यत्तु भाष्ये पर्युदासपक्षे विभक्तिनियमे दोषो नेत्युक्तन्तच्चिन्त्यम् । तत्र हि द्वितीया कर्मण्येवेत्यादि वचनव्यक्त्याश्रयणात् देवदत्ते द्वितीया मा भूत् । षष्ठी तु स्यादेव । सा हि शेष एवेति नियम्यते । यत्र च विभक्त्यन्तरस्य नियमो न प्रवृत्तः स शेषः । ततश्च तिङः सामानाधिकरण्यात् प्राक् शेषलक्षणषष्ठ्यां सत्यां दुर्वारौ शतृशानचाविति ॥

सम्बोधने च ॥ इह प्रथमा स्यात् । हे राम ॥

सामन्त्रितम् ॥ सम्बोधने या प्रथमा तदन्तं शब्दरूपमामन्त्रितसंज्ञं स्यात् । यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं दुर्लभं तथापि महासंज्ञाकरणाल्लभ्यते आमन्त्रणमामन्त्रितम् । अभेदोपचारात्तत्साधने शब्दे वृत्तिः । विभक्त्यन्तेन चामन्त्र्यते न तु केवलया विभक्त्येति । संज्ञाप्रदेशाः । आमन्त्रितस्य चेत्यादयः । सेति किम् । प्रातिपदिकार्थसूत्रेणापि या सम्बोधने प्रथमा तदन्तस्यापीयं संज्ञा यथा स्यात् । हे पचन् हे पचमान । इह हि शतृशानचोः सम्बोधने विधानादभिहितः सोऽर्थोन्तर्भूत इति पूर्वेणैव प्रथमा । यदि तु विभक्तिरहितयोस्तयोः कर्त्राद्यभिधानएव सामर्थ्यं यथा द्विवचनरहितस्य लोटः, तेनेहापि सम्बोधनेचेति पक्षः । तदा सेति मास्तु । अनन्तरस्य विधिर्वेति प्रवृत्तेपि रूपनिष्पत्तेः ॥

एकवचनं सम्बुद्धिः ॥ आमन्त्रितप्रथमाया यदेकवचनं तत्संबुद्धिसंज्ञं स्यात् । हेपटो । सम्बुद्धौचेति वर्तमाने ह्रस्वस्य गुणः । सु सम्बुद्धिरिति वाच्ये एकवचनग्रहणमेकोर्थ उच्यते येन तावन्मात्रस्य प्रत्ययस्य संज्ञार्थम् । अन्यथा प्रक्रमाभेदाय तदन्तस्य स्यात् ॥

षष्ठी शेषे ॥ कारकप्रातिपदिकार्थव्यतिरिक्त स्वस्वामिभावादि· शेषस्तत्र षष्ठी स्यात् । राज्ञः पुरुषः । ननु प्रत्ययनियमपक्षे शेषएवेत्यवधारणार्थमस्तु नाम शेषग्रहणम् । अर्थनियमपक्षे तु षष्ठ्याश्चान्यस्य च प्राप्तौ षष्ठ्येवेति नियमसम्भवात्किन्तेनेति चेन्न । उत्तरार्थमवश्यकर्तव्यस्य शेषग्रहणस्य स्पष्टार्थमिहैव ग्रहणम् । न चाप्रधानार्थं शेषग्रहणम् । तेन द्वयोः पर्यायेण वा न स्यादिति वाच्यम् । प्रत्ययार्थस्य प्राधान्येनाप्रधानादेव षष्ठ्या न्याय्यत्वात् । अप्रकृत्यर्थं पुरुषं प्रति तु राज्ञ

इति षष्ठ्यर्थस्य विशेषणत्वमुचितमेवेति दिक् ॥

ज्ञोऽविदर्थस्य करणे ॥ जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात्। समासनिवृत्त्यर्थमिदं प्रकरणमिति ननिर्धारणइति सूत्रे प्रतिपदविधाना चेति वार्तिकस्य प्रत्याख्यानावसरएवोपपादितम्। सर्पिषो ज्ञानम्। वस्तुत करणीभूतं यत्सर्पिस्तत्सम्बन्धिनी प्रवृत्तिरित्यर्थः। ज्ञानपूर्विकायां प्रवृत्तौ जानातेर्लक्षणा ॥

अधीगर्थदयेशां कर्मणि ॥ एषां कर्मणि शेषे षष्ठी स्यात्। इक् स्मरणे, ककार इहैव विशेषणार्थः। अधिशब्दोच्चारणन्तु सामान्यापेक्षज्ञापकं इङिकावध्युपसर्गं न व्यभिचरत इति। अत एव स्मृत्यर्थदयेषामिति नोक्तम्। सूत्रभङ्गपक्षेपि हि कित्वं कर्तव्यमेव इण्वदिक इत्यत्र विशेषणार्थम्। एरित्युक्तेः कटीगताविव्यत्र प्रश्लिष्टस्यायतेर्ग्रहणापत्तेः। मातुः स्मरणम्। सर्पिषोदयनमीशनं वेत्यादिवृत्त्यादिग्रन्थेष्विह प्रकरणे उदाहरणं प्रत्युदाहरणञ्च यद्यपि तिङन्तं दृश्यते तथापि तत्सर्वमुपलक्षणतया ऽभियुक्तैर्व्याख्यातमेव ॥

कृञः प्रतियत्ने ॥ करोतेः कर्मणि शेषे षष्ठी स्यात् गुणाधाने। एधो दकस्योपस्करणम्। एधाश्चोदकञ्चेति विग्रहे जातिरप्राणिनामित्येकवद्भावः। उपात्प्रतियत्नेत्यादिना सुट् ॥

रुजार्थानां भाववचनानामज्वरेः। भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात्। चौरस्य रोगस्य रुजा। रुजो भङ्गे। भिदादिपाठात्प्रकृतसूत्रएव निपातनाद्वाङ्। रुजाशब्दो व्याधौ रुढः। सूत्रे भाववचनानामिति कर्तरि ल्युट्। प्रकृत्यर्थस्तु न विवक्षितः। तर्हि भावो-वक्ता सम्भवति। तस्मात् प्रत्ययस्य साधुत्वनिर्वाहाय वचिर्बोध्यः।

अज्वरिसन्ताप्योरिति वाच्यम् ॥ रोगस्य चौरज्वरः। चौरसन्तापो वा। रोगकर्तृकञ्चौरसम्बाधि ज्वरादिकमित्यर्थः। तयोर्हेतुमण्ण्यन्तादेरच्। इह समासो भवत्येव ॥

आशिषि नाथः ॥ आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात्। सर्पिषो नाथनम्। आशिषीति किम्। माणवकनाथनम्। तत्सम्बन्धिनी याञ्चेत्यर्थः। यद्यपि कर्मत्वविवक्षायां कर्तृकर्मणोरिति यदा षष्ठी तदा समासो भवत्येव तथापि तत्र कृदुत्तरपदप्रकृतिस्वरः। समासान्तोदात्तत्वं तु याञ्चादावेव न त्वाशिषीति निष्कर्षः ॥

जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ॥ हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात्। जसु ताडने, जसु हिंसायामिति च चुरादिः, तस्येदं ग्रहणं न तु दैवादिकस्य जसु मोक्षणइत्यस्य। जासीति निर्देशात् हिंसायामिति वचनाच्च। चौरस्योज्जासनम्। निप्राभ्यामुपसृष्टो हनो निप्रहणः। हन्तेरत्पूर्वस्येति णत्वम्। निप्रौ संहतौ विपर्यस्तौ व्यस्तौ च। चौरस्य निप्रहणनं प्रणिहननं निहनन प्रहणनं वा। प्रणीत्यत्र नेर्गदेति णत्वम्। नट अवस्यन्दने चुरादिः। नट नृत्तावित्यस्य तु घटादेरग्रहणम्। दीर्घनिर्देशात्। चौरस्योन्नाटनम्। क्रथ हिंसायामिति घटादौ पठ्यते तस्येह निपातनाद्वृद्धिरिति वृत्तिकारः। अत एव क्रथ हिंसायामिति युजादौ स्वरितेतं वदन् देवस्तत्रैवानुदात्तेतं पठन् शाकटायनश्च मतान्तरपरतया नीतो माधवादिभिः। चौरस्य क्राथनम्। मित्वन्तु चिण्णमुलोरिति दीर्घविकल्पार्थम्। *अक्राथि अक्रथि। क्रथं क्रथम्। क्राथं क्राथम्।* इह हि निपातनं बाधित्वा परत्वाद्दीर्घविकल्पः। यत्तु न्यासकृतोक्तं क्राथीति विकृतनिर्देशात् मित्वेपि वृद्धिर्यत्र तत्रैव षष्ठी। वदन्ते तु वृद्ध्यभावात् चौरमचिक्रथदिति। तन्मन्दम्। समास-

निवृत्तये प्रकरणमिदमिति सिद्धान्तात् तिङन्तानामनुदाहरणत्वा-त् चङन्तेपि शेषषष्ठ्या दुरपन्हवत्वादिति माधवः। न च कार्येरेव शेषे षष्ठी न तु हृस्वस्येति व्याख्यानात्प्रकरणं भित्वा प्रकृते तिङन्तमप्युदाहरणमस्त्विति न्यासस्याशयो वाच्यः। एवमपि द्वितीयाया दुर्लभत्वात् प्रक्रमभेदे मानाभावाच्च। यदपि हरदत्तेनोक्तं घटादिपाठः घटादयः षित इति आतिदेशिकषित्वे अङ् यथा स्यादित्येतदर्थ इति। तदपि मन्दम्। घटादयः षित इति हि मध्ये सूत्रितम्। तेन पूर्वेषामेव षित्वं न तु परेषामपि, परश्चा-यमिति दिक्। वृषलस्य पेषणम्। हिंसायां किम्। धानापेषण-म्। अन्तोदात्तः शेष। इत्यनुवृत्तेः कर्मत्वाविवक्षायां द्वितीयैव। तथा च भट्टिः। अघ्नो द्विजान्देवयजीन्निहन्म इति। निजौजसो-ज्जासयितुं जगद्द्रुहामिति माघस्तु शेषत्वे बोध्यः॥

व्यवहृपणोः समर्थयोः॥ शेषे कर्मणि षष्ठी स्यात्। द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता बोध्या। शतस्य व्यवहरणं पणनं वा। शतसम्बधी क्रयविक्रयरूपेण विनियोगो देवनं वेत्य-र्थः। समर्थयोः किम्। शलाका व्यवहारः। गणनेत्यर्थः। ब्राह्मणपणनम्। स्तुतिरित्यर्थः। आयादयआर्धधातुकेवेति आ-यस्य विकल्पः॥

दिवस्तदर्थस्य॥ इह शेषे इति न सम्बध्यते। उत्तरसूत्र-द्वयारम्भात्। पूर्वसूत्रएव दिवे पाठे तदर्थस्येति न कर्तव्य-मिति यद्यपि लाघवं तथापि योगविभाग उत्तरार्थः। शेषासम्ब-न्धार्थश्च। व्यवहृपणिसमानार्थस्य दिवः कर्मणि षष्ठी स्यात्। इह त्रिसूत्र्यां तिङन्तमप्युदाहरणम्। शतस्य दीव्यति। तदर्थस्य किम्। ब्राह्मणं दीव्यति॥

विभाषोपसर्गे॥ पूर्वयोगापवादः। शतस्य शतं वा प्रतिदीव्यति॥

द्वितीया ब्राह्मणे ॥ ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया वा स्यात् । षष्ठ्यपवादः । गामस्य तदहः सभायां दीव्येयुः । सोपसर्गस्य छन्दसि व्यवस्थितविभाषयापि सिद्धे निरुपसर्गार्थ आरम्भः ॥

प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ॥ इष्यतेर्दिवादिकस्य गत्यर्थस्य लोण्मध्यमपुरुषैकवचनं प्रेष्येति तत्साहचर्याद् ब्रुविरपि तथाभूतो गृह्यते । देवतासम्प्रदानं यस्यार्थस्य तत्र वर्तमानयो प्रेष्यब्रूहीत्येतयोः कर्मणोर्हविर्विशेषस्य वाचकाच्छब्दात् षष्ठी स्यात् । अग्नये छागस्य हविषो वपायामेदसः प्रेष्यानुब्रूहि वा । प्रेष्यब्रुवोः किम् । अग्नये छागं हविर्वपामेदो जुहुधि । हविष किम् । अग्नये गोमयानि प्रेष्य । देवतासम्प्रदाने किम् । माणवकाय पुरोडाशान्प्रेष्य । हविष प्रस्थितत्वेन विशेषणे प्रतिषेधो वक्तव्यः ॥ इन्द्राग्निभ्यां छागं हविर्वपाम्मेदः प्रस्थितं प्रेष्य । इह सूत्रे शेषग्रहणं न सम्बध्यते । तिङन्तेन समासस्याप्रसक्तत्वात् । इदञ्च भाषायामपि प्रवर्तते । उत्तरत्र छन्दोग्रहणात् ॥

चतुर्थ्यर्थे बहुलं छन्दसि ॥ षष्ठी स्यात् । पुरुषमृगश्चन्द्रमसे गोधाकालकादार्वाघाटस्ते वनस्पतीनाम् । वनस्पतिभ्य इत्यर्थः । बहुलग्रहणाच्चन्द्रमसश्चतुर्थी । षष्ठ्यर्थे चतुर्थीत्यपि वक्तव्यम् ॥ या खर्वेण पिबति तस्यै खर्वः । व्यत्ययवचनात्सिद्धम् ॥

यजेश्च करणे ॥ इह छन्दसि बहुलं षष्ठी स्यात् । घृतस्य घृतेन वा यजते ॥

कृत्वोर्थप्रयोगे कालेधिकरणे ॥ इह पदमूत्र्या विच्छिन्नमपि शेषग्रहणमनुवर्त्तते । उत्तरसूत्रे कर्मग्रहणात् । कर्त्तरिचेति हि नोक्तम् । शेषसम्बद्धं कर्मग्रहणं मानुवृत्तदिति प्राञ्चः । वस्तुतो व्याख्यानमेव शरणम् । सन्निहितस्याधिकरणस्य निवृत्तये वा कर्मग्रहण

सम्भवात्। पञ्चकृत्वोह्नो भोजनम्। द्विरह्नो भोजनम्। शेषे किम्। अन्यथा विधिरेवायं स्यात्। तथा च द्विरहन्यधीतइति सप्तमी न स्यात्। पष्ठ्या बाधात्॥

: कर्तृकर्मणोः कृति॥ शेषइति निवृत्तम्। कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात्। भवतः शायिका। अपां स्रष्टा। कर्तृकर्मणोः किम्। शस्त्रेण भेत्ता। स्यादेतत्। इह कर्तृकर्मभ्यां क्रिया आक्षिप्यते। तद्वाचीह धातुरेव। धातोश्च द्वये प्रत्ययाः। कृतस्तिङश्च। तत्र तिङः प्रयोगे नलोकेति प्रतिषेधेन भाव्यम्। ततश्च परिशेषात् कृद्योगएव षष्ठी भविष्यति तत् किं कृद्ग्रहणेन। मैवम्। तद्धितान्तस्य वारणीयत्वात्। यथा,कृतपूर्वीकटमिति। ननु कृतः कटः पूर्वमनेनेत्यस्मिन्विग्रहे क्तस्य कर्मणि विधानात्तेनैव कर्मणो ऽभिहितत्वात् द्वितीयया न भाव्यम्। एव तदपवादभूतया षष्ठ्यापि। इहाप्यनभिहिताधिकारात्। किञ्च कृतशब्दस्य कटसापेक्षतया समासो दुर्लभः। एव तद्धितोपीति चेत्। अत्रोक्तं हरिणा। विशेषकर्मसम्बन्धे निर्भुक्तेपि कृतादिभिः। विशेषनिरपेक्षोन्यः कृतशब्दः प्रवर्तते॥ अकर्मकत्वे सत्येवं क्तान्ते भावाभिधायिनि। ततः क्रियावता कर्त्रा योगो भवति कर्मणाम्॥ अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः। क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थितेति॥ अस्यार्थः। कृतादिभिः शब्दैः कटादिसमभिव्याहारात् विशिष्टकर्मसम्बन्धे निष्कृष्य भुक्तेपि अनुभूतेपि कृतः पूर्वंकटोनेनेत्यवस्थायामिति भावः। तस्यामवस्थायां वृत्तिविरहात्। कर्मसामान्यवचनोन्य एव कृतशब्दः प्रवर्तते वृत्तिं लभते। अविवक्षितकर्मतायां नेह पच्यतइत्यादावपि कर्मसामान्ये प्रत्ययाभ्युपगमादिति भावः। अविवक्षितकर्मणां भावे प्रत्यय इति प्र-

सान्तरमाह, अकर्मकत्वइति । ननु कर्मसामान्ये भावे वा क्तप्रत्यये कृते सापेक्षत्वाभावात्सुप्सुपेति समासे कृते पूर्वादिनिः सपूर्वाच्चेति कर्त्तरि इनिप्रत्ययोस्तु नाम । कटस्य तु प्रथमपक्षे क्तेनाभिधानं कुर्वीरन् । यथा शक्यञ्च क्षुदुपहन्तुमित्यत्र क्षुधः कृत्यप्रत्ययेन । नैवम् । तद्धितार्थेनैकार्थीभूतस्य कृतशब्दार्थस्य निष्कृष्य कर्टेन सम्बन्धाभावात् । तदेतदाह, ततः क्रियावतेति । नन्वेवं क्रिययापि योगाभावे कथं द्वितीयेत्याशङ्क्याह । अविग्रहेति । विशिष्य ग्रहो ग्रहणं तद्राहित्याप्राधान्येनागृह्यमाणापीत्यर्थः । अयं भावः । गुणभूतयापि क्रियया कारकाणां सम्बन्धो दृश्यते । यथा कटं कृतवानिति । कृतपूर्वीशब्दश्चायं पूर्वं कृतमनेनेत्यस्मिन्नर्थे व्युत्पादितः । पूर्वं कृतवानित्यनेन समानार्थः सम्पद्यते । तत्र करोतिक्रियापेक्षमस्ति कटस्य कर्मत्वम् । अनभिहितञ्च तत् । अतो ऽसति कृद्ग्रहणे षष्ठी स्यादेवेति स्थितम् । स्यादेतत् । ओदनः पच्यतेतमां, गुरुर्धरित्रीक्रियतेतरान्त्वयेत्यादावपि ओदने धारिण्यादे कर्मणः क्रिययैव योगाद् द्वितीयैव स्यात् । क्रियाविशेषणीभूतेन लकारार्थेन कर्मान्वयश्चेत् क्तार्थेनाप्यस्तु । क्रियायाः कारकेष्विव शक्तेरपि शक्तिप्रत्युत्थिताकाङ्क्षकत्वाविशेषात् । किञ्चास्तु नाम कथञ्चित् क्तार्थपरित्यागेन वृत्तिः । राजपुरुषादौ संख्याविशेषस्य मासजातादौ गुणप्रधानभावादेश्च बहुशस्त्यागदर्शनात् । तथापि कृद्ग्रहणं व्यर्थमेव । नलोकेति निष्ठायोगे निषेधसिद्धे । निष्ठान्तधातूपात्तक्रियायोगे न भवतीति हि तदर्थं । ग्रामं गतवानित्यादावपि कारकाणां क्रिययैवान्वयात् । न च पाचयति यज्ञदत्तो देवदत्तेनेत्यत्र णिच्प्रकृत्यर्थं प्रति कर्तुः प्रयोज्यात्षष्ठीं वारयितुं कृद्ग्रहणम् । णिच् तु न कृदिति वाच्यम् । लयोगे नेत्येव निषेध-

सिद्धेः। लमकृत्या लान्तपदेन वा या क्रियोपात्ता तद्योगे नेत्यर्थात्। सा च क्रिया गुणभूता प्रधानभूता वेत्यत्र नाग्रहः। गौणमुख्यन्यायस्तु नाश्रीयते। लक्ष्यानुरोधात् । स्वरितेनाधिकः कार इति व्याख्यानाच्च। अत एव तत्र तृतीया लभ्यते । भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामित्यत्रोभाभ्यामुभ्यां षष्ठ्यप्यत एव । तस्माल्लृर्थे कृद्ग्रहणमिति । अत्राहुः । कृत्येव यथा स्याच्चद्धिताधिक्ये मा भूदिति कृद्ग्रहणम् । व्याकरणं प्राज्ञः । प्रज्ञादिभ्यश्चेति स्वार्थेण् एवञ्च वदतां मते ओदनस्य पाचकतम इत्यत्रापि षष्ठी नेति लभ्यते। कृतपूर्वीतिवत्कर्तव्यपूर्वीत्यादेरभ्युपगमे तु तव्यदाद्यन्तेन समासादिनौ कृते कृद्ग्रहणव्यावर्त्यतापि सम्भवति भाष्यं त्विहोदासीनमेवेत्यभियुक्तप्रयोगा अन्वेषणीयाः । थन्तर्हि धयै रामोदमुत्तममिति भट्टिः। उच्यते । अनित्येयं षष्ठी । तदर्हमिति निर्देशात् । द्विकर्मकेभ्यस्तु कर्तरि कृति कृते प्रधाने नियताषष्ठी गुणे तूभयथा भवेदित्यकथितसूत्रएवोक्तम् ॥

उभयप्राप्तौ कर्मणि ॥ उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यो गवां दोहोऽगोपेन । अकाकारयोः प्रयोगे प्रतिषेधो नेति वक्तव्यम् ॥ भेदिका बिभित्सा वा रुद्रस्य जगतः । कथन्तर्हि क्तिना बाधा न भवतीति स्यागापापचोभावइति सूत्रे वृत्तिः । तथा सुटा सीयुटो बाधा न भवतीति सुट्तिथोरित्यत्र वृत्तिः । अत्र रक्षितः । अप्रत्ययादित्यकारप्रत्ययस्येह ग्रहणं प्राथम्यात् । बाधाशब्दे तु गुरोश्चहल इत्यकार इत्याह करणत्वविवक्षायां तृतीयेति वा बोध्यम् । शेषे विभाषा । स्त्रीप्रत्ययविषयमेवेदमित्येके । विचित्रा सूत्रस्य कृतिः पाणिनेः पाणिनिना वा । के चिदविशेषेण विभाषामिच्छन्ति । शब्दानामनुशासनमाचार्येणाचार्यस्य वा ॥

। क्तस्य च वर्तमाने ॥ वर्तमानार्थक्तस्य योगे षष्ठी स्यात् । नलोकेति निषेधस्यापवादः । राज्ञां मतो बुद्धः पूजितो वा । मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने क्तः । कथन्तर्हि नपुंसके भावे क्तस्य योगे षष्ठी । छात्रस्य हसितमिति शेषविज्ञानात्सिद्धम् । कर्तृत्वविवक्षायां तृतीयैव । छात्रेण हसितमिति ॥

अधिकरणवाचिनश्च ॥ क्तस्य योगे षष्ठी स्यात् । इदमेषां शयितम् । इह कर्तरि षष्ठी सकर्मकेभ्यस्त्वधिकरणे क्ते कृते कर्तृकर्मणोर्द्वयोरपि षष्ठी । अनभिहितत्वाविशेषात् । इदमेषां भुक्तमोदनस्य । उभयप्राप्तौ कर्मणीत्ययं तु नियमः कर्तृकर्मणोः कृतीत्यस्या एव प्राप्तेः । इह गत्यर्थेषु धातुष्वयं भवति । इदमेषां गतमित्यधिकरणे । इदमेते गता इति कर्तरि । इदमेभिर्गतमिति कर्मणि । इहैभिर्गतमिति नपुंसके भावे । कर्तृविवक्षाया इदमेषां गतमिति तत्रैव शेषविवक्षायाम् ॥

नलोकाव्ययनिष्ठाखलर्थतृनाम् ॥ जिघृक्षितरूपविनाशप्रसङ्गात् तृनामिति णत्वं न कृतम् । एषां प्रयोगे षष्ठी न स्यात् । कर्तृकर्मणोः कृतीति प्राप्ता प्रतिषिध्यते । लादेशाः, ओदनं पचन् पचमानः पेचानः पेचिवान् । कथन्तर्हि पश्चिर्वज्रं प्रपि सोम ददिर्गा इति । नहि किकिनौ लकारौ नापि तदादेशौ । नैष दोषः । किकिनौ लिड्वेत्यनेन लिट्कार्यातिदेशः क्रियते न तु लिट्संज्ञा । विशेषातिदेशे च सामान्यमप्यतिदिश्यतइति । उ, कटं चिकीर्षुः । कन्यामलंकरिष्णुः । उक, वाराणसीमागामुकः । कमेर्भाषायामनिषेधः ॥ लक्ष्म्याः कामुकः । अव्यय, कटं कृत्वा । तोसुन्कसुनोरप्रतिषेधः॥ पुरा सूर्यस्योदेतोराधेयः । पुरा क्रूरस्य विसृपोविरप्शिन् । निष्ठा, ओदनं भुक्तवान् । देवदत्तेन कृतम् । खलर्थ, त्वया सुकरम् । ईषत्पानः सोमो भव-

ता। तृन्निति प्रत्याहारः शतृशानचावित्यारभ्य तृनो नकारात्। तेन शानन्प्रभृतीनामपि ग्रहणम्। सोमं पवमानः। पूङ्यजोः शानन्। नदमाघ्नानः। ताच्छील्यादिषु चानश्। अधीयन् पारायणम्। इङ्धार्योरिति शता। तृन्, पाता सुतमिन्द्रो अस्तु सोमम्। द्विष शतुर्वा। मुरस्य मुरं वा द्विषन्। सर्वत्र कारकषष्ठ्याः प्रतिषेधः। शेषे षष्ठी तु स्यादेव। ब्राह्मणस्य कुर्वन्। सत्यानुरक्ता नरकस्य जिष्णवः। छात्रस्य हसितम्। जनिकर्तुरित्यादि। इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः। आपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयमिति च। यद्वा। इक्ष्वाकूणां सिद्धय इत्यन्वयो न तु इक्ष्वाकूणां दुरापइति। तथा वागधिपस्य विस्मयमित्यन्वयो न तु वागधिपस्य दुर्वचमिति दिक्। इह उश्च उकश्च ऊकाविति व्युत्पाद्य लश्च ऊकौ चेति विग्रहीतव्यम्। ऊकारेण च कृतो विशेषणात्तदन्तविधिः। व्यपदेशिवद्भावात्केवलेनापि निषेधः॥

अकेनोर्भविष्यदाधमर्ण्ययोः। भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थे नश्च योगे षष्ठी न स्यात्। एधानाहारको वृजति। वृजङ्गामी। द्वितीयासमासप्रसङ्गे व्युत्पादितमेतत्। आधमर्ण्ये, शतं दायी। भविष्यदिति स्वर्यते। तेन भविष्यदधिकारविहितस्य ग्रहणान्नेह। वर्षशतस्य पूरकः। पुत्रपौत्राणां दर्शकः। अयं हि ण्वुल्तृचावित्यविशेषेण विहितो न तु तुमुण्वुलाविविवद्भविष्यदधिकारस्थः। इह यथासंख्यं वारयितुं भाष्ये योगो विभक्तः। अकस्य भविष्यति, इन आधमर्ण्ये चेति॥

कृत्यानां कर्तरि वा॥ षष्ठी वा स्यात्। कर्तृकर्मणोःकृतीति नित्यं प्राप्ते विभाषेयम्। कर्तव्यमिदं कृष्णेन कृष्णस्य वा। कर्तरीति किम्। गेयो माणवकः साम्नाम्। भव्यगेयेति कर्तरि

यद्विधानादनभिहितं कर्म । इहापि भाष्ये योगविभागः कृतः । तद्यथा, कृत्यनाम् ॥ उभयप्राप्तौ, नेत्यनुवर्तते । नेतव्या व्रजं गावः कृष्णेन । इह प्रधाने कर्मणि गवाख्ये कृत्यः । अप्रधानकर्मणः कर्तुश्च । कृत्येनानभिधानात्षष्ठी प्राप्ता निषिध्यते । ततः कर्तरि वा ॥ षष्ठी स्यात् । अन्यत्सर्वं निवृत्तम् ॥

तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् । तुल्यार्थैर्योगे तृतीया वा स्याच्छेषे । पक्षे षष्ठी । तुल्यः सदृशः समो वा कृष्णेन कृष्णस्य वा । अतुलोपमाभ्यां किम् । तुला उपमा वा कृष्णस्य नास्ति । कथन्तर्हि तुलां यदा रोहति दन्तवाससेति कालिदासः। स्फुटोपमं भूतिसितेन शम्भुनेति माघश्च । अत्राहुः । तोलनं तुला । अस्मिन्नेव सूत्रे णिलुगन्तयोर्निपातनात्साधुरिति माधवः । उपमितिरुपमा । तत्र धात्वर्थं प्रति करणीभूतयोः दन्तवासःशम्भुशब्दयोस्तृतीया युक्तैव । यथा उपमीयतेऽनेनेत्यादौ । प्रकृतसूत्रं तु शेषे षष्ठ्यपवादभूततृतीयाविधायकं । नेह प्रवर्ततइत्यन्यदेतत् । यद्वा । सहयुक्तेऽप्रधानइति तृतीयास्तु । स्ववालभारस्य तदुत्तमाङ्गजैः समञ्चमर्येव तुलाभिलाषिण इत्यत्र यथा । उक्तं हि विनापि तद्योगं तृतीया । वृद्धोयूनेति निर्देशनादिति । तुल्यार्थैरित्यर्थग्रहणात् द्योतकानामिवादिशब्दानां योगे न गौरिव गवयः यथा गौस्तथा गवय इति । वेति वर्तमाने अन्यतरस्यां ग्रहणमुत्तरसूत्रे चकारेण स्वरूपानुकर्षणार्थम् । अन्यथा हि तृतीयैवानुकृष्येत । सन्निहितत्वात् ॥

चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥ सुखपर्यन्तानां द्वन्द्वः । ततोऽर्थशब्देन बहुव्रीहिः । तथा च द्वन्द्वान्ते श्रूयमाणात्मत्येकमर्थशब्दः सम्बध्यते । मद्रभद्रशब्दयोः पर्यायतया सूत्रेऽन्यतरो न पठनीयः । केचित्तु अर्थशब्दोपि पृथगेव निमि-

त्तम् । व्याख्यानाच्च सर्वत्रार्थग्रहणमित्याहुः । आशिषिगम्यमानायामेतैर्योगे शेषे चतुर्थी वा स्यात् । पक्षे षष्ठी । आयुष्यं चिरं जीवितं देवदत्ताय देवदत्तस्य वा भूयात् । एवं मद्रं भद्रं कुशलं निरामयं सुखं शं अर्थः प्रयोजनं हितं पथ्यं भूयादित्यादि । हितयोगे चतुर्थी वक्तव्येत्यस्य अनाशिषि चारितार्थत्वादाशिष्यनेन विकल्प एव । आशिषीति किम् । देवदत्तस्यायुष्यमस्ति ॥

इति श्रीशब्दकौस्तुभे द्वितीयस्याध्यायस्य
तृतीये पादे तृतीयमाह्निकम् ॥
समाप्तश्चायं पादः ॥

द्विगुरेकवचनम् ॥ वक्तीति वचनम् । बाहुलकात्कर्तरि ल्युट् । सामान्ये नपुंसकम् ॥ समाहारद्विगुरेकार्थप्रतिपादकः स्यात् । तद्धितार्थेति सूत्रे हि भावसाधन एव समाहार इति स्थितम् । तथा च न्यायसिद्धमेतत् । कर्मसाधनताभ्रमं वारयितुमारभ्यते सनपुंसकमित्यस्य प्रवृत्त्यर्थं च । दृश्यते च भ्रमनिवृत्तयेपि सूत्रकृतो यत्नः । यथा उपकादिभ्योऽन्यतरस्याम द्वन्द्वइति । तत्र हि अद्वन्द्वइत्यस्य द्वन्द्वग्रहणं नानुवर्ततइत्यर्थो भाष्ये स्थितः ॥

द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ प्राण्यङ्गानां द्वन्द्व एकार्थं स्यात् । एवं तूर्याङ्गानां सेनाङ्गानाञ्च । पाणिपादम् । मार्दङ्गिकपाणविकम् । रथिकाश्वारोहम् । इह प्राणिसेनयोरङ्गं नामावयवः । तूर्यस्य तु अङ्गं नामोपकारकं बोध्यम् । मार्दङ्गिकेत्यादौ मृदङ्गवादनं शिल्पमित्यर्थे शिल्पमिति ठक् । पाणिपादमित्यादौ जातिरप्राणिनामित्येव सिद्धे व्यतिकरनिरासार्थं वचनम् । हस्त्यश्वं हस्त्यश्वायेत्यत्र तु सेनाङ्गत्वेपि पशुत्वान्मृत्सनो विकल्प इति विभाषावृक्षेत्यत्र भाष्यकैयटयोः स्थितम् ।

अथ कथं रथवाजिपत्तिकरिणीसमाकुलमिति । नपुंसकह्रस्वत्वेन हि भाष्यम् । उच्यते । रथादिसहिताः करिण्य इति मध्यमपदलोपी समासो बोध्यः । यद्वा । रथश्च वाजी चेत्यादि विग्रहः । जातावेकवचनम् । फलसेनादीनां बहुप्रकृतिरिति वक्ष्यमाणत्वान्नैकवद्भावः । एतेन पातितैरथनागाश्वैरिति । इत्थं रथाश्वेभनिपादिनां प्रगे इति माघश्च व्याख्यातः । इहापि मध्यमपदलोपादेकवचनान्तेन विग्रहाद्वा । यद्वा कृतद्वन्द्वानामेकशेषः । तथा च तिङस्त्रीणित्रीणीति सूत्रे लुटःप्रथमस्येति सूत्रे च भाष्यम् । उभयं ह्रीप्यते वहूनि शक्तिकिटकानीति । माघटिप्पणे रथतुरङ्गाश्वेभे निषीदन्तीति णिन्यन्तेनोपपदसमास इति समाधानान्तरं सारम् । यद्यपि चार्थेद्वन्द्व इत्येवेतरेतरयोगे समाहारे च द्वन्द्वो विहितः । समाहारस्यैकत्वाच्च सिद्धमेकवचनं तथापि नियमार्थमिदं प्रकरणम्, प्राण्यङ्गादीनामेकवचनद्वन्द्व एव । समाहारद्वन्द्व एवेत्यर्थः । न च समाहारे एषामेवेति विपरीतं ग्राह्यम् । तिष्यपुनर्वस्वोरिति सूत्रे बहुवचनग्रहणात् । तद्धि समाहारैकवचनव्यावृत्तये क्रियते तिष्यपुनर्वस्विदामिति ॥

अनुवादे चरणानाम् ॥ चरणानां द्वन्द्व एकवत्स्यात् । चरणशब्दः कठकालापादिषु शाखाभेदेषु मुख्यः । तदध्यायिषु पुरुषेषु गौणः । उभयेषां चैषां गोत्रञ्च चरणैः सहेति जातिसंज्ञा । तत्र शाखाभेदवाचिनां जातिरप्राणिनामित्येकवद्भावस्य सिद्धत्वाद्गौणेपि पुरुषवृत्तिरेवेह गृह्यते । उदगात्कठकालापम् । प्रत्यष्ठात्कठकौथुमम् । इह यदा कठकालापेषूदितेषु प्रतिष्ठितेषु चावाभ्यां तत्र गन्तव्यमिति संवादं कृत्वा तञ्च विस्मृत्य कश्चिदास्ते तत्र प्रतीदमुच्यते । ननूदगात्कठकालापन्त-

त्किमास्यतइति । अतो भवत्यनुवादः । कठेन प्रोक्तमधीयते कठाः । वैशम्पायनान्तेवासिभ्यश्चेति णिनिः । कठचरकाल्लुक् । तदधीतेतद्वेदेत्यण् । प्रोक्काल्लुक् । कलापिशब्दात्कलापिनोण् । नान्तस्य टिलोपे सब्रह्मचारीत्यादिना टिलोपः । अध्येत्रणो लुक् । एतेन कौथुमो व्याख्यातः । यदा तु उदयप्रतिष्ठे नानूद्येते, किन्तु अज्ञाते ज्ञाप्येते तदा प्रत्युदाहरणम् । उदगुः । कठकालापाः ॥ स्थेणोरद्यतन्यामेवेति वाच्यम् ॥ स्थेणो किम् । अनन्दिषुः कठकालापाः । अद्यतन्यां किम् । उद्यन्ति कठकालापाः ॥

अध्वर्युक्रतुरनपुंसकम् ॥ अध्वर्युशब्दो यजुर्वेदलक्षकः । तत्रोत्पन्नो विनियुक्तो वा यः क्रतुः तद्वाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवत्स्यात् । अर्काश्वमेधम् । साह्नातिरात्रम् । अध्वर्युक्रतुः किम् । इषुवज्रौ । उद्भिद्बलभिदौ । सामवेदएषां विधानम् । अनपुंसकमिति किम् । राजसूयवाजपेये । इमौ हि शब्दावर्धर्चादिषु पठितौ । यदा नपुंसकलिङ्गौ तदा प्रत्युदाहरणम् ॥

अध्ययनतो ऽविप्रकृष्टाख्यानाम् ॥ अध्ययनेन निमित्तेन येषामाविप्रकृष्टा प्रत्यासन्ना आख्या तेषां द्वन्द्व एकवत्स्यात् । पदकक्रमकम् । पदान्यधीते पदकः । क्रमादिभ्योवुन् । एवं क्रमकः । क्रमकवार्त्तिकम् । वृत्तिः संहिता, तामधीते वार्त्तिकः । उक्थादिपाठाट्ठक् । पदान्यधीत्य क्रमोध्येतव्य इति स्पष्टा प्रत्यासत्तिः । क्रमकवार्त्तिकमित्यत्र तु संहितामनधीत्य क्रमोध्येतुं न शक्यतइत्येव प्रत्यासत्तिर्बोध्या । अध्ययनतइति किम् । पितापुत्रौ । अविप्रकृष्टाख्यानां किम् । याज्ञिकवैयाकरणौ ॥

जातिरप्राणिनाम् ॥ प्राणिवर्जजातिवाच्यवयवको द्वन्द्व एकवत्स्यात् । आराशस्त्रि । आराप्रतोदः । जाति किम् । नन्दकपाञ्चजन्यौ । सञ्ज्ञाशब्दावेतौ । खड्गोस्यनन्दक शङ्खः पाञ्चजन्यः प्रकीर्तितः ॥ अप्राणिनां किम् । ब्राह्मणक्षत्रियविट्शूद्रा । नञिवयुक्तन्यायेन द्रव्यजातीनामेकवद्भावो न गुणक्रियाजातीनाम् । रूपरसौ । गमनाकुञ्चने । जातिप्राधान्य एवायमेकवद्भावः। यदा तु द्रव्यविशेषविवक्षा तदा बदरामलकानि। जातिविवक्षायान्तु बदरामलकम् । इहैकवद्भावो वैकल्पिक इति भाष्यस्वरसः। तथा च विभाषावृक्षमृगेति सूत्रे बहुप्रकृतिरित्यादि वार्तिकमुपक्रम्य बदरामलकं बदरामलकानीत्युदाहृतं भाष्ये । बदरामलकानीति भाष्ये इत्यर्थं व्याचक्षाणानां मते तु नित्यमेवेति तत्रैव कैयटः । अत एव तस्यभावस्त्वतलाविति सूत्रभाष्यस्यओषधिवनस्पतीनामिति प्रयोगः सङ्गच्छते । भाष्यप्रयोगश्चैकवद्भाव इति वदन् कैयटस्तु जातिविवक्षायामपि एकवद्भावाभावं मेने । एवं लटःशतृशानचाविति सूत्रस्थभाष्यकैटादिग्रन्थो बोध्यः। कथं तर्हि रञ्जितानुविविधास्तरुशैला इति भारविः। नह्यत्र व्यक्तिविशेषविवक्षा । सत्यं, तरुसहिताः शैला इति बोध्यम् ॥

विशिष्टलिङ्गो नदीदेशोग्रामा ॥ अग्रामा इत्येकवचनस्य स्थाने सौत्रं बहुवचनम् । विशिष्टलिङ्गानां भिन्नलिङ्गानां नदीवाचिनान्देशवाचिनाञ्च ग्रामवर्जितानां द्वन्द्व एकवत्स्यात् । सूत्रे चत्वारोपि शब्दा अवयवधर्मेणावयविनि द्वन्द्वे बोध्याः । नदीदेश इत्यसमासनिर्देशः । उध्यश्च इरावती च उध्येरावति । कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् । भिन्नलिङ्गाःकिम् । गङ्गायमुने । मद्रकेकयाः । नदीदेशइति किम् । कुक्कुटमयूर्यौ । अग्रामाः किम् । जाम्बवं नगरं शालुकिनी ग्रामः जाम्बव शालूकिन्यौ । अत्र

पूर्वपदार्थस्य अग्रामत्वेपि उत्तरपदार्थस्य ग्रामत्वात्तदाश्रयः प्रतिषेधः । तदुक्तं, उभयतश्च ग्रामाणा प्रतिषेधो वक्तव्य इति। नदीग्रहणमदेशत्वात् । जनपदो हि देशः । अत एव पर्वतानां न । कैलासश्च गन्धमादनं च कैलासगन्धमादने ॥

क्षुद्रजन्तवः ॥ एषां द्वन्द्व एकवत्स्यात् । यूकालिक्षम् । आनकुलात् क्षुद्रजन्तवः ॥

येषाञ्च विरोधः शाश्वतिकः ॥ येषां नित्यं वैरं तेषां द्वन्द्व एकवत्स्यात् । गोव्याघ्रम् । गजसिंहमित्यादि । विरोधो वैरं न तु सहानवस्थानादि । छायातपावित्यादावतिव्याप्तेः । शश्वदिति त्रैकाल्यमाह । तत्रभवइत्यर्थे कालाट्ठञ् । तान्तात्परत्वेपि निपातनादिकादेशः । अव्ययानां भमात्रइति प्राप्तस्य टिलोपस्याभावश्च सामान्यापेक्षमिकस्य केनाबाधे ज्ञापकमिदम् । तेन कान्दाविकादि सिद्धमिति कश्चित् । वस्तुतस्तु कन्दु स्वेदनी तत्र संस्कृत भक्षा इत्यण् । कान्दवम् तदस्यपण्यमिति ठक् । शाश्वतिक किम् । चैत्रमैत्रौ कलहायेते । एतेन देवासुरैरमृतमम्बुनिधिर्ममन्थेति भारविप्रयोगो व्याख्यातः । तेषां हि अमृतादिप्रयुक्त कादाचित्को विरोधो न तु नित्यः । मन्थनप्रवृत्तिकाले तद्विरहात् । इह पशुशकुनिद्वन्द्वावकाशो महाजोरभ्र महाजोरभ्रा । हंसचक्रवाकं हंसचक्रवाकाः। येषांचेत्यस्यावकाशः श्रमणब्राह्मणम्। मार्जारमूषकम् । अश्वमहिष काकोलूकमित्यत्रोभयप्रसङ्गे परत्वात्पशुशकुनि विभाषा प्राप्ता चकारेण पुनर्विधानाद्येषांचेति नित्यमेव भवति ॥

शूद्राणामनिरवसितानाम् ॥ अबहिष्कृतानां शूद्राणां द्वन्द्व एकवत्स्यात् । तक्षायस्कारम् । रजकतन्तुवायम् । शूद्रशब्दोत्र त्रैवर्णिकेतरपर न तु शूद्रत्वजातिपरः । अनिरवसितानामिति प्र-

तिषेधात् । निरवपूर्वात्स्येतः कर्मणि क्तः । निरवसानं बहिष्करणं तच्चेह पात्राद्विवक्षितम् । यैर्भुक्ते पात्रं न शुध्यति भस्मना शुध्यते कांस्यमित्यादिस्मृतिकारोक्तसंस्कारेणापि । ते पात्र बहिष्कृताः । अनिरवसितानां किम् । चण्डालमृतपाः ॥

गवाश्वप्रभृतीनि च ॥ एतानि द्वन्द्वरूपाणि कृतैकवद्भावानि साधूनि स्यु । गवाश्वम् । गवाविकम् । गवैडकम् । अजाविकम् । अजैडकम् । एषां पशुद्वन्द्वविभाषाया प्राप्तायां वचनम् । कुब्जवामनम् । कुब्जकैरातम् । पुत्रपौत्रम् । श्वचाण्डालम् । स्त्रीकुमारम् । दासीमाणवकम् । उष्ट्रखरम् । शाटीप्रच्छदम् । इहाप्राणिजातिवाचिनामबहुप्रकृत्यर्थं पाठः । उष्ट्रशशम् । मूत्रशकृत् । मूत्रपुरीषम् । यकृन्मेदः । मांसशोणितम् । दर्भपूतीकम् । अर्जुनपुरुषम् । तृणोलपम् । दासीदासम् । अत्र पुमान्स्त्रियेत्येकशेषो न । कुटीकुटम् । मांसशोणितम् । भागवतीभागवतम् । गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तमिति वार्तिकम् । गणपाठे रूपमेषां विवक्षितं न तु पूर्वोत्तरपदनिर्देशमात्रे तात्पर्यमित्यर्थ । तेन अवङादेशाभावपक्षे न भवति । अपशवो वा अन्ये गोअश्वेभ्य पशवो गोअश्वाः ॥

विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ॥ वृक्षादीना सप्ताना द्वन्द्वः । अश्ववडवेत्यादि द्वन्द्वत्रयं च विभाषा एकवत्स्यात् । वृक्षादौ विशेषाणां ग्रहणम् । तथाहि । वृक्षादिशब्दैः प्रत्येक द्वन्द्वो विशेष्यते । न चैको वृक्षशब्दो द्वन्द्वः । न च द्वयोः सहप्रयोगः । एकशेषात् । एवंपर्याययोरपि । विरूपाणामपि समानार्थानामेकशेषारम्भात् । नापि वृक्षश्च धवश्चेत्यादिसामान्यविशेषयोर्वा-

चनिकद्वन्द्वनिषेधस्योक्तत्वात् । न च प्राच्यभरतेष्विति निर्देशा दनित्यः स इति वाच्यम् । तथापि वृकधवमित्यादिप्रयोगादर्शनेन निषेधस्यैव प्रकृते प्रवृत्तेः । तस्माद्विशेषाणामेवेह ग्रहणं स्थितम् । प्लक्षन्यग्रोधम् प्लक्षन्यग्रोधाः । रुरुपृषतम् । रुरुपृषता । कुशकाशम् । कुशकाशाः । व्रीहियवम् । व्रीहियवाः । दधि घृतम् । दधिघृते । गोमहिषम् । गोमहिषाः । तित्तिरिकपिञ्जलम् । तित्तिरिकपिञ्जलाः । अश्ववडवम् । अश्ववडवौ । पूर्वापरम् । पूर्वापरे । अधरोत्तरम् । अधरोत्तरे । अत्र वार्त्तिकम् । बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानामिति ॥ एषां बहुप्रकृतिरेव द्वन्द्व एकवदित्यर्थः । नेह । बदरामलकौ । रथिकाश्वारोहौ । प्लक्षन्यग्रोधावित्यादि । इद वार्त्तिकं विध्यन्तरशेषभूत न तु स्वातन्त्र्येण विधायकम् । विधित्वे हि स नित्यश्चेत्तर्हि वनस्पत्यादीनामेतत्सूत्रोपात्तानामपि बहुप्रकृतित्वे विकल्प बाधित्वा नित्यं स्यात् । अबहुप्रकृतिकत्वे च सौत्रो विकल्पः स्यात् । वैकल्पिकत्वे तु फलादीनामपि जातिरप्राणिनामित्यादिलक्षणान्तरप्राप्तनित्यमेकवद्भाव बाधित्वा बहुप्रकृतिकत्वे विकल्प स्यात् । न च बदरामलकं बदरामलकानीति भाष्यदर्शनादिष्टापत्तिरिति वाच्यम् । तत्र बदरामलकानीति क्वाचित्क पाठ । सोपि बदरामलकानीत्येवं प्राप्ते जातिलक्षणो नित्य एकवद्भाव इति व्याख्येय इति कैयटेनोक्तत्वात् । यत्तु नित्यएकवद्भावे प्राप्ते विकल्पोनेन क्रियतइति मतान्तर कैयटेनोक्तम् । तदापाततः । बदरामलके तिष्ठत इति तदुत्तरभाष्यविरोधात् । उक्तरीत्या प्रकृतवार्त्तिकस्य बहुप्रकृतिके विकल्पविधिपरत्वे हि अन्यत्र नित्य एकवद्भावो दुर्वारः स्यादिति दिक् । तत्रापि यदि विभाषा

वृक्षेत्यत्र पठितत्वादस्यैव शेषः स्यात्तदा वनस्पत्यादिष्वबहुप्रकृतित्वे विकल्पाभावेपि जातिरप्राणिनामिति नित्यो विधिः स्यात् । तस्मात्सर्वप्रकरणशेषोयम् । एषां फलादीनां द्वन्द्वोनेन लक्षणान्तरेण वा एकवद्भवन् बहुप्रकृतिरेवेति । तेन प्लक्षन्यग्रोधावित्यत्र अयं विकल्पो जातिरप्राणिनामिति नित्यश्च न भवति । एवं व्रीहियवौ कुशकाशावित्यादि । प्रकृतसूत्रोपात्तानान्तु इत्थं विषयविभाग । येत्राप्राणिनस्तेषां जातिरप्राणिनामिति नित्यं प्राप्ते विकल्पो विधीयते । स च तेषां तैरेव । तथा च वृक्षादीनामन्यैः सह द्वन्द्वे यथा प्राप्तं नित्यं विकल्पो वा तद्यथा व्रीहिकुशप्लक्षमित्यत्र जातिरप्राणिनामिति नित्यः । प्लक्षशब्दस्पर्शे प्लक्षशब्दस्पर्शा इत्यत्र तु चार्थेद्वन्द्व इत्युभयत्र । न चेह जातिरप्राणिनामित्यस्य प्रवृत्ति । अद्रव्यजातित्वात् । अप्राणिनामिति हि पर्युदास इत्युक्तम् । पशुग्रहणन्तु हस्त्यश्वादिषु सेनाङ्गलक्षणस्य नित्यविधेर्बाधनार्थम् । मृगशकुनिग्रहणं त्ववशिष्यते । तेनेत्थं वचनं व्यज्यते । यो विभाषाप्राप्त एकवचनो द्वन्द्वः स मृगविशेषाणां तैरेव नान्यैरिति । तेनैषामन्यैः सह इतरेतरयोग एवेति फलितम् । एवं पूर्वापरमधरोत्तरमित्यत्रापि पशुद्वन्द्वत्वादेव सिद्धे अश्ववडवग्रहणं प्रतिपदविधानार्थम् । तेनैकवद्भावपक्षे पूर्ववदश्ववडवावित्येतद्बाधित्वा सनपुंसकमिति प्रवर्तते । तच्छब्दो हि एकवद्भावभाजं परामृशति । तेन एकवद्भावसन्नपुंसकत्वमपि प्रतिपदविहितं सम्पद्यते । पूर्ववदश्ववडवावितित्वेकवद्भावविरहपक्षे प्रवर्तते । अश्ववडवौ । अश्ववडवम् ॥

विप्रतिषिद्धं चानधिकरणवाचि ॥ विरुद्धार्थानामद्रव्यवा-

चिनां द्वन्द्व एकवद्वा स्यात्। अत्रेदं नियमशरीरम्। य एकवचनो द्वन्द्वो विभाषा प्राप्त स यदि विप्रतिषिद्धवाचिनां भवति तदा अद्रव्यवाचिनामेवेति। तेन द्रव्यवाचिनामितरेतरयोग एव। शीतोष्णे उदके स्तः। विप्रतिषिद्धं किम्। नन्दकपाञ्चजन्यम्। इह द्रव्यवाचित्वेपि पाक्षिकः समाहारद्वन्द्वो भवत्येव। यत्तु वृत्तौ कामक्रोधाविति प्रत्युदाहृतं तत्रापि शीतोष्णं सुखदुःखमित्यादाविव पाक्षिकस्यैकवद्भावस्य दुर्वारत्वात्। नियमार्थं हि प्रकृतसूत्रमिति स्थितम्। न च अद्रव्यवाचिनाञ्चेद्भवति तर्हि विप्रतिषिद्धानामेवेति तदाशय कल्प्यः। शीतोष्णे उदके इत्यत्र पाक्षिकैकवद्भावापत्त्या अनधिकरणवाचीति किं शीतोष्णे उदके इत्येवरूपस्वोक्तिविरोधापत्तेः। सौत्रानुपूर्वीस्वरसभङ्गप्रसङ्गाच्चेति दिक्॥

न दधिपयआदीनि॥ एतानि नैकवत्स्युः। दधिपयसी। मधुसर्पिषी। सर्पिर्मधुनी। इह त्रिषु व्यञ्जनत्वाद्विकल्पः प्राप्त। ब्रम्हप्रजापती। शिववैश्रवणौ। स्कन्दविशाखौ। न चेह विरूपाणामपीति एकशेषः शङ्क्य। स्कन्दश्चैव विशाखश्च द्वौ सुतौ संबभूवतुरिति महाभारतस्वरसेनापर्यायत्वनिर्णयात्। परिव्राट्कौशिकौ। प्रवर्ग्योपसदौ। शुक्लकृष्णे। इध्मावर्हिषी। निपातनाद्दीर्घः। दीक्षातपसी। श्रद्धातपसी। मेधातपसी। अध्ययनतपसी। उलूखलमुसले। आद्यवसाने। श्रद्धामेधे। ऋक्सामे। वाङ्मनसे। इह ब्रम्हप्रजापत्यादिषु समाहारद्वन्द्वनिषेधमुखेनेतरेतरयोगद्वन्द्वो व्यवस्थाप्यते। तत्साहचर्याद्दधिपयसी इत्यादावपि तथैव। तेन तत्र व्यञ्जनत्वप्रयुक्तविकल्पे निषिद्धेपि जातिलक्षणो नित्य एकवद्भावोस्त्विति न शङ्कनीयम्। किञ्चनेह लक्षणविशेषे आग्रहः। एकवद्भाव

मात्रस्य निषेधात् । यथा नपद्स्वस्रादिभ्य इत्यत्र स्त्रियां यदुक्तं तन्नेति सामान्यतो निषिद्ध्यते । तथा च वक्ष्यति दोषस्त्विन्वे तस्मान्नोभाविति । ननु भवेदेवं यदि जातिरप्राणिनामिति विधिः स्यात् । निषेधस्तु सः । तथा च तेनेतरेतरयोगे प्रकृतसूत्रेण समाहारे च निषेधाद्दधिपयआदीनां द्वन्द्व एव न लभ्येत । अत्रोच्यते । नियमवाक्यानां विधिरूपेण निषेधरूपेण वा प्रवृत्तिरिति पक्षद्वयं तावत्प्रत्ययलक्षणसूत्रे उपपादितम् । धुञ्ञयोलुङीत्यादौ भाष्यारूढं च । तत्र जातिरप्राणिनामित्यादौ विधिमुखतापक्षस्यैव लक्ष्यानुरोधेनाश्रयणात्तस्य च नदर्धीत्यादिना निषेधात्सर्वं सुस्थम् ॥

अधिकरणैतावत्त्वे च । द्रव्यसङ्ख्यावगमे नैकवत्स्यात् । दश दन्तोष्ठाः । ननु वर्त्तिपदार्थस्य सङ्ख्याविशेषे बोधनीये इतरेतरयोगद्वन्द्व एवेति न्यायसिद्धम् । अन्यथा हि दश पञ्चपूल्य इति द्विगाविव प्रधानभूते समाहारएव दशत्वसङ्ख्या अन्वियात् न तु समुदायिषु तत्किं निषेधेन । सत्यम् । नानेन समाहारद्वन्द्वो निषिध्यते किन्तु प्राण्यङ्गादीनां समाहार एवेति योसौ नियमः स एव निषिध्यते । असति हि निषेधे पञ्चस्विहास्याङ्गिकरेष्वभिरुयाभिक्षाधुनामाधुकरीसदृक्षेत्यादीनामसाधुत्वं स्यात् । समाहार एवेति नियमेनेतरेतरयोगे द्वन्द्वस्य दुर्लभत्वात् । तथा च सङ्ख्यावगतावेकवदेवेति नियमो न स्यादिति सूत्रार्थः फलितः । तस्मादितरेतरयोगद्वन्द्वस्य प्रतिप्रसवार्थमिदम् । एतेन दश दन्तोष्ठा इत्यादौ समाहारद्वन्द्वस्येवेतरेतरयोगद्वन्द्वस्यापि दौर्लभ्याद्वाक्यमेव प्रयोज्यम् । अधिकरणैतावत्त्वेचेत्यनेन प्राण्यङ्गानां समाहार एवेत्यनेन चोभयोर्निषेधादिति प्रत्युक्तम् । दश ब्राह्मणक्षत्रिया इत्यादौ प्रागुक्तन्यायबलेनैव समाहार-

वावन्तः ॥ पञ्चखट्वी । पञ्चखट्वम् । स्त्रीत्वपक्षे उपसर्जनह्रस्वत्वम् । अनो नलोपश्च वा च द्विगुः स्त्रियाम् ॥ पञ्चतक्षम् । पञ्चतक्षी । उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणप्रतिषेधात् पदत्वाभावान्नलोपवचनम् । पात्राद्यन्तस्य प्रतिषेध । पञ्चपात्रम् ॥ त्रिभुवनम् । चतुर्युगम् । द्विसमासम् ॥ पात्रादिराकृतिगणः ॥

अव्ययीभावश्च ॥ अयं नपुंसकं स्यात् । अधिस्त्रि । उन्मत्तगङ्गम् । पूर्वपदार्थप्रधानस्य अलिङ्गत्वे अन्यपदार्थप्रधानस्य तु विशेष्यलिङ्गत्वे प्राप्ते इदमुच्यते । अनुक्तसमुच्चयार्थश्चकारः । तत्फलन्तु, पुण्यसुदिनाभ्यामन्ह । पुण्याहम् । सुदिनाहम् । कर्मधारये राजाहस्सखिभ्यष्टच् । रात्रान्हाहाः पुंसीत्यस्यापवादः । सुदिनशब्दः प्रशस्तवाची । तथा च प्रयुज्यते । सुदिनासु सभासु कार्यमेतत्प्रविविच्य्वीत विशेषतः स्वयञ्चेति । तेनेह दिनाहःशब्दयो सहप्रयोगविरोधो न शङ्कनीय ॥ पथः सङ्ख्याव्ययादेः ॥ त्रयाणां पन्थाः त्रिपथम् । विरूपः पन्थाः विपथम् । प्रादिसमासः । कथन्तर्हि अतिपन्था सुपन्थाश्चेत्यमर । उच्यते । पथ इति कृतसमासान्तात्प्रथमा । सङ्ख्याव्ययरूपादेः पर कृतसमासान्तः पथशब्द क्लीबमित्यर्थः । पथः क्लीबतेति पाठेपि सङ्ख्यादिपथशब्दस्याव्यभिचरितसमासान्ततया तत्साहचर्यादव्ययादेरपि तथाभूतस्यैव ग्रहण बोध्यम् । तथा च क्लीबलिङ्गकारिका । पथ सङ्ख्याव्ययात्पर इति । न चेह समासान्तोस्ति । नपूजनादिति निषेधात् । कथन्तर्हि सत्पथश्चार्चितेध्वनीति । स्वतिभ्यामेवेति परिगणनात् । अथ कथं व्यध्वो दुरध्वो विपथ कदध्वा कापथः समा इत्यमरः । अत्र क्षीरस्वामिदुर्घटादयः । विपथं कापथमित्येव पाठः कर्त-

व्यो लिङ्गकारिकाद्यनुरोधादित्याहुः। एतन्तु उपथो त्रिपथकापथाविति रभसकोशेपि पुंस्त्व ग्रामादिकामिति लभ्यते। वस्तुतस्तु पथे गतावित्यस्मात्पचाद्याचि पथते व्याप्नोतीति पथः। अकारान्तोयम्। तथा च त्रिकाण्डशेषः, वाटः पथश्चमार्गः स्यादिति। तेन समासे पुंस्त्वन्न। न चैव विपथ इति सिद्धावपि कापथो न स्यात्कादेशस्य दुर्लभत्वादिति वाच्यम्। ईषदर्थेचेति तत्सम्भवात्। कुत्सायामर्थतः पर्यवसानात्। यत्त्वकारान्तस्याभ्युपगमे पथोविभाषेति सूत्रं व्यर्थं स्यादिति माधवेनोक्तम्। तत्राय समाधिः। अपथंनपुंसकमिति सूत्रे कृतसमासान्तनिर्देशसामर्थ्यान्नञस्तत्पुरुषादित्यस्य नित्यं बाध प्राप्तः। न च सोप्यकारान्तस्य निर्देशः पथःसङ्ख्याव्ययादेरित्यत्रापि तथात्वापत्तौ सत्यामपथो विपथ कापथ इत्याद्यसिद्ध्यापत्तेः। किञ्च रात्रान्हाहा इति सूत्रात्परमपथंनपुंसकामिति सूत्रे वार्त्तिकं पठ्यते। तथा च प्रक्रमानुरोधात्कृतसमासान्तनिर्देश एव न्याय्यः सम्प्रदायसिद्धश्च। अत एवापथनपुंसकमिति सूत्रस्य वार्त्तिकेन गतार्थतामाशङ्क्य सूत्रस्य प्राच्यत्वाददोष इति कैयटः। एवं स्थिते अपन्था इत्यतत्सिद्धये पथोविभाषेति सूत्रम्। अमरस्य च न पूर्वापरविरोध इत्यवधेयम्। प्रकृतमनुसराम। इदं क्लीवत्त्वविधानं परवल्लिङ्गताया अपवाद। तेन त्रिपथा नगरीति बहुव्रीहौ न। पन्थानमतिक्रान्ता ऽतिपथेत्यत्रापि न। इह हि द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु नेति परवल्लिङ्गता प्रतिषिद्धा। यत्त्वेवमुत्पथमिति प्रतीकमुपादाय कुगतीति तत्पुरुष इति कैयटो विरुध्यते। मैवम्। न हि तत्र पथ उद्गत इत्यादिविग्रहः। किन्तु उत्कृष्ट· पन्था इति। तथा च परवल्लिङ्गमेव प्राप्तम्। तस्मादुत्तरपदार्थप्राधान्यएवेदं लिङ्गविधानमिति स्थितम्। स्पष्ट-

न्चेदं माधवग्रन्थे । यत्तु वृत्तिग्रन्थे सुपथमित्युदाहृतम् । तत्र सुशब्दस्य वैपुल्यमर्थो न तु पूजेति समासान्तः कृत इति माधवः । क्रियाविशेषणानाञ्च क्रियाया असत्वरूपत्वात्तद्विशेषणानां तद्वदलिङ्गत्वे प्राप्ते वचनमिदं वार्त्तिकानारूढमपि वृत्तिकारेण कृतमित्याहुः । मृदु पचति । प्रथमं पचति । सामान्ये नपुंसकमिति वा सिद्धम् । अत एव नियतलिङ्गेषु नेदं प्रवर्त्तते । आर्द्रं पचति । आदिभूता या विक्लित्तिस्तां करोतीत्यर्थः । धातूपात्तभावनाम्प्रति कर्मत्वात्तन्सामानाधिकरण्याद्वा द्वितीया । अत एव सकलत्वादित्यादौ कारकपूर्वत्वाद्यणित्याकरः । न च सकलकारकाणां क्रियाविशेषणत्वात् क्लीबतापत्तिः शङ्क्या । कारकाणां विभक्त्यर्थत्वरूपत्वाच्च । शक्त्याधारस्तु यद्यपि द्रव्य नामार्थश्च । तथापि नासौ क्रियां प्रति विशेषणं किन्तु क्रियाविशेषणीभूतकारकाविशेषणमिति वोध्यम् । अत एव नामार्थस्य भेदेन धात्वर्थान्वयोनेति सिद्धान्तः । स्तोकं पच्यतइत्यादावपि धात्वर्थव्याप्यस्यैव तण्डुलादेर्नाभिधानं न तु धातुकोडीकृतस्यापि भावेचाकर्मकेभ्य इत्यत्र विशेषणसामर्थ्याद्ग्राह्यकर्मग्रहणे लः कर्मणीत्यत्रापि तथैव निर्णयात् । अतो धातुना क्रोडीकृतस्य विशेषणं द्वितीयान्तमेव । न तु अभिहितत्वमयुक्तप्रथमान्तम् । न वा स्तोकमोदनस्य पक्त्वेत्यत्र स्तोकशब्दात्कृद्योगलक्षणा षष्ठी । यत्र तु भावनाम्प्रति करणतया धात्वर्थविशेषस्यान्वयस्तत्र विशेषणानां तृतीयान्ततैव ज्योतिष्टोमेन यजतेति यथा । स्पष्टं चेदं करणेयज इति सूत्रे वृत्तिपदमञ्जर्योः । न चैवं ज्योतिष्टोमेन समीचीनं यजेतेति न स्यादिति वाच्यम् । भावनाविशेषणत्वे तदुपपत्तेः । तत्र च प्रथमान्ततैव । सन्दर्शनप्रार्थनादिभिर्व्याप्यमानत्वात्क्रियाया अ-

पि कृत्रिमकर्मत्वे तु तद्विशेषणत्वेपि द्वितीयैव। तदिह क्रियाविशेषणानां क्लीबतेत्युत्सर्गः। नियतलिङ्गे तदभावात्। द्वितीयेत्यप्युत्सर्गः। प्रथमातृतीययोरप्युक्तत्वात्। एकवचनमप्युत्सर्गः। इनशायिकाः शय्यन्तइत्यादौ बहुवचनस्यापि सार्वधातुकयागिति सूत्रे वक्ष्यमाणत्वादिति दिक्। प्रातः कमनीयमित्याद्यव्ययविशेषणे तु क्लीबत्वं यद्यपि तुल्यं तथापि प्रथमैकवचनमेव न तु द्वितीयैकवचनम्। कर्मताभावात्। प्रातरादिरिति तु नियतलिङ्गमेवेति दिक्। यद्यप्येतानि वार्त्तिकानि भाष्ये अपथंनपुंसकमित्यत्र पठितानि। तथापि अव्ययीभावश्चेति चकारसूचितार्थकथनपराणीत्याशयेन वृत्त्यनुरोधादिहैव व्याख्यातानि॥

तत्पुरुषो ऽनञ्कर्मधारयः॥ अधिकारोयम्। कर्मधारयशब्दो भावप्रधानः। द्वन्द्वगर्भो नञा बहुव्रीहिः। न विद्येते नञ् च कर्मधारयत्वं चेत्युभे यत्र स तत्पुरुष इत्यर्थः। वक्ष्यति विभाषासेनासुरेत्यादि। तत्पुरुषः किम्। दृढसेनो राजा। नञ्रहीतः किम्। असेना। कर्मधारयत्वरहितः किम्। परमसेना। मध्यमसूत्रेष्वयमधिकारो नातीवोपयुज्यतइति तत्रैव वक्ष्यामः॥

संज्ञायां कन्थोशीनरेषु॥ कंथान्तस्तत्पुरुषः क्लीबं स्यात्सा चेदुशीनरदेशोत्पन्नायाः कन्थायाः संज्ञा। सुशमस्यापत्यानि सौशमयः तेषां कन्था। सौशमिकन्थम्। संज्ञायां किम्। वीरणकन्था। ऊशीनरदेशेषु किम्। दाक्षिकन्था। इह नादिः संज्ञा गृह्यते। सा चोशीनरेषु तत्पुरुषभिन्ना नञ्समासरूपा कर्मधारयश्च नास्त्येवेतीह मन्दमधिकारस्य फलम्॥

उपज्ञोपक्रमन्तदाद्याचिख्यासायाम्॥ उपज्ञायतइत्युपज्ञा। आतश्चोपसर्गइति कर्मण्यङ्प्रत्ययः। उपक्रम्यतइत्यु-

पक्रमः । कर्मणि घञ् । नोदात्तोपदेशस्येति वृद्धिप्रतिषेधः । उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात् । तयोरुपज्ञोपक्रमयोरादि प्राथम्यञ्चेदाख्यातुमिष्यते । पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः । त्वदुपक्रमं सौजन्यम् । इच्छासनेह विवक्षैव शब्दव्युत्पत्तौ नियामिका न तु वस्तुस्थितिरिति ज्ञाप्यते । तेन क्रियासम्बन्धमात्रविवक्षायां न । देवदत्तोपज्ञो रथ इत्यादि । इह षष्ठीतत्पुरुषाद्विना तदादित्वासम्प्रत्ययादलभ्यमधिकारफलम् ॥

छाया बाहुल्ये ॥ छायान्तस्तत्पुरुषो नपुंसकं स्यात् । बाहुल्ये सति चेच्छाया । यानि संभूयोपजीव्यां छायामारभमाणान्यावरकद्रव्याणि तत्समर्पकात्पूर्वपदात्परश्छायाशब्दश्चेदित्यर्थात्फलति । अत एवेह नाधिकारः फलवान् । इक्षूणां च्छाया । इक्षुच्छायम् । विभाषासेनेत्यादेर्विकल्पस्यापवादोऽयम् । कथन्तर्हि इक्षुच्छायानिषादिन्य इति । उच्यते । आसमन्तान्निषादिन्य इत्याङ्प्रश्लेषो बोध्यः ॥

सभा राजामनुष्यपूर्वा ॥ राजपूर्वा अमनुष्यपूर्वा च या सभा तदन्तस्तत्पुरुषो नपुसकं स्यात् । इनसभम् । ईश्वरसभम् । पर्यायस्यैवेष्यते । तथाहि । अराजेतिच्छेदः । नञिवयुक्तन्यायाच्चाराजा राजसदृशस्तत्पर्यायो गृह्यते । नेह । राजसभा । चन्द्रगुप्तसभा । कथं नृपतिसभामगमन्न वेपमाना इति कीचकवधे । गजपतिवद्राजविशेषवाचित्वादिति रक्षितः । यद्वा । ना पतिर्यस्यां सभायामिति बहुव्रीहौ कृते पश्चात्कर्मधारयः । अनञ्कर्मधारय इत्यनुवृत्तेर्न क्लीबत्वम् । अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह । रक्षःसभम् । रूढ्यर्थाभावान्नेह । काष्ठसभा ॥

अशाला च ॥ अशालावाची संघातवाची च सभाशब्दः । तत्र राजामनुष्यपूर्वत्वे पूर्वसूत्रेण पूर्वस्य क्लीबत्वमुक्तम् । संघातवाचिनस्तु अनेन विधीयते । स्त्रीसभम् । स्त्रीसंघात इत्यर्थः । अशाला किम् । अनाथसभा । अनाथकुटीत्यर्थः ॥

विभाषा सेनासुराच्छायाशालानिशानाम् ॥ एतदन्तस्य तत्पुरुषस्य क्लीबता वा स्यात् । ब्राह्मणसेनम् । ब्राह्मणसेना । यवसुरम् । यवसुरा । कुड्यच्छायम् । कुड्यच्छाया । गोशालम् । गोशाला । श्वनिशम् । श्वनिशा । कृष्णचतुर्दशीत्याहुः । तस्यां हि श्वान उपवसन्तीति प्रसिद्धिः । शुनश्चतुर्दश्यामुपवसतः पश्याम इति तिर्यगधिकरणे शाबरभाष्यम् ॥

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धं पिप्पल्या अर्धपिप्पली । स्यादेतत् । यदि समासार्थस्य परवल्लिङ्गत्वमनेनातिदिश्यते तर्हि पूर्ववदश्ववडवाविति सूत्रेणापि न्यायसाम्यात्समासस्यैवातिदेष्टव्यम् । ततश्च टाप् श्रूयेत समासार्थस्य पुंस्त्वेपि उत्तरपदार्थस्य स्त्रीत्वानपगमात् । यत्तु गोस्त्रियोरिति ह्रस्व इति तन्न । चार्थेद्वन्द्व इत्यत्रानेकमित्यधिकारात्सर्वेषां प्रथमानिर्दिष्टत्वेपि प्राधान्यादुपसर्जनसंज्ञाविरहात् । अन्वर्थसंज्ञा हि सा । अत एव राज्ञः कुमार्याः राजकुमार्या इत्यत्र न ह्रस्व इत्युक्तम् । अत एव च कुक्कुटमयूर्यावित्यत्र न ह्रस्व. । ननु मास्त्वन्वर्थता । तथा चाश्ववडवाविति सिद्ध्यति । राजकुमार्या. कुक्कुटमयूर्यावित्यत्र तु ह्रस्वे कृते पुनः स्त्रीप्रत्ययात् सिद्धम् । तदुक्तं, परवल्लिङ्गमिति शब्दसब्दार्थावि-

ति । तथाहि । लिङ्गशब्देन लिङ्गाभिधायी प्रत्ययोऽर्थश्च गृह्यते । तन्त्राद्याश्रयणात् । एवञ्च द्वन्द्वार्थस्य तत्पुरुषार्थस्य च परस्येव लिङ्गं स्यात् । तदभिधायी प्रत्ययश्च परस्येवेति सूत्रार्थः । तथा च यत्र द्रव्यगुणौ गुणकर्मणी इत्यादौ लिङ्गाभिधायी प्रत्ययो न सम्भवति तत्रार्थ एवातिदिश्यते । उभयसम्भवे तूभयम् । यथा कुक्कुटमयूर्याविल्यादौ । ततश्च औपदेशिकस्य ह्रस्वत्वेप्यातिदेशिकस्य श्रवणं भविष्यति । न च पुनर्ह्रस्वः शङ्क्यः । अनुपसर्जनत्वात्तदन्तस्याप्रातिपदिकत्वाच्च । न चैवमपि दत्तागार्ग्यायण्यौ दत्ताकारीषगन्ध्ये इत्यत्र ह्रस्वत्वे कृते समासात्पुनः ष्फङ्ष्यङौ स्यातामिति वाच्यम् । प्रत्याद्धेताद्धितइति पूर्वोत्पन्नयोर्निवृत्तिसम्भवादिष्टापत्तेरिति । मैवम् । दत्ता च युवतिश्च दत्तायुवती इत्यत्र तिप्रत्ययद्वयश्रवणापत्ते । तत्राभन्वेन पुंवद्भावायोगात् । तस्मादुपसर्जनत्वं द्वन्द्वे नास्त्येव अन्वर्थत्वादिति स्थितम् । अश्ववडवावित्यत्र स्त्रीप्रत्ययनिवृत्तौ उपायान्तरं वक्तव्यमिति । अत्रोच्यते । विभाषावृक्षमृगेतिसूत्रे ऽश्ववडवेत्यत्र टापो निवृत्तिर्निपात्यते । तदुक्तं, समासादन्यलिङ्गमिति चेदश्ववडवयोष्टाब्लुग्वचनं निपातनात् सिद्धमिति ॥ द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः ॥ पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलकुमारिः । निष्कौशाम्बिः । भाष्ये त्वेतत्प्रत्याख्यातम् । तथाहि । तत्पुरुषग्रहणं न करिष्यते । परवल्लिङ्गं द्वन्द्वस्येत्येव । कथं पूर्वकायोर्द्धपिप्पलीति । एकदेशिसमासोऽपि नारभ्यते । कर्मधारय एवायं पूर्वश्चासौ कायश्च अर्द्धञ्चासौ पिप्पली चेति । ततश्च प्राधान्यादेवोत्तरपदार्थस्य लिङ्गं भवति । न च षष्ठीस-

मासवाधनार्थमेकदेशिसमासो ऽवश्यारभ्य इति वाच्यम्। इष्टत्वादनभिधानाच्च। तथाहि। द्वितीयतृतीयेत्यत्रान्यतरस्यांग्रहणात्सूत्रकारस्यापि षष्ठीसमास इष्टोर्धशब्देनापि षष्ठीसमासो भाष्यकाराणामिष्ट इति प्रागेवोक्तम्। पूर्वापरेत्यत्र त्वनभिधानात्षष्ठीसमासो न भविष्यतीति। इदञ्च प्रत्याख्यानं दुर्बलम्। अनभिधानाश्रयणमगतिकगतिरिति सन्प्रत्ययविधौ भाष्यएवोक्तत्वात्॥

पूर्ववदश्ववडवौ॥ द्विवचनमतन्त्रम्। अर्थातिदेशश्चायम्। परवल्लिङ्गतापवादः। अश्ववडवौ, अश्ववडवान्, अश्ववडवैर्जवनैरित्यादि। विभाषावृक्षेत्यादिसूत्रेण समाहारद्वन्द्वपक्षे तु सनपुंसकमित्येव भवति। तच्छब्देन विशिष्य परामर्शार्थमेवाश्ववडवग्रहणात्। अन्यथा पशुग्रहणेनैव सिद्धौ तद्वैपर्थ्यापत्तेरित्युक्तम्॥

हेमन्तशिशिरावहोरात्रे च च्छन्दसि॥ पूर्ववदित्यनुवर्तते। हेमन्तश्च शिशिरं च हेमन्तशिशिरौ। अत्रेदमवधेयम्। शिशिरशब्दः पुन्नपुंसकयो। तथा च चक्रवज्रान्धकारेति सूत्रे तिमिरशिशिराणि नपुंसके चेति भगवान्पाणिनिः। अमरोपि, हेमन्तः शिशिरोस्त्रियामित्याह। तथा चात्र सूत्रे हेमन्तशिशिराविति न कर्तव्यम्। अहोरात्रे शिवे स्याताम्। इह रात्रान्हाहा इति पुंस्त्वं प्राप्तम्। द्वित्वमतन्त्रम्। अहोरात्राणि विदधत्। न चेदं समाहारद्वन्द्वे सत्येकशेषात्सिद्धमिति वाच्यम्। तत्रापि पुंस्त्वस्योत्तरसूत्रे वक्ष्यमाणत्वात्। छन्दसि लिङ्गव्यत्ययो वक्ष्यते तस्यैवायं प्रपञ्चः। लोके तु दुःखे हेमन्तशिशिरे। अहोरात्रौ पुण्यौ॥

रात्रान्हाहाः पुंसि॥ एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव।

रात्रेः पूर्वो भागः पूर्वरात्रः । एकदेशिसमास । अहः सर्वैकदेशेत्यच् समासान्तः । पूर्वाह्णः । राजाह सखिभ्य इति टच् । अन्होन्हएतेभ्य इत्यन्हादेशः । अन्होदन्तादिति णत्वम् । द्व्यहः । नसंख्यादेःसमाहारइत्यन्हादेशाभावः । अन्हष्खोरेवेति टिलोपः । परवाल्लिंगापवादोयं योग । वृत्तौ तु एते पुंसीत्युक्तम् । तत्राप्येतदन्ता इत्यर्थो बोध्यः । यत्तु रात्रादीनामेवानेन पुंस्त्वे कृते तदन्तस्य परवल्लिंगमित्येव सिद्धिमिति । तन्न । समाहारे नपुसकत्वापत्तेः । परवल्लिङ्गत्वापवादो हि सनपुंसकमिति योगः । न च नपुंसकत्वे इष्टापत्तिः । द्विरात्रस्त्रिरात्र इति वृत्तिकारीयोदाहरणविरोधात् । तद्धि समाहारे द्विगुरिति सर्वैर्व्याख्यातम् । अमरोपि प्रायुङ्क्त । ते तु त्रिंशदहोरात्र इति, मासेन स्यादहोरात्र इति च । तस्मात्तदन्तस्यैवायं पुंस्त्वविधिः । यद्यपि संनिधानात्परवल्लिंगताया एवायमपवादस्तथापि परत्वान्नपुंसकतां बाधते । अत्रेदं चिन्त्यम् । उक्तरीत्याहोरात्र इत्यत्र पुंस्त्वमस्तु । द्विरात्रादौ तु वृत्तिकारहरदत्ताद्युक्तं पुंस्त्वमसङ्गतम् । तत्र विशिष्टक्लीवताविधेः । तथा च लिङ्गानुशासनसूत्रम् । अपथपुण्याहौ नपुसकौ ॥ संख्यापूर्वा रात्रिरिति । अमरोप्याह । रात्रेः प्राक् संख्ययान्वितमिति, गणरात्रं निशावन्हय इति च ॥ अनुवाकादयः पुंसीति वक्तव्यम् ॥ अनुवाक । शंयुवाकः । सूक्तवाक । वाक्यविशेषस्यैता संज्ञा । कर्मणि घञन्ता इति नपुसकत्वे प्राप्ते वचनम् ॥

अपथं नपुंसकम् ॥ इदं नपुसकं स्यात्तत्पुरुषे । समासान्तरे तु अपथो देश । अपथा नगरी । कृतसमासान्तनिर्देशाभेद । अपन्था ॥

अर्धर्चाः पुंसि च ॥ अर्धर्चादयः शब्दाः पुंसि क्लीबेच स्युः । ते च गणरत्ने संगृहीताः । तद्यथा । अर्धर्चध्वज-कुब्ज शीधु मधवो वर्चस्क कूर्चाढकाः पङ्का नीक पि-नाकानिष्ककपटाष्टङ्कः किरीटः कुटः । कूटः कन्कट क-र्वटाण्ड शकटा वल्मीक सानू नटा खण्डोद्योगाविडङ्ग शृंग सर-काः पुंखवज्रौ मोदकः ॥ मधुमकरन्दे मद्ये माक्षिके च द्विलि-ङ्गः । मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्धर्चादि-गणे पाठात्पुन्नपुंसकयोर्मधुरिति शाश्वतः । अमरस्तु मार्द्वीकं मधु न द्वयोरित्याह । चैत्रदैत्ययोस्तु पुंस्येव । वर्चस्कं शकृत् । कूर्चं दीर्घश्मश्रु । आढकं मानविशेष. । पङ्कः कर्दमपापयोः । अनीकं सैन्यम् । पिनाको रुद्रधनुस्त्रिशूलं च । निष्क आभर-णम् । कपटं व्याजः । टङ्कः पाषाणभेदनः । किरीटो मुकु-टम् । कुटो घटः । कूटं संघातो माया च । कङ्कटं सन्नाहः । कर्वटं नद्यादिवेष्टितः खेटकग्रामः । अण्डं पक्ष्यादि-प्रसवः । नटो नर्तकविशेषः । खण्ड इक्षुविकारः शकलं च । उद्योगमुत्साहः । विडङ्ग औषधम् । सरकं मद्यम् । शेषं प्रसिद्धम् ॥ शाको मस्तक कल्क शूकनिकरा. शुल्कं नि-दाघो नखो बाण द्रोण सुवर्णभूषणरणाः कार्षापणस्तो-रणः । काण्डस्ताण्डवदण्डमण्डपिटकाः सक्तुस्तटाकव्रणौ पेटो मन्चक वारबाणचरणा वस्त्राम्बरैरावताः ॥ कल्क औ-षधनिर्यासः दम्भः पातकं च । शूकं धान्यादेः सूची । शु-ल्कं घट्टादावायस्थानम् । द्रोणो मानविशेषः पक्षिविशेषश्च । भू-षणो ऽलंकारः । काण्डः शरनालवर्गवारिसमयकुत्सितेषु । मण्डो दध्यादेर्द्रवांश. । पिटको वंशनिर्मितः पात्रविशेषः । पे-टः संहतिः । ऐरावतमिन्द्रगजः ॥ चरकमठविटङ्क श्वेडिता.

भूत वृत्तमयुत घृत वसन्ता हस्तबुस्तापराह्वा ॥ पलित फलक कण्टा नाम कर्माभिधाना ऽयुत शत तृण नीडा यौवनोद्यानयानाः ॥ चरकं ग्रन्थविशेषः । मठं व्रतिनां स्थानम् । विटङ्क कपोतपाली । क्ष्वेडितो मुखध्वनिविशेषः । भूतः पिशाचे द्विलिङ्ग । क्रियाशब्दस्तु विशेष्यलिङ्गः । वृत्तं शीलम् । मयुतं दशलक्षाः । घृत आज्यम् । हस्तं पाणिः । बुस्तं मांसशष्कुली । पलितः पाण्डुरकेशः । फलकः खेटकम् । कण्टं पापम् । अयंनामा अयंकर्मा । कार्यमित्यर्थ । कर्म व्याप्ये क्रियायाञ्च पुंनपुंसकयोर्मतमिति रुद्र । यौवनो द्वितीयं वयः । उद्यान आरामः । यानो वाहनम् ॥ तीर्थप्रोथौ नलिनपुलिनस्तेनयोधौषधानि स्थानः शूर्पो निधनशयनद्वीपपुच्छायुधानि । पूथंगूथ कुणपकुतपक्षेमवर्णासनानिच्छत्राकाशप्रतिसरमुखाष्टापदारण्यवर्षा ॥ प्रोथोऽश्वनासा। स्तेनश्चौर्यम् । योधो भटः । औषधो भेषजम् । स्थानम् आधार । शूर्पो वेणुपात्रम् । निधनो मृत्युः । शयनः शय्या । यूथ पशुसमूहः । गूथो विष्ठा । कुणपं शव । कुतपः कालविशेषः । वर्णमक्षरम् । प्रतिसरः कङ्कणम् । मुखो वदनम् । अष्टसु लोहेषु पदं प्रतिष्ठाऽस्येत्यष्टापदं सुवर्णम् । अष्टनः संज्ञायामिति दीर्घः । अरण्योटवी । वर्षः सवत्सरः ॥ कमण्डलुर्मण्डपकुट्टिमार्बुदावतंसपाराः शतमानचन्दनौ । समानपूषौ दृढमूषिकौदना दिनं विमानं च वितानलोहितौ ॥ अर्बुदो दशकोटि । पर्वते तु पुल्लिङ्ग । तथा च मेदिनी । अर्बुदो मांसपुरुषे दशकोटिषु न स्त्रियाम् । महीधराविशेषे ना इति । अवतंस शेखरम् । पारः परतीरम् । शतमान रूप्यपलम् । समान सदृशः । पूषो मुद्गादिनिर्यासः । मूषिक आखुः । ओदनं कूरः । दि-

नो दिवस । लोहितः शोणितम् । गुणवाची तु वाच्यलिङ्गः ॥ अंसक्षीरकषायबिम्बविटपा नेत्राव्ययौ शेखर केदाराश्रमशल्यशूलवलया बालस्तमालो मलः ॥ गुल्माङ्गारविहारतोमररसाः पात्र पवित्र पुर मध्यो बुध्नमृणालमण्डल नला नालप्रवालोत्पला ॥ अंसः स्कन्धः । क्षीरो दुग्धम् । कषायं तुवरो रस । बिम्बो मण्डलम् । विटपः स्तम्भः ॥ शाखाच ॥ नेत्रो नयनम् । अव्ययमथेत्यादि । शेखरमापीड । केदारं क्षेत्रम् । आश्रमो मुनिस्थानम् । शूलमायुधं रोगविशेषश्च । वलयो हस्ताभरणम् । बालः शिशुः केशश्च । तमालो वृक्षविशेषः । मल पापं विट्च । गुल्मः प्रकाण्डम् । अङ्गारो दग्धकाष्ठम् । विहारः क्रीडास्थानम् । रसं मधुरादि । पात्रो भाजनम् । त्रिषु पात्री पुटी वाटीत्यमरादिङ्खायोगव्यवच्छेदे तात्पर्यं न त्वन्ययोगव्यवच्छेदेपि । एत्र पवित्र पावनम् । पुरः पुरीत्याद्यपि । बुध्नमधोभागः । नलः सुषिरतृणम् । नालः पुष्करादीनां दंड । अयं स्त्रियामपि, नालामृणालाग्रभुजोभजाम इति श्रीहर्ष । प्रवालं पल्लवो विद्रुमश्च ॥ जृम्भो वज्रकबन्धकर्पककुदाश्चक्रान्धकाराङ्कुशा वक्रः संगमदेहदाडिमहिमाः पत्र फलं वल्कलम् । कार्पासामिषकाशकोशकुसुमप्रग्रीवमासेक्कसा निर्यासः कलशाम्बरीषकलला माषं करीष कुशम् ॥ जृम्भो जृम्भणम् । वज्रः कुलिशम् । हीरकश्च । कबन्धं रुण्डः । कर्षः पलचतुर्भागः । ककुद श्रेष्ठे वृषांसे राजचिन्हे च । चक्रो रथांग । अङ्कुश सृणि । वक्रो मुखम् । संगमो नद्यादेर्मेलनम् । देह शरीरम् । दाडिम फलविशेषः । हिमस्तुहिनम् । पत्रः पर्णं वाहन च । वल सामर्थ्यं सैन्य च । कुसुमः पुष्पम् । प्रग्रीव

वातायनम् । मासं त्रिंशदहोरात्रः । इकसाश्चिक्कसं गोधूमादि-चूर्णम् । अपरस्तु चिक्कसमर्धचादौ पपाठ । निर्यासं वृक्षादेर्निष्यन्दः । कलशं घटः । अंबरीषं भ्राष्ट्रम् । कललं शुक्रशोणितयोः परिणामविशेषः । माष परिमाणविशेषो धान्यविशेषश्च । करीषं शुष्कगोमयम् । कुशशब्दस्य विषयविवेकस्तु दंडमंडेत्यादिलिंगानुशासनसूत्रव्याख्यानावसरे वक्ष्यते ॥ मुसलमुकुलमूलाः पार्श्वपात्रीवपूर्वाः कमलहलचपालाः खण्डलं कुण्डलं च । निगलफलपलाला मङ्गलं शालशीलाविषचषकविशालाः पूलतैले कपालम् ॥ मूलः शिफा । पात्रीवं यज्ञोपकरणम् । कमलं पद्मम् । हलः सीरम् । चपालं यज्ञपात्रविशेषः । खंडलं खंडम् । फलः प्रयोजनम् । शालो वृक्षविशेषः । शीलं चरितम् । विषो वत्सनागादिः । चषको मधुपानभाजनम् । पूलं बद्धतृणसंचयः ॥ समरतिमिरवारा राजसूयोपवासौ चमसदिवसकंसा वाजपेयो हिरण्यम् ॥ जठरदरशरीरारावकान्ताराष्ट्रा। पटहगृहकवाटाः कुक्कुटार्द्रौ च धाम ॥ वारः परिपाटी । कंसोऽस्त्री पानभाजनमित्यर्थः । दरस्त्रासे रोगे अल्पे च । शरीरः कायः । आरावः शब्दः । गृहशब्दो नपुंसकेऽभिधेयवचनः । पुंसि तु बहुवचनान्त एव । कवाटमररं तुल्ये इत्यमरः । अत्रैव कपाटशब्दोऽपि साधुरिति शंक्तौ हस्तिकपाटयोरिति सूत्रे वक्ष्यामः । आर्द्रः शृङ्गवेरम् । धाम गृहं तेजश्च ॥ पद्मापाढकपित्थपाष्ठिकुलान्यम्भोजवाजामृताः स्थूलद्यूतखलीनलोहकवचाशोकक्षपानेकपाः ॥ शंखस्तंडकधर्मचर्मरजतस्नेहासिहंसापराः सारः सैन्धवमध्यमाध्वरधनुर्मानस्तनस्छाणव ॥ पद्मो निधौ पुंसि, जलजे तु द्विलिंगः । आपाढं प्रतिदंडो मासश्च । कपित्थो वृक्षविशेषः ।

वृत्तौ तु कवीयेति पठ्यते । अश्वमुखबन्धनरज्जुस्तस्यार्थः । उक्तं च वोपालितेन। नार्या करीखलीनं कावीयं वा ना तुरङ्गमुख-भाण्डमिति । षष्टिकं व्रीहिभेदः । कुलो वंशो गृहं च । अम्भोजः कमलम् । वाजं पिच्छम् अमृतं सलिलम् । अशोकं तरुः । क्षयो गृहम् । अनेकपं । हस्ती । शङ्खो निधौ पुमान् , जलजे द्विलिङ्गः । तण्डकः छन्दोगानां ग्रन्थविशेषः । चर्माजिनम् । रजतं रूप्यम् । स्नेहं सौहार्दम् । असिः खड्गः। अपरोन्यः। सारो बलम् । सैन्धवो लवणम् । मानो दर्पः । स्थाणुः शङ्कुः ॥ महिमनेत्र-कपञ्चकदण्डकाः क्रकचशम्बलकुण्डपकन्दराः ॥ कटकमालवमर्मरदैवताः शिखरकेसरदारुभगन्दराः॥ महिम महत्त्वम्, नेत्रकं शृंखलकंटकम्। पंचकं विस्तारः। दंडकं छंदोविशेषः । क्रकचं काष्ठादिदारणसाधनम्।शंबलं पाथेयम्। कुण्डपं क्रतुविशेष । कंदरा स्त्रियामपि। मालवो देशविशेषः। मर्मरं शुष्कपर्णध्वनिः। दैवतो देवः। दारुः काष्ठम् ॥ दीपोद्यमब्रह्मपिधानभावा वास्तुव्रतार्धमवराभिधानाः। अर्मोमुहूर्तो धनवमसौधा रेणुस्तलं लोमपटं विहायः॥ दीपं प्रकाशविशेष।भावः स्वभावः।वास्तुर्वेश्म। अर्मो चक्षूरोगः। धनो वित्तम् । पटं वस्त्रम् ॥ उटजचापनपुंसकपातका भुवनकोटरपल्लवगोमयाः । अविस्वरं हरिचन्दनमूलकौ भवनसंक्रमगाण्डिवपत्तनाः ॥ उटजः पर्णशाला । चापो धनुः । पातकः पापम् । गाण्डिवो ऽर्जुनधनुः । दीर्घमध्योपि । एतच्च गाण्ड्यजगात्संज्ञायामिति सूत्रे वृत्त्यादौ स्पष्टम् ॥ कर्पूरकूर्पासकपष्टयुशीरगाण्डीवनिष्टेवसवर्णभस्राः । पिण्याकपुस्तौ नखरेपुखण्डवैनीतिकद्वीपिनखारकूटाः ॥ कर्पूरो घनसारः । कूर्पासकः कञ्चुकः । षष्टिः संख्यावाची । उशीरो नलदम् । नि-

ष्ठेवो निष्ठीवनम् । मस्त्रश्चर्मकोशः भस्त्रा च । पुस्तः पुस्तकम् । नखरं नखः । इपुर्बाणः । अयं स्त्रीलिङ्गोपि । पत्री रोप इपुर्द्वयोरित्यमरः । तथा च श्रीहर्षः, कुसुमानि यदि स्मरेषव इत्युपक्रम्य हृदयं यदमूमहन्नमूरिति प्राङ्युक्त । खण्ड पद्मादीनां समुदायः । विनीतानामिदं वैनीतिकम् । मनुष्यवाह्यं यानम् । द्वीपी व्याघ्रः । आरकूटः पित्तलम् ॥ अमरस्त्वाह ॥ पुन्नपुंसकयो शेषोऽर्धर्चपिण्याककण्टकाः । मोदकस्तण्डकटङ्कः शाटकः कर्पटोऽर्बुदः ॥ पातकोद्योगचरकतमालामलकानडः । कुष्ठं मुण्ड शीधु बुस्तं क्ष्वेडितं क्षेमकुट्टिमम् ॥ सङ्गमं शतमानार्मशम्बलाव्ययताण्डवम् । कवियं कन्दकार्पासं पारावारं युगन्धरम् ॥ यूपमग्रीवपत्रीवे पूपञ्चमसाचिक्वसौ । अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ॥ तन्नोक्तमिह लोकेपि तच्चेदस्त्यस्तुशेपवदिति । अर्म चक्षुरोगः । अर्तिस्तुसुहुस्त्रित्यादिना औणादिको मन्प्रत्यय इति तद्व्याख्यातारः । शम्बलं तालव्यादि दन्त्यादि चेति त एव । इह यद्यपि अर्धर्चादीन् चिक्कसान्तानत्र पठितान् कूटोस्त्रीत्यादींश्च तत्रतत्र प्राक्पठितान् विहायान्येषां प्रसिद्धविलक्षणं पुंस्त्वादिकमित्युक्तम् । तेन घृतक्षीरदारुलोमासनमुखशरीरादयो लोके नियतलिङ्गा एवेति प्रतीयते तथापि मुनित्रयवचनविरहाद्वैदिकत्वं निर्मूलम् । अत एवापरितोषाल्लोके ऽपीत्याद्युक्तमित्याहुः । युक्तं चैतत् । लिङ्गानुशासनसूत्राणां घृतादिविपयकाणां लोकवेदसाधारण्येनैव प्रवृत्तेः । एवमन्येपि ये शब्दाः कोशादिना पुंनपुंसकलिङ्गतया निर्णीतास्ते सर्वे अर्धर्चादिषु बोध्याः ॥

इदानीं परवल्लिङ्गमित्यतिदेशे उपयुक्ततया प्रसङ्गात् पाणिनीयलिङ्गानुशासनसूत्राणि व्याख्यायन्ते ॥

लिङ्गम् ॥ स्त्री ॥ अधिकारसूत्रे एते ॥

ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः ॥ ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गाः । स्वस्रादिसप्तकस्यैव ङीन्निषेधेन कर्त्री त्यादेर्ङीपा ईकारान्तत्वात् । तिसृचतस्रोस्तु स्त्रियामादेशतया विधानेपि प्रकृत्योस्त्रिचतुरोरृदन्तत्वाभावात् ॥

अन्यूप्रत्ययान्तो धातुः ॥ अनिप्रत्ययान्त ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । अवनिः । चमूः । प्रत्ययग्रहणं किम् । देवयतेः क्विप् दयूः विशेष्यलिङ्गः ॥

अशनिभरण्यरणयः पुंसि च ॥ इयमयं वा अशनिः ॥

मिन्यन्तः ॥ मिप्रत्ययान्तो निप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । भूमिः ग्लानिः ॥

वन्हिवृष्ण्यग्नयः पुंसि ॥ पूर्वस्यापवादः ॥

श्रोणियोन्यूर्मयः पुंसि च ॥ इयमयं वा श्रोणिः ॥

क्तिन्नन्तः ॥ स्पष्टम् । कृतिरित्यादि ॥

ईकारान्तश्च ॥ ईप्रत्ययान्तः स्त्री स्यात् । लक्ष्मीः ॥

ऊङाबन्तश्च ॥ कुरूः ॥ विद्या ॥

य्वन्तमेकाक्षरम् ॥ श्रीः । भूः । एकाक्षरं किम् । पृथुश्रीः ॥

विंशत्यादिरानवतेः ॥ इयं विंशतिः । त्रिंशत् । चत्वारिंशत् । पञ्चाशत् । षष्टिः । सप्ततिः । अशीतिः । नवतिः ॥

दुंदुभिरक्षेषु ॥ इदं दुंदुभिः । अक्षेषु किम् । अयं दुंदुभिः । वाद्यविशेषो ऽसुरो वेत्यर्थः ॥

नाभिरक्षत्रिये ॥ इयं नाभिः ॥

उभावप्यन्यत्र पुंसि ॥ दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि स्तः । नाभिः क्षत्रियः । कथं तर्हि समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीविनाभिभिरिति भारविः । उ-

च्यते । दृढभक्तिरित्यादाविव कोमलैरिति सामान्ये नपुंसकं बोध्यम् । वस्तुतस्तु लिङ्गमशिष्य लोकाश्रयत्वाल्लिङ्गस्येति भाष्यात्पुंस्त्वमपीह साधु । अत एव नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदइति मेदिनिः । रभसोप्याह । मुख्यराट्क्षत्रिये नाभिः पुंसि प्राण्यङ्गके द्वयोः । चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदइति । एवमेवविधेन्यत्रापि बोध्यम् ॥

तलन्तः ॥ अयं स्त्रियां स्यात् । शुक्लस्य भावः शुक्लता । ब्राह्मणस्य कर्म ब्राह्मणता । ग्रामस्य समूहो ग्रामता । देव एव देवता ॥

भूमिविद्युत्सरिल्लता वनिताभिधानानि ॥ भूर्भूमिः । विद्युत्सौदामनी । सरिन्निम्नगा । लता वल्ली वनिता । योषित् ॥

यादो नपुंसकम् ॥ यादःशब्दःसरिद्वाचकोपि क्लीबं स्यात् ॥

भा स्रुक्स्रग्दिग्उष्णिगुपानहः ॥ एते स्त्रियां स्युः । इय भा इत्यादि ॥

स्थूणोर्णे नपुंसके च ॥ एते स्त्रिया क्लीबे च स्तः । स्थूणम् । स्थूणा । ऊर्णं । ऊर्णा । तत्र स्थूणा काष्ठमयी द्विकर्णिका । ऊर्णा तु मेषादिलोम ॥

गृहशशाभ्यां क्लीबे ॥ नियमार्थमिदम् । गृहशशपूर्वे स्थूणोर्णे यथासंख्यं नपुंसके स्त । गृहस्थूणम् । शशोर्णम् । शशोर्णं शशलोमानीत्यमर ॥

प्रावृड्विप्रुड्रुड्तृड्विड्त्विषः ॥ एते स्त्रियां स्युः ॥

दर्विविदिवेदिखनिशान्याश्रिवेशिकृष्णोषधिकट्यङ्गुलयः ॥ एते स्त्रियां स्युः । पक्षे ङीप् । दर्वी दार्विरित्यादि ॥

तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविराश्यादयः ॥ एते प्राग्वत् । इयं तिथिरित्यादि । अमरस्त्वाह । तिथयो द्वयोरिति । तथा च भारविः । तस्य भुवि बहुतिथास्तिथय इति । स्त्रीत्वे हि बहुतिथ्य इति स्यात् । श्रीहर्षश्च निखिलाञ्चिशि पौर्णिमातिथीनिति ॥

शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटिश्रुटिवलिपङ्क्तयः ॥ एतेऽपि स्त्रियां स्युः । इयं शष्कुलिः ॥

प्रतिपदापद्विपत्संपच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः ॥ इयं प्रतिपदित्यादि । उषा उच्छन्ती । उषा प्रातरधिष्ठात्री देवता ॥

आशीर्धूःपूर्गीर्द्वारः ॥ इयमाशीरित्यादि ॥

अप्सुमनस्समासिकतावर्षाणां बहुत्वं च ॥ अबादीनां पञ्चानां स्त्रीत्वं स्याद्बहुत्वं च । आप इमाः । स्त्रियः सुमनसः पुष्पम् । सुमना मालती जातिः । देववाची तु पुंस्येव । सुपर्वाणः सुमनसः । बहुत्वं प्रायिकं । एका च सिकता तैलदाने असमर्थेति अर्थवत्सूत्रे भाष्यप्रयोगात् । समांसमांविजायत इत्यत्र समायां समायामिति भाष्याच्च । विभाषाघ्राधेटिति सूत्रे अग्रासातां सुमनसाविति वृत्तिव्याख्यायां हरदत्तोप्येवम् ॥

स्रक्त्वक्ज्योग्वाग्यवागूनौस्फिजः ॥ इयं स्रक् त्वक् ज्योक् वाक् यवागूः नौः स्फिक् ॥

त्रुटिसीमासंवध्याः ॥ इयन्त्रुटिः । सीमा । संवध्या ॥

चुल्लिवेणिखार्यश्च ॥ स्पष्टम् ॥

ताराधाराज्योत्स्नादयश्च ॥

शलाका स्त्रियां नित्यम् ॥ नित्यग्रहणमन्येषां क्वचिद्व्यभिचार ज्ञापयति ॥

इतिस्त्र्यधिकार ॥

पुमान् ॥ अधिकारोयम् ॥

घञबन्तः । पागस्त्यागः करो गर । भावार्थएवेदम् । नपुंसकत्वविशिष्टे भावे क्तल्युड्भ्यां स्त्रीत्वविशिष्टे तु क्तिन्नादिभिर्बाधेन परिशेषात् । कर्मादौ तु घजाद्यन्तमपि विशेष्यलिङ्गम् । तथा च भाष्यम् । संबंधमनुवर्तिष्यतइति ॥

घाजंतश्च ॥ विस्तर गोचरः चयः जय इत्यादि ॥

भयलिङ्गभगपदानि नपुंसके ॥ एतानि नपुंसके स्युः । भयम् । लिङ्गम् । भगम् । पदम् ॥

नङन्त ॥ नङ्प्रत्ययान्त पुंसि स्यात् । यज्ञः । यत्न ॥

याच्ञा स्त्रियाम् ॥ पूर्वस्यापवादः ॥

कयन्तो घु ॥ किप्रत्ययान्तो घुः पुंसि स्यात् । आधिः । निधिः । उदधि ॥ क्यन्तः किम् । दानम् । घु किम् । जह्निर्बीजम् ॥

इषुधि स्त्री च ॥ इषुधिशब्दः स्त्रियां पुंसि च ॥ पूर्वस्यापवादः ॥

देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि ॥ एतानि पुंसि स्युः । देवाः सुराः । असुरा दैत्याः । आत्मा क्षेत्रज्ञ । स्वर्गो नाकः । गिरिः पर्वत । समुद्रो ऽब्धि । नख कररुहः । केश शिरोरुह । दन्तो दशन । स्तन कुचः । भुजो दो । कण्ठो गल । खड्ग करवालः । शरो मार्गणः । पङ्क कर्दम इत्यादि ॥

त्रिविष्टपत्रिभुवने नपुंसके ॥ स्पष्टम् । तृतीय विष्टप त्रि-

विष्टपम् । स्वर्गाभिधानतया पुंस्त्वे प्राप्ते अयमारम्भः ॥

द्यौः स्त्रियाम् ॥ द्योदिवोस्तन्त्रेणोपादानमिदम् ॥

इषुबाहू स्त्रियां च ॥ चात्पुंसि ॥

बाणकाण्डौ नपुंसके च ॥ चात्पुंसि । त्रिविष्टपेत्यादिचतु सूत्री देवासुरेत्यस्यापवादः ॥

नान्तः ॥ अयं पुंसि । राजा । तक्षा । न च चर्मवर्मादिष्वतिव्याप्तिः । मन्द्व्यच्कोकर्तरीति नपुंसकप्रकरणे वक्ष्यमाणत्वात् ॥

क्रतुपुरुषकपोलगुल्फमेघाभिधानानि ॥ क्रतुरध्वरः पुरुषो नरः । कपोलो गण्डः । गुल्फः प्रपदः । मेघो नीरदः ॥

अभ्रं नपुंसकम् ॥ पूर्वस्यापवादः ॥

उकारान्तः ॥ अयं पुंसि स्यात् । प्रभुः । इक्षुः । हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् ॥ द्वयोः कपोलावयव इति मेदनी । करेणुरिभ्यां स्त्री नेभे इत्यमरः । एवंजातीयकविशेषवचनानाक्रान्तस्तु प्रकृतसूत्रस्य विषयः । उक्तं च । लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधित इति ॥ एवमन्यत्रापि ॥

धेनुरज्जुकुहूसरयुतनुरेणुप्रियङ्गवः स्त्रियाम् ॥ समासे रज्जुः पुंसि च । कर्कटरज्ज्वा कर्कटरज्जुना ॥

श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके ॥ वसु चार्थवाचि ॥ अर्थवाचीति किम् । वसुर्मयूखाग्निघनाधिपेषु ॥

मद्गुमधुसीधुशीधुसानुकमण्डलूनि नपुंसके च ॥ चात्पुंसि । अयं मद्गुः । इदं मद्गु ॥

रुत्वन्तः ॥ मेरुः । सेतुः ॥

दारुकसेरुजतुवस्तुमस्तूनि नपुंसके ॥ रुत्वन्त इति पुंस्त्व-

स्यापवादः । इदं दारु ॥

सक्तुर्नपुंसके च ॥ चात्पुंसि । सक्तुः । सक्तु ॥

प्रागश्मेरकारान्तः ॥ रश्मिदिवसाभिधानमिति वक्ष्यति, प्रागेतस्मादकारान्त इत्यधिक्रियते ॥

कोपधः ॥ कोपधो ऽकारान्तः पुंसि स्यात् । स्तबकः । कल्कः ॥

चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके ॥ पूर्वसूत्रापवादः ॥

कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलाकानि नपुंसके च ॥ चात्पुंसि । अयं कण्टकः । इदं कण्टकमित्यादि ॥

टोपध ॥ टोपधो ऽकारान्तः पुंसि स्यात् । घटः । पट ॥

किरीटमुकुटललाटवटवीटशृङ्गाटकराटलोष्टानि नपुंसके ॥ किरीटमित्यादि ॥

कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि नपुंसके च ॥ चात्पुंसि । कुट· कुटमित्यादि ॥

णोपधः ॥ णोपधोऽकारान्त· पुंसि स्यात् । गुणः गणः। पाषाण· ॥

ऋणलवणपर्णतोरणरणोष्णानि नपुंसके ॥ पूर्वसूत्रापवादः॥

कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च ॥ चात्पुंसि ॥

थोपधः ॥ रथः । मन्थः ॥

काष्ठपृष्ठरिक्थोक्थानि नपुंसके ॥ इदं काष्ठमित्यादि ॥

काष्ठा दिगर्था स्त्रियाम् ॥ इमाः काष्ठाः ॥

तीर्थमोथयूथगाथानि नपुंसके च ॥ चात्पुंसि । अयं तीर्थः । इदं तीर्थम् ॥

नोपधः ॥ अदन्तः पुंसि । इनः । फेनः ॥

जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिन्हानि नपुंसके ॥ पूर्वस्यापवादः ॥

मानयानाभिधाननलिनोद्यानशयनासनस्थानचन्दनालानसम्मानभवनवसनसम्भावनविभावनविमानानि नपुंसके च ॥ चात्पुंसि । अयं मानः । इदं मानम् ॥

पोपधः ॥ अदन्तः पुंसि । यूपः । दीपः । सर्पः ॥

पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके ॥ इदं पापमित्यादि ॥

शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च ॥ अयं इदं शूर्पः शूर्पमित्यादि ॥

भोपधः ॥ स्तम्भः । कुम्भः ॥

तलभं नपुंसकम् ॥ पूर्वस्यापवादः ॥

जृम्भं नपुंसके च ॥ जृम्भम् । जृम्भः ॥

मोपधः ॥ सोमः । भीमः ॥

रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके ॥ इदं रुक्ममित्यादि ॥

संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च ॥ चात्पुंसि । अयं संग्रामः । इदं संग्रामम् ॥

योपधः ॥ समयः । हयः ॥

किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके ॥ स्पष्टम् ॥

गोमयकषायमलयान्वयाव्ययानि नपुंसके च ॥ गोमयः ।

गोमयम् ॥

रोपधः ॥ क्षुरः। अङ्कुरः ॥

द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रच्छिद्रनारतीरदूरकृच्छ्ररन्ध्राश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदारजस्रशरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशस्त्रशास्त्रवस्त्रपत्रपात्रच्छत्राणि नपुंसके ॥ इदं द्वारमित्यादि ॥

शुक्रमदेवतायाम् ॥ इदं शुक्रं रेतः ॥

चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च ॥ चात्पुंसि। चक्रः। चक्रमित्यादि ॥

षोपधः ॥ वृषः। वृक्षः ॥

शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके ॥

यूषकरीषमिषविषवर्षाणि नपुंसके च ॥ चात्पुंसि। अयं यूषः। इदं यूषमित्यादि ॥

सोपधः ॥ वत्सः। वायसः। महानसः ॥

पनसबिसबुससाहसानि नपुंसके ॥

चमसांसरसनिर्याससोपवासकार्पासवासभासकासकांसमांसानि नपुंसके च ॥ इदं चमसम्। अयं चमस इत्यादि ॥

कंसं चाप्राणिनि ॥ कंसोऽस्त्री पानभाजनम्। प्राणिनि तु कंसो नाम कश्चिद्राजा ॥

रश्मिदिवसाभिधानानि ॥ एतानि पुंसि स्युः। रश्मिर्मयूखः। दिवसो घस्रः ॥

दीधितिः स्त्रियाम् ॥ पूर्वस्यापवादः ॥

दिनाहनी नपुंसके ॥ अयमप्यपवाद ॥

मानाभिधानानि ॥ एतानि पुंसि स्युः । कुडवः । मस्थः ॥

द्रोणाढकौ नपुंसके च ॥ इदं द्रोणम् । अयं द्रोणः ॥

खारीमानिके स्त्रियाम् ॥ इयं खारी । इयं मानिका ॥

दाराक्षतलाजासूनां बहुत्वं च ॥ इमे दाराः ॥

। नाड्यपजनोपपदानि मणाद्यपदानि ॥ यथासंख्यं नाड्याद्युपपदानि व्रणादीनि पुंसि स्युः ॥ अयं नाडीव्रण । अपाङ्गः । जानपदः । व्रणादीनामुभयलिङ्गत्वे ऽपि पत्नीत्व-निवृत्त्यर्थं सूत्रम् ॥

मरुद्गरुत्तरदृत्विज ॥ अयं मरुत् ॥

ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिवलिकौलिमौलिरविकविक-पिमुनयः ॥ एते पुंसि स्यु । अयमृषिः ॥

ध्वजगजमुञ्जपुञ्जाः ॥ एमे पुंसि ॥

हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः ॥ एते पुंसि ॥ अमरस्तु मुहूर्तोऽस्त्रियामित्याह ॥

पण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः ॥ अयं पण्डः ॥

वंशांशपुरोडाशाः ॥ अयं वंशः । पुरो दाश्यते पुरोडाश । कर्मणि घञ् । भक्ष्याख्यानयोः प्रकरणे पौरोडाशपुरोडाशात्ष्ठनिति विकारप्रकरणे व्रीहेः पुरोडाश इति च निपातनात्प्रकृतसूत्रएव निपातनाद्वा दस्य डत्वम् । पुरोडाशभुजामिष्टमिति माघः ॥

ह्रदकन्दकुन्दबुद्बुदशब्दाः ॥ अयं ह्रदः ॥

अर्घपथिमथ्यृभुक्षिस्तम्बपूगाः ॥ अयमर्घः ॥

पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्क

न्धमृदङ्गसङ्गसमुद्रपुङ्खा ॥ अयं पल्लव इत्यादि ॥

सारथ्यतिथिकुक्षिवस्तिपाण्यञ्जलयः ॥ एते पुंसि । अयं सारथिः ॥

॥ इति पुल्लिङ्गाधिकार. ॥

नपुंसकम् ॥ अधिकारो ऽयम् ॥

भावे ल्युडन्तः ॥ हसनम् । भावे किम् । पचनो ऽग्नि । इध्मवृश्चनः कुठारः ॥

निष्ठा च ॥ भावे या निष्ठा तदन्तं क्लीबं स्यात् । हसितम् । गीतम् ॥

त्वष्यञौ ताद्धितौ ॥ शुक्लत्वम् । शौक्ल्यम् । ष्यञ षित्वसामर्थ्यात्पक्षे स्त्रीत्वम् । चातुर्यम् । चातुरी । सामग्र्यम् । सामग्री । औचित्यम् । औचिती ॥

कर्मणि च ब्राह्मणादिगुणवचनेभ्यः ॥ ब्राह्मणस्य कर्म ब्राह्मण्यम् ॥

यद्यढग्यगञ्वुञ्छाश्च भावकर्मणि ॥ एतदन्तानि क्लीबानि । स्तेनाद्यन्नलोपश्च । स्तेयम् । सख्युर्यः । सख्यम् । कपिज्ञात्योर्ढक् । कापेयम् । पत्यन्तपुरोहितादिभ्यो यक् । आधिपत्यम् । प्राणभृज्जातिवयोवचनोद्गात्रादिभ्यो ऽञ् । औद्गात्रम् । हायनान्तयुवादिभ्यो ऽण् । द्वैहायनम् । द्वन्द्वमनोज्ञादिभ्यो वुञ् । पितापुत्रकम् । होत्राभ्यश्छ । आच्छावाकीयम् ॥

अव्ययीभाव ॥ अधिस्त्रि ॥

द्वन्द्वैकत्वम् ॥ पाणिपादम् ॥

अभाषायां हेमन्तशिशिरावहोरात्रे च ॥ स्पष्टम् ॥

अनञ्कर्मधारयस्तत्पुरुष ॥ अधिकारोऽयम् ॥

अनल्पे छाया ॥ शरच्छायम् ॥

राजामनुष्यपूर्वा सभा ॥ इनसभमित्यादि ॥

सुरासेनाच्छायाशालानिशा स्त्रियां च ॥ परवत् अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात् ॥

रात्रान्हाहाः पुंसि ॥

अपथपुण्याहे नपुंसके संख्यापूर्वो रात्रिः ॥ त्रिरात्रम् । संख्यापूर्वेति किम् । सर्वरात्रः ॥

द्विगुः स्त्रियां च ॥ व्यवस्थया । पञ्चपूली । त्रिभुवनम् ॥

इसुसन्तः ॥ हविः । धनुः ॥

आर्चिः स्त्रियां च ॥ इसन्तत्वेऽपि अर्चिः स्त्रियां नपुंसके च स्यात् । इयमिदं वा अर्चिः ॥

छादिः स्त्रियामेव ॥ इयं छादिः । छद्यतेऽनेनेति छादेश्चुरादिण्यन्तादर्चिशुचीत्यादिना इस् । इस्मन्नित्यादिना ह्रस्व । पटलं छदिरित्यमरः । तत्र पटलसाहचर्याच्छदिषः क्लीबतां वदन्तो ऽमरव्याख्यातार उपेक्ष्याः ॥

मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि ॥ एतेषामभिधायकानि क्लीबे स्युः ।मुखमाननम् । नयनं लोचनम् । लोहं कालम् । वनं गहनम् । मांसमामिषम् । रुधिरं रक्तम् । कार्मुकं शरासनम् । विवरं बिलम् । जलं वारि। हलं लाङ्गलम् । धनं द्रविणम् । अन्नमशनम् । अस्यापवादानाह त्रिसूत्र्या ॥

सीरार्थौदनाः पुंसि ॥

वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च ॥ वक्त्रो वक्त्रम् । नेत्रो नेत्रम् । अरण्यो रण्यम् । गाण्डीवो गाण्डिवम् ॥

अटवी स्त्रियाम् ॥

स्यातामामित्रौ मित्रे चेति च। यत्तु द्विषोऽमित्र इति सूत्रे हरदत्तेनोक्तम्, अमेर्द्विषादिर्णौणादिक इत्रच्। अमेरमित्रं मित्रस्य व्यथयेदित्यादौ मध्योदात्तस्तु चिन्त्यः। नञ्समासे ऽप्येवम्। परवल्लिङ्गतापि स्यादिति तु तत्र दोषान्तरमिति तत्प्रकृतसूत्रापर्यालोचनमूलकम्। स्वरदोषोद्भावनमपि नञोजरमरमित्रमृता इति षाष्ठसूत्रास्मरणमूलकमिति दिक्॥

पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च॥

बलकुसुमशुल्वयुद्धपत्तनरणाभिधानानि॥ बलं वीर्यम्॥

पद्मकमलोत्पलानि पुंसि च॥ पद्मादयः शब्दाः कुसुमाभिधायित्वेऽपि द्विलिङ्गाः स्युः। अमरोऽप्याह॥ वा पुंसि पद्मं नलिनमिति। एवं चार्धर्चादिसूत्रे तु जलजे पद्मं नपुंसकमेवेति वृत्तिग्रन्थो मतान्तरेण नेयः॥

आहवसंग्रामौ पुंसि॥

आजिः स्त्रियामेव॥

फलजातिः॥

फलजातिवाची शब्दो नपुंसकं स्यात्। आमलकम्। आम्रम्॥

वृक्षजाति॥ स्त्रियामेव। क्व चिदेवेदम्। हरीतकी॥

वियज्जगत्सकृत्शकन्पृषत्शकृद्यकृदुदश्वितः॥ एते क्लीबाः स्युः॥

नवनीतावतानानृतामृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि॥ श्राद्धकुलिशदैवपीठकुण्डाङ्गदधिसक्थ्यक्ष्यास्यास्पदाकाशकण्वबीजानि॥ एतानि क्लीबे स्युः॥

दैवं पुंसि च॥ दैवम्। दैवः॥

धान्याज्यसस्यरूप्यपण्यवर्ण्यधृष्यहव्यकव्यकाव्यसत्याप-

र्थात्सर्वादेशोस्तु किं शित्वेन । मैवम् । आभ्यामेभिरित्यादौ विकाराभावार्थतापत्तेः, मोराजीतिवत् । नन्वाभ्यामिन्द्रपक्वमित्यादावन्वादेशत्वविवक्षाविरहे यथा ऊडिदमिति विभक्तेरुदात्तता तथा माभ्यां गा इत्यत्रापि कुतो नेति चेन्न । तत्र प्रकृतेरनुदात्तविधानात् । ऊडिदमिति सूत्रे चान्तोदात्तादुत्तरपदादिति सूत्रादन्तोदात्तादित्यस्यानुवर्तनात् । तथा चान्वादेशे आभ्यामित्यादेः सर्वानुदात्तता, इतरत्र त्वन्तोदात्ततेति विवेकः । स्यादेतत् । साविकाच इत्युदात्तेनेह भाव्यम् । सुः सप्तमीबहुवचनमिति भाष्ये वृत्तौ चोक्तत्वात् । यत्तूडिदमिति सूत्रे हरदत्तेनोक्तम् । इहान्तोदात्तादित्यनुवृत्तिसामर्थ्यात्साविकाच इत्यपि न प्रवर्तते । न च यदीमेनाउशत इति शसो व्यावृत्तौ सामर्थ्योपक्षयः । एकाज्ग्रहणेनैव तद्व्यावृत्तेः । एकाच इत्यस्य चावश्यानुवर्त्यत्वात् । अन्यथा ग्रीवायां बद्धो अपि कक्षआसनि । मत्स्यं नदीन उदनि क्षिपन्तमित्यत्रातिप्रसङ्गात् । आसन्नित्यादयो ह्यन्तोदात्ता एवादेशाः सूत्रे पठिता इति । अत्रेदं वक्तव्यम् । आभ्यामित्यत्र साविकाच इत्यस्य प्राप्तिरेव नास्ति सप्तमीबहुवचनेष्वेष्विति रूपं न तादृगिहास्ति । तथा चात्रैवान्तोदात्तग्रहणस्य चरितार्थत्वात्सामर्थ्यविरहः । तथा च माभ्याङ्गाः, तदस्य प्रियम्, तदस्मै नव्यमित्यादेः सिद्धावपि भिसादौ दोषस्तदवस्थ एव । एभिरग्ने, सुन्वन्ति सोमान्रथसि त्वमेषाम्, मेणातदेषां निहितं, एषु धावीरवदित्यादौ हि ए इत्येव रूपमस्त्येव । तथा च तत्र विभक्तेरुदात्तप्रसङ्गः । न च साविकाच इत्येतत्सूत्रस्थकैयटपर्यालोचनयेष्टापत्तिरिति वाच्यम् । अन्येत्विति वदता कैयटेन तन्मते ऽस्वरसाविष्करणात् । तद्बीजन्तु बहुतरवैदिक-

प्रयोगविरोध एव । अथोच्येन सावेकाच इति सूत्रे हरदत्तोक्तरीत्या सुः प्रथमैकवचनमेव । न च त्वयेत्यत्रातिप्रसङ्गः । सावर्णेति निषेधात् । शेषेलोपष्टिलोप इति पक्षे तु सावेकाच्त्वाभावात्प्राप्तिरेव नास्ति । रूपविवक्षापि विफला । एवञ्च एभिरित्यादौ प्राप्तिरेव नास्तीति । तदपि न । रूपविवक्षाभावे दोषभ्यामित्यत्रातिप्रसङ्गात् । तैत्तिरीये हि अंसाभ्यां स्वाहा दोषभ्यां स्वाहेति मध्योदात्तं पठ्यते । एवं स्थिते सुः सप्तमीबहुवचनमेव ग्राह्यम् । अन्यथा इन्द्रोयातो वासितस्य राजेत्यत्र या इत्यन्तोदात्तं न स्यात् । नहि प्रथमैकवचनं यद्रूपं यानिति तदिहास्ति । अत एव गोश्नोः प्रतिषेधः सार्थकः । तदेवमन्तोदात्तानुवृत्तिसामर्थ्यं प्रथमैकवचनग्रहणं वा शरणमित्येवंरूपस्य प्राग्हरदत्तग्रन्थबललब्धस्य समाधानद्वयस्यापि दुष्टत्वादेभिरित्यादि कथन्निर्वाह्यमिति फलितः पूर्वपक्षः । अत्रोच्यते । सावेकाच इत्यत्राप्यन्तोदात्तादित्यस्यापकर्षान्नोक्तदोषः । वृत्त्यादावननुवर्तितस्याप्यनुवृत्तिस्तु बहुधा दृष्टैव । अत एव तुरुस्तुसूत्रे स्तुवीतेत्यादिसिद्धये पितीत्यस्य निवृत्त्यै सार्वधातुकग्रहणमिति स्थिते शाम्यतीति श्यनं इटं वारयितुं तिङीत्यस्यानुवृत्तिर्वक्ष्यते ॥

एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥ अन्वादेशविषये एतदोश् स्यात्स चानुदात्तस्त्रतसोः परतः तौ चानुदात्तौ स्तः । एतस्मिन् ग्रामे सुखं वसामः अथो ऽत्राधीमहे अतो न गन्तास्मः । अत्रात इति पदे सर्वानुदात्ते । ननु पञ्चमे एतदोनिति भाष्यसम्मतः पाठः । न्यासरीत्या वृत्तिपाठोऽप्येवमेव । पदमञ्जरीरीत्या तु एतदोशिति वृत्तिपाठः । उभयथापि अकारे सिद्धे किमनेनेति चेत् । पाञ्चमिकस्योदात्ततया ऽनु-

दात्तार्थमिह पुनर्वचनमिति गृहाण । त्रतसोरिति वचनं निमित्तभावार्थम् । अन्यथा त्रतसौ चानुदात्तावित्यन्वाचयो विज्ञायेत । स्यादेतत् । त्रतसोः कृतयोः प्रकृतौ लित्स्वरः । ततः शेषनिघातेन त्रतसोरनुदात्तत्वं सिद्धम् । अश्मात्रस्य त्वनुदात्तत्वं विधीयताम् । मैवम् । त्रतसोर्हि कृतयोर्येननाप्राप्तिन्यायेनापवादत्वान्नित्यत्वाच्चानुदात्तोऽशादेशः स्यात् । ततस्तद्विधानसामर्थ्याल्लित्स्वरस्याप्रवृत्तावुत्सर्गः प्रत्ययस्वर एव त्रतसोः स्यात् । यथा गोष्पदमित्यत्र णमुल्लोपेन सहविधानाल्लित्स्वराप्रवृत्तौ प्रत्ययाद्युदात्तत्वे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदं भवति । तस्मात्त्रतसौ चानुदात्ताविति कर्तव्यमेव ॥

द्वितीयाटौस्स्वेनः ॥ द्वितीयायाण्टौसोश्च परत इदमेतदोरेनादेशः स्यात्स चानुदात्तः अन्वादेशे । इद्मोत्र मण्डूकप्लुत्या ऽनुवृत्तिः । अथैनमद्रेः । एनेन । एनयोः । कथन्तर्हि अइउणित्यत्रोदाहृते हेरोहिणीति श्लोके एनादेश इति चेत् । अयं श्रोणीतटं स्पृशति एनं निवारयेति व्यत्यासेन योज्यम् । आशीविषेण रदनच्छददंशदानमेतेन ते पुनरनर्थतया न शक्यमित्यादौ त्वन्वादेशत्वस्याविवक्षा बोध्या । अभून्नृप इत्यादावनद्यतनत्वस्य यथा । अथ कथं प्रक्षालयैतत्परिवर्तयैनदिति । नपुंसकैकवचने एनदिति वक्तव्यात् । वस्तुतस्तु सूत्रएवैनद्वक्तव्यः । एनं एनौ इत्यादि तु त्यदाद्यत्वेन सिद्धम् । एनश्रित इति द्वितीयासमासे स्वेतच्छ्रित इत्येव भवति । नत्वेत एनद्वा । सुपोधात्विति लुका बहिरङ्गेणाप्यन्तरङ्गाणां बाधनात् । न चैवं प्रक्षालयैनदित्यपि न स्यादिति वाच्यम् । अमो लुका लुप्तत्वेपि तकारोच्चारणसाम-

ष्यादेनदादेशप्रवृत्तेः । न चैवमेतच्छ्रितेपि एनदापत्तिः । एकपदाश्रयत्वेनान्तरङ्गे स्वंमोर्लुकि चरितार्थत्वेन बहिरङ्गे समासलुकि अप्रवृत्तेः ॥

आर्धधातुके ॥ अधिकारोयं ण्यक्षत्रियेति यावत् । विषयसप्तमी चेयम् । तेनार्धधातुकोत्पत्तेः प्रागेवादेशेषु प्रवृत्तेषु यथायथ प्रत्यया । तथाहि । अस्तेर्भव्यम् । परसप्तम्यान्तु ण्यति कृते भाव्यमिति स्यात् । अजेः प्रवेयम् । ण्यति तु प्रवैयमिति स्यात् । चक्षिङ आख्येयम् । ण्यति युकि आख्याय्यमिति स्यात् । ब्रुवस्तु अजन्तत्वाद्यति वच्यमिति स्यात् । वाच्यमिति चेष्यते । स्यादेतत् । आङ्गधिकारस्थे आर्धधातुकाधिकारएव जग्ध्यादयो विधीयन्ताम्, मैवम् । जक्षतुराधिजगे अध्यगीष्ट बभूव विव्यतुरित्यत्र घस्लाद्यादेशानामसिद्धतया उपधालोपाल्लोपेत्वगुग्यणामभावापत्तेः । न चातोलोपादयोप्यत्रैव विधीयन्तामिति वाच्यम् । गतो गतवानित्यत्रानुनासिकलोपस्यासिद्धत्वाभावादतोलोपापत्तेः । यदि त्वार्धधातुकोपदेशकाले यदकारान्तमिति व्याख्यायते ऽसिद्धवत्सूत्रञ्च प्रत्याख्यायते तदा ऽन्यतर आर्धधातुकाधिकारः शक्योऽकर्तुम् । नन्वेकश्चेदार्धधातुकाधिकारस्तर्हि विषयसप्तमीत्वपरसप्तमीत्वे कथं व्यवतिष्ठेयातामिति चेन्न । सूत्रद्वयारम्भपक्षेप्याङ्गस्यैकस्यैव ज्ञापकवले नोभयरूपताश्रयणात् । यथा चैतत्तथा नपदान्तसूत्रे उपपादितम् ॥

अदोजग्धि र्ल्यप्ति किति ॥ ल्यविति लुप्तसप्तमीकं पृथक् पदम् । अत्तेर्जग्धिरादेशः स्याल्ल्यपि तादौ किति च । इकार उच्चारणार्थो न त्वनुबन्ध । नुम्प्रसङ्गात् । एवं ब्रुवोवचिरित्यादौ । प्रजग्ध्य जग्धम् । जग्धौ सिद्धेन्तरङ्ग-

त्वात्तिकितीति ल्यब्रुच्यते । ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ॥ तथाहि । पदद्वयसापेक्षं समासं प्रतीक्षमाणो ल्यब्बहिरङ्गः ततः प्राक्किकितीति सिद्धौ जग्धिः । ल्यब्ग्रहणन्तु हित्वदत्वात्वेत्वदीर्घत्वशूडिठामन्तरङ्गाणामपि बाधं ज्ञापयति । दधातेर्हिः, जहातेश्च क्तिः, हित्वा । नेह । विधाय । दोदद्घोः, दत्त्वा । नेह । प्रदाय । जनसनखनां सञ्झलोः, खात्वा । नेह । प्रखन्य । प्रखाय । इह हि ये विभाषेति विकल्पः । द्यतिस्यति मास्थामित्ति किति । स्थित्वा । नेह । प्रस्थाय । अनुनासिकस्यक्विझलोरिति दीर्घः । क्रान्त्वा । नेह । प्रक्रम्य । छ्वोः शूठ् । पृष्ट्वा । द्यूत्वा । नेह । आपृच्छ्य । प्रदीव्य । इट् । देवित्वा । नेह । प्रदीव्य । वस्तुतस्तु ल्यब्ग्रहणं नान्तरङ्गबाधं ज्ञापयितुं किन्तु विध्यर्थं व्यर्थमेव वेति निरूपितमच:परस्मिन्निति सूत्रे ॥

लुङ्सनोर्घस्लृ ॥ अदो घस्लृ स्याल्लुङि सनि च । लृदित्वादङ् । अघसत् । जिघत्सति । यद्यपि घसिः प्रकृत्यन्तरमस्ति तथापि अदेरात्सीददित्सतीत्यनिष्टं रूपं वारयितुं सूत्रम् । अच्युपसङ्ख्यानम् ॥ प्रात्तीति प्रघसः । इदमपि अदेः पचाद्यचि अद इति रूपं वारयितुम् । प्रघस इत्यस्य प्रकृत्यन्तरेणैव सिद्धेः ॥

घञपोश्च ॥ अञि अपि चादेर्घस्लादेशः स्यात् । घासः । प्रघसः । उपसर्गेद इत्यप् ॥

बहुलच्छन्दसि ॥ अदो बहुलं घस्लादेशः स्याच्छन्दसि । घस्तान्नूनम् । लुङि मन्त्रेघसेत्यादिना च्लेर्लुक् । बहुलञ्छन्दस्यमाङ्योगे इत्यडभावः । सग्धिश्च मे । क्तिनि घसिभसोर्हलिचेत्युपधालोपः । समानस्यच्छन्दसीति सभावः । न

च भवति, अत्ताम् । प्रकृत्यन्तरेण सिद्धे सूत्रस्य प्रयोजनं मृग्यम् ॥

लिट्यन्यतरस्याम् ॥ अदेर्घस्लृ वा स्याल्लिटि । जघास । जक्षतुः । जक्षुः । आदतुः । आदुः । प्रकृत्यन्तरस्यासर्वविषयत्वज्ञापनार्थमिदं सूत्रम् । तेन यत्र लिङ्गं वचनञ्च नास्ति तत्र तस्य प्रयोगो न । तत्र लृदित्करणं लुङि प्रयोगस्य लिङ्गम् । घसिश्च सान्तेष्विति अनुदात्तपाठे वलादावार्द्धधातुके । सुघस्यदः क्मरजीति वचनं घमरचि । भूवादौ परस्मैपदिषु पाठाच्छपि परस्मैपदेषु प्रयोगः । अत एवाशीर्लिङि कर्तरि नास्य प्रयोग इति माधवादयः ॥

वेञो वयिः ॥ वेञो लिटि परे वयिर्वा स्यात् । उवाय । ऊयतुः । ऊयुः । लिटिवयोय इति निषेधाद्यकारस्य न सम्प्रसारणम् । वश्चास्यान्यतरस्यांकितीति वकारादेशपक्षे ऊवतुः ऊवुः । वयेरभावे ववौ ववतुः ववुः । वेञ इति सम्प्रसारणनिषेधः ॥

हनो वध लिङि ॥ हन्तेर्वध इत्यादेशः स्यादार्द्धधातुके लिङि । वध्यात् ॥

लुङि च ॥ हनो वधः स्याल्लुङि । अवधीत् । वधादेशोदन्तः । अल्लोपस्य स्थानिवद्भावादतो हलादेर्लघोरिति वृद्धिर्न ॥

आत्मनेपदेष्वन्यतरस्याम् ॥ हनो वधः स्याद्वा आत्मनेपदं यो लुङ् तत्परे अर्धधातुके । आवधिष्ट । आवधिषाताम् । आवधिषत । आहत । आहसाताम् । आहसत । आङोयमहन इत्यात्मनेपदम् । हन सिजिति कित्त्वम् । अनुदात्तोपदेशेति नलोपः ॥

इणो गा लुङि ॥ इणो गा स्याल्लुङि । अगात् ।

अगाताम् । अगुः । अगायि भवता । इण्वदिक इति वक्तव्यम् ॥ अध्यगात् । न केवलकादेशमात्रस्यातिदेशः किन्तु सकलकार्यस्य। तेन इणो यण् स्यात् । अधियन्ति । अधीत्य । एतिस्तुशास्वृति क्यविति हरदत्तः । अन्ये तु गादेशस्यैवातिदेशमास्थाय ससीतयोरायवयोरधीयन्निति भट्टिप्रयोगं समर्थयन्तइति तृतीये स्फुटीकरिष्यामः ॥

णौ गमिरबोधने ॥ अबोधनार्थस्य इणो गमिरादेशः स्याण्णौ ॥ गमयति । बोधने तु प्रत्याययति । इण्वदिकः । अधिगमयति ॥

सनि च ॥ अबोधनार्थस्य इणो गमिः स्यात्सनि । जिगमिषति । बोधने तु प्रतीषिषति । इण्वदिकः ॥ अधिजिगमिषति ॥

इङश्च ॥ इङो गमिः स्यात्सनि । अधिजिगांसते ॥

गाङ् लिटि ॥ इङो गाङ् स्याल्लिटि । अधिजगे । वार्तिकमते लिटीति परसप्तमी । द्विर्वचनेचीति स्थानिवद्भावस्तु न भवति । लिलटीति द्विलकारकनिर्देशेन लावस्थायामेव गाङः प्रवृत्तेः । भाष्यमते तु आर्धधातुकीयाः सामान्येन भवन्तीत्यभ्युपगमात्परनिमित्तता नास्तीति प्रागेवोक्तम् । यद्यपि स्थानिवद्भावेन ङित्वात्तङ् सिद्धस्तथापि गाङ्कुटादिसूत्रेऽस्यैव ग्रहणार्थं ङित्करणम् । न हि स्थानिवद्भावेन गाङिति रूपं लभ्यते । गङ्कुटादिभ्य इति तूच्यमाने कै गै रै शब्दे, इणोगाङ्लुङीत्येतयोरपि ग्रहणं स्यात् । ततश्चागासीष्टः, अगासातां ग्रामौ देवदत्तेनेत्यत्र घुमास्थेतीत्वं स्यात् । गाङ् गतावित्यनेन सह सामान्यग्रहणार्थोऽयं ङकार इति तु न भ्रमितव्यम् । गाते इत्यादौ तङः प्रवृत्तौ तदीयङकारस्य

निवृत्ताकांक्षतया उल्लिखितमज्ञाप्यशरीरन्तु यत्र सानुबन्धका-रपट्टी उच्चार्यते तत्राकृतायामेवेत्संज्ञायामादेश इति । सत्या-मपि वा तस्यां तत्र स्थानिवद्भावेनानुबन्धकार्यं नेति । प्रयोज-नन्तु नन्दना कारिकेत्यत्रोगिल्लक्षणङीबभावः । तथा हि युवोरनाकाविति सूत्रे ऽनुनासिकोकारो युवू निर्दिष्टौ । अन्यथा भुज्यः शंयुरित्यत्रातिव्याप्तेः । तथा च स्थानिवद्भावेनोगि-त्वान्नन्दना कारिकेत्यत्रोगिल्लक्षणो ङीप् स्यात् । नन्दः कार-क इत्यत्र चोगिल्लक्षणो नुम् स्यात् । ननु नुम् स्यादिति स-त्यं ङीप् तु कारिकायामापाद्यताम् । नन्दनायान्तु कथम् । ल्युः कर्त्तरीमनिज् भावे कः किर्घो' मादितोन्यन इत्यमरेण पुंस्त्व-स्योक्तत्वादिति चेन्न । एतत्सूत्रे युवोरिति सूत्रे च नन्दनेति भाष्योदाहरणबलेन ल्युः कर्त्तरीत्यमरस्य प्रायिकत्वात् । तथा च श्रीहर्षः प्रायुङ्क्त । विशिष्य सा भीमनरेन्द्रनन्दनेति । तस्मान्ङीप्नुमोरभावो ज्ञापनफलमिति । अत्रोच्यते । युवो-रित्यत्रानुनासिकपणाठेव युवू न त्वनुनासिकोकारौ । अतो ङीब्नुमौ न । तथा यजमान इत्यत्र टेरेत्वाभावोपि न ज्ञापन-फलम् । टित आत्मनेपदानामित्यत्र अकृतानामेवात्मनेपदानां ग्रहणात् । तङामित्येव वास्तु । अन्यान्यपि सम्भावितानि ज्ञापकफलानि प्रत्याख्यातानि भाष्ये । प्रत्युत ज्ञापना-भ्युपगमे बाधकान्यपि सन्ति । तथाहि । अचिनवमित्यत्र अमा-देशस्य पित्त्वसिद्ध्यर्थं तस्थस्थमीनामिति वक्तव्यम् । अणिञोर-नार्षयोः रुकोलपधित्यादौ स्थानिवित्ति अनुबन्धस्त्यक्तव्यः । वा-रााह्य मकृत्येत्यादौ वृद्धिर्गुणप्रतिषेधश्च यथा स्यात् तदेवं बहुसू-त्रभङ्गापत्तेर्नेदं ज्ञापकं सूत्रकृतोभिमतं किन्तु पूर्वोक्तमेवादितस्य फलं बोध्यम् ॥

विभाषा लुङ्लृङोः ॥ इङो गाङ् वा स्यात् लुङि लृङि च । गाङ्कुटेति ङित्वम् । घुमास्थेतीत्वम् । अध्यगीष्ट । अध्यगीषाताम् । अध्यगीषत । अध्यैष्ट । अध्यैषाताम् । अध्यैषत । अध्यगीष्यत । अध्यैष्यत ॥

णौ च संश्चङोः ॥ गाङ् वा स्यात् सन्परे चङ्परे च णौ । अधिजिगापयिषति । अध्यापिपयिषति । क्रीङ्जीनांणावित्यात्वम् । अध्यजीगपत् । अध्यापिपत् ॥

अस्तेर्भूः ॥ अस्तेर्भूरादेशः स्यादार्धधातुके । भविता । भवितुम् । भवतिनैवाभिमते रूपे सिद्धे ऽस्तेरसितेत्यादिनिवृत्तये योगारम्भः । अथन्तर्हिहामासेत्यादि । अत्राहुः । अनुप्रयोगसामर्थ्यादस्तेर्भूभावो नेति । अन्यथा कस्चानुप्रयुज्यतइति कृभ्वनुप्रेति वा ब्रूयादिति तदाशयः । अथ कथन्तेनासलोकःपितृमान्विनेत्रा, प्रादुरास बहुलक्षयाच्छविरित्यादि । उच्यते । तिङन्तप्रतिरूपकमव्ययमिदमासेति । यद्वा । अस गतिदीप्त्यादानेष्विति भ्वादेः स्वरितेतो रूपमिदम् । भूभावस्तु नास्य शङ्क्यः । अस्तेरिति लुका निर्देशात् ॥

ब्रुवो वचिः ॥ ब्रुवो वचिरादेशः स्यादार्धधातुके । वच परिभाषणइत्यनेन सिद्धे ब्रुवेर्निष्प्रयोगवारणार्थं सूत्रम् । क्रियाफलस्य कर्तृगामितायां स्थानिवद्भावेनात्मनेपदार्थञ्च । शास्त्रार्थं वक्ष्यते मुनिः ॥

चक्षिङः ख्याञ् ॥ आर्धधातुके विवक्षिते । तृजादौ चक्षितेत्यादिनिवृत्तये सूत्रम् । कर्त्रभिप्राये फले आत्मनेपदार्थञ्च । मुनिर्वेदं व्याख्यास्यते । आख्यातेत्यादि तु ख्या प्रकथनइत्यनेनापि सिद्धम् । अत्र वार्तिकानि । चक्षिङः ख्याञ्ख्शाञौ ॥ आख्शाता खशादिर्वा ॥ असिद्धे शस्य यवचनं विभाषा ॥ अस्या-

र्थः। खकारशकारादिरादेशोनेन विधेयः। असिद्धकाण्डे तु णत्वप्रकरणानन्तरं खशात्रः शस्य यो वेति वचनं कर्तव्यम्। तथा च चर्त्वे यत्वं सिद्धमिति खर्परत्वाभावेन खरिचेत्य-स्याप्रवृत्तेर्यत्वपक्षे आख्यातेति सिद्धम्। यत्वाभावपक्षे तु चर्त्वेन क्शातेति रूपम्। प्रयोजनं सौप्रख्ये वुञ्विधिः॥ सुप्रचष्टे सुप्र-ख्यः। आतश्चोपसर्गइति कः। तस्य भावः सौप्रख्यम्। ष्यञ्। योपधाद्गुरूपोत्तमादिति वुञ् तु न भवति। यत्वस्यासिद्धत्वा-दित्यर्थः। तथा सुप्रख्येन निर्वृत्तो देशः सौप्रख्यः। तत्र भावः सौप्रख्यीयः। वृद्धाच्छ न तु धन्वयोपधादिति वुञ्। प्रयोज-नान्तरमाह, निष्ठानत्वमाख्याते। आख्यातइत्यत्र संयोगादेरा-तोधातोर्यण्वत इति न भवति। यत्वस्यासिद्ध्या यण्वत्ताविर-हात्। एवञ्च नख्याख्येति सूत्रे ख्याग्रहणं न कर्तव्यं भवति। रुविधिः पुंख्यानम्॥ यत्वस्यासिद्धतया ऽम्परत्वाभावात्पुमः खयीति रुत्वं नेत्यर्थः। णत्वं पर्याख्यानम्॥ यत्वस्यासिद्धत-या शकारे वानटा व्यवायात्कृत्यच इति णत्वं नेत्यर्थः। सस्था-नत्वं नमःख्यात्रे॥ शर्परेविसर्जनीय इति विसर्गः सिध्यतीत्यर्थः। सस्थान इति जिह्वामूलीयस्य प्राचां संज्ञा। सस्थानत्वं त्विह नेति योज्यम्। णत्वादीनामप्यभावस्यैव प्रक्रान्तत्वात् तस्माद्वुञ्-नत्वरुत्वणत्वानि सस्थानश्चेति पञ्चकं प्राप्तं वारयितुं शस्य यत्वं कृतमिति स्थितम्। स्यादेतत्। ख्या प्रकथनइति धातु-मादाय वुञादिपञ्चकं दुर्वारम्। सत्यम्। सोपि खशादिः। य-त्वविधिरप्युभयसाधारणो. बोध्य इति हरदत्तमाधवादयः। कै-यटस्तु नैतन्मेने। भाष्ये ख्याधातोः खशादित्वानुक्तेश्चक्षिङः ख्याञादेशमेवोपक्रम्य यत्वविधानात् नख्याख्येति सूत्रे ख्याग्र-हणन्तु कर्तव्यमेव व्याख्यात इत्यत्र नत्वाभावाय। ख्याञा-

देशस्तु लाक्षणिकत्वात्तत्र न गृह्यतइति यत्वस्यासिद्धत्वात्प्राप्तिरेव नास्तीति च बोधयितुं प्राङ्न्त्वग्रहणम् । णत्व तु लुभ्यो गामख्यानादिति निपातनान्न भवति । कुत्रुत्वसस्थानत्वानि तु ख्यातौ स्युरेव । ख्यादेशे तु नेति तत्र रूपद्वयं बोध्यम् । अस्मिन्मते आदेशे प्रख्यानादिति प्रयोगोपपत्तेः कथं निपातनमुपन्यस्तमिति चिन्त्यम् । कुत्रादाविव णत्वांशेपि रूपद्वये इष्टापत्ति, अनिष्टत्वे वा ऽनभिधानात्कृत्यल्युटोबहुलग्रहणाच्च तत्र ल्युडेव नेति न्याय्यः पन्था । परमार्थस्तु ख्याधातु सार्वधातुकमात्रविषय । सस्थानत्वं नम ख्यात्रइति वार्त्तिकं तद्भाष्यं चेह प्रमाणम् । आर्धधातुकेपि तत्प्रयोगे उक्तप्रयोजनासङ्गते । एवं णत्वं पर्याख्यानमित्यपि । तथा च नध्याख्येति सूत्रे ख्याग्रहणं न कर्तव्यमेव । माधवहरदत्ताद्युत्प्रेक्षा तु गौरवग्रस्ता उपक्रमादिविरुद्धा । सार्वधातुकेपि क्शाप्रयोगे प्राप्ते ऽनभिधानमात्रालम्बना चेत्यवधेयम् । वर्जने प्रतिषेधः ॥ दुर्जनाः सञ्चक्ष्याः । वर्जनीया इत्यर्थ । असनयोश्च ॥ नृचक्षा रक्षः । छान्दसो वर्णविकारः । भाषायान्तु नृचक्षो रक्ष इति भवतीति कैयटहरदत्तौ । माधवस्तु हे अग्ने नृचक्षाः मनुष्याणा द्रष्टा त्व रक्षः परिपश्येति वेदभाष्ये व्याख्यत् । विचक्षणः । अनुदात्तेतश्चहलादेरिति युच् । अत एवान्तोदात्तः पठ्यते, विचक्षणः प्रथयन्निति । यत्रामृतस्य चक्षणमित्यादौ तु ल्युट् । अत एव लित्स्वरेणाद्युदात्तता । कथं तर्हि पुंख्यानं पर्याख्यानमिति प्रागुदाहृतमिति चेत् । वक्ष्यमाणबाहुलकादित्यवेहि । बहुलन्तण्यन्नवधकगात्रविचक्षणाजिराद्यर्थं, सर्वमकारणापेक्षमेतत् । तणिति संज्ञाछन्दसोर्ग्रहणं तत्र अन्नशब्दे जग्ध्यभावः । अन्नास्म इति निपातनाद्वा सिद्धम् । वधक इति ण्वुलि वधादेशः । अ-

ल्लोपस्य स्थानिवत्त्वाद्वृध्यभावः। क्त्वुन्शिल्पिसंज्ञयोरित्यधिकारे इणोऽवधचेत्युणादिसूत्रेण गतार्थमेतत् । गात्रमिति, इण औणादिके ष्ट्रनि गादेशः। गाङ्धातुना वा सिद्धम् । अजिरमिति वीभावो न। अजिरशिशिरेति निपातनात् सिद्धम् ॥

वा लिटि ॥ चक्षिङः ख्याञ् वा स्याल्लिटि। चख्यौ। चक्शौ। चचक्षे ॥

अजेर्व्यघञपोः ॥ अजेर्धातोर्वी इत्यादेशः स्यादार्द्धधातुके घञमपञ्च वर्जयित्वा। प्रवयणीयः। प्रवायकः। अघञपोः किम् । समाजः। उदाजः। समजः। उदजः। समुदोरजः पशुष्वित्यप्। दीर्घव्याख्यानं किमर्थम्।संवीतिः। घञपोः प्रतिषेधे क्यप उपसङ्ख्यानम्॥ समज्या। संज्ञायां समजेति क्यप्। इह पूर्वसूत्राद्वेत्यनुवर्त्तते। सा च व्यवस्थितविभाषा । तेन घञ्अप्क्यप्सु न। समाजः समजः। समज्येति वलादावार्धधातुके ल्युटि च वा॥ प्रजिता प्रवेता । प्राजनं प्रवयणम् । एवञ्च नार्थो घञपोः प्रतिषेधेन नापि क्यप उपसङ्ख्यानेन नापि वायाविति सूत्रेण। तस्मा, दजेर्वी वेति घञपोः क्यपि चायं न सम्मतः। वलादौ यौ च वान्यत्र नित्यमित्येष निर्णयः ॥ आर्धधातुकइत्यस्य विषयसप्तमीत्वात् प्रागेव प्रत्ययोत्पत्तेर्वीभावे हलादित्वाद्यङ्। वेवीयते। नात्र यङ्लुगस्ति यतो लुका यङ आर्धधातुकस्य विषयत्वापहारात्रार्द्धधातुकव्यक्त्यभिव्यक्तिरिति वीभावस्य नैव प्रसङ्गः। उक्तञ्च, नलुमताङ्गस्येति सूत्रे कैयटेन। लुका यङो विषयत्वापहाराद्विषयसप्तम्याश्रयणेऽप्यसिद्धिरिति ॥

वा यौ ॥ अजेर्वी वा स्यात् यौ। प्रवयणम् । प्राजनम् । इदञ्च पूर्वसूत्रे एव प्रत्याख्यातम् । आर्द्धधातुकाधिकारः समाप्तः ॥

ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ॥ क्षत्रियशब्दः क्षत्रियगोत्रपरः । ऋषेरपत्यमार्षम् । इतश्चानिञ इति ढकि प्राप्ते शिवादिपाठादण् । ठगयमिष्यते । आर्षेयं वृणीत इति दर्शनात्तराच्छुभ्रादिष्वपि पठनीयः । ण्यप्रत्ययान्तात् क्षत्रियगोत्रप्रत्ययान्तादृष्यभिधायिनो गोत्रप्रत्ययान्तात् ञितश्च परयोः युवाभिधायिनोरणिञोर्लुक् स्यात् । कुर्वादिभ्यो ण्यः । तस्माद्यूनि इञ् । तस्य लुक् । कौरव्यः पिता । कौरव्यः पुत्रः । ननु कौरव्यशब्दस्तिकादिषु पठ्यते । ततः कौरव्यायणिरिति हि फिञा भाव्यमिति चेन्न । तत्र हि कुरुनादिभ्यो ण्य इत्यनेन विहितस्य क्षत्रियगोत्रस्य ग्रहणम् । इदन्तु ब्राह्मणगोत्रम् । ऋष्यन्धकवृष्णिकुरुभ्यश्चेत्यण् । तस्माद्यूनि इञ् । तस्य लुक् श्वाफल्कः पिता । श्वाफल्कः पुत्रः । क्षत्रिय, वसिष्ठाद्वृष्यण् तत इञ् । तस्य लुक् । वासिष्ठः पिता । वासिष्ठः पुत्रः । आर्षः, विदाद्यञ् तस्माद्यूनीञ् । तस्य लुक् । वैदः पिता । वैदः पुत्रः।तैकायनि पिता । तैकायनिः पुत्रः । कुत्सातः सौवीरगोत्राद्वान्यत्रेदम् । अन्यथा फेश्छचेति छप्रसङ्गात् । यमुन्दश्चेत्यादिपरिगणनस्य भाष्यविरुद्धत्वात् । एभ्यः किम् । शिवादिभ्योण् । ततो यूनि इञ् । कौहडः पिता कौहडिः पुत्रः । यूनि किम् । वामरथ्यस्य छात्राः वामरथाः । कुर्वादिभ्यो ण्य. । तस्मात् कण्वादिभ्यो गोत्रे इति शैषिकोण् । वामरथस्य कण्वादिवत्स्वरवर्जमिति कुर्वादिषु पाठात् । अत्र शैषिकस्याणो न लुक् । अणिञोः किम् । दाक्षेरपत्यं युवा दाक्षायणः । अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसङ्ख्यानम् ॥ मात्रशब्दः कार्त्स्न्ये क्षत्रियादिजातिं विनापि अब्राह्मणत्वमात्रेण तत. परस्य अणिञ्भ्यां भिन्नस्यापि लुगित्यर्थे । भण्डिजङ्घकर्णखरकौ वैश्यौ ताभ्यामतइञ् तदन्तात्फकौ

लुक् । माण्डिजङ्घायिः पिता पुत्रश्च । एवं कार्णखरकिः ॥

पैलादिभ्यश्च ॥ एभ्यो युवप्रत्ययस्य लुक् स्यात् । पीलाया वेत्यण् । तस्मादणोद्व्यच इति फिञ् तस्य लुक् । पैलः पिता पुत्रश्च । आकृतिगणोयम् । तद्राजाचाणः ॥ इत्यन्तर्गणसूत्रम् । तद्राजसंज्ञकादणः परस्य युवप्रत्ययस्य लुक् स्यात् । द्व्यञ्मगधेत्यणन्तादाङ्गशब्दादणोद्व्यच इति फिञो लुक् । आङ्गः पिता पुत्रश्च ॥

इञः प्राचाम् ॥ गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुक् स्यात्तच्चेद्गोत्रं प्राचां भवति । इह प्राचामवृद्धादित्यादिवत्प्राग्ग्रहणं विकल्पार्थं नेत्यत्र व्याख्यानं शरणम् । पन्नं प्राप्तं अगारं येन स पन्नागारः । तत इञ् यञिञोश्चेति फक् । पान्नागारिः पिता पुत्रश्च । मन्थरा मन्दीभूता एषणा यस्य स मन्थरैषणः मान्थरैषणिः पिता पुत्रश्च । प्राचां किम् । दाक्षिः पिता दाक्षायणः पुत्रः ॥

न तौल्वलिभ्यः ॥ तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य लुङ् न स्यात् । पूर्वेण प्राप्तो निषिध्यते । तुल उपमाने । औणादिको वलच् । तुल्वलः । तत इञि फक् तौल्वलिः पिता तौल्वलायनः पुत्रः । तौल्वलिर्तैल्वालिधारयतिपारयतिभ्यां नंद्यादित्वाल्ल्युः । तत इञ् । धारणिपारणि । दैवलिपि । दैवमित्रि । दैवयज्ञि । देवा मित्रमस्य देवेभ्यो यज्ञोस्येति विग्रहः । प्राणेहति । चापट्कि । आनराहानि । श्वाफल्कि । आनुमति । आहिंसि । आसुरि । आयुधि । नैमिषि । आसिबन्धकि । बैकि पौष्कि । पुष्करे सीदतीति पुष्करसत्, अनुहरतीत्यनुहरत् चाव्हादौ अनुशतिकादौ च । पौष्करसादि आनुहराति । पुष पुष्टौ, यत् । पुष्यः पौष्यि । वैरकि । वैराति । विलक्षणौ कर्णाव-

स्य विकर्णः । वैकार्णि । कामलि । करेणुं पालयतीति करेणुपालः । कारेणुपालि ॥

इति श्रीशब्दकौस्तुभे द्वितीयस्याध्यायस्य
चतुर्थे पादे प्रथममाह्निकम् ॥

तद्राजस्य बहुषु तेनैवास्त्रियाम् ॥ बहुष्वर्थेषु विद्यमानस्य तद्राजस्य लुक् स्यात्तेनैव लुग्भाग्जातीयेनैव कृतं चेद्बहुत्वं न तु स्त्रियाम् । अङ्गाः । वङ्गाः । सुह्माः । पुण्ड्राः । मगधाः । तेतद्राजा इत्यादीनामिह संज्ञा । लोहध्वजा. ॥ व्रीहिमताः । इह तु ञ्यादयस्तद्राजा इति । तद्राजस्येति किम् । औपगवा । राघवाः । यादवाः । कथन्तर्हि रघूणामन्वयं वक्ष्यइति । निरुध्यमाना यदुभिः कथं चिदिति च । उच्यते । रघ्वपत्ये रघुशब्दो लक्षणया वर्तते । एतच्च वञ्ह्च इञ इति सूत्रे पदमञ्जर्यां स्पष्टम् । नन्वेवं परश्चेति सूत्रे बभ्रुर्मण्डुर्लमक इत्यादीनामपशब्दत्वपरं भाष्य विरुध्येतेति चेन्न । भाष्यस्य शक्तिभ्रमप्रयुक्तपरत्वात् । इष्यते हि गोणीशब्दस्य गोणीसादृश्यशक्तिभ्रमाभ्यां गवि प्रयुक्तस्य साधुत्वे । एतेन सोयमित्यभिसम्बन्धात्तद्धितेन विना यदि बभ्र्वादयः प्रयुज्येरन्नपत्यनियमो भवेदिति हरिश्लोकोपि व्याख्यातः । बहुषु किम् । आङ्ग । वाङ्ग । तेनैव किम् । आङ्गदेवदत्तयज्ञदत्ताः । यद्यपीह बहुत्वमाङ्गेप्यन्वेति तथापि नेदं लुग्भाजोर्थ एव विश्रान्तम् । देवदत्तादिगतत्वात् । नन्वेवं भार्गवश्च वात्स्यश्च आग्रायणश्च भृगुवत्साग्रायणा इत्यत्र लुङ् न स्यात् । उत्तरसूत्रेष्वपि तेनैवेत्यधिकारात् । आग्रायणे च नडादिफको लुगभावात् । सत्यम् । तेनैवेत्यस्य तज्जातीयेनेति व्याख्यातत्वाददोषः । अपत्यतयेह साजात्यात् । यद्येवं गार्ग्यश्च काश्यपश्च गालवश्चेत्यत्र गालवे ऋष्यणो लुगभावेपि अपत्यतया साजात्या-

यञञोर्लुक्प्रसङ्गः। अत्राहुः।लोप्यलोपिभिरपत्यप्रत्ययैः कृते बहुत्वे विकल्प । भृग्वत्साग्रायणेषु, अगार्ग्यकाश्यपगालवानामित्युभयथापि सूत्रनिर्देशात्। अस्त्रियां किम्। आङ्ग्यः स्त्रिय। स्यादेतत्। आङ्गस्यापत्यानि बहूनि, अणोद्व्यच इति फिञ्। तस्य तद्राजाच्चाण इति गणसूत्रेणाब्राह्मणगोत्रमात्रादिति वार्त्तिकेन वा लुक्। अङ्गा। वैदस्यापत्यानि बहूनि, अतइञ् ण्यक्षत्रियेति लुक् विदा।अत्र यूनि बहुत्वान्वयेपि गोत्रस्य तद्राजवाच्यस्यैक्याल्लुङ्न स्यात्। किञ्च विदानामपत्यं माणवकः वैदः वैदौ। अत्र युवबहुत्वाभावेपि गोत्रबहुत्वादतिव्याप्ति। सत्यम्। गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक्। एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनीति वार्त्तिकद्वयेन सिद्धम्। यद्वा। अव्याप्त्युद्धारः सूत्रेणापि सुकरः। तथाहि। तद्राजान्तं यद्बहुष्विति व्याख्यास्यामः। न चैवं प्रतिकृतिबहुत्वेतिप्रसङ्गः। तेनैवेत्यस्य लोपिप्रत्ययार्थजातीयेनेत्यर्थात्। गोत्रयूनोरपत्यतया सजातीयत्वेपि प्रतिकृतेर्विजातीयत्वात्। नापि वैदो वैदावित्यत्रातिव्याप्तिः। गोत्रेलुगचीति सूत्रेण इञि विवक्षितएवालुक्प्रवृत्तेः। न च यून्युपसङ्क्रमानन्तरं पुनर्युवबहुत्वे इव तद्द्वित्वैकत्वस्थले लुकः प्राप्तिरस्ति युवबहुत्वे तु पुनर्लुक्। न च पुनरलुक् शङ्क्यः। समर्थानांप्रथमादित्यधिकारात्। विभक्तिविपरिणामेन हि गोत्रप्रत्ययस्य प्रथमस्य अलुगित्यर्थः। प्राथम्यं च अर्थान्तरेऽनुपसंक्रान्तत्वम्। अत एवात्रिभरद्वाजिकेति सिद्ध्यति। अत्रेरपत्यानि इतश्चानिञ इति ढक्। भरद्वाजस्यापत्यानि बिदाद्यञ्। तत उभयत्र युवबहुत्वे अतइञ् तस्य ण्यक्षत्रियेति लुक्, ढको ऽत्रिभृग्विति, अञो यञञोश्चेति। ततो अत्रिभरद्वाजानां मैथुनिकेति द्वन्द्वाद्वुन् तस्याकादेश।

यदि द्वितीयमर्थमुपसंक्रान्तस्यापि अलुक् स्यात्तदा इहाप्यत्र स स्यात् । गोपवनादिगणे गर्गभार्गविकाग्रहणं चेह ज्ञापकम् । गर्गशब्दाद्यञ् तस्य लुक् । भृगुशब्दादृष्यण् तदन्ताद्यून्यतइञ् तस्य लुक् गर्गभृगूणां मैथुनिकेति वुन् । अत्रात्रिभृग्विति प्राप्तलुकं निषेद्धुं हि गोपवनादिषु पाठः । स च द्वितीयार्थोपसंक्रमेऽप्यलुगिति पक्षे व्यर्थः स्यात् । इदं त्ववधेयम् । आङ्गी च वाङ्गश्च सौह्मश्चेति द्वन्द्वे आङ्गीशब्देन स्त्रीत्वयुक्तानामर्थानामभिधानात्तदणो लुक् न भवति । अन्यस्य तु स्यादेव । आङ्गीवङ्गसुह्मा इति । इह भाष्ये तेनैवेति प्रत्याख्यातम् । अतो गार्ग्यश्च चैत्रश्च मैत्रश्चेत्यत्रापि लुग्भवतीति प्रतीयते तज्जातीयत्वस्यानुक्तेश्च । तथापि सूत्रशेषे अथ यो लोप्यलोपिनां समास इति भाष्यं व्याचक्षाणेन कैयटेन तेनैवेति वचनादलोपिसंनिधिकृतं बहुत्वमिति प्राकारि लुगित्युक्त्या तेनैवेत्यंशस्य भाष्याभ्युपगतत्वं लभ्यते । अत एव यञन्तं यद्बहुष्विति पक्षे काश्यपस्य प्रतिकृतयो बह्व्यः काश्यपा इत्यत्रापत्यबहुत्वाभावान्मा भूत् आङ्गस्य प्रतिकृतयो बह्व्य इत्यत्र तु स्यादेव इह गोत्रग्रहणाभावादित्याशङ्क्य तेनैव ग्रहणबलेन समाहितं हरदत्तेनेति ध्येयम् । ननु आङ्गश्चेत्यादिविग्रहे भाष्यादिसंमतोऽपि लुक् दुरुपपादः, तद्राजान्तस्य बहुप्रवृत्तेरिति चेन्न । अजहत्स्वार्थायां बहुषु वृत्ते स्पष्टत्वात् । कथं तर्हि सेयं दुःस्था येत्यादि प्रागुक्तमिति चेत् । द्विवचनबहुवचनान्तैः विग्रहो नेत्याशयेनेति गृहाण । तथाहि । लौकिके विग्रहवाक्ये स्वार्थमात्रद्योतिता स्पष्टा । प्रक्रियावाक्येऽपि शक्तिप्रवेशात्प्राक् प्रकृत्येकवचनं दुर्वारमेव । राजपुरुषादौ पशुपादिवत् । अथ कथं कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलमिति वेणीसंहारम् । उच्यते । कुर्वादिभ्यो ण्य इति कौरव्यशब्दं व्युत्पाद्य

तत्रसाधुरिति यत् कार्य । एतेन तस्यामेव रथो पाण्ड्या इति व्याख्यातम्। वृद्धेत्कोसलेत्यत्र पाण्डयोर्ड्यण् इत्युपसङ्ख्यानात् ड्यणस्तद्राजत्वेपि पाण्ड्ये साधवः पाण्ड्या इति यत्प्रत्ययान्तत्वेन साधुत्वनिर्वाहात् ॥

यस्कादिभ्यो गोत्रे॥ एभ्यः परस्य गोत्रप्रत्ययस्य लुक् स्यात् । बहुषु तेनैवास्त्रियामित्यनुवर्तते । गोत्रेकुञ्जादिभ्यश्च्फञिति गोत्रप्रत्ययप्रकरणं ततोन्यत्र लौकिकस्य गोत्रस्य ग्रहणम् । अपत्याधिकारे तु गोत्रग्रहणसामर्थ्यादेव पारिभाषिकस्य ग्रहणम् । यद्यपि कृत्रिमस्यैवान्यत्र ग्रहणं प्राप्तं तथापि लौकिकस्य ज्ञापक वक्ष्यते । तेनानन्तरापत्येपि लुक् । यस्काः लह्याः । बहुष्विति किम् । यास्कः । लाह्य । स्त्रियां तु यास्काः स्त्रिय । गोत्रइति किम्। यास्काः छात्राः । यस्क, लह्य, द्रुह्य, अय स्थूण, तृणकर्ण, एते पञ्च शिवादिषु पठ्यन्ते। तत परेभ्यः षड्भ्य इञ्। सदामत्त कम्बलभार, अहिर्योग, कर्णाटक, पिण्डीजङ्घ, वकसक्थ। ततः परेभ्यश्चतुर्भ्यः शुभ्रादिभ्यश्चेति ढक्। विस्ति, कुद्रि, अजवस्ति, मित्रयु, तत परेभ्यो द्वादशभ्य इञ्। रक्षोमुख, जङ्घारथ. मन्थक, उत्कास, कटुक, पुष्करसत्, विपथ, उपरिमेखल, क्रोष्टुमान, क्रोष्टुपाद, क्रोष्टुमाय, शीर्षमाय । नन्विह पुष्करसदः पाठो व्यर्थः । स हि बाह्वादिस्त्वादिञन्त । बह्वचइञ प्राच्यभरतेष्वित्येव सिद्धम्। न चायं प्राच्यो नेति भ्रमितव्यम् । तौल्वल्यादिष्वेतत्पाठस्य वैयर्थ्यापत्तेः । तस्य हि इञ प्राचामिति प्राप्तस्य लुकः प्रतिषेधः फलम् । अत्राहुः । नगोपवनादिभ्य इति प्रतिषेध वाधितुमिहास्य पाठ । गोपवनादिगणे हि तौल्वल्यादय इति कैश्चित्पठ्यतएव । यैर्न पठ्यते तैरप्यत एव ज्ञापनात्तौल्वल्यादिप्रकृतिभागानां तुल्वलादीनां गोपवनाद्यन्त-

भौवोनुमेय इति । खरपद । अस्य नडादित्वात्फक् । पदक, ऋपक । आभ्यामतइञ् । भलन्दन, अस्माच्छिवायण । भडिल भडिक, भडिव, भण्डित, एभ्यश्चतुर्भ्योंऽश्वादिभ्यः फञ् ॥

यञञोश्च ॥ गोत्रे यौ यञञौ तदन्तं यद्बहुषु तदवयवयोर्यञञोर्लुक् स्यान्न तु स्त्रियाम् । गर्गाः वत्साः विदाः उर्वाः । स्त्रियां तु गार्ग्यः स्त्रियः । गोत्रे किम् । द्वीपादनुसमुद्रं यञ्, द्वैप्याः । उत्सादिभ्योऽञ्, औत्साः । अथ कथं पौत्रा दौहित्रा विदा इत्यन्तत्वात् । उच्यते । अपत्याधिकारादन्यत्र लौकिकं गोत्रन्तच्चेह प्रवराध्यायप्रसिद्धम् । न च पौत्रादिस्तथा । इदं च स्त्रीपुंसाभ्यामिति सूत्रे कैयटेन स्फुटीकृतम् । यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् । एकद्वयोरिति भावप्रधानो निर्देशः । गार्ग्यस्य गार्ग्ययोर्वा कुलं गर्गकुल गार्ग्यकुलं वा । यञादीनां किम् । आङ्गकुलम् । एकद्वयो किम् । गर्गाणां कुल गर्गकुलम् । तत्पुरुषे किम् । गार्ग्यस्य समीपमुपगार्ग्यम् । षष्ठ्याः किम् । परमगार्ग्य ॥

अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ॥ एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् बहुत्वे । अत्रिशब्दादितश्चानिञ इति ढक् । इतरेभ्य ऋष्यण् । अत्रय भृगव इत्यादि ॥

बह्वच इञः प्राच्यभरतेषु ॥ बह्वचः परो य इञ् प्राच्यगोत्रे भरतगोत्रे च वर्तमानस्तस्य लुक् स्यात् । पन्नागाराः । मन्थरैषणाः । भरतापत्ये तु युधिष्ठिरा । अर्जुनाः । युधिष्ठिरार्जुनशब्दाभ्यां कुर्वादिण्यापवादो बाह्वादिलक्षण इञ् । भरतापत्ये अभेदोपचाराद्भरतशब्द । ते च भरता प्राच्या एव । द्वन्द्वस्तु गोबलीवर्दन्यायेन । सामान्यविशेषवाचिनोर्वाचनिकद्वन्द्वनिषेधो यद्यप्युक्तस्तथापि तस्यानित्यता अनेनैव ज्ञाप्यते ।

तत्फलं तूक्तमेव। प्राग्ग्रहणेनैव सिद्धे भरतानां पृथगुपादानमन्यत्र प्राग्ग्रहणे एषां ग्रहणं नेति ज्ञापनार्थम्। तेन इञः प्राचामिति लुक् भरतयुवप्रत्ययस्य न भवति। आर्जुनिः पिता आर्जुनायनः पुत्रः॥

न गोपवनादिभ्यः॥ एभ्यो गोत्रप्रत्ययस्य लुक् न स्यात्। बिदाद्यन्तर्गणोऽयम्। स च हरितादप्रागेव। तथा च वार्तिकम्। गोपवनादिप्रतिषेधः प्राग्घरितादिभ्य इति। आगणान्ताद्ग्रहणे प्राप्ते हरितात्प्राक्सूत्रकरणं कर्त्तव्यमिति भावः। गौपवनाः। शैग्रवाः। नेह। हरिताः॥

तिककितवादिभ्यो द्वन्द्वे॥ एभ्यो गोत्रप्रत्ययस्य बहुषु लुक् स्याद् द्वन्द्वे। यद्यपि द्वन्द्वरूपाण्येव गणे पठ्यन्ते तिकादीनि पूर्वपदानि कितवादीन्युत्तरपदानि तथापि तिकादिभ्य इत्युक्ते पूर्वपदेष्वेव लुगाशङ्क्येत। इष्यते तूत्तरपदेष्वपि। अतस्तिककितवादिभ्य इत्युक्तम्। तैकायनयश्च कैतवायनश्च। तिकादिभ्यः फिञ्। तस्य लुक्। तिककितवाः॥

उपकादिभ्योऽन्यतरस्यामद्वन्द्वे॥ एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुक् वा स्यात्। द्वन्द्वे चाद्वन्द्वे च। सूत्रशेषस्य अद्वंद्वे इत्यस्य तु द्वंद्वग्रहणमिह नानुवर्त्ततइत्यर्थः। एषां मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते। औपकायनाश्च लामकायनाश्च नडादिभ्यः फक्। तस्य लुक्। उपकलमकाः। भ्राष्ट्रककपिष्ठलाः। कृष्णाजिनयः। कृष्णसुन्दराः। एषां पूर्वेण नित्यमेव लुक्। अद्वन्द्वे त्वनेन विकल्पः। उपकाः औपकायनाः। लमकाः। लामकायनाः। भ्राष्टकाः। भ्राष्टकाः। कपिष्ठलाः। काापिष्ठलयः। कृष्णाजिनाः। कार्ष्णाजिनयः। कृष्णसुन्दराः। कार्ष्णसुन्दरयः। शेषाणान्तु द्वन्द्वेऽपि विकल्प इति वृत्तिः। भाष्ये तु भ्राष्टकिकापिष्ठलय इत्यु-

दाहरणात्तिकिकितवादिष्वस्य पाठो ऽनार्ष इति कैयटः ॥

आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ॥ एतयोरवयवस्य गोत्रप्रत्यस्य अणो यञश्च बहुषु लुक् स्यात् अवशिष्टस्य प्रकृतिभागस्य यथासंख्यम् अगस्ति कुण्डिनच् एतावादेशौ स्त । अगस्तय । कुण्डिनाः । कुण्डिनीशब्दस्य यञि भस्याढइति पुंवद्भावे नस्तद्धित इति टिलोपे कौण्ड्य इति प्राप्तम् । अस्मादेव तु निपातनान्न पुंवत् । ईकारस्य यस्येति लोपः । तस्य स्थानिवत्त्वा दाभीयत्वेनासिद्धत्वाद्वा टिलोपो न । चकार स्वरार्थः । मध्योदात्तो हि कुण्डिनीशब्दः । कुण्डमस्त्यस्या इति मत्वर्थीयस्य इनेरुदात्तत्वात् । तदादेशोपि आन्तरतम्यात्तथा स्यात् । कथं तर्हि, वासिष्ठकुण्डिनौ तद्वदुपमन्युपराशराः । चतुर्णामेकगोत्रत्वान्न विवाहः परस्परमिति ॥ उच्यते । नायं कुण्डिनजादेशः किन्तु कुडि दाहे इत्यस्मादौणादिके इनच्प्रत्यये उज्ज्वलदत्तादिभिर्व्युत्पादितः स्वतन्त्र एवायं शब्दः । अत एव वासिष्ठमैत्रावरुणकौण्डिन्येति, होताकुण्डिनवन्मित्रावरुणवद्वसिष्ठवदित्यध्वर्युरिति बौधायनसूत्रं सङ्गच्छते । आपस्तम्बसूत्रमप्येवम् । एतेन वसिष्ठमित्रावरुणौ कुण्डिनश्च महातपा इति मत्स्यपुराणप्रवराध्यायप्रयोगोपि व्याख्यात इति दिक् । इह यदि लुक निवर्त्यविशिष्टयोरेवादेशौ क्रियेते तदा कौण्डिना इत्यस्य सिद्धावपि आगस्तीया इति न सिद्ध्यति । तथाहि । अगस्त्यशब्दादृष्यणि आगस्त्यः । ततो बहुवचनान्ताद्वृद्धाच्छे विवक्षिते गोत्रेऽलुगचीति लुक्प्रतिषेध । प्रत्ययविशिष्टस्यागस्त्यादेशपक्षे तु तन्निषेधाभावाद्वृद्धत्वापगमे शैषिकोणेव स्यात् । उपपादितं चेद प्रत्ययस्यलुक्श्लुसूत्रे ॥

सुपो धातुप्रातिपदिकयो ॥ एतयोरवयवस्य सुपो लुक्

स्यात् । पुत्रीयति । राजपुरुष. ॥

अदिप्रभृतिभ्यः शपः ॥ एभ्यः शपो लुक् स्यात् । अत्ति। कथं तर्हि वासुदेवं परित्यज्य योन्यं देवमुपासतइति । उच्यते । अस गतिदीप्त्यादानेष्विति भ्वादेरुभयपदिनो रूपमिदम् । उपादत्ते इत्यर्थात् । अथ कथम् आश्वसेयुर्निशाचरा इति भट्टिः । न विश्वसेत्पूर्वविरोधितस्येति च पञ्चतन्त्रम् । पचाद्यजन्तादाचारक्विपि भविष्यति । गणकार्यमनित्यमिति तु जयमङ्गला । तत्र ज्ञापकं तु घटादयः षित इत्यत एव सिद्धे क्षमूष् सहनइति षित्करणम् ॥

बहुलं छन्दसि ॥ छन्दसि बहुलं शपो लुक् स्यात् । वृत्रं हनति । अहिः शयते । अन्येभ्योपि भवति । त्राध्वं नो देवा. ॥

यङोचि च ॥ यङो ऽच्प्रत्यये परे लुक् स्यात् । चकाराद्बहुलमन्यत्रापि । लोलुवः । पोपुव । पचाद्यच् । इदमेव अचि लुग्विधानं ज्ञापकं सर्वधातुभ्यः पचाद्यजिति । बाहुलकात् वेभिदीति चेच्छिदीतीत्यादि । इह अजिति प्रत्याहारो न गृह्यते । तथाहि सति अणीत्येवावक्ष्यत् । यङन्तादन्यस्याचो ऽसम्भवादिति हरदत्त । न च पापच्ये पापचै इत्यत्र सम्भवः । शपा व्यवधानात् । एकादेशस्य स्थानिवद्भावात् लिटस्तझयोरित्यशः सम्भवोस्तीति चेन्न । आम्प्रसङ्गात् । यदि तु अमन्ते इति निषेधात् मन्त्रे कथंचित्तत्संभवस्तर्हि यङा साहचर्यादिति युक्त्यन्तरमन्वेषणीयम् ॥

जुहोत्यादिभ्यः श्लुः ॥ एभ्य शपः श्लुः स्यात् । जुहोति । मण्डूकप्लुत्येह शब्ननुवर्तते । न त्वनन्तरोपि यङ् । श्लाविति सूत्रारम्भात् । अन्यथा यङो लुकीव श्लावपि सन्यङोरित्येव सिद्धे किं तेन ॥

बहुलं छन्दसि ॥ दाति प्रियाणि । अन्येभ्यश्च भवति । पूर्णा विवष्टि । जनिमा सखिभ्यिक्तः ॥

गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ एभ्यः सिचो लुक् स्यात्परस्मैपदेषु । इह मण्डूकप्लुत्या लुगनुवर्तते न त्वनन्तरोपि श्लुः व्याख्यानात् । यद्यपि गामादाग्रहणेष्वविशेषस्तथापि गातीति निर्देशादिहेणोगालुङीत्यस्य ग्रहणं गादेशस्यैव ह्ययं श्तिपि शब्लुका निर्देशः । ननु नायं गादेशः । लुङ्येव तद्विधानात् । सत्यम् । तथापि प्रकृतिवदनुकरणमिति स्थानिवद्भावातिदेशाच्छब्लुक् । भवतेर इत्यादौ तु अस्त्यादेशानुकरणे अतिदेशातिदेशेन प्राप्तोपि शब्लुक् प्रकृतिवदित्यस्यानित्यत्वान्नेत्यवधेयम् । हरदत्तस्तु स्थानिवद्भावात्प्रकृतिवदनुकरणमिति वा गातीत्यत्र शब्लुगित्याह । तत्र शब्दस्यासङ्गतिः स्पष्टैव । वस्तुतस्तु गापोर्ग्रहणे इण्पिबत्योरिति वार्तिकमेवात्र शरणम् । निर्देशादेव व्यक्तम् । लुग्विकरणग्रहणमिति तु भाष्ये प्रौढिवादमात्रम् । निर्देशस्य सन्दिग्धत्वात् । गायतेरपि हि सिचि कृतात्वस्यानुकरणं गातीति सम्भवत्येवेत्यवधेयम् । अगात् अस्थात् अदात् अधात् । पिबतेरेवेह ग्रहणं न तु पातेः । लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैवेति परिभाषया । अपात् । अभूत् । भूधातोः स्वतन्त्रस्यास्त्यादेशस्य चेदं रूपं तुल्यम् । न चादेशस्य लुग्विकरणत्वात्पातिवदग्रहः शङ्क्यः । आर्धधातुकैकविषयतया हेतोः स्वरूपासिद्धेः गापोग्रहणेन इणादेशपिबत्योरेव ग्रहणमित्युक्तम् । नेह । कै गै शब्दे । अगासीत् । पा रक्षणे । अपासीत् । यमरमेतीट्सकौ । पै शोषणइत्यस्यापि लाक्षणिकत्वादग्रहणं बोध्यम् । परस्मैपदेषु किम् । अगासातां ग्रामौ देवदत्तेन । अत्र कश्चित् सूत्रे भीधातोर्ङसौ निर्देशः। एरनेकाच इति यण् । तेन

मा भैः शशाङ्क मम शीधुनि नास्ति राहुरिति प्रयोगः सङ्गच्छतइत्याहु। एवं तु मा स्म भैषीस्त्वयाद्यैव कृतार्थो द्रक्ष्यते यतिरिति भट्टिर्विरुध्येत। माभैरिति तु मामादिकम्। यद्वा। आगमशासनानित्यतयास्तिसिच इतीटो विरहे सिपो हल्ङ्यादिलोपे सिचो विसर्गः॥

विभाषाघ्राधेट्शाच्छासः॥ एभ्यः सिचो वा लुक् स्यात्परस्मैपदेषु। धेटः पूर्वेण प्राप्ते इतरेषामप्राप्ते विभाषेयम्। अघ्रात्, अधात्, अशात्, अच्छात्, असात, पक्षे ऽघ्रासीदित्यादि। परस्मैपदेषु किम्। अघ्रासन्त सुमनसो देवदत्तेन। कर्मणि तङ्॥

तनादिभ्यस्तथासोः॥ एभ्यः सिचो वा लुक् स्यात्तथासोः परतः। अतत। अतथाः। अतनिष्ट। अतनिष्ठाः। असात। असाथाः। जनसनेत्यात्वम्। पक्षे असनिष्टाः। असनिष्ठ। यूयमतनिष्टेत्यत्र तु न लुक्। आत्मनेपदैकवचनेन च थासा साहचर्यात्तथाभूतस्यैव तशब्दस्य ग्रहणात्॥

मन्त्रे घसह्वरनशवृदहाद्वृच्कृगमिजनिभ्यो लेः॥ एभ्यो लेर्लुक् स्यान्मन्त्रे। अक्षन्नमीमदन्त हि। लुङ्सनोर्घस्लृ। गमहनेत्युपधालोपः। शासिवसीति षत्वम्। अट्। विभाषाछन्दस्यमाङ्योगेपीत्यडभावे तु मात्वाष्टकासोअशिवासउक्षन्। ह्वृ कौटिल्ये, अस्य कृतगुणस्यानुकरणं ह्वरेति, अकारस्तूच्चारणार्थः। माह्वार्मित्रस्य धूर्तिः। प्रणङ्मर्त्यस्य। नशेर्वेति कुत्वम्। पक्षे प्रश्चेतिषत्वे डाडिति रूपं बोध्यम्। वृइति वृङ्वृञोः सामान्यग्रहणम्। सुरुचोवेनआवः। दह। मानआधक्। आदित्याकारान्तग्रहणम्। प्रा पूरणे। आङ्पूर्वः। आप्राद्यावापृथिवीअन्तरिक्षम्। वृज्। परावर्ग्भारभृद्यथा। अक्रन् कर्म कर्मकृतः। त्वेरथि

जागृवांसो अनुग्मन् । अश्नत वा अस्य दन्ताः । यद्यप्यैतरेयब्राह्मणे हरिश्चन्द्रं प्रति वरुणस्येदं वचनं तथापि मन्त्रग्रहणमिह सूत्रे छन्दस उपलक्षणमिति ब्राह्मणेपि लुक् सिध्यति । इह सूत्रे विभाषेत्यनुवर्तते । तेन, नता अगृभ्णन्नजनिष्ट हि ष इत्यादि सिद्धम् । एतेन इह सूत्रे सिच इत्यनुवर्त्य सिच्स्थानिभूतो यो लिरिति व्याख्यानाल्लिङ्लिटोर्नेति हरदत्तग्रन्थः परास्तः । लोपस्य वैकल्पिकतया छन्दसि रूपान्तरस्यानापाद्यतया च सिजनुवृत्तेर्वैफल्यात् । अत एव सिचि प्रकृते लिग्रहणमादि सिचोन्यतरस्यामित्येतस्याप्रवृत्त्यर्थमिति प्रकृतसूत्रस्थहरदत्तग्रन्थश्लिष्टरीत्यन्तःस्थकैयटग्रन्थश्च परास्तः ॥

आमः ॥ आम परस्य लुक् स्यात्, ईहांचक्रे । लक्षणप्रतिपदोक्तपरिभाषया नेह । अमगत्यादिषु, आम । आमतु । तिबाद्यपवादत्वाल्लावस्थायामेवायं लुक् । तेनामन्तस्यातिङन्तत्वादनिघातस्ततः परस्य निघातश्च सिध्यतीति नलुमतेति सूत्रे प्रतिपादितम् । न चैवमामन्तस्य पदत्वं न स्यादिति वाच्यम् । सुबन्ततया तत्सिद्धेः । यथा च सुपो न श्रवणं तथा कृन्मेजन्त इति सूत्रे प्रतिपादितम् ॥

अव्ययादाप्सुपः ॥ अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् । तत्र शालायाम् । अथ । अत्र वार्तिकम् । अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावादिति । न च स्त्रियामिति सूत्रे स्त्रीसमानाधिकरणादिति पक्षः स्थित । भूतमियं ग्रामणीत्यादावतिव्याप्तेः । विहितविशेषणमेव । अत्युच्चैसौ ॥

नाव्ययीभावादतोम्त्वपञ्चम्याः ॥ अदन्तादव्ययीभावात्सुपो न लुक् पञ्चमीभिन्नस्य तु सुपोमादेशः स्यात् । उपकुम्भं तिष्ठति । अपञ्चम्याः किम् । उन्मत्तगङ्गादागतः ।

अतः किम् । अधिहरि ॥

तृतीयासप्तम्योर्बहुलम् ॥ अनयोर्बहुलमम् स्यात् । पूर्वेण नित्ये प्राप्ते आरम्भः । उपकुम्भमुपकुम्भेन वा कृतम् । उपकुम्भमुपकुम्भे स्थितः । अत्र वार्तिकम् । सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यम् ॥ ऋद्धिः, सुमद्रम् । नदीसमास, उन्मत्तगङ्गम् । संख्यावयव, एकविंशतिभारद्वाजम् । त्रिपञ्चाशद्गौतमम् । एकविंशतिभरद्वाजा वंश्यास्त्रिपञ्चाशद्गौतमा वश्या इति विग्रहः । संख्यावंश्येनेति समासः । ननु भरद्वाजाद्विदाद्यञो यञञोश्चेति लुक् प्राप्नोति । एवं गोतमादण्यणः । अत्रिभृग्वित्यारम्भात् । न च वर्तिपदानां स्वार्थोपसर्जनैकत्वविशिष्टार्थान्तरोपसंक्रमाल्लुगभाव इति कैयटोक्तं युक्तम् । वृत्तिप्रवेशात्प्रागेव प्राप्नुवतोन्तरङ्गस्य लुको दुर्वारत्वात् । अन्यथा गर्गाणां कुलं गर्गकुलमित्यपि न स्यात् । अत्राहुः । भाष्यकारप्रयोगादेव लुगभावोत्र बोध्य इति । इदं च वार्त्तिकं बहुलग्रहणासिद्धार्थकथनपरम् ॥

लुटः प्रथमस्य डारौरसः ॥ लुडादेशस्य प्रथमपुरुषस्य डारौरसः क्रमात्स्युः । अत्ता । शयिता । ननु पदद्वये द्वौ त्रिकौ प्रथमपुरुषौ । तथा च पद् स्थानिनः त्रय आदेशाः तत्कथं वैषम्ये संख्यातानुदेशः । अत्राहुः । डारौरसश्च डारौरसश्चेति कृतद्वन्द्वानामेकशेषात् षडेवादेशाः । यद्वा । अर्थत आन्तर्याद्व्यवस्था । एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थ इत्यादि, एकार्थत्वादिनिर्णयस्तु व्यवहारात् । यद्यपि नानुबन्धकृतमनेकाल्त्व तथापि डा इत्यस्य सर्वादेशत्वमानुपूर्व्याद्बोध्यम् । प्रतिपादितं चेदमनेकाल्शिदिति सूत्रे । न चात्मनेपदे अध्येता ऽध्येतारावित्यादौ डारौरस्सु कृतेषु टेरेत्वं स्यादिति चेन्न । अ-

स्मिन्नेव प्रयोगे सकृत्प्रवृत्ततया चरितार्थत्वात् । तथाहि । एवं डादयश्चेत्युभयमपि शब्दान्तरप्राप्त्या ऽनित्यम् । तत्र परत्वादेत्वे कृते पुनःप्रसङ्गविज्ञानाड्डादयः । यद्वा । तिङ आदेशेषु टेरेत्वं न भवति । एशिरेचोस्थासः सेश्च एकारोच्चारणाज्ज्ञापकात् । स्यादेतत् । तिप्तयोर्द्वयोरपि डादेशेन्तोदात्तम्पदमिष्यते । तत्र तिबादेशस्यान्तरतम्यादनुदात्तत्वे सत्युदात्तनिवृत्तिस्वरेणोदात्तत्वं सिद्ध्यतु तादेशस्य तु न सिध्यति । तथाहि । तप्रत्ययस्य डादेशे कृते लसार्वधातुकस्वरात्परत्वाट्टिलोपः । न चेदानीमुदात्तनिवृत्तिस्वरो लभ्यः । अनुदात्तत्वात्प्रागेव लोपात् । ननु स्वरभिन्नस्य प्राप्नुवन्ननित्यो डादेशः । शब्दान्तरस्य प्राप्नुवन्ननुदात्तोप्यनित्यः । उभयोरनित्ययोः परत्वादनुदात्तत्वे कृते पुन प्रसङ्गविज्ञानाड्डादेशे कृते उदात्तनिवृत्तिस्वर सुलभ इति चेन्न । *अन्तरङ्गत्वाड्डादेशप्रवृत्तेः* । अत्राहुः । अस्तूक्तरीत्या परत्वाट्टिलोपः । तथाप्यसावनुदात्ते अविद्यमानोदात्ते पर इत्यर्थः । अनुदात्तस्यचेति सूत्रे ह्यनुदात्तग्रहणं प्रत्याख्यास्यते, तत्स्वीकारेपि शास्त्रीयोनुदात्तो न गृह्यते, किन्तूदात्तभिन्नः । न च प्रत्ययाद्युदात्तप्रवृत्तेरिदमपि दुर्लभमिति वाच्यम् । परिहृत्य चापवादविषयमिति न्यायेन लसार्वधातुकानुदात्तविषये प्रत्ययस्वराप्रवृत्तेः । न च तासेः प्रत्ययस्वरात्प्रागेव परत्वाट्टिलोपः शंक्य । प्रत्ययस्वरस्य प्रत्ययसंनियोगशिष्टत्वेनान्तरङ्गत्वात् । तथा च भाष्ये संग्रहश्लोकौ । *प्रत्ययस्वरापवादो लसार्वधातुकानुदात्तत्वम् ।* तेन तत्र न प्रसक्तः प्रत्ययस्वरः कदा चित् ॥ प्रत्ययस्वरश्च तासेर्वृत्तिसंनियोगशिष्ट । तेन चाप्यसावुदात्तो लोप्स्यते तथा न दोषः ॥ वृत्तिः प्रवृत्ति, यदैव तासिः प्रवर्तेत तदैवापवा-

दाभावादुदात्तत्वयुक्ते इत्यर्थः ॥

मुनित्रयोक्तिसद्वेणीपरिशीलनशालिनाम् ॥ महतामपि मान्योसौ धार्यते येन कौस्तुभः ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणस्य लक्ष्मीधरसूरेः सूनुना भट्टोजिभट्टेन कृते श्रीशब्दकौस्तुभे द्वितीयस्याध्यायस्य चतुर्थे पादे द्वितीयमान्हिकम् ॥ पादश्च समाप्तोऽध्यायश्च ॥

प्रत्ययः ॥ प्रत्ययशब्द संज्ञात्वेनाधिक्रियते आपञ्चमसमाप्तेः । स्यादेतत् । प्रकृत्युपपदोपाधिविकारागमानामपि तर्हि संज्ञा स्यात् । हरतेर्दृतिनाथयोः पशौ । हरतेरिति प्रकृतिः । दृतिनाथयोरित्युपपदम् । पशावित्युपाधि । हनस्तचेत्यादिर्विकारः । त्रपुजतुनोःषुगित्यागमः । नन्वेषां प्रत्ययत्वे सति किं स्यादिति चेत् । शृणु । प्रकृतिप्रत्यययोः परस्परापेक्षं परत्वं पर्यायेण स्यात् । शब्दान्तरापेक्षं वा प्रकृतेः । उपपदस्यापि परत्वं स्यात् । उपसर्जनपूर्वमिति तु राजपुरुषादिषु सावकाशं परत्वात्परश्चेत्यनेन बाध्येत । ननु सुब्विधौ प्रातिपदिकाधिकाराद्राजपुरुषादौ कथ सावकाशतेति चेत् । सत्यम् । एवमपि समाससंज्ञाविरहस्थले उपपदस्य परत्वं स्यादेव । तथा च भोक्तुं व्रजतीत्येव स्यात् न तु व्रजति भोक्तुमिति । उपाधेस्तु अर्थत्वेन परत्वासम्भवेपि तद्वाचकशब्दस्य परत्वं नियत स्यात् । आद्युदात्तत्वं च स्यात् । अङ्गसंज्ञा तु विधानायत्ता । न च प्रकृत्यादयः कुतश्चिद्विहिता अतो न प्रकृत्यादिषु परेषु पूर्वस्य तत्प्राप्तिरिति प्रागुक्ता एव दोषाः । विकारागमयोरपि यथायथं परत्वमाद्युदात्तत्व तयोः परतः पूर्वस्याङ्गत्वं च स्यादिति कुर्वीय प्रत्ययाधिकारः । अत्राहुः ।

प्रकृत्यादीनां सनाद्युत्पत्तौ निमित्तत्वेनोपादानात् पारार्थ्यात् स्वसंस्कारं प्रति न प्रयोजकत्वम् । यथा यो ऽश्वे स देवदत्त इत्युक्ते नाश्वस्य देवदत्तसंज्ञा । किं च हरतेर्दृतिनाथयोः कर्मणोरुपपदयोः पशौ कर्त्तरि इन्प्रत्ययो भवतीति वाक्यार्थपर्यवसाने कथं प्रकृत्यादीनां संज्ञाप्राप्तिः । न च आवृत्त्या ते च हरत्यादयः प्रत्ययसंज्ञका इति द्वितीयं वाक्यं कल्प्यम् । मानाभावात्, गौरवपराहतत्वाच्च । यत्तु सनादीनामप्यसतां संज्ञानुपपत्तेः वाक्यभेदेनैव संज्ञा विधेया । ततश्च यथा एकेन सनादीनां विधिरपरेण संज्ञाविधिः । एवं प्रकृत्यादीनामपि स्यादेवेति । तन्न । वृद्धिसूत्रशेषे वर्णितया रीत्या सन्प्रत्ययो भवतीत्यादिक्रमेण संज्ञाविशिष्टस्य संज्ञिन एकवाक्येनैव विधिसम्भवात् । नह्युद्भिदा यजेतेत्यादौ नामधेयसम्बन्धलाभाय विध्यावृत्तिं मन्वते न्यायविदः । अभ्युपेत्य ब्रूमः । संज्ञापरं द्वितीयं वाक्यमपि गुप्तिज्किद्भ्यःसन्प्रत्यय इत्यादिरूपमेव । तथा च विरुद्धविभक्त्यावरुद्धानां प्रकृत्यादीनां प्रथमान्तेन प्रत्यय इत्यनेन सामानाधिकरण्यमसम्भाव्यमेव । न च द्वितीयवाक्ये प्रकृत्यादीनां विभक्तिविपरिणामेन प्रथमा कल्प्या योग्यविभक्तिनिर्दिष्टेषु सनादिषु संज्ञायाश्चरितार्थत्वात् । अपि च । आद्यवाक्ये सनादीनामेव अपूर्वविधानविषयतया प्राधान्यम् । एवं च द्वितीयेपि संज्ञिनमपेक्षमाणा संज्ञा पूर्वत्र प्रधानतया क्लृप्तमेव गृह्णीयात् न त्वप्रधानमपि । नन्वेवमपि विकारागमानां विधेयतया प्राधान्यात्संज्ञा दुर्वारेति चेत् । मैवम् । अन्वर्थसंज्ञाविज्ञानात् प्रतियन्त्यनेनार्थमिति हि प्रत्ययः विकारागमौ त्वनर्थकौ । न चैवमवेः क इत्यादीनां समाम्नातानां च प्रत्ययसंज्ञा न स्यात् अनर्थकत्वादिति वाच्यम् । स्वार्थिका अपि प्रकृत्य

र्थेनार्थवन्त एवेति सिद्धान्तात् । यत्तु कल्पनामात्रमेतदिति । तन्न । प्रकृतिप्रत्ययार्थविभागस्य सर्वस्यापि काल्पनिकत्वाविशेषात् । नैषा कल्पना शास्त्रकृत्सम्मतेति चेन्न । द्वितीयेति सूत्रे पूरणार्थात्स्वार्थे अन्प्रत्ययस्यापि पूरणार्थतायाः भगवतैवोक्तेः । इहापि प्रत्याय्यन्तइति व्युत्पत्त्यन्तरमप्याश्रित्य प्रकृत्या अभिव्यज्यमानार्थत्वं स्वार्थिकानामस्तीति भाष्यकैयटयोः स्वीकाराच्च । न चैवं विकारागमयोः सम्भवति । प्रकृत्यवयवतया तदर्थएवोपक्षयात् । अपि चाप्रयोजनाभावान्नामीषां संज्ञा । न च परत्वमेव प्रयोजनम् । षष्ठ्या विकाराणां स्थानसम्बन्धस्य आगमानामवयवत्वेन सम्बन्धस्य च प्रतिपादनात् । न चाद्युदात्तत्वं प्रयोजनम् । आगमानामनुदात्तत्वविधानात् । यत्र तु प्रयोजनं लभ्यते तत्रेष्यतएवागमस्यापि प्रत्ययत्वम् । यथा श्नमः शकारस्येत्संज्ञार्थमिति । इदं त्ववशिष्यते । हनश्वधः, नाभिनभं च, विरागविरङ्गञ्चेत्यादावादेशानां संज्ञा स्यात् अर्थवत्त्वाद्विधेयत्वेन प्राधान्यात् योग्यविभक्तिकृत्वाच्चेति । संज्ञाप्रयोजनं तु स्थानिन आदेशेन निर्वर्तितत्वेन शब्दान्तरापेक्षया परत्वमस्तीति तस्मात्कर्त्तव्योत्र यत्न इति हरदत्तः । अत्रेदं वक्तव्यम् । हनश्वेत्यादिचकारो न प्रत्ययसंज्ञामात्रस्यानुकर्षणार्थः । अधिकारादेव तल्लाभात् । किन्तु संज्ञिविशिष्टस्य । एवंच तेनैव निराकांक्षा संज्ञा कथं वधादिभिः सम्बध्येत । क्षेमप्रियमद्रेण्चेत्यादौ तु णित्वादिसामर्थ्यादावृत्त्या संज्ञालाभः । किं च नभं विरङ्गमिति द्वितीयान्तं न तु प्रथमान्तम् । असावमुमादेशं लभते इत्याशयेन प्राचां व्यवहारात् । उक्तञ्च प्रातिशाख्ये । असावमुमिति तद्भावमुक्तमिति । समानाक्षरमन्तस्थं समङ्गठयं स्वरोदयमिति च । इकोयणचीति

तदर्थः । एवं स्थिते नभविरङ्गयोः संज्ञया सह विरुद्धविभक्त्यवरोधोपि स्पष्ट एवेति दिक् । अथ सनः सशब्दादारभ्य कपः पकारेण सपिति प्रत्याहारमाश्रित्य सप्प्रत्यय इत्येव कुतो नोक्तमिति चेन्न । प्रत्यासत्त्या सिपः पकारेण ग्रहणापत्तेः । व्याप्त्या तु तप्तनप्तनथनाश्चेति तनपः । तस्माद्यथान्यासमेवास्तु । संज्ञाप्रयोजनं तु कर्तव्य इत्यादौ धातोरङ्गसंज्ञाप्रवृत्तावाङ्गो गुणः । यत्तु प्रत्ययाद्युदात्तत्वं फलमिति । तदापाततः । आद्युदात्तश्चेत्यधिकारमाश्रित्य तस्य सुसाधत्वात् ॥

परश्च ॥ अयमधिकारः परिभाषा वा । लिङ्गवती चेयम् । लिङ्गं तु प्रत्ययसंज्ञा । गुप्तिज्किद्भ्यः सन्नित्यादौ अपादानत्वासम्भवादिग्योगलक्षणपञ्चमी तत्र परः पूर्वो वेत्यनियमेनाध्याहारे प्रसक्ते पर एवेति नियमार्थमिदम् । गापोष्टगित्यादौ षष्ठीनिर्देशेपि आनन्तर्यरूपषष्ठ्यर्थस्य पूर्वपरयोरविशेषादनियमस्तुल्य एव । स्यादेतत् । विभाषासुपोबहुच्पुरस्तादित्येतन्नियमार्थमस्तु बहुजेव पुरस्ताद्भवति नान्य इति । ततश्च बहुचि पूर्वत्वस्य नियतत्वादन्यः प्रत्ययः पर एव भविष्यति । न चैवमपि षष्ठीनिर्देशेषु मध्यशब्दाध्याहारेण मध्येपि प्रसङ्ग एवेति वाच्यम् । अव्ययसर्वनाम्नामित्यनेन अकजेव प्रकृतिमध्ये नान्य इति नियमात् । न च बहुजेव पुरस्तादकजेव मध्ये इति नियमे बहुजकचोर्नियमो न लभ्येतेति वाच्यम् । देशनियमार्थयोरपि वाक्ययोः बहुजकचोर्देशसम्बन्धप्रतीत्या निराकाङ्क्षतया तयोर्देशान्तरसम्बन्धे मानाभावात् । विकल्पस्यानेकदोषदुष्टत्वाच्च । न चाकजेव प्राक् टेरिति नियमे प्रत्ययान्तरं टिप्राग्भागरूपमध्यविरोधे मा भूत् । मध्यान्तरे तु स्यादेवेति वाच्यम् । लक्ष्यसिद्धये मध्यसामान्यापेक्षनियमाभ्युपगमे बाधकाभावात् । किञ्च

गुप्तिज्किद्भ्य इत्यादौ भ्यसादीनां परत्वदर्शनेन अङ्गसंज्ञासूत्रे प्रत्यये इति सप्तमीबलेन च ङ्याप्प्रातिपदिकादित्यादौ परशब्दाध्याहारे निश्चिते तदेकरूप्याय प्रत्ययविधिपरायामष्टाध्याय्यां न पूर्वादिपदान्तराध्याहारो न्याय्यः तत्किं परश्चेति सूत्रेण। उच्यते। प्रयोगनियमार्थमिदं, पर एव प्रत्ययो न केवल इति। अन्यथा प्रत्ययार्थमात्रविवक्षायां किमस्य द्वयसमित्याद्यपि प्रयुज्येत। यदि तु प्रकृतिविशेषोद्देशेनैव प्रत्ययस्य विधानात्केवलो न प्रयोक्ष्यतइति ब्रूपे। एवमपि प्रकृत्यर्थमात्रविवक्षायां केवला प्रकृतिः प्रयुज्येतैव। यथा पच् पठ् इति। अत प्रत्ययः परो भवत्येवेति नियमार्थमिदम्। आपदत्वनिर्वृत्तेश्चायं नियमः। तदेतत्तत्रतत्रोच्यते। न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्यय इति अपदं न प्रयुञ्जीतेति च। अपरिनिष्ठितं न प्रयुञ्जीतेति तस्यार्थ इत्युक्तम्। यत्त्विह भाष्ये बभ्रुमण्डुलमकइत्यादीनामपशब्दत्वमुक्तम्, यच्च पदमञ्जर्यां तारतम्यादिशब्दानाम्। तत्सर्वे लाक्षणिकत्वमनादृत्य प्रयुक्तेषु बोध्यम्। इष्यते हि गोणीशब्दस्य गवि गोणीसादृश्यशक्तिभ्रमाभ्यां प्रयुक्तस्य साध्वसाधुत्वव्यवस्था। अत एव यञिञोश्च इति सूत्रे रघुशब्दस्य तदपत्ये लक्षणया साधुत्वं हरदत्तेनोक्तम्। प्रकृतसूत्रेपि नो खल्वारभ्यमाणमप्येतल्लक्षणया प्रयोगं निवारयितुमर्हतीत्युक्तन्तेनैव। अत एव तारतम्यमित्यस्य शब्दपरस्यार्थे लक्षणया साधुत्वं कैयटेन साधकतमङ्करणमिति सूत्रे ध्वनितमिति दिक्॥

आद्युदात्तश्च॥ अयमप्यधिकार परिभाषा वा प्राग्वत्। तित्तिरिणा प्रोक्तमधीते तैत्तिरीयं ब्राह्मणकुलं, तित्तिरिवरतन्तुखण्डिकोखाच्छण्। छन्दोब्राह्मणानि च तद्विषया-

पि । तदधीते तद्वेद । प्रोक्ताल्लुक् । आपन्नादिपूर्पदेशिवद्वचनं स्वरसिद्ध्यर्थम् ॥ इह रीशब्द उदात्तः। स्यादेतत् । अस्वरकस्याच उच्चारणासम्भवात् सर्व एव स्वरविधिर्नियमार्थः । तत्र चित एवान्तोदात्तः रित एव मध्योदात्तः । तिदेव स्वरितः । सुप्पितावेवानुदात्तौ । दूरात्सम्बुद्धावेवैकश्रुत्यमिति स्वरान्तराणामन्यत्र नियमात्पारिशेष्यात्प्रत्यय आद्युदात्त एव भविष्यति नास्वरकः, नाप्यन्यस्वरकः तत्किमनेन सूत्रेणेति चेन्मैवम् । उक्तरीत्या आद्युदात्तत्वमपि ञ्नित्यादिरित्यादौ नियम्येत । किञ्च त्वदुक्तनियमे चिदादीनामनियमः स्यात् । अतश्चितोन्त एवेत्यादि व्याख्येयम् । ततश्च छणादीनामनियतस्वरत्वं स्यात् । अपि च रित्येवेति नियमेऽन्त्रोपोत्तमरूपमध्यविशेष उदात्तो मा भूत् । मध्यान्तरं तु स्यादेव। सामान्यापेक्षनियमे च व्याख्यानमेव शरणीकरणीयं स्यात् । तस्मात्सूत्रारम्भ एवोचितः । स्यादेतत् । ञ्नित्यादिर्नित्यम्, प्रत्ययस्य च लसार्वधातुकमनुदात्तम् । सुप्पितौचेति पठ्यतामेव सूत्र्यताम् । एवं स्वरप्रकरणे पाठात्सन्दर्भशुद्धिः । आद्युदात्तानुदात्तशब्दयोस्तत्रत्ययोरेवोपजीवनाल्लाघवं च । नन्वेवं प्रत्ययग्रहणपरिभाषया तदन्तस्य स्वरः स्यात्। इह तु क्रियमाणे आद्युदात्तश्चेत्यस्य प्रतियोगमुपस्थाने सत्युत्पद्यमान एव तव्यादिरुदात्तः एवं तिबादिरनुदात्तः। अतः प्रत्ययसंज्ञासन्नियोगेन स्वरो विधीयतइति चेत् । मैवम् । प्राप्तत्वेपि ज्ञापकेन तदन्तविधिनिरासस्सम्भवात् । तथाहि । प्रत्ययस्य चेत्यत्र न तदन्तविधिर्ञ्नित्यादिरित्यारम्भात् । सुप्पितौचेत्यत्रापि न, धातोरित्याद्यारम्भात् । यदि हि प्रत्ययान्तस्यानुदात्तत्वं स्यात्तर्हि धातुप्रातिपदिकयोरन्तोदात्तविधिर्निर्विषय एव स्यात् । यत्र

दि प्रत्ययोनुदात्तो याति वृक्षाणीत्यादौ तत्रैव प्रकृतिस्वरः श्रूयते। यातो यान्ति वृक्षत्वं वृक्षगेत्यादौ तु सतिशिष्टेन प्रत्ययस्वरेण बाध्यते। तस्मात् पष्ठे सूत्रकरणमेवोचितमिति चेत् । मैवम् । गोपायति धूपायतीत्यत्र उत्पत्तिसंनियोगेनाद्युदात्तत्वे कृते ततः सनाद्यन्ता इति धातुत्वे धातोरित्यन्तोदात्तो भवति । यदि तु ञ्नित्यादिर्नित्यम्, प्रत्ययस्य चेत्युच्येत । तदा परत्वाद्धातुस्वरं प्रत्ययस्वरो बाधेत । सूत्रस्य सूत्रान्तरेण निर्माने फलं वाच्यम् । सुपिसौचेत्यस्य पष्ठे न्यासोप्यनुचितः । तथासति तदन्तविधेर्दुर्वारत्वात् । यत्तूक्तं प्रकृतिस्वरविधानं ज्ञापकमिति । तन्न । आस्ते शेतइत्यादौ लसार्वधातुकमात्रस्यानुदात्तत्वे सति धातुस्वरस्य सावकाशत्वात् । प्रातिपदिकान्तोदात्तस्यापि अग्निमान् अग्नीनामित्यादौ ह्रस्वनुड्भ्यां मतुप्, नामन्यतरस्यामिति स्वरसिद्ध्यर्थत्वात् । तत्र ह्रन्तोदात्तादित्यनुवर्तते । तमश्यामपधुमन्तामित्यादौ मा भूदिति । भित्वा प्रकरणं सोढ्वा गौरवं चेह सूत्रणे फलं धातुस्वरस्तद्वत्तदन्ताग्रहणं स्थितम् ॥ न चास्तु फलान्तरमपि । तथाहि । भवितव्यमित्यादौ प्रत्ययोत्पत्तिकालएवाद्युदात्तत्वे कृते पश्चाद्भवन्निट् अनुदात्तः सिध्यति । अन्यथा तु भू तव्य इति स्थिते आद्युदात्तत्वं शब्दान्तरप्राप्त्या ऽनित्यम् . इट् तु स्वरभिन्नस्येत्युभयोरनित्ययोः परत्वादिटि कृते तस्यैव प्रत्ययावयवत्वादुदात्तत्वं स्यात् । मैवम् । यासुडुदात्तवचनेन आगमा अनुदात्ता इत्यस्यार्थस्य ज्ञापितत्वात् । न च चिनुयादित्यादौ पिद्वत्के यासुटि चरितार्थमुदात्तवचनं कथं ज्ञापकमिति वाच्यम् । एवं हि उदात्तोङिच्चेत्यपहाय अपिच्चेत्येव ब्रूयात् । अपिच्च लिङित्युक्त्या हि सार्वधातुकमपिदिति ङित्त्वमपि सिध्यत्येव । अवश्यञ्चोक्तज्ञापकं त्वयाप्यादर्तव्यम् । अन्यथा प्रत्ययसंज्ञास-

त्रियोगेनाद्युदात्तविधावपि भविपीयेत्यादौ स्वरो न सिध्येत् । तत्र हि लावस्थायामनच्कत्वात्प्रत्ययस्वरे असति परत्वाद्विशेषविहितत्वाच्च सीयुटि कृते पश्चाल्लादेशे प्रत्ययाद्युदात्तत्वं सीयुट एव स्यात् । ज्ञापकाश्रयणे तु सीयुडनुदात्तः । इटोदित्यकार उदात्तः । न च तित्वात्स्वरितत्वं शंक्यम् । तकार उच्चारणार्थो न त्वित्संज्ञकः । इत्संज्ञाभ्युपगमपरो वृत्तिग्रन्थस्तु अत्रत्यभाष्यादिविरोधात्, भक्षीयतवराधस इत्यन्तोदात्तलक्ष्यविरोधाच्च प्रामादिक इति नाविभक्तौतुस्मा इत्यत्रावोचाम । नन्वेवमपि सीयुटि कृते आकरस्यादित्वं विच्छिन्नं तत्कथमुदात्तत्वमिति चेत् । यासुट उदात्तवचनेन प्रत्ययाद्युदात्तत्वे कर्तव्यआगमा अविद्यमानवद्भवन्तीति ज्ञापितत्वात् । तर्ह्यविद्यमानवद्भावमात्रज्ञापनेनोपक्षीणं लिङ्गमागमानामनुदात्तत्वं न ज्ञापयतीति चेत्, वाचानिकं तर्हि तदस्तु । तथा च भाष्यम् । यद्येव वचनादथापि ज्ञापकादागमा अनुदात्ता भवन्तीति । अवश्यं च त्वयापीदं वाच्यम् । भवितव्यमित्यादौ पूर्वमुदात्तत्वे सत्यपि पश्चाद्भवन्निद् ज्ञापकञ्च वचनं वाचनिकमित्यनुदात्तो भवेत् शेषनिघातेनेति चेत् । नायं शेषनिघातस्य विषयः । स्वरविधिशेषत्वात्तस्य । यस्मिन्पदे यस्यामवस्थायां यस्याच उदात्तः स्वरितो वा विधीयते तस्मिन्पदे तस्यामवस्थायां सन्निहितमजन्तरं निहन्यते इत्यर्थ । न चायं प्रकारोत्र सम्भवति । तस्मादिटोनुदात्तत्वं नात्र सूत्रारम्भस्य फलमिति स्थितम् । इदं तर्हि फलं सुम्ने भवा सौघ्नी, अण उत्पत्तिवेलायामेवोदात्तत्वे सति उदात्तनिवृत्तिस्वरेण ङीबुदात्तः । अन्यथा स्रौघ्न ई इति स्थिते प्रत्ययस्यचेत्याद्युदात्तत्व बाधित्वा परत्वाद्यस्येति लोपे कृते उदात्तनिवृत्तिस्वरो न लभ्येतेति

चेत् । मैवम् । परस्यापि यस्येति लोपस्य ङीबुत्पत्तिमपेक्षमाणस्य अन्तरङ्गेण स्वरेण बाधात् । तथापि हि आत्रेयीशब्दे इयमेव गतिः । तथाहि । अत्रेरपत्यम् । इतश्चानिञ इति ढक् । आयन्नादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति प्रत्ययस्वरात्पूर्वमेयादेशः । टिड्ढेतिङीप् । आत्रेय ई इति स्थिते तद्धितस्य कित इति स्वरं बाधित्वा परत्वाद्यस्येति लोपे कृते उदात्तनिवृत्तिस्वरो न स्यात् । तस्मान्नेदं फलमिति स्थितम् । अस्तु तर्ह्यनुदात्तस्यात्र प्रदेशे करणे फलान्तरम् । तथाहि । पित्स्वराच्चित्स्वरणापि चित्स्वरश्चापि पित्स्वरात् ॥ कार्यशब्दाट्टापि स्वरितत्वात्प्रागेकादेशे कृते तस्य पूर्वं प्रत्यन्तवद्भावाच्चित्स्वरः प्राप्नोति परं प्रत्यादिवद्भावात्पित्स्वरश्च परत्वात्स्वरितो भवति । यदि तु लसार्वधातुकमनुदात्तम्, सुप्पितौचे त्युच्येत तर्हि परत्वादनुदात्तत्वं स्यात् । एवम् आम्वष्ठयेत्यत्र यङश्चाप्येकादेशे कृते पित्स्वरात्परत्वाच्चित्स्वरो जायते । तदपि विपरीतं स्यादिति चेत् । मैवम् । कार्येत्यत्र हि टाबुत्पत्तेः प्रागेव स्वरितो भवत्यन्तरङ्गत्वात्सत्यपि वा टापि स्वरितैकादेशयोरुभयोरनित्ययोः परत्वात्स्वरिते कृते आन्तर्यतः स्वरितानुदात्तयोरेकादेशः स्वरित एव भवति । आम्वष्ठायामपि चापश्चित्करणसामर्थ्यादेव चित्स्वरो भविष्यति । सामान्यग्रहणे चित्त्वमुपक्षीणमिति चेन्न । एवं हि टाप्प्रकरणएव यङः इति सूत्रयेत् ॥

अनुदात्तौ सुप्पितौ ॥ पूर्वस्यापवादः । सुप्प्रत्याहारः पिच्च अनुदात्तः स्यात् । प्रत्याहारश्च सुपः पकारेण न तु कपः । टाबादीनां पित्करणात् । सुपः पकारस्यानन्यार्थत्वाच्च । दृषदः पठति पचति ॥

गुप्तिज्किद्भ्यः सन् ॥ एभ्यः परः सन्प्रत्ययः स्यात् ।

धातोः कर्मण इति सूत्रे वाग्रहणं विभज्य त्रिसूत्रीशेषतया सम्बध्यते । सा च व्यवस्थितविभाषा, तेन प्रथमसूत्रद्वये अर्थविशेषोपहितेभ्य एव धातुभ्यः सन् । स च विशेषो मुनित्रयेण साक्षादनुक्तोपि वृत्तिकारादिभिरुपनिबद्धः । तत्र गुपेर्निन्दायाम् । जुगुप्सते । तिजेः क्षमायाम् । तितिक्षते । कितेर्व्याधिप्रतीकारे अपनयने नाशने निग्रहे च । चिकित्सति वैद्यः । क्षेत्रियच्परक्षेत्रे चिकित्स्य इति सूत्रे वृत्तिग्रन्थः । क्षेत्रियाणि तृणानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि अपनेयानि विनाशयितव्यानि वा । तथा क्षेत्रियः पारिदारिकः । परदाराः परक्षेत्रं तत्र चिकित्स्यो निग्रहीतव्यः । विपूर्वः संशयेपि, विचिकित्सति मे मनः । विचिकित्सा तु संशयइत्यमरः । अर्थान्तरे तु गोपयति हेतुमण्णिच् । तेजयति । संकेतयति । हेतुमण्णिच् चुरादिणिज्वा । भूवादौ चुरादौ चानयोः पाठादिति न्यासकारः । वस्तुतस्तु सर्वत्र चुरादिणिजेव न तु हेतुमण्णिच् इत्यनुपदमेव स्फुटीकरिष्यामः । इह गुपितिजिभ्यां सन्नन्ताभ्यां कथं तङित्याशंक्य अवयवे ह्यचरितार्थं लिङ्गं सामर्थ्यात्समुदायस्य विशेषकमिति भाष्ये समर्थितम् । युक्तं चैतत् । भ्वादौ अनुदात्तेत्सु गुप गोपने तिज निशाने इत्यनयोः पाठात् । मैत्रेयस्तु तत्रैव गुप गोपनकुत्सनयोरिति पपाठ । एषां च नित्यं सन् । तथा च भाष्यम् । नैतेभ्यः प्राक्सन आत्मनेपदं नापि परस्मैपदं पश्याम इति । एवं च गोपते तेजतइति स्वाम्युक्तः केवलात्तङः प्रयोगः प्रत्युक्तः । *नन्वेवं गोपयति तेजयतीति णिजन्तेपि तङ्प्रसङ्गः* । सन्नन्ते तङं प्रवर्त्य अनुदात्तेत्त्वं चरितार्थमिति चेत् । णिचि प्रवर्त्यतां न तु सनीति विपरीत कुतो नेति चेत् । अत्रोच्यते । भिन्नार्था धातवो भिन्ना एव । एवं च

निन्दाक्षमादौ यत्रार्थे सन्निष्यते तदुपहिताः सानुबन्धा भ्वादयो भिन्ना एव यत्र तु णिजिष्यते तत्राननुबन्धका एव चुरादौ बोध्याः। अवयवे कृतं लिङ्गमिति भाष्यस्यायमेवाशयः। स्पष्टं चेदं पूर्ववत्सन इति सूत्रे पदमञ्जर्याम्। एवञ्च भ्वादिभ्यो हेतुमण्णिजिति प्रागुक्तन्यासग्रन्थोऽसङ्गत एव। अत्राभरणकारः। गुपादिसूत्रे गुप्तिज्किन्मानित्युपक्रम्य गुपादिष्वननुबन्धकरणमात्मनेपदार्थमिति भाष्ये वार्तिके चोक्तत्वात्कितिः परस्मैपदिषु पठितोप्यात्मनेपदी बोध्यः। न च गुपादिष्विति बहुवचनं वक्ष्यमाणमानुबन्धाद्यपेक्षमिति वाच्यम्। भाष्ये विशिष्य कितेरप्युपक्रमादित्याह। एतदनुसारी वर्धमानोपि स्वाश्रयं कश्चिकित्सतु इति खण्डनस्य व्याख्यावसरे चिकित्सतामिति तु युक्तमित्याह। माधवस्तु नैतन्मेने। अनेकमहाग्रन्थविरुद्धत्वात्। तथाहि। धातुपाठे तावदयमुदात्तेत्पठितः वृत्तिकारोपीह परस्मैपदमुदाजहार। कैयटोप्याह। क्रमदर्शनाय कितिः पठितो न स्वयमनुदात्तेदिति। हरदत्तोप्याह कितिस्तु परस्मैपदीति। स्वामी काश्यप इन्द्रश्चेत्यादयोपीत्थमेव प्रत्यपीपदन्। तस्मात् श्रीहर्षोक्तिरेव युक्ता वर्धमानोक्तिरयुक्तेति दिक्। तथा च प्रयुज्यते। तस्य चिकित्सतो भ्रम एवं विद्वान्विचिकित्सतीत्यादि। सनो नकारः स्वरार्थः। धातुस्वरस्तु न भवति नित्करणसामर्थ्यात्। यस्तोतारं जिघांसति सतिसखायम्। न चार्धधातुके अतोलोपेन भाष्यम्, सार्वधातुके तु शपा सहैकादेशेन। तथा च सनोकारो मास्त्विति चेन्न। दित्साधित्सादिभ्य एकाच्त्वे यङ्प्रसङ्गात्। दित्स्यन्धित्स्यमित्यत्र ण्यत्प्रसङ्गश्च। कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमिति वार्तिकस्य प्रत्ययग्रहणमपनीयानेकाज्ग्रहणं कर्तव्यमित्येवंपरत्वेन दित्साञ्चक्रइत्याद्यसिद्धेः

पत्तेश्च । एतेन सन्यङोरिति सप्तमीं व्याख्याय प्रतीपिपति, अटाट्यतेइत्यादौ तु सन्यङोरकारोच्चारणसामर्थ्याद्द्वित्वमिति वदन्तः प्रसादकारादयः परास्ताः । उक्तरीत्या अकारोच्चारणस्य चरितार्थत्वात् । न्यासहरदत्तादिग्रन्थास्तु सन्यङोर्द्वित्वमपि फलमित्येवंपराः । ते च षष्ठीव्याख्यानमेव गृहीत्वा योज्या इति दिक् ॥

मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ एभ्यः सन्स्यात् अभ्यासस्य इकारस्य दीर्घश्च । अत्रापि पूर्ववदर्थविशेषोपहितेभ्य. सानुबन्धेभ्यो नित्यः सन् । अर्थान्तरोपहितानि तु धात्वन्तराणि चुरादौ बोद्धव्यानीति निष्कर्षः । तत्र मानेर्विचारे, मीमांसते । ननु ज्ञानार्थान्मानेरुत्तरसूत्रेणैव सनस्तु । मैवम् । दीर्घविधानार्थमिडभावार्थं चास्यावश्यकत्वात् । धातोरित्यविधानाद्धि सनोत्र नार्धधातुकत्वमतो नेट् । यत्तूत्तरतन्त्रे वाचस्पत्यादौ मीमांसाशब्दो माङ् मानइत्यस्माद्व्युत्पन्न इत्युक्तम् । तस्यायमाशयः। इह सन्प्रकृतिस्तावदात्मनेपदार्हाच्चुरादिकाद्भिन्नैवेति स्थितम् । तत्र मानपूजायामित्यादिश्चिकारग्रन्थो भ्वस्या व्याख्येय एव न हि तस्मादयं सन् । एवं स्थिते सन्प्रकृतिरनुदात्तेत्कैवेत्यत्र मानाभावात्, ङिदेव सास्तु । नुकसूत्रे निपात्यतां मुंडमिश्रादिसूत्रे हलिकल्योरदन्तत्ववत् । न च वैयाकरणानामुपायेष्वाग्रहः । उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता इत्युक्तेः । न चैवं सनिमीमेतीस्प्रसङ्गः । घ्वादिसहचर्येणच्छासंन्येर तद्विधानात् इति । वधेश्चित्तविकारे । बीभत्सते । दानेरार्जवे । दीदांसते । शानेर्निशाने । निशानन्तीक्ष्णीकरणं, शीशांसति । शीशांसते । चुरादीनां तु मानपूजायाम् । मानयति । बधबन्धने बाधयति । दानअवखण्डने दानयति । शा-

न तेजते शानयति। अत्र सन्प्रकृतिभूतौ मान्बधी अनुदात्तेतौ शेषौ स्वरितेतौ। चुरादयस्त्वननुबन्धाः। ननु त्रयाणामर्थभेदाद्भेदोस्तु शानेस्तु णिच्सनोरर्थैक्यात्कथं भेद इति चेत्। धुनाति धुनोत्यादीनामिवेति गृहाण। स्यादेतत्। इह दीर्घश्रुत्या अच इत्युपस्थितं तच्चेदभ्यासेन विशेष्यते तदा अभ्यासस्याचो विधीयमानो दीर्घो हलादिशेषात्प्राक् स्यात्। अचा अभ्यासविशेषणे तु अजन्तस्याभ्यासस्य विधीयमानो हलादिशेषं प्रतीक्षतां ततोधिकस्य प्रतीक्षायां कारणाभावात् विशेषविहितत्वाच्च समनन्तरमेव भवन् वधेरित्वस्य शेषाणां ह्रस्वस्य च बाधकः स्यात्। ततश्चाभ्यासे आकार श्रूयेत नत्वीकार इति चेत्सत्यम्। अत एव आभ्यासस्येतिच्छेदः कृत। अभ्यासस्य विकार आभ्यास स चेत्त्वमेव। तथाहि लोपस्तावन्न विकारः। लोपागमवर्णविकारज्ञ इति परस्पशायां द्वौ चापरौ. वर्णविकारनाशाविति वार्तिके च पृथगुपादानात्। अभावस्यादेशविधानायोगाच्च, अच इत्युपस्थितेश्च। यदि तु ह्रस्वस्य स्यात्तर्हि तद्धितनिर्देशो व्यर्थः स्यात्। तस्मादित्वमेव तद्धितेन प्रत्याय्यते। यद्वा। सन्पाहत्य विहितस्य विकारस्य ग्रहणमस्तु। तदेतदभिसन्धाय व्याख्यातं भाक् आभ्यासस्यविकारस्येति। अथ वा दीर्घोकित इत्यत्राकिद्ग्रहणेन अभ्यासविकारेषु बाध्यबाधकभावो नास्तीति ज्ञाप्यते। तद्धि यंयम्यते रंरम्यतइत्यादौ नुकि कृते मा भूदिति कृतं, विशेषविहितेन नुका अनजन्तत्वादेव दीर्घो न भविष्यतीति किं तेन। अत एव डोढौक्यते तेत्रौक्यतइत्यादौ ह्रस्वे कृते गुणो भवति। अन्यथा बबाधे इत्यादौ चरितार्थं ह्रस्वत्वं पापच्यतइत्यादौ चारितार्थो दीर्घः परत्वाद्बाधेत॥

धातोः कर्मणः समानकर्तृकादिच्छायां वा॥ इषेः कर्म

तेनैव च समानकर्तृको यो धातु तस्मादिच्छायामर्थे सन्नन्यतरस्यां वा स्यात् । धातोः कर्मत्वसमानकर्तृकत्वे अर्थद्वारके बोध्ये । अर्थस्यापि ते इषिनिरूपिते एव न तु क्रियान्तरनिरूपिते । इच्छायामित्यस्य सन्निधानात् । कर्तुमिच्छति चिकीर्षति । धातोः किम् । सन आर्द्धधातुकत्वं यथा स्यात् । तेन यथायथमिड्गुणौ स्तः । अन्यथा जुगुप्सतइत्यादाविव न स्याताम् । कर्मणः किम् । गमनेनेच्छतीत्यर्थे जिगमिषतीति मा भूत् । समानकर्तृकात्किम् । देवदत्तकर्तृकं भोजनमिच्छति यज्ञदत्तः । इच्छायां किम् । कर्तुं जानाति । वावचनाद्वाक्यमपि । न च समानकर्तृकेषु तुमुनिति तुमुन्विधानसामर्थ्यादेव वाक्यं सिद्धमिति वाच्यम् । चिकीर्षितुमिच्छतीत्यत्र चरितार्थत्वात् । नन्वत्र सनः प्रसङ्ग । सन्नन्तान्न सन्निति वक्ष्यमाणत्वात् । आशङ्कायामुपसंख्यानम् ॥ कूलं पिपतिषति । श्वा मुमूर्षति । शङ्के पतिष्यति कूलम् । शङ्के मरिष्यतिचेत्यर्थे । आशङ्का सम्भावना तद्विशिष्टक्रियावचनात्स्वार्थे सन्निति कैयटादयः । शंकाविशिष्टयो पतनमरणयोर्लडर्थवर्त्तमानत्वान्वये स्वर्गी ध्वस्त इत्यादाविव विशेषणीभूतशंकायां वर्तमानत्वपर्यवसानं बोध्यम् । प्रत्याख्यानं तु, यो यदिच्छति स तस्य पूर्वरूपाणि करोति यथा देवदत्तः कटं चिकीर्षुः पूलादीन्युपादत्ते । एवं कूलस्यापि लोष्टविशरणादीन्युपलभ्य पतनेच्छाध्यारोप्यते । यद्वा । सन्निधायके सूत्रे इच्छाशब्दो गौणमुख्यसाधारणः । गौणमुख्यन्यायस्तु लक्ष्यानुरोधात्स्वरितत्वाच्च नाश्रीयते । अत्र भाष्यम् । धेपकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः । सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥ अयं श्लोक इह सूत्रे मतुब्विधौ च भाष्ये पठितः । अस्माभिस्तु चतुर्थे शेषइति सूत्रे ग्रा-

पितोयमिति तत्रैव व्याख्यास्यते । एतव्द्याख्यानपराः प्रकृतसूत्रस्य कैयटहरदत्तादिग्रन्थाः पाञ्चमिकभाष्यविरुद्धा इति तत्रैव वक्ष्यते । इह सन्प्रसङ्गादन्योप्यनिष्टः प्रत्ययो वारित । प्रकृतोपयुक्तं तु सन्नन्तान्न सनिष्यतइति । सरूपइत्येव । मारूप्यं चात्र सादृश्यं तच्चार्थद्वारकं तेन चिकीर्षितुमिच्छतीतीच्छासन्नन्तान्नेच्छासन् स्वार्थसन्नन्तात्तु स्यादेव । जुगुप्सिषते । मीमांसिषते । एतच्च न्यायसिद्धम् । तथाहि । लक्ष्यवशादिह जातिः पदार्थ तत्र च सकृल्लक्षणं प्रवर्त्ततइति सन्प्रकृतेः प्राक् तदन्तप्रकृत्यसम्भवात्तदन्तात्प्रत्ययस्य प्रसङ्ग एव नास्तीत्याहु'। एवं तु यङ् सन् ण्यन्तात्सनि बोभूयिषायिषतीत्यादि यङ्लुकोर्न लब्धेनं विरुध्यते। तस्माद्वाचनिकः सन्नन्ता तदभाव इत्येव सारम् । इह यो ग्रामं गन्तुमिच्छति तस्य यद्यपि ग्रामो न स्वरूपेणेष्टः ग्रामो मे स्यादिति । तथापि गम्यमानतारूपेणेष्ट एव । अत एव ग्रामो जिगंस्यते जिगमिषितव्यः जिगमिषितः सुजिगमिष इति सन्नन्ताद्ग्रामे कर्मणि लादयो भवन्ति । गमनं प्रति कर्मत्वमप्यस्त्येव । अत एव ग्रामं ग्रामाय वा जिगमिषतीत्यत्र गत्यर्थकर्मणीति द्वितीयाचतुर्थ्यौ भवत इति भाष्ये स्थितम् । एवं च ग्रामो गमनं चेत्युभयमिषेः कर्म शक्यं च क्षुद्रुपहन्तुमिति पस्पशायां भाष्यस्य तत्रत्यकैयटस्य च पर्यालोचनया क्षुद् उपहननं चेत्युभयं शकेः कर्मेति स्थितम् । एवं च गन्तुमिष्यते शक्यते चेति प्रयोगे ग्रामो ग्रामं चेत्युभयमपि विवक्षाभेदेन साधु । प्रथमान्तस्य हि इषिशकिभ्यां कर्मत्वेन शाब्दान्वयः । गमिना त्वार्थः । द्वितीयान्तस्य तु गमिं प्रति कर्मत्वं शाब्दम् । इषिशकी प्रति तु विशिष्टस्य वैशिष्ट्यं, विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति वा बोध्यम् । एतेन इषिशकी च द्विकर्मकौ भाष्ये

स्थिताविति माधवग्रन्थो व्याख्यातः । किन्तु एतदुपष्टम्भेन अयाचितारं नहीति श्लोके देवदेवस्य शक्तिकर्मत्वं यदुपपादितं तच्चिन्त्यम् । उक्तरीत्या हि सुतां ग्राहयितुमिति द्वयं कर्मास्तु गृह्णातिकर्तुस्तु शक्तिकर्मतायां कः प्रसङ्गः ॥

इति श्रीशब्दकौस्तुभे तृतीयस्याध्यायस्य
प्रथमे पादे प्रथममाह्निकम् ॥

सुप आत्मनः क्यच् ॥ कर्मण इच्छायां वेति वर्तते । इषिकर्मण एषितृसम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात् । आत्मनः पुत्रमिच्छति पुत्रीयति । आत्मशब्दोत्र परव्यावृत्तिपरः स्वशब्दपर्यायो गृह्यते न तु चेतनमात्रवचनः । तथात्वे हि स इच्छां विशेषयेत्, सुबन्ते वा । आद्येपि आत्मन इति कर्तरि षष्ठी चेत् आत्मा चेदिच्छतीति तर्हि पर्यवस्येत् । तथा च व्यर्थविशेषणता । नह्यनात्मा इच्छति । कर्मषष्ठ्यां तु अश्ववृषीरेति सूत्रं न सङ्गच्छेत । क्षीरादिभ्यः क्यचो दुर्लभत्वात् । द्वितीयेपि व्यर्थविशेषणतैव । परस्यापि हि इष्यमाणः चेतनसम्बन्धी भवत्येव । तस्माद्यथोक्तमेव साधु । स्वस्य यत्सुबन्तमित्यत्र तु कस्य स्वस्येत्यपेक्षायां इच्छया एषितुः संनिधापितत्वात् तस्यैवेति लभ्यते । न चैवमपि आत्मनः पुत्रं परस्य स्वामिनमिच्छतीत्यत्र प्रसङ्गः । सुबन्तस्यात्मसम्बन्धित्वादिति वाच्यम् । तद्यत्र यथायथंचिदात्मसम्बन्धित्वं विवक्षितम्, किं तर्हीष्यमाणं रूपं आत्मसम्बन्धित्वेन यदेष्यते तदा प्रत्ययः । इह स्वात्मीयत्वेन नेच्छा किन्तु परस्वामित्वेनेति न दोषः । सुब्ग्रहणं पदविधित्वार्थं, तेन समर्थपरिभाषोपस्थानान्महान्तं पुत्रमिच्छतीत्यादौ सापेक्षान्न भवति । अन्यथा महान्तं पुत्रीयतीति स्यात् । न च सुब्ग्रहणं विनापि कर्मण इ

त्यनेनैव पदविधित्वं लभ्यतामिति वाच्यम् । यत्र हि पदस्यासाधारणं रूपमाश्रीयते स पदविधिः कर्मत्वं तु अपदेपि दृश्यते । धातोः कर्मण इति यथा । कथं तर्हि कर्मण्यणित्यादौ पदविधित्वमिति चेत् । उपपदसंज्ञाया अन्वर्थत्वबलादिति गृहाण । महापुत्रीयतीति तु महापुत्रमिच्छतीति विग्रहे बोध्यम् । आत्मनः किम् । राज्ञ पुत्रमिच्छति पुरोहितः । नन्वसामर्थ्यादेवात्र न भविष्यतीति चे, त्तर्ह्यात्मनः पुत्रमिच्छतीत्यत्रापि न स्यात् । ननु लौकिके विग्रहे आत्मन इति प्रयोगेपि अलौकिके प्रक्रियावाक्ये केवलात्पुत्रशब्दात् क्यजिति चेत्तर्हि तथैव परकीयपुत्रेच्छायामपि स्यादिति गृहाण । किञ्च पुत्रशब्दस्य नित्यसापेक्षत्वान्नासामर्थ्यम् । अपि च । यत्रार्थादेव परकीयत्वं गम्यते तत्र परस्येति प्रयोगाभावात्स्वषष्ठ्यैवातिव्याप्ति । अघमिच्छतीति यथा । न हि कश्चिदात्मनो ऽघमिच्छति । क्यचः ककारो नः क्ये इति सामान्यग्रहणार्थः । लोपइत्युक्ते हि सामसु साधुः सामन्य अत्रापि स्यात् । चकारस्तदविघातार्थं । स्वरस्तु प्रत्ययस्वरेण धातुस्वरेण वा सिद्ध । अकारस्तु यद्यपि न श्रवणार्थ, आर्द्धधातुकेषु लोपात्सार्वधातुकेषु शपा गतार्थत्वात् तथापि गुणवृद्धिनिषेधार्थः सः । तथाहि । समिधं दृषदं चेच्छति समिध्यति दृषद्यति । ततो ण्वुल् अतोलोपः यस्यहलः, क्यस्यविभाषा । समिधकः । दृषदकः । अत्रालोपस्य स्थानिवद्भावात्पुगन्तेति गुणो ऽतउपधाया इति वृद्धिश्च न भवति । किञ्च मृदमिच्छति मृद्यति । मृद्यतेरचोयत् । अतोलोपादि पूर्ववत् । मृद्यम् । यतोनाव इत्याद्युदात्तत्वम् । अपि च, पुत्रीयतीत्यादौ शपोनुदात्तता स्यात् । शपा सहैकादेशे तु स उदात्तो भवति । अपि च मृद्यतेरनेकाच्त्वाद्यको-

नुत्पत्तिरात्मप्रत्ययश्च' फलमिति दिक् । क्यचि मान्ताव्ययानां प्रतिषेधः ॥ मान्तश्चाव्ययं चेति द्वन्द्वः । तेन तत्प्रकृतिकं लक्ष्यते । मान्तप्रकृतिकादव्ययप्रकृतिकाच्च सुबन्तान्न क्यजित्यर्थः । यथाश्रुते तु पुत्रमिच्छतीत्यादौ क्यज् न स्यात् काविच्छति कानिच्छतीत्यादौ च स्यात् । इदमिच्छति स्वरिच्छति । गोसमानाक्षरनान्तादित्येके । गामिच्छति गव्यति । वान्तोयिप्रत्यये। दधीयति मधूयति। अकृत्सार्वेति दीर्घः। कर्त्रीयति हर्त्रीयति । रीङृतः । राजीयति । तक्षीयति । नः क्ये, पदत्वान्नलोपे क्यचिचेतीत्वम् । न लोप· सुप्स्वरेति नियमान्नासिद्धत्वम् । अस्मिन्पक्षे वाच्यति मृग्यतीत्यादि न सिद्ध्येदिति नायं स्थितः पक्ष इत्याहुः । छन्दसि परेच्छायामपि ॥ जहियोनो अघायति । मात्वा वृका अघायवो विदन् । ज्ञापकात्सिद्धम् ॥ यदयं क्यचि प्रकृतेरीत्वबाधनार्थम् अश्वाघस्यादित्याकारं शास्ति न हि कश्चिदात्मनो अघमिच्छति । न चाचारक्यजर्थं तत् । छन्दसि अघशब्दादाचारे क्यचो ऽदर्शनात् । उदाहृतस्थले इच्छार्थैव प्रतीतिरित्याहुः । क्यजन्तेषु प्रकृत्यर्थो यद्यपि कर्म तथापि तस्य धात्वर्थान्तर्भावात् जीवनिनृत्यतीत्यादिवदकर्मकाः एवेच्छाक्यजन्ताः । अतोस्माद्भावे कर्तरि च लादयः । आचारक्यजन्ते तु पुत्रादिरुपमानकर्मणो धात्वर्थान्तर्भावेपि छात्रादेरुपमेयकर्मणोनन्तर्भावात्सकर्मणि लादयो भवन्त्येव । पुत्रीयते छात्रः, पुत्रीयितव्य इत्यादि यथा । श्येनायते काक इत्यत्र उपमानकर्तुरन्तर्भावेपि उपमेयकर्तरि लो भवति, तद्वत् । तत्करोत्यमुण्डं करोति मुण्डयति माणवकमिति न गिरेवेत् । णिजन्ते मौण्ड्यगुणविशिष्टत्वेनैव धर्मान्तर्भूतं न तु माणवकस्या- दिना विशेषणेनेति । यदि तर्हि तथैव मुण्डमिच्छति मुण्डीयति

माणवकमित्यपि स्यात् । सापेक्षत्वेनासामर्थ्यान्न क्यजिति चेत्तर्हि तत एव णिजपि न स्यात् । तस्माणिच्क्यचोर्विशेषो वक्तव्य इति चेत् । उच्यते । तत्करोतीति णिचि सिद्धे मुण्डमिश्रेति पुनर्विधानं सापेक्षेभ्योपि यथा स्यादित्येवमर्थमेव । क्यच् तु निरपेक्षेषु चरितार्थ इति स्पष्ट एव विशेषः । यद्वा । कण्ड्वादिवत् मुण्डादयो द्विविधाः । धातवः प्रातिपदिकानि च । तत्र सौत्रा एते विशिष्टक्रियावचना धातवः तेभ्यश्चुरादिवत्स्वार्थे णिच् । प्रातिपदिकानां तु विग्रह एव । माणवकं मुण्डं करोतीति । अथवा मुण्डयतीत्यत्र कमिति विशेषाकाङ्क्षा अनुभवसिद्धा । मुण्डस्यैव वा शुद्धेन करोतिनान्वयः । मौण्ड्यविशिष्टेन तु माणवकस्य । यथा गां दोग्धि पय इति शुद्धस्य दुहे पूर्वं गवा सम्बन्धः । पश्चात्तु गोदुहिना पयस । क्यच्प्रत्ययस्तु अनभिधानान्न भवति । माणवकं मुण्डीयतीत्युक्ते मुण्डमिवाचरतीत्यर्थान्तरमेव गम्यते । तदुक्तं हरिणा । सदपीच्छाक्यच कर्म तदाचारक्यचाहृतम् । वाक्यवाच्यमतोऽव्यक्तेर्यथाभ्यास क्रमादिष्विति ॥ अस्यार्थ । सदपि न्यायतः सम्भवदपीच्छाक्यच कर्म वाक्यवाच्यं माणवकं मुण्डमिच्छतीत्येवरूपेण बोधनीयम्, न तु क्यजन्तेन । यत आचारक्यचा हृतं निरवकाशीकृतम् । तदर्थस्यैव निरूढेः । आचारक्यचाहरणे वाक्यवाच्यत्वे वा हेतुमाह । अतो व्यक्तेरिति । अतोऽस्मात् क्यचो व्यक्तेराचारार्थस्यैव प्रतीतेः । अतो वाक्यादिच्छाकर्मणः प्रतीतेरिति वा । यथा क्रमादिषु गत्यर्थेषु अभ्यासः पौनःपुन्यं वाक्येनैव गम्यते न तु यङा । कौटिल्ये निरूढेः । उक्तं च प्रकीर्णकाण्डे । सदपीच्छाक्यच कर्म वाक्यएव प्रयुज्यते । प्रसिद्धेन हृतः शब्दो भावगर्हाभिधायिना ॥

अभ्यासे तुल्यरूपत्वान्न यङन्तः प्रवर्तते, इति ॥ एतेन यथेति क्रमादिषु यथा वेदादिविषयोऽभ्यासो व्यज्यते तथा वाक्ये इच्छा क्यच कर्मेत्यर्थः। अथवा ऽभ्यासक्रमादिष्वित्येकं पदम्। अभ्यासे न वर्णक्रमादिविषयाभिव्यक्तिर्भवति तथा वाक्येन कर्मत्वविषयाभिव्यक्तिरित्यर्थ इति विवरणमप्यत्युक्तम् । अत्र भाष्ये क्यजन्तस्य इष्ट पुत्र इष्यते पुत्र इत्यादयो विग्रहा निराकृता । तस्यायमाशयः । यद्यपि वृत्तिवाक्ययोरत्यन्तसमानार्थकता नास्तीत्यदूरविप्रकर्षेणैव सर्वत्र विग्रहस्तथापि सुसदृशसम्भवे मन्दसदृशोपादानमन्याय्यम् । इच्छाक्यजन्तस्य चाकर्मकतया कर्मप्रत्ययान्तैर्विग्रहोऽनुचितः । निरर्थकाधिकावापापत्तेरिति । अत एव बाहुलकात्कर्मणि क्विबन्तस्य श्रीशब्दस्य श्रीयते इत्येव विग्रहो न्याय्यो न तु श्रयन्त्येतामिति कर्त्रर्थतिङन्तेनेति मान्या । यदि तु कर्तरि क्विप् तर्हि श्रयतीत्येव विग्रह इत्यन्यदेतत् । एवं च श्रयन्त्येतामित्यत्र किं शब्दाशुद्धिरर्थाशुद्धिर्वेत्यादिवल्गनम् प्रत्यभाष्यापर्यालोचनमूलकत्वादुपेक्ष्यम् ॥ अथ नामधातुषु प्रतिसूत्रं लेशतः प्रक्रिया व्युत्पाद्यते ॥ पुत्रीयतीत्यादौ अलौकिके प्रक्रियावाक्ये सन्धिकार्यरहितात्पुत्रअ मित्यस्मात्क्यचि सुपो लुक् अन्तरङ्गानपीति न्यायात् । तत क्यचिचेतीत्वम् । अश्वस्यति । वृषस्यति । क्षीरस्यति । लवणस्यति । अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचीत्यसुगागमः । अत्रात्मप्रीतावित्यप्रनीय अश्ववृषयोर्मैथुनेच्छायाम् । क्षीरलवणयोर्लालसायामिति वक्ष्यते । तेनाद्ययोरुदाहरणयोरश्ववृषयोर्मैथुनायेच्छतीत्यर्थ । अन्येतु परित्यक्तप्रकृत्यर्था मैथुनेच्छैवार्थ इत्याहुः । तथा च कालिदास । इति रामो वृषस्यन्तीं वृषस्कन्ध शशास तामिति। निघण्टुश्च, वृषस्यन्ती तु कामुकीति । इतरयोरपि, तृष्णाति

रेको ऽभ्यवजिहीर्षातिरेको लालसा । तेन क्षीरलवणेच्छायां लालसारूपायामित्यर्थलाभात् क्षीरलवणे अतिशयेन अभ्यवहर्तुमिच्छतीत्यर्थ । अत्र प्रकृत्यसुगकारयोः सवर्णदीर्घं बाधित्वा अतोगुणइति पररूपम्। अकारोच्चारणं तु पूर्वसूत्रोदाहरणे ब्राह्मणास इत्यादौ कृतार्थम् । तथा सर्वप्रातिपदिकेभ्यो लालसायामसुग् वक्तव्य इत्यनकारान्तादसुकि दध्यस्यतीत्यादौ च । सुगसुकौ च दधिमधुभ्यामेव स्तः । भाष्ये दधिस्यति मधुस्यतीत्येव मर्थमित्युक्तेरित्येके । अन्ये तु सर्वप्रातिपदिकेभ्य इत्येके इति सर्वग्रहणाद्बहुवचननिर्देशाच्च सर्वत्र स्तः । एवमर्थमिति तूदाहरणान्तराणामप्युपलक्षणमिति वदन्ति । अशनोदकधनेभ्यः क्यचि अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु इत्यशनधनयोरीत्वापवाद आत्वम् उदकस्योदन्नादेशश्च । अशनायति सद्यो भोक्तुमशनमिच्छतीत्यर्थः । बुभुक्षायां किम् । अशनीयति । औत्तरकालिकमशनमिच्छतीत्यर्थः । उदन्याति । पातुमुदकमिच्छतीत्यर्थः । उदकीयति । स्नानाद्यर्थमुदकमिच्छतीत्यर्थः । धनीयति । सत्यपि धने भूयोपीच्छतीत्यर्थ । धनीयति । दरिद्र सन् धनमिच्छतीत्यर्थः । के चित्तु अशनादिप्रकृत्यर्थमनपेक्ष्य केवलं बुभुक्षादीनेव क्यजन्तस्यार्थान् मन्यन्ते । तथा च निघण्टु । उदन्या तु पिपासा तृडिति । भारविश्च । किमु धन धनायितुमिति । गार्ग्यमिच्छति गार्गीयति।अत्र क्यच्व्योश्चेति हलउत्तरस्य आपत्यकारस्य लोप । उपार्षभीयति। उपर्षभीयति। उपाल्कारीयति। उपल्कारीयति। अत्र वासुप्यापिशलेरिति वृद्धिविकल्पः। पक्षे गुणः। न च पक्षे ऋत्यक इति प्रकृतिभावः शङ्कनीयः । वासुपीत्यत्र हि उपसर्गादृतिधाताविति सम्पूर्णमनुवर्त्तते । तत्र यत्क्रियायुक्ता इति न्यायेनोपसर्गग्रहणादेव धाताविति लब्धेपुनर्धातुग्रहण योगवि

भागेनाधिकविधानार्थं सत्प्रकृतिभावं बाधतइति षष्ठे वक्ष्यमाणत्वात् । उपगताऋभीयका अमुन्देशम् उपर्षभीयको देशः । इह गुणप्रकृतिभावौ न तु वृद्धिः । गमिम्प्रत्युपसर्गत्वेपि सुब्धातुं प्रत्यतथात्वात् । न चोपसर्गादध्वन इत्यादाविव प्राद्युपलक्षकत्वम् । तत्रैवात्र मुख्ये बाधकाभावात् । ऋषभस्य समीपमुपर्षभं तदिच्छति उपर्षभीयति । अत्रापि गुणप्रकृतिभावौ न तु वृद्धिः पूर्ववत् । स्यादेतत् । धातुसंज्ञानिमित्ते प्रत्यये चिकीर्षिते उपसर्गाः पृथक् क्रियन्तइति तावद्वक्ष्यते । उदमनायत उन्मनाय्य गतः उन्मिमनायिषते इति अड्ल्यप्द्विर्वचनानि यथा स्युरिति । एवं चेहापि ऋषभशब्दादेव क्यच् । तेन उपार्षभीयत् । उपर्षभीय्य । उपेन प्रादिसमासः । उपार्षिषभीयिषतीत्यादि सिध्यतु, वृद्धिस्तु कुतो नेति चेन्न । ऋषभीयतेरिह सुब्धातुत्वाभावात् । प्रत्ययग्रहणपरिभाषया हि उपर्षभशब्दोत्र सुबन्तः न तु केवल ऋषभशब्दः । तदिह यः सुबन्तो नासौ धात्ववयवः यश्च धात्ववयवः नासौ सुबन्तः । किञ्चोपसर्गत्वाभावादपि न वृद्धिः । अत एव ल्यबर्थं प्रादिसमास इत्युक्तं न तु गतिसमास इति । न च सोपि ल्यबन्तेनासामर्थ्यात्कथमिति वाच्यम् । प्रकृत्येकदेशद्वारकस्य विशिष्टेन सामर्थ्यस्य क्रुत्सु सर्वत्र वाच्यत्वात् । न चोक्तरीत्या सुब्धातुत्वाभावे यथेष्टद्विर्वचनं न सिध्येदिति वाच्यम् । नामधातुत्वस्यैव तत्र प्रयोजकत्वात् । ऋकारमिच्छति ऋकारीयति उपर्कारीयतीत्यत्र यासुपीति वृद्धिः शाकलप्रकृतिभावश्चेत्युभयं न भवति । क्रतीति नपरकरणात् । उस्रामिच्छत् औस्रीयत् । औकारीयत् । आऊढ ओढः, औढीयत् । अत्र उत्तरपदान्तात् ओमाङोश्चेति पररूपं प्राप्तम् आटश्चेति पुनर्वृद्धिविधानार्थेन चकारेण बाध्यते । यथा च षष्ठे वार्तिकम् । उस्योमाङ्क्ष्वाटः प्रति-

पेय इति। उसि ओमाङोश्च परयोराट् पररूपं नेत्यर्थः। स्यादेतत्। उक्तवार्तिके आड्ग्रहणम् औढीयदिति तद्भाष्यं चासङ्गतम्। उपसर्गाणां पृथक्करणस्य ज्ञापितत्वात्। न च सन्ध्यभावविषयकमेव तदिति वाच्यम्। उपर्षभीयतीत्यत्र तदभावापत्तेः। न चेष्टापत्तिः। माधवादिग्रन्थविरोधात्। अत्राहुः। यत्रोपसर्गस्वरूपमविकलं पृथक् प्रतीयते स ज्ञापकस्य विषयः। इह तु आङ् उकारेण सहैकादेशेन तथेति ओकारात्पूर्वमाङ्। तस्य अन्तवद्भावलब्धाङ्व्यपदेशेन ओकारेण सह प्राप्तं पररूपं वृद्धिं मा बाधिष्टेति वार्तिके आड्ग्रहणम्। उक्तवार्तिकभाष्यग्रन्थ एव च ज्ञापकस्य विशेषविषयत्वे प्रमाणमिति। एवं स्थिते आ इतः एतः। ऐतीयत्। एतिमित्वा। एतितीयिपतीत्यादि द्रष्टव्यम्। प्र एतीयतीति स्थिते एङिपररूपं बाधित्वा प्राप्तामत्स्येधतीति वृद्धिं ओमाङोश्चेति पररूपं परत्वाद्बाधते। प्रेतीयति। आगतऋश्यः आ ईषदृश्यो वा अर्श्यः। प्रादिसमासः। अर् गुणः। अर्श्यमिच्छति अर्श्यीयति आर्श्यीयत्। अत्र गुणस्य अन्तवद्भावेन आङ्त्वादोमाङोश्चेति पररूपं प्राप्तं परत्वात्तद्बाधित्वा सवर्णदीर्घः प्राप्तः सोपि आटश्चेति पुनर्वृद्धिविधानार्थेन चकारेण बाध्यतइति केचित्। तन्न। रूपे विशेषाभावात्। पुनर्विधानस्य पररूपबाधेनोपक्षीणत्वाच्च। अत एवोस्योमाङ्क्ष्विति वार्तिकेन पररूपमेव निषिद्धमिति दिक्। अर्श्यीयतीत्यस्य प्रादिपूर्वत्वे प्रर्श्यीयति। अत्र ओमाङोश्चेति बाधित्वा परत्वात्प्राप्त सवर्णदीर्घः चकारेण पुनः पररूपविधानान्नेति माधवः। अरमिच्छति अरीयति। रीङृतः। अलमिच्छतीत्यत्रापि इदमेव रूपं सावर्ण्यात्। तपरकरणाद्दीर्घस्य न रीङ् नापि ऋत इत्वम्। अधातुत्वात्। ऋयति। हेशब्दमिच्छति हेयति गामिच्छति गव्यति। गव्यिता।

अतो लोपे क्यस्यविभाषेति हल उत्तरस्य क्यप्रत्यययकारस्य प्राप्तो लोपः सन्निपातपरिभाषया न भवति । अगर्व्यीत् । वद्व्रजेत्यत्र हल्ग्रहणस्य हल्समुदायस्य प्रतिपत्त्यर्थत्वेपि अल्लोपस्य स्थानिवत्त्वेनाङ्गस्य हलन्तत्वाभावान्न वृद्धिः । रैयति ग्लाव्यति ग्लाव्यिता । श्वलिह्यति । श्वलिह्यिता । श्वलिहिता । अश्वलिहीत् । अत्र हलन्तलक्षणा वृद्धिर्न । अल्लोपस्य स्थानिवत्त्वान्नेटीति निषेधाच्च । अत्र होढ इति ढत्वं न । न क्ये इति नियमेनापदान्तत्वात् । अत एव गोदुह्यतीत्यत्र दादेरिति घत्वं मित्रद्रुह्यतीत्यादौ वाद्रुहेति तद्विकल्प उपानह्यतीत्यत्र नहोध इति धत्वम् अनुडुह्यतीत्यादौ वसुस्रंस्विति दत्वं च न । पुरमिच्छति पूर्यति । हलिचेति दीर्घ । यत्तु अधातुत्वान्न दीर्घ इति माधवेनोक्तम् । तन्न । पिपर्त्तेः क्विपि उदोष्ठ्यपूर्वस्येत्युत्वे रपरत्वे च निष्पन्नस्य पुरशब्दस्य धातुत्वानपायात्।कथमन्यथा पू पूर्भ्यामित्यादौ दीर्घः । कथं च ऋक्पूरब्धूः पूः सर्वयोरित्यादिनिर्देशा इति दिक् । एवं गिरमिच्छति गीर्यति । अत्रापि गिरतेः क्विपि ऋत इत्वे रपरत्वे प्राग्वद्दीर्घ । गीर्यिता । गिरिता । क्यस्यविभाषेति यलोपपक्षे हल्परत्वाभावान्न दीर्घः । र्वोरिति पदस्य विधीयमानोपि न नः क्यइति नियमेनापदत्वात् । स्वरिच्छतीति तु वाक्यमेव न तु क्यच् । मान्ताव्ययेभ्यः प्रतिषेधात् । चतुर्यति । दिव्यति । अनयोरधातुत्वाद्धलिचेति दीर्घो न चतुर्दिव्शब्दौ हि चतेरुरन्निति सूत्रेण दिवेर्डिविरिति न्यासोहितसूत्रेण च व्युत्पन्नौ । अव्युत्पन्नावेव वा । उभयथापि धातुत्वाभाव स्पष्ट एव । यत्तु प्रक्रियायां हलिचेति दीर्घः दिवमिच्छति दीव्यतीत्युक्तम् । तदप्रामाणिकमेव । तथा च हलिचेति सूत्रे काशिका,

धातोरित्येव । दिवमिच्छति दिव्यतीति । यत्तु दिवेरौणादिके क्विपि दिव्शब्दो धातुरेवेति व्युत्पत्तिपक्षमाश्रित्य प्रक्रियाग्रन्थ । अव्युत्पत्तिपक्षमाश्रित्य तु काशिकेत्यविरोध इति प्रसादकृतोक्तं, तत्तुच्छम् । क्विबन्तत्वे ऊठः प्रसङ्गात् भाष्यविरोधाच्च । दिवऔदिति सूत्रे हि अक्षद्यूरित्यत्र अतिव्याप्तिमेकदेशविकृतस्यानन्यत्वादाक्षिप्य निरनुबन्धकपरिभाषया उगिदचामिति सूत्राद्धातुग्रहणानुवृत्त्या वेति द्वेधा समाहितम् । उभयथापि त्वत्पक्षे असङ्गति स्पष्टैवेति दिक् । तमिच्छति तद्यति । यद्यति । प्राणितीति प्राण् । प्राण्यति । अहर्यति । रोसुपीति रुत्वापवादो रेफः । स च नलोपे कर्तव्ये असिद्धो नेति वक्ष्यते । उज्झे.. क्विप् उत् । तमिच्छति । उज्झ्यति । ककुभ्यति । मृडं परिवृढं वाचक्षाणमिच्छति । मृड्यति । परिव्रड्यति । णाविष्ठवदित्यतिदेशात्परिवृढर्ऋकारस्य रेफः । बुधेः क्विप् । भुत् । तमिच्छति बुध्यति । त्वां मामिच्छति त्वद्यति मद्यति । अतित्वामतिमामिच्छति । अतित्वद्यति अतिमद्यति । प्रत्ययोत्तरपदयोश्चेति त्वमौ । युवामावां वेत्यादिविग्रहे युष्मद्यति अस्मद्यति। अतियुष्मद्यति । अत्यस्मद्यति । उखा पन्थानं च आचक्षाणमिच्छति उख्यति । पथ्यति । मरुत्यति । अदस्यति । पयस्यतीत्यादि ॥

काम्यच्च ॥ उक्तविषये काम्यच् स्यात् । पुत्रमात्मन इच्छति पुत्रकाम्यति । सुपआत्मनः क्यच्काम्यचाविति वक्तव्ये उत्तरत्र द्वयोरनुवृत्तिर्मा भूदित्येवमर्थो योगविभागः । न चैवमपि सन्निहितत्वात्काम्यजेवोत्तरत्र सम्बध्येतेति वाच्यम् । इह चकारेणानुकृष्टस्य क्यच उत्तरार्थत्वात् । सुपआत्मनः काम्यच् क्यचेति तु सूत्रयितु युक्तम् । काम्यचः ककारस्य इत्संज्ञा न ।

फलाभावात् । न च कितिचेति निषेध फलम् । अधातुविहितत्वेन आर्द्धधातुकत्वाभावादेव गुणाप्राप्तेः । वाकाम्यतीत्यत्र सम्प्रसारणं फलं स्यादिति चेन्न । पष्ठान्ते प्राणहत्यं तस्वानिपातनेन धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमिति ज्ञापयिष्यमाणत्वात् । तत्प्रत्ययो धातुसंशब्दनेन विहितः प्रत्यय इति प्राञ्च. । स्वरूपग्रहणं च नेह गृह्णग्राहिकयोपादानम् । तथा सति घृतस्पृग्म्यामित्यादावनुदात्तस्यचर्दुपधस्येत्यमागमप्रसङ्गात् । किन्तु यत्कार्यं धातुं न व्यभिचरति तत्रेयं परिभाषोपतिष्ठते । तथा च स्वरूपग्रहणं नाम धातोरेवाश्रयणं तच्च यथा कथञ्चिदित्यास्तां तावत् । चकारस्तु भाष्यवार्तिकयोः प्रत्याख्यातः । न्यासकारहरदत्तमाधवास्तु पुत्रकाम्यिष्यतीन्यादौ सतिशिष्टमपि स्यस्वरं बाधित्वा धातुस्वरो यथा स्यादित्येतदर्थं चित्करणमित्याहुः । तत्तु प्रौढिवादमात्रं मुनिवचनविरोधेन स्वोत्प्रेक्षितस्वरस्यानादर्त्तव्यत्वादिति सुहृदयैर्विभाव्यताम् । पुत्रकाम्यिता । पुत्रकाम्यिष्यति । इह यस्यहल इति न भवति । अनर्थकत्वात् । यस्येति हि सङ्घातग्रहणादर्थवद्ग्रहणेनानर्थकस्येति वक्ष्यते । अत एव प्रयतौ पुत्रकाम्ययेति सिध्यति । इहान्तर्वर्तिन्या विभक्त्या पदत्वाद्यथायोगं पदकार्याणि । यशस्काम्यति । रुत्वं विसर्गः । सोपदादाविति सत्वम् । स्वः काम्यति । सोपदादावनव्ययस्येति वचनात्सत्वाभावः । अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिविषये शक्तिमत्प्रधानत्वात् । इषिणा कर्मत्वेन योगः । गीः काम्यतीत्यादौ । रोः काम्य इति रोरेव विसर्जनीयस्य काम्ये सत्वनियमात्सत्वाभावः । सर्पिष्काम्यति । सत्वं बाधित्वा इणः प इति प. । अयं च सत्वापवादतया यत्र तत्प्रसङ्गस्तत्रैव । तेनोच्चैः काम्यति गीः काम्यतीत्यादौ

न भवति । पुंस्काम्यति । अत्र पुंसः संयोगान्तलोपे पुमः खय्यमपरइति रुत्वं निर्वर्त्य सम्पुम्कानां सो वक्तव्य इति सत्ववचनान्नास्ति विसर्जनीय इति न षत्वम् । मान्ताव्ययेभ्योप्ययं भवत्येव । किंकाम्यति । अनुस्वारपरसवर्णविकल्पौ ॥

उपमानादाचारे ॥ उपमानात्कर्मणः सुबन्तादाचारेर्थे क्यच् स्यात् । पुत्रमिवाचरति पुत्रीयतिच्छात्रम् । विष्णूयति द्विजम् । अधिकरणाच्चेति वक्तव्यम् ॥ प्रासादीयति कुट्यां कुटीयति प्रासादे । इहोपमेये सप्तमीश्रवणादुपमानमपि सप्तम्यन्तमेवेति कर्मत्वाविवक्षया सूत्रेणासिद्धे वार्तिकारम्भः । सूत्रवार्तिकयोरुभयोरप्युदाहरणे क्यच्प्रत्ययस्य आचारमात्रमर्थः । प्रकृतेस्तु वृत्तिविषये एकत्र स्वार्थकर्मकाचरणसदृशमर्थः । अपरत्र स्वार्थाधिकरणकाचरणसदृशम् । तच्च प्रत्ययार्थे ऽभेदेन संसर्गेण विशेषणम् । प्रत्ययार्थे भूताचरणक्रिया तु उपमेया । सा च बाह्याभ्यां कर्माधिकरणाभ्यां सम्बध्यते ॥

कर्तुः क्यङ् सलोपश्च ॥ उपमानात्कर्तुः सुबन्तादाचारे क्यङ् वा स्यात् । सान्तस्य तु कर्तुरर्थोत्यस्येति लोपो वा स्यात् । प्रत्ययविकल्पनात्पक्षे वाक्यम् । सान्तस्य लोपविकल्पस्तु व्यवस्थितः । ओजोप्सरसोर्नित्यमन्येषां तु विकल्प एवेति । कृष्ण इवाचरति । कृष्णायते । कथं तर्हि क्षीरोदीयन्ति सद्यः सकलजलधयो वासुकीयन्ति नागा इति । क्षीरोदमिव आत्मानमाचरन्तीत्यर्थे उपमानादाचारइति क्यच् । ओजायते । ओजःशब्दोत्र वृत्तिविषये तद्वति वर्तते । अप्सरस इवाचरति अप्सरायते । यशायते । यशस्यते । विद्वायते । विद्वस्यते । इह सूत्रे चकारोन्वाचये । तेन कर्तुः क्यङ् सर्वत्र भवति । यत्र तु सकारः सम्भवति तत्र लोपोपि । सेति च पृथक्पदं लुप्तषष्ठीकम् ।

तेन कर्तुर्विशेषणात्तदन्तविधि । अतो हंसायतइत्यादौ सलोपो न । सान्तेष्वपि लोपो व्यवस्थित । तथाच वार्तिकम् । ओजोप्सरसोर्नित्यमिति । एवं स्थिते ओजसोप्सरसो नित्यं पयसस्तु विभाषयेति काशिकायां पयोग्रहणं ओजोप्सरोभिन्नसकारान्तस्योपलक्षणार्थम् । एतेन यशः प्रभृतेर्नैव भवतीति भ्राम्यन्तः परस्ताः । यत्तु प्रक्रियायां सुपूर्वस्य मनसो नित्यमितिं तदपाणिनीयम् । यत्तु विद्वस्यमानः शास्त्रे ऽधिकारीति वाचस्पतिग्रन्थव्याख्यावसरे कल्पतरुकारैरुक्तम् । विद्वस्यमान इति लोहितादिडाज्भ्यः क्यषिति । तल्लोहितादेराकृतिगणत्वेन मौढिवादमात्रम् । वस्तुतस्तु क्यङेवायं न तु क्यप् । लोहितादिसूत्रे नायं हलन्ताद्विधीयते इति वदद्भिर्भाष्यकारैर्हलन्तात्क्यपोनङ्गीकृतत्वात् । कथमन्यथा क्यस्यविभाषेत्यत्र सामान्यग्रहणार्थं ककारं प्रत्याचक्षीरन्नित्यवधेयम् । आर्चीरिवाचरति अर्चिष्यते । नः क्यइति नियमेन पदान्तत्वाभावात्पत्वम् । त्वद्यते । मद्यते । अनेकार्थत्वे तु युष्मद्यते । अस्मद्यते । कुमारीवाचरति कुमारायते । हरिणीव गौरीव गुर्वीवाचरति हरिणायते । गौरायते । गुरूयते । क्यङ्मानिनोश्चेति पुंवत् । सपत्नीवाचरति सपत्नीयते । अत्र पुंवद्भावो नेति न्यासकारः । यदाह नित्यंसपत्न्यादिष्वित्यत्र समुदायोच्चारण पुंवद्भावबाधनार्थमिति । तदेतद्युक्तिविरुद्धं भाष्याविरुद्ध च । तथाहि । समुदायनिपातनं रूढ्यर्थं समानस्य सभावार्थं चेति न त्वदुक्तार्थज्ञापकम् । तथा तसिलादिष्विति सूत्रे भाष्यकारः । सपत्नीशब्दाच्छिवाद्यणि भस्याढइति पुंवद्भावे सापत्न इति प्राप्य अढग्रहणमपनीय अनपत्यइति विवक्षया परिहृत्य गार्ग्यायण्या अपत्ये तु कुत्सिते गोत्रस्त्रियाः कुत्सनेणचेति णप्रत्यये गार्ग्यायण इति स्यात् ।

गार्ग्य इति चेष्यतइति दोषमुद्भाव्य भस्याढइति यथान्यास स्थापयित्वा नित्यंसपत्न्यादिष्विति समुदायनिपातनं परिहारत्वेनानभिप्राय शत्रुपर्यायात्सपत्नशब्दात् शार्ङ्गरवादिङीनन्तात् शिवाद्यणिति सापत्नशब्द साधितवान् । शिवादिषु समानः पतिर्यस्या इति व्युत्पादितस्य समानस्वामिकाभिधायिनो भाषितपुस्कस्य केवलयौगिकत्वाद्ग्रहण नेष्टमिति तदाशय । एवं स्थिते तस्माल्लिङ्गविशिष्टपरिभाषया पत्युत्तरपदलक्षणे ण्ये सापत्य इति भवति । भावकर्मणोः पत्यन्तलक्षणे यकि सापत्यमिति सुब्धातुवृत्तौ माधवः । तस्मात्क्यङ्यपि प्रकृतिभेदेन सपत्नायते सपतीयतइति द्वयमपि साधु । यत्तु पा रक्षणइति धातौ माधवेनोक्तम् । भावकर्मणोः पत्यन्तलक्षणे यकि सापत्न्यम् । अभाषितपुंस्कत्वात्पुंवद्भावो नेत्यादि । तन्तु विवाहजन्यसंस्कारविशेषनिमित्तकं पतिशब्दमाश्रित्य। इतरत्तु स्वामित्वमात्रपरमित्यविरोध । एवं च शिवादौ नित्यस्त्रीलिङ्गस्यापि योगरूढस्य ग्रहणात्सापत्नशब्दोद्व्यर्थः । सपत्नीयतइति च तृतीयमपि रूपं साध्वित्यवधेयम् । युवतिरिवाचरति युवायते । यत्तु ङ्याप्सूत्रभाष्ये युवतितरेत्युदाहरणात् यौवन जातिः । अन्यथा जातेश्चेति निषेधाभावात्तसिलादिष्विति पुंवद्भावः क्रियेतेति । तन्न । वयसो अनित्यत्वेन अजातित्वात् । कथमन्यथा अचः परस्मिन्निति सूत्रे युवजानिरिति भाष्यं सङ्गच्छेत । युवतितरेति तु भाष्यनिर्देशादेव न पुंवदिति कैयटे स्पष्टम् । पट्वी च मृद्वी च पट्वीमृद्व्यौ। ते इवाचरति पट्वीमृद्वयते। पूर्वपदस्य क्यङ्परत्वाभावान्न पुंवत् । पाचिकायते । नकोपधाया । चतुर्थीयते। सञ्ज्ञापूरण्योश्च । स्रौघ्नीयते । वृद्धिनिमित्तस्य चतद्धितस्यारक्तविकारे। काषायायते कन्था । रक्तार्थत्वान्नेह पुंव-

द्भावनिषेधः । खदिरस्य विकार खादिरी । पलाशादिभ्योवेति विकारे अणञोरन्यतरस्मिन् ङीप् । खादिरायते इत्यादि । आचारेवगल्भक्लीबहोडेभ्यः क्विब्वा ॥ क्यङपवादोयम् । पक्षे वाग्रहणात्क्यङपि । गल्भ धार्ष्ट्ये । क्लीबृ अधार्ष्ट्ये । होडृ अनादरे । एते पचाद्यजन्ता । अचो ऽकारस्य इहैव वार्तिके अनुदात्तत्वानुनासिकत्वे प्रतिज्ञायेते । तेन क्विबन्तादात्मनेपदं सिध्यति । क्विप्सन्नियोगेनानुनासिकत्वप्रतिज्ञानात्क्यङ्पक्षे इत्संज्ञा न भवति । स्यादेतत् । उक्तधातूनामनुदात्तेत्त्वादवगल्भते क्लीबते होडते इति सिद्धम् । तेभ्य एव पचाद्यजन्तेभ्यः क्यङि अवगल्भायतइत्यादि । न च अवगल्भतइत्यादीनां धार्ष्ट्यादिकमेवार्थं स्यान्न त्वाचार इति वाच्यम् । धातूनामनेकार्थत्वेनाचारार्थताया अपि लाभात् । तत्किमनेन वार्तिकेनेति चेत् । सत्यम् । अवगल्भाञ्चक्रे क्लीबाञ्चक्रे होडाञ्चक्रइत्यत्र प्रत्ययान्तत्वादाम् यथा स्यादित्येवमर्थमिदं वार्तिकम् । अवगल्भेति किम् । अनुपसर्गादुपसर्गान्तरविशिष्टाच्च क्यङेव यथा स्यात् । गल्भायाञ्चक्रे इति माधवादय । प्रक्रियायां तु अवेत्यपहाय केवलस्य पाठः । तदनुगामिप्रसादादिग्रन्थश्च प्रामादिक एव । धातुभ्य एव लिटि तु जगल्भे चिक्लीबे । जुहोडे । सर्वप्रातिपदिकेभ्यः ॥ न केवलमवगल्भादिभ्य एव किन्तु सर्वेभ्य एव आचारे क्विब्वक्तव्य इत्यर्थः । पूर्ववार्तिकन्तु अनुबन्धासंगार्थं स्थितमेव । प्रातिपदिकग्रहणादिह सुप इति न सम्बध्यते । तेन पदत्वाभावादुदाहरणेषु पदकार्याणि न । कृष्ण इवाचरति कृष्णति । अतोगुणइति शपा सह पररूपम् । एतेन च मेवाचरति चर्मतीति प्रक्रियाग्रन्थः परास्तः । अपदान्तत्वेन न लोपायोगात् । कथमन्यथा इहैव शपा सह पररूपं स्यादिति प

त्किञ्चिदेतत् । इह द्वितीयवार्तिके वाग्रहणं नानुवर्त्यम् । प्रातिपदिकविषयकेणानेन क्विपा सुबन्तविषयस्य क्यङो भिन्नविषयत्वादेव बाधस्याप्रसङ्गाद्वचनद्वयप्रामाण्याद्विकल्पोपपत्तेश्च । पूर्ववार्तिकेपि एतत्सिद्धक्विबनुवादेनानुबन्धासङ्गमात्रे तात्पर्यस्य भाष्ये स्थितत्वेन प्रादिपादिकविषयता वाशब्दवैयर्थ्यं चेति तत्त्वम् । तस्य सुबन्तविषयत्वे हि अन्तर्वर्तिविभक्त्या पदत्वात् गल्भतेः संयोगान्तलोपो दुर्वारः । अथ क्विबन्तेषु रूपाणि लेशत उदाह्रियन्ते । अ इवाचरति । अति । अतः । अन्ति । णलि अचोञ्णितीति वृद्धौ आतऔणल । औ । तथा च कशब्दस्य चकाविति हरदत्तः । माधवस्तु ण्यल्लोपाविति वचनाण्णलि वृद्धिं बाधित्वा अतोलोपाच्चकेत्युदाजहार । तन्मतेपि अशब्दस्य औ। अतुः । उः । सर्वत्रात्र द्विर्वचने अतोलोपादंतरङ्गत्वादन्तोगुणे पररूपत्वे तस्याङ्गग्रहणेन प्राप्तादतोलोपात्परत्वादभ्यासग्रहणेन ग्रहणादतआदेरिति दीर्घः । आतोलोपइटिचेत्याल्लोपः क्ङिति ।

एकाज्भ्योऽपि प्रत्ययान्तत्वादाम् स्यात् । चुलुंपादिभ्यश्च न स्यात् । अतोऽव्याप्त्यतिव्याप्तिपरिहाराय प्रत्ययग्रहणमपनीय तत्स्थाने अनेकाज्ग्रहणं कर्त्तव्यमित्यर्थकतया वार्तिकस्य व्याख्यातत्वात् । माधवादिभिरपि तदनुसारेणैव रूपाणामुदाहृतत्वाच्च । युक्तं चैतत् । कास्यनेकाज्ग्रहणमिति वार्तिकाक्षरस्वरसात् । अन्यथा हि अनेकाच उपसंख्यानमित्येव ब्रूयात् । न तु प्रत्ययशब्दावरुद्धकास्युत्तरभागमनेकाच निवेशयेत् । आगन्तूनामन्ते निवेशस्य न्याय्यत्वात् । चुलुंपाद्यर्थमिति वार्तिकशेषस्वरसो ममाप्यनुकूलोऽस्तीति चेन्न । तदपेक्षया उपक्रमस्य प्राबल्यात् । न चैवं गल्भादावाम् न स्यादिति वाच्यम् । तेषां क्विप्सन्नियोगेन एकाच्त्वेऽपि पूर्वमनेकाच्त्वात् । कास्यनेकाच इत्यत्र भूतपूर्वगतेराश्रयणात् । आचारेवगल्भेत्यादिवार्तिकस्यैव च भूतपूर्वगत्याश्रयणे प्रमाणत्वात् । तद्धि आम्प्रत्ययो यथा स्यादित्येवमर्थमिति भाष्यादौ स्पष्टम् । इह ज्ञापकस्य सामान्यविषयत्वे घटपटप्रभृतिभ्यस्तत्करोतिण्यन्तेभ्य क्विप्चेति क्वौ तत आचारक्वौ लिटि आम् भाव्यम् । गल्भादिविशेषमात्रविषयत्वे तु नेत्यन्यदेतत् । इदं त्ववशिष्यते । सर्वप्रातिपदिकेभ्य इति क्विपि परस्मैपदे प्राप्ते आत्मनेपदमनूद्य चरितार्थं वचनं कथमाम्प्रवृत्तिं साधयेदिति । अत्रोत्तरम् । वाक्याभ्यनुज्ञानार्थं कृतस्यापि इच्छासनि वाग्रहणस्य पूर्वसूत्रद्वये व्यवस्थापकत्वमाश्रित्य गुपादेर्निन्दाक्षमादिष्वेव सनान्यत्रेति यथा सिद्धान्तितं तथेहापि तद्बलेनैव सर्वप्रातिपदिकेभ्य इति क्विप् गल्भादेर्न कल्प्यते इति परस्मैपदनिवृत्तिस्तावत्सिद्धा । आत्मनेपदमपि स्वतन्त्रधातुभ्यो ऽस्त्येव । आचारार्थताप्यनेकार्थत्वात्सुलभा । तथा च वचनस्य नान्यत्र चरितार्थतेति ज्ञापकत्वं सुस्थमेव ।

एवं च सकलमहाग्रन्थविरुद्धं स्वामासेति प्रक्रियोदाहरणं न श्र-द्धेयमिति स्थितम् । इणो अयतेर्वा णिजन्तात्क्विप्चेति क्विप् आययतीत्याः । आययगाचक्षाण आः स इवाचरति आति । यमरमेतीदसकौ । आसीत् । आसिष्टाम् । एकादेशस्य 'पूर्वान्त-' त्वालिलङ्गविशिष्टपरिभाषया च मालेवाचरति मालाति । अ-मालासीत् । अमालासिष्टाम् । अस्माल्लङि अमालात् अमालाः । अत्र हल्ङ्याादिलोपस्तु न भवति । ङीसाहचर्यादापोपि सोरेव लोपविधानात् । कविरिव कवयति । कवयाञ्चकार । आ-शीर्लिङि कवीयात् । सिचिवृद्धिरित्यत्र ऋतइद्धातोरित्यतो धातोरित्यनुवृत्तेर्धातुरेव यो धातुरिति विज्ञानान्नामधातोर्न वृद्धिरिति कैयटहरदत्तौ । तन्मते गुणे अकवयीत् । वर्धमानोप्ये-वम् । माधवस्तु इक्परिभाषारम्भपक्षे धात्वनुवृत्तेः कैयटेन म-दर्शितत्वादिगन्ते नामधातावपि वृद्धिमिच्छति । तन्मते अकवा-यीत् । विरिव वयति । विवाय । विव्यतुः । अवयीत् । अवा-यीत् । इरिव अयति । इयाय । इयतुः । इयु । इययिथ । इयथु । इय । इयाय । इयिव । इयिम । अत्र कित्सु सवर्णदी-र्घे कृते इयङ् । यद्वा । दीर्घात्परत्वेनोत्तरखण्डे एरनेकाच इति यण् । गुणवृद्धिविषये तु अयायोर्द्विर्वचनेचीति स्थानिवत्वात् । एदैतोर्द्वित्वमभ्यासह्रस्वः । अभ्यासस्यासवर्णइतीयङ् । एदै-तोरपि स्थानिवत्त्वादिकारस्य द्वित्वमिति पक्षे तु सवर्णदीर्घात्प-रत्वादुत्तरखण्डस्य पुनर्गुणवृद्धी । ततोभ्यासस्येयङ् । लक्ष्मीरिव लक्ष्मयति । लक्ष्मयाञ्चकार । श्रीरिव श्रयति । शिश्राय । शि-श्रियतुः । शिश्रियुः । उरिव । अवति । अवाञ्चकार । इजा-देश्चेत्याम् । कुरिव कवति । चुकाव । भ्रूरिव भ्रवति । बुभ्राव । बुभ्रुवतुः । अचिश्नुधात्वित्युवङ् । गुणवृद्धिविषये तु ताभ्यां

वाध्यते । पितेव पिनराति । पितराञ्चकार । आशीर्लिङि रिङ्शयग्लिङ्क्षिति रिङादेशः । पित्रियात् । नेव नरति । ननार । एवाचरति अरति । पाध्रेत्यादौ नायं गृह्यते । अभिव्यक्तपदार्था ये इति न्यायेन धातुपाठस्थस्यैव ग्रहात् । एवञ्चास्माद्दृशब्दाल्लिटि ऋच्छत्यृतामिति न प्रवर्तते । तत्र धात्वभ्यासयोः सवर्णदीर्घे धातुग्रहणेन ग्रहणादृकारान्तलक्षणे गुणे अरतुरित्यादीत्येके । अन्येतु अभ्यासग्रहणेन ग्रहणादुरदत्वं हलादिः शेषः । अतआदेरिति दीर्घः । आतोलोपइटिचेत्यालोपः । अतुः । उरिति प्रत्ययमात्रमवशिष्यतइत्याहुः । द्रुरिवाचरति द्रवति । अनभिव्यक्तपदार्थत्वेन णिश्रिद्रुस्रुभ्य इति चङोभावात्सिचि अद्रावीत् । भूरिवाचरति भवति । अत्र गातिस्थेति न प्रवर्तते । अभावीत् । अभाविष्टाम् । अभाविषुः । बुभावेत्यादि । एवं पिबतेर्विचि पाः । ततः क्विपि पाघ्राध्मेति गातिस्थेति च न प्रवर्तते । पाति । अपासीत् । एवं प्रतिपदोक्तानामन्येषामपि इहाप्रवृत्तिरुन्नेया । कथं तर्हि बुभ्रुवतुरिति प्रागुवङुदाहृत इति चेत् । धातुत्वप्रयुक्तोसौ न तु भ्रुत्वप्रयुक्त इत्यवधेहि । पूरिवाचरति । परति । पपार । पपरतुरित्यादि । अयं पृशब्दानुकरणं धात्वन्तरं न पुनः क्र्यादौ जुहोत्यादौ वा पठ्यमान इति श्ना श्लुश्च न भवति । किति लिटि ऋच्छत्यृतामिति ऋकारान्तलक्षणो गुणः । वृदृमामिति ह्रस्वविकल्पस्तु न भवति । अनभिव्यक्तपदार्थत्वात् । ॠरिवाचरति । अरति । अराञ्चकार । इजादेश्चेत्याम् । लृइवाचरति । अलति । लिटि द्विर्वचनम् । लृवर्णस्य दीर्घाभावात्सवर्णदीर्घाभावः । उत्तरखण्डस्य यणि अभ्यासस्योरदत्वादेव । आल । आलतुरित्यादीति माधवः । तत्र यणीति किद्विषयं पित्सु तु गुणवृद्धी बोध्ये ।

सवर्णदीर्घाभाव इति तु गुणवृद्धिस्थले भवतु नाम । अव- र्णस्य ऌकारं प्रत्यसवर्णत्वात् । गुणवृद्ध्योः स्थानिवद्भावेन ऌ- कारद्विर्वचनेपि सवर्णदीर्घत्वपरत्वेन पुनरुत्तरखण्डे गुणादिप्रवृ- त्ते । न चान्तरङ्गत्वात्सवर्णदीर्घः । अभ्यासस्यासवर्णइत्यस्य निर्वि- षयतापत्तेः । न च इयर्ति इयृत इत्यादिरवकाश । एवं ह्यभ्यासस्य र्त्ताविवत्येव ब्रूयात् । न च एयेरियेप । आणेरुत्रोणेत्यवका- श । भाषायामिजादेरित्याम्प्रत्ययस्योचितत्वात् । छन्दसि तु तन्वादीनामुपसंख्यानात् त्रियम्बकं सुवर्ग इत्यादिवदिय- ङुवङोरुपपत्तेस्तथापि ऌवर्णस्य दीर्घाभावादिति माधवोपन्य- स्तो हेतुरसङ्गत एव । होतृकार इत्यादाविव ऋकारस्य दुर्वारत्वा- त् । तथा च ऋशब्दात्क्विपीव एकादेशस्य धातुग्रहणेनाभ्यास- ग्रहणेन वा ग्रहणमिति मतभेदेन । अरतुः । अरुः । अतुः । उ- रिति रूपद्वयमेवोचितम् । ऌतिऌवेति पाठ्वार्तिकविधेयस्य व- र्णान्तरस्य प्रवृत्तौ तु ऌअतु ऌउरित्युचितम् । सर्वथापि अल- तुः अलुरिति माधवोदाहृतं दुरुपपादमेवेति विभाव्यतां भाष्यज्ञैः । हेरिवाचरति हयति । जिहाय । अहयीत । यान्तत्वान्न वृद्धिः । एरिवाचरति अयति । इजादेरित्याम् । अयाञ्चकार । नेटी- ति वृद्धिनिषेधान्मा भवानयीत् । गौरिवाचरति गवति । अप- दान्तत्वादवङ्पूर्वरूपे न स्तः । जुगाव । अगवीत् । अगावीत् । अतोहलादेरिति वा वृद्धिः । ओकारात् । अवति । अवाञ्चका- र । मा भवानवीत् । रै । रायति । रिराय । नौ । नावति । नुनाव । औ । आवति । आवाञ्चकार । गोधुगिवा- चरति गोदोहति । पयइवाचरति पयति । पयाय । लुङि यान्त- त्वाद्वृद्ध्यभावात् अपयीदिति माधवः । अत्रेदं वक्तव्यम् । अयपय- हयधातुषु क्विप्चेति क्विपि अत् पत् हत् इति तावत्त्वयैवोदाहृतम् ।

आचारक्विपि तु अकृत्वान्नुगागमो मा भूत् । यकारस्तु कथं न लुप्येत । तस्मात्कशब्दवदेवात्र रूपमुचितम् । द्यौरिवाचरति देवतीति माधवः । अत्र ऊठि द्यवतीत्युचितम् । फलेर्णौ क्विप्चेति क्विप् । तत आचारक्विप् । फलति । यङ्लुकि पम्फल्यते । अपम्फालीत् । एकदेशविकृतस्यानन्यत्वादभ्यासस्य नुगिति चरफलोश्चेति सूत्रे न्यासविस्तरौ । यद्यपि प्रतिपदोक्तेष्वभिव्यक्तपदार्थानामेव ग्रहण तथापि उत्परस्यात इति सूत्रे अत इति तपरनिर्देशेन दीर्घनिवृत्त्यर्थं क्रियमाणेन इहास्यापि ग्रहणं ज्ञाप्यतइति तदाशयः । इदमिवाचरति इदामति । यद्विव याक्वति । अणिव आणति । राजेव राजानाति । अनुनासिकस्य क्वीति दीर्घः । यन्तु कश्चिज्झलादिः कुञ्चिदातोरेव सम्भवतीति तत्साहचर्याद्धातुविहत एव क्विप् गृह्यतइति आचारक्वौ नानेन दीर्घ इत्याह । तन्न । अस्य क्विपः ककारस्यात्रैव सामान्यग्रहणार्थत्वात् । पकारस्य च तदविघातार्थत्वात्साहचर्यस्य च सर्वत्रानियामकतायाः द्विस्त्रिश्चतुरितिकृत्वोर्थग्रहणेन ज्ञापितत्वात् । एतेन इह क्विपि अनुबन्धयोः फलं चिन्त्यमिति यदन्न्यासकारः प्रत्युक्त इति दिक् । एवं च पथिमथ्यृभुक्षां परमप्युपधागुणं बाधित्वान्तरङ्गत्वाद्दीर्घे सति पथीनाति मथीनाति ऋभुक्षीणतीत्यादि बोध्यम् । इदं च माधवादिमतमनुसृत्यानुनासिकान्तानां दीर्घ प्रपञ्चितः । अपरं मतं कृत्येव दीर्घो न त्वाचारक्विपि साहचर्यस्य नियामकत्वेनापि क्वचिदाश्रयणात् । न चैवमनुबन्धवैयर्थ्यम् । वेरपृक्तस्येत्यत्रास्यैव ग्रहण मा भूदिति ककारासङ्गात् । पित्त्वसामर्थ्यात्तु प्रकृतिः सर्वानुदात्तेति केषाञ्चिन्मतस्य न्याससम्बन्धे स्पष्टत्वात् । युक्त चैतत् । कौमारव्याकरणसंवादात् । तत्र हि क्यङ एव वैकल्पिको लोपो विहितो न तु क्विपः । तत्र

च क्विबाश्रयस्य दीर्घस्याप्रसङ्गात् । गुणे सति पयेनति मयेनतीत्या-
द्युदाहृतम् । न्यायसाम्येन च्छ्वोःशूडित्यत्रापि अस्य क्विपोऽग्रह-
णात् । द्यौरिवाचरति देवतीत्यपि माधवोदाहृतमस्मिन्पक्षे निर्व-
हति । वलोपस्य भाष्ये प्रत्याख्यानात् । अत एव पदमञ्जर्यां
बहुषु पुस्तकेषु राजनतीति ह्रस्वपाठः सङ्गच्छते । अत एव च न-
पदान्तसूत्रे प्रतिदीन्व इत्यत्रोपधायां चेति दीर्घ इति काशिकापि
सङ्गच्छते । आचारक्विबन्ताद्विच् प्रत्यय इति तदाशयात् । चर्मे-
वाचरति चर्मतीति प्रक्रिया तु अत्रापि पक्षे अशुद्धैव । नलो-
पपररूपयो पदान्तापदान्तत्वप्रयुक्तयोः समावेशस्य दुर्घटत्वादि-
ति दिक् । अप्रसिद्धा ये हलन्तास्तेषां कारितणौ कृते टिलोपे
च णिलोपे च तद्धलन्तत्वमुन्नताम् ॥ मठं मखं कफं रथं वा
चक्षाण कुर्वन् वा मठ् । मख् । कफ् । रथ् । स इवाचरति । म
ठति । मखति । कफति । रथतीत्यादिक्रमेण यथालक्षणमप्रयुक्ते
प्यूह्यमित्यर्थः । प्रकृतमनुसरामः ॥

पंचमदेशे भवन्तीत्यर्थः। इह सुमनस् उन्मनस् दुर्मनस् अभिमनस् इति पठ्यते। तत्र शंक्यते। समासात्क्यङि विशिष्टस्य धातुत्वादडल्यब्द्विर्वचनेषु दोषः। तथाहि। स्वमनायत। उदमनायतेत्यादीष्यते। असुमनायत। औन्मनायतेत्यादि प्राप्नोति। तथा सुमनाय्येत्यादौ ल्यबिष्टः। सु उद् इत्यादीनां प्रत्यान्तशरीरप्रवेशे तु तद्व्यतिरिक्तपदाभावादसति समासे ल्यपो ऽभावात्सुमनायित्वेत्यादि प्राप्नोति। तथा क्यडन्तात्सनि सनन्तस्य प्रथमस्यैकाचो द्वित्वे सुसुमनायिषते इत्यादि प्राप्नोति। सुमिमनायिषतइत्यादीष्यते। अत्राहुः। चुरादिषु संग्राम युद्धइति पठ्यते स न पाठ्यः। संग्रामशब्दाद्युद्धवाचिनः तत्करोतीत्येव णिचः सिद्धेरिति तत्पाठो नियमार्थः। धातुसंज्ञानिमित्तः प्रत्ययः सोपसर्गाच्चेद्भवति संग्रामयतेरेव नान्यस्मादिति। ज्ञापनार्थो वा सोपसर्गात्संघाताद्धातुसंज्ञानिमित्ते प्रत्यये विधित्सिते उपसर्गाः पृथक् क्रियन्ते। परिशिष्टादेव तु प्रत्यय इति। संग्रामशब्दो हि चुरादौ पठ्यमानः सोपसर्गे संघातएव न तूपसर्गसदृशावयवम् आप्लुत्याप्तावितिवच्छब्दान्तरम्। तथा च वापदान्तस्येति परसवर्णविकल्पो भवति। संघातपाठफलं तु असंग्रामयत शूरः। संग्रामयित्वा। सिसंग्रामयिषतइत्यादि। ततश्चोक्तरीत्या नियमो ज्ञापनं वा निष्कृष्टं फलमिति। अत्र हरदत्त। अनुदात्तेदयं संग्रामयतिरिष्यते। ततश्च आत्मनेपदार्थं गल्भत्यादीनामिवानुबन्धासङ्गार्थः पाठ स्यादिति कथं नियमो ज्ञापकं वा भवेदिति। न चानुबन्धासञ्जनार्थे पाठे ग्राम युद्धइत्येव पठ्येत। संशब्दस्तु द्योतक प्रयोगदर्शनवशादेव लभ्यते। यथा इङिकोरधि। तस्माद्विशिष्टपाठः प्रागुक्तफलक एवेति वाच्यम्। एवं हि यथा इङिकोरधे पूर्वमाड् न भवति तथास्यापि न स्यादिति। अत्र माधवः।

अस्यानुदात्तेत्त्वमपाणिनीयमिति पाठस्यैतदर्थतया न ज्ञापकभङ्ग इति। एतत्तु संग्रामयतिरनुदात्तेद्धोद्धव्य इति कैयटेन विरुध्यते। यद्यपि हरदत्तेन सिद्धान्तितं मनःशब्दस्य स्वादिभिर्न समासः किन्त्वसमस्ता एवैते प्रत्ययार्थविशेषणम्। मनःशब्दश्च वृत्तिविषये तद्वृत्ति वर्त्तते। मनस्वी सुष्ठु भवतीत्यादिरर्थ इति, तदपि प्रभौपरिवृढ इत्यत्र परिवृढमाचष्टे इति णिचि क्त्वाप्रत्यये कृते परिवृढय्येति ल्यप् भवतीति भाष्यकारादिभिर्वक्ष्यमाणेन विरोधात्पराहतमेव। नह्यत्रेव तत्रापि प्रत्ययार्थविशेषणत्वं सम्भवति। कथं तर्हीह इष्टार्थसिद्धिरिति चेत्। अत्रोच्यते। चुरादौ पठ्यमानं संग्रामेत्येतत्प्रातिपदिकम्। अर्तिस्तुसुइति मन्त्राधिकारे ग्रसेरा चेति व्युत्पादनात्। न तु धातुः। तस्य च तत्करोतीति पूर्वमक्रान्तेन गणसूत्रेण णिचि सिद्धे तत्सन्नियोगे अनुबन्धासङ्ग एव फलं गल्भादिवत्। एवं स्थिते युद्धे योयं ग्रामशब्द इत्युक्तेपि केवलस्य ग्रामशब्दस्य युद्धे वृत्त्यभावात्सामर्थ्यात्संग्रामशब्दो लभ्यतएव। तत्र च संग्रामीति विशिष्टस्य धातुत्वमपि सुलभम्। सनाद्यन्ता इति सूत्रेण विधीयमानायाः संज्ञायाः प्रकृतिप्रत्ययसंघाते विश्रान्ते। एतेन इङिकोः प्रतिवन्दि परास्त। तत्र हि पाठापेक्षा धातुसंज्ञा विशिष्टं न स्पृशतीति वैषम्यात्। एवं च संग्रामेति विशिष्टपाठो ज्ञापयति उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजकीभुते प्रत्यये चिकीर्षिते पृथक् क्रियतइति। तच्चाजहत्स्वार्थायां वृत्तौ स्वोत्तरभागेन धातुसंज्ञानिमित्तप्रत्ययप्रकृतिभूतेन समानार्थकमिति तद्घटितविशिष्टार्थेनापि क्त्वान्तेनसह समर्थत्वात्कुगतीति सूत्रेण प्रादिग्रहणात्समस्यतइति परिवृढय्येत्यादिसिद्धिः। अवजिगल्भिषते। अवागल्भत। अवगल्भ्येत्यादावपीयमेव गतिः। न चैवमुस्योमाङ्क्ष्वाट इति पाष्ठवार्तिकेन औढी-

यदिति तद्भाष्येण च सह विरोधः । ज्ञापकस्य सजातीयविषयतया श्रूयमाणे पूर्वपदे प्रवृत्तिः न त्वादेशेनापहृते इति स्वीकारात् । अत्र च भाष्यवार्तिकधातुवृत्त्यादिग्रन्था अनुकूला इति गुणगौरविभाव्यताम् । एवं च प्रमाणयित्वा विचारयित्वेत्यादयः केषां चित्प्रयोगा प्रामादिका एव । अत एव प्रशस्यमाचष्टे श्रापयति । ज्यापयतीति श्रज्यावुदाहरन्तः सुधाकरादयः श्रपयति जपयतीत्युदाहरन्तः शाकटायनादयश्च प्रक्रियारत्ने निराकृताः । प्रशब्दस्य पृथक्करणेन शस्यशब्दादेव णिजुत्पत्त्या श्रज्ययोरप्राप्ते । अत एव माधवादिभिः प्रशस्ययतीत्येव स्वीकृतम् । एतेन प्राद्रुपमाख्यत् अपप्रावत् । वीरुधमाख्यत् अविवीरादित्याद्युदाहरन्तो धातुचन्द्रोदयकारादयः परास्ताः । सङ्ग्रामयतेः पाठेन ज्ञापितस्यार्थस्य उस्योमाङ्क्ष्वाट इति पाठभाष्यवार्तिकबलेन अनित्यताज्ञापनमाश्रित्य कथं चिद्वा समर्थनीया इति दिक् । भृशादयस्तु श्लोकगणपाठानुरोधेन माधवीये उदाहृताः । तद्यथा । भृशायते । चपलायते । मन्दायते । पण्डितायते । रेहायते । रेहशब्दो रहसि निर्घृणत्वे भिक्षाभिलापस्य च निवृत्तौ वर्तत इति गणवृत्तिः । तृपायते । तृपश्चन्द्र समुद्रश्च । वेहायते । वेहद्गर्भोपघातिनी । अधरायते । अधरो मूर्खः पुष्करश्चेति गणवृत्तिः । ओजायते । वर्चायते । ओजोवर्चःशब्दौ वृत्तिविषये तद्वति वर्त्तेते । रेफायते । रेफःसरोप इतिगणवृत्तौ । दुर्मनायते । सुमनायते । उन्मनायते । उत्सुकायते । शश्वायते । वृहायते । सान्ताविति । सुबामंत्रितइत्यत्र मनस्युपसर्गस्य पराङ्गवद्भाव उपसंख्येयः । तेन सुमनायतइत्यादौ तिङ्ङतिङ इति निघातो न भवति, देवदत्तः सुमनायतइत्यादौ सोपसर्गस्य निघातश्च भवतीति प्रकृतसूत्रस्थभाष्यपर्यालोचनया लभ्यते । अमी श्लोका गणपाठस्था भृशादय । गणवृत्तौ तु वृ

इच्छन्दो न पठ्यते । मद्रशब्दस्तु पठ्यते । कंधरशब्दश्च त्वचोभ्यन्तरे स्थूलतंत्वाभा असंयुक्ता स्नायुः कंधरा । तद्वान्कंधरः । मत्वर्थे अर्शआदिभ्योच् ॥

लोहितादिडाज्भ्यःक्यष् ॥ लोहितादिभ्यो डाजंताच भवत्यर्थे क्यष् स्यात् । वा क्यषः । लोहितायति । लोहितायते । अत्र अच्वेरित्यनुवृत्या अभूततद्भावविषयत्वं लभ्यते। तच्च डाचो न विशेषणम् । असम्भवात् । अलोहितो लोहितो भवतीति विग्रहः । पटपटायति । पटपटायते । कृभ्वस्तियोगं विनापि क्यषो डाजन्ताद्विधानसामर्थ्यादेवेह डाच् । भवत्यर्थे विधीयमानेन क्यषा उक्तार्थस्य भवतेरिह प्रयोगायोगात् । अत्र वार्तिकम् । लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणीति ॥ आदिशब्दप्रत्याख्यानपरमेतत् । लोहितशब्दात्परत्र पठ्यमानानि नीलहरितमंद्रफेनदासमन्द इत्येतानि षट् भृशादिषु द्रष्टव्यानीत्यर्थः । क्यषः ककारषकारावपि प्रत्याख्यातौ । तथाहि । ककारो गुणवृद्धिनिषेधार्थो नेति स्पष्टमेव । अप्रसक्तस्य प्रतिषेधायोगात् । नापि नःक्यइति सामान्यग्रहणार्थः । नान्तादविधानात् । नापि आपत्यस्यच तद्धितेनाति क्यच्च्योश्चेति । आपत्यादविधानात् । नापि क्याच्छन्दसीति । याच्छन्दसीत्येव सुवचत्वात् । युक्तं चैतत् । शकुनम्भुरण्युमिति । कंड्वादियगन्तादपि दर्शनात् । नापि लोहितायतइत्यत्र अकृत्सार्वेति दीर्घप्रवृत्त्यर्थः । तत्र क्ङितीत्यस्याननुवृत्तेः । न त्वानुवृत्तिरावश्यकी उरुयाधृष्णुयेत्येवमर्थमिति चेन्न । इह हि तृतीयास्थाने सुपां सुलुगिति यादेशः । स च छान्दसः । तत्र च ह्रस्वोपि छान्दस एव भविष्यति । उपगायन्तु सापत्नयो गर्भिणय इतिवत् । नापि क्यस्यविभाषेत्यत्र सामान्यग्रहणार्थः । हल इत्यनुवृत्तेः । नह्ययं हलन्तादस्ति । न च वाक्यष

इति विशेषणार्थः । वायादित्येव सूत्रणात् । न चैवं पाशादिभ्यो-यः पाश्या अत्र प्रसङ्गः । सामान्यविहितानां तिङां नियमार्थं हि तत्प्रकरणम् । न च पाशादियान्तास्तिङः सन्ति । न न्वाचारक्विबन्तात्सन्तीति चेन्न । टापा व्यवधानात् । पूर्वस्मादपि विधौ एकादेशस्य स्थानिवद्भावात् । न च दण्ड्यवध्यादिशब्देभ्य आचारक्विबन्तेभ्यो ऽतिप्रसङ्गः शंक्यः । तत्र दण्डादिभ्य इति सूत्रेण यदेव विधीयते । शीर्षच्छेदाद्यच्चेति पूर्वसूत्राद्यदनुवृत्तेः । न तु यमत्यय इति पञ्चमे वक्ष्यमाणत्वात् । अत एव पकारोपि व्यर्थः । स हि वाक्यप इत्यत्र विशेषणार्थः । क्याच्छन्दसि क्यस्यविभाषेत्यादौ सामान्यग्रहणाविघातार्थो वेति फलं सम्भाव्यते । तच्च सर्वं दूषितमेव । तस्मादादिशब्दं कपौ च हित्वा लोहितडाज्भ्यो य इति भाष्ये स्थापितम् । यदि तु सभायायः सभ्य । स इवाचरतीत्यादेराचारक्विबन्तस्याभिधानमस्ति । तर्हि वायप इति सूत्र्यतां, पकारमात्रं वास्तु । अवशिष्टं तु व्यर्थमेव । वृत्तिकारस्तु वार्तिकस्यार्थमन्यथा मन्यते । तद्यथा । न किलानेनादिग्रहणं प्रत्याख्यायते । किन्तु यानि पठितानि नीलादीनि पद् तेषामेव इतोपकृष्य भृशादिषु निवेश उच्यते । अपठितानां तु क्यषेव, तानि चाकृतिगणत्वाल्लभ्यन्ते । आकृतिगणत्वे ज्ञापकं तु नः क्यष इति सामान्यग्रहणार्थः क्यष. ककारः तदविघातार्थः षकारश्च, न हि पठ्यमानेषु लोहितादिषु नान्तः कश्चिदस्ति तानि चाकृतिगणसिद्धानि गणवृत्तिकार सञ्जग्राह । लोहितश्यामदुःखानि हर्षगर्वसुखानि च । मूर्छानिद्राकृपाधूमाः करुणा नित्यचर्मणीति । निद्राकरुणादयः वृत्तिविषये तद्वति वर्तन्ते । निद्रायति निद्रायतइत्यादि । तदेतत्सर्वं भाष्यविरुद्धत्वादुपेक्ष्यम् । किञ्च लोहितडाज्भ्य इति वदतो वार्तिककारस्यापि आदिश-

न्दमत्याख्यानमभिमतमिति स्पष्टं लभ्यते । अन्यथा हि लोहितादिष्वेव ब्रूयात् । अत एव विद्रूयमान इत्यत्र लोहितादिडाज्भ्यः क्यषिति कल्पतरुग्रन्थो वृत्तिकाररीत्या सम्भवन्नपि भाष्यविरुद्धत्वाद्गौदिवादमात्रमिति क्यङ्विधाववोचाम । स्यादेतत् । क्यष् चेति सूत्रमस्तु चात्क्यङ् । तत्र क्यष्पक्षे परस्मैपदम् । क्यङ्पक्षे त्वात्मनेपदमिति वाक्यष इति सूत्रं मास्त्विति चेत् । मैवम् । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति लोहिनीशब्दात् क्यषि लोहिनीयति लोहिनीयत इति रूपद्वयमिष्यते। क्यङि तु क्यङ्मानिनोश्चेति पुंवद्भावे सति लोहितायतइति स्यादिति फले भेदात् ॥

कष्टाय क्रमणे ॥ कष्टं कृच्छ्रम् । कृच्छ्रगहनयोःकष इति कृच्छ्रे इडभावः । तेन च तत्करणं पापं कर्म लक्ष्यते । क्रमणमुत्साहः, वृत्तिसर्गतायनेष्विति सूत्रे हि सर्गे उत्साह इत्युक्तम् । तदयमर्थः । चतुर्थ्यन्तात्कष्टशब्दादुत्साहेर्थे क्यङ् स्यात् । कष्टाय क्रमते । कष्टायते । पापं कर्म कर्तुमुत्सहतइत्यर्थः। सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् ॥ कण्वं पापम् । सत्रादयो वृत्तिविषये पापपर्यायाः । तेभ्यो द्वितीयान्तेभ्यः चिकीर्षायां क्यङ् । पापं चिकीर्षतीत्यस्वपदेन विग्रहः । सत्रायते । कक्षायते । कष्टायते । कृच्छ्रायते । गहनायते ॥

कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥ कर्मण इति पञ्चमी रोमन्थतपोभ्यामित्यनेन सामानाधिकरण्यात् । प्रत्येकं सम्बन्धात्त्वेकवचनम् । वर्तीति ण्यन्ताद्वृतेः ण्यासश्रन्थोयुजिति युचि प्राप्ते अत एव निपातनात् क्तिन् । चरतेः सम्पदादित्वाद्भावे क्विप् । रोमन्थतपोभ्यां कर्मभ्यां यथासंख्यं वर्तिचरोरर्थयोः क्य-

ङ् स्यात् । रोमन्थं वर्तयति रोमन्थायते । हनुचलनइति वक्तव्यम् ॥ हनुचलनेनात्र चर्वितस्य मुखप्रदेशे आकृष्य चर्वणं लक्ष्यते । नेह । कीटो रोमन्थं वर्तयति । अपानप्रदेशान्नि सृतं द्रव्यम् । कीटो वर्तुलं करोतीत्यर्थ इति न्यासकारहरदत्तौ । अपानप्रदेशान्निःसृतमश्नातीत्यर्थ इति तु कैयटो व्याख्यत् । तपस्यति, इह तङ् प्राप्त । तस्मात्तपसः परस्मैपद चेति वक्तव्यम् । एवं च नमोवरिवइत्यादि सूत्रएव तपःशब्द' पठितुमुचितः । तथा तु न कृतमित्येव ॥

बाष्पोष्मभ्यामुद्वमने ॥ कर्मणः क्याङिति वर्तते । बाष्पमुद्वमति बाष्पायते । उष्माणमुद्वमति । उष्मायते । फेनाच्चेति वक्तव्यम् ॥ फेनायते ॥

शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥ एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते । एवं वैरायते । कलहायते । अभ्रायते । कण्वायते । मेघायते । तत्करोतीति णिचि प्राप्ते ऽयमारम्भ । पक्षे णिजपीष्यते । शब्दयतीति । तदर्थं मण्डूकप्लुत्या मृशादिभ्योभुवीति सूत्राच्चकारोत्रानुवर्ततइति न्यासकार । अत्र वार्तिकम् । सुदिनदुर्दिनाभ्याञ्च ॥ सुदिनायते । दुर्दिनायते । नीहाराच्च ॥ नीहारायते । अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहण कर्तव्यम् ॥ पोटा स्त्रीपुसलक्षणा । अतोन्ये क्रियावचना इति सुधातुवृत्तौ माधवः । अट गतौ । अटतीत्यटा । आचि टाप् तां करोति अटायते । अट्ट अतिक्रमहिंसयोः । गुरोश्चहल इत्यकारः । अट्टा ता करोति अट्टायते । शीकृ सेचने तालव्यादि । दन्त्यादिरिति तु धनपालकाश्यपौ । गुरोश्चेत्यकारः शीका तां करोति शीकायते इति तद्धातुव्याख्यायां माधवः । कुट कौटिल्ये तुदादिः हेतुमण्णिच् । कुट प्रतापने

आकुस्मीयः । कोटयति कोटयते वा कोटा तां करोति कोटायते । पोटोक्ता पोटायते । सोटेति पाठे धात्वर्थोन्वेषणीयः । मोटेति पाठे तु मुट सञ्चूर्णने चुरादिः प्रदर्शने भ्वादिः । प्रदर्शनाक्षेपयोस्तुदादौ मोटयतीति मोटा मोटायते । प्लुष प्लुष दाहे । कर्मणि क्तः प्लुष्टा प्लुष्टा तां करोति प्लुष्टायते प्लुष्टायते । उज्ज्वलदत्तस्तु अशूप्रुषिलटिकणिखटिविशिभ्य क्वन्निति सूत्रे प्रुष्वः स्यादृतुसूर्ययोः । प्रुष्वा जलकणिकेति रत्नमति प्रुष स्नेहनादाविति धातु प्रुष्वायते इत्युदाहरन् इह वार्तिके प्रुष्वेति पाठमुपन्यस्तवान् ॥

सुखादिभ्यः कर्तृवेदनायाम् ॥ कर्तृ इति पृथक्पदं लुप्तषष्ठीकम् । वेदना ज्ञानम् । विद चेतनाख्यानविवासेष्वित्यस्माच्चुरादिण्यन्तात् भावे ण्यासश्रन्थो युच् । घट्टिवन्दिविदिभ्यश्चेति औपसङ्ख्यानिको वा । कर्तृत्वं च श्रुतवेदनक्रियापेक्षम् । तदयमर्थः । वेदनक्रियायाः कर्तुराधेयभावेन सम्बन्धिभ्यः सुखादिभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्यात् । सुखं वेदयते सुखायते । कर्तृग्रहणं किम् । सुखं वेदयते प्रसाधको राज्ञः । अयं वेदिः आकुस्मीय । एवं च वेदयतीति केषां चित्परस्मैपदपाठ प्रामादिकः । अत्र श्लोकगणकारः । सुखदुःखगहनकृच्छ्राः तृप्रालीकप्रतीपकरुणाश्च । कृपणः सोढ इतीमे सुखादयो दश गणे पठिताः ॥ सोढ सहनमभिभवो वा । गणरत्नमहोदधौ तु आस्रशब्दोपीह पठ्यते ॥

नमोवरिवश्चित्रङः क्यच् ॥ करणग्रहणमनुवृत्तं अभिधानशक्तिस्वाभाव्यात् । इह क्रियाविशेषपरम् । तेन नमसः पूजायां वरिवसः परिचर्यायां चित्रङ आश्चर्ये क्यच् स्यात् । नमस्यति देवान् । नमस्कारेण पूजयतीत्यर्थ । वरिवस्यति गुरून् । अत्र-

पतइत्यर्थ। चित्रीयते। विस्मयतइत्यर्थं विस्मापयतइत्यन्ये। तथा च मायामृगं प्रकृत्य भट्टिराह। ततश्चित्रीयमाणोसावित्ति। अत्र चित्रङो ङित्करणादवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति वाच्यम्। तथा सति क्यङन्तादात्मनेपदम्। न चैवं शब्दवैरादिसूत्रे चित्रशब्दोपि पठ्यतां क्यङैव तद्भविष्यतीति वाच्यम्। तथा सति हि क्यचिचेति इत्वं न स्यात्। तस्मात्क्यजेव कार्यो ङित्त्वं च ॥

पुच्छभाण्डचीवराणिणिङ् ॥ करणइत्यनुवृत्ते क्रियाविशेषे पुच्छादुदसने व्यसने पर्यसने च। उदसनमुत्क्षेपणं व्यसनं विविधं, विरुद्धं वोत्क्षेपणं पर्यसनं परितः क्षेपणम्। उत्पुच्छयते। विपुच्छयते। परिपुच्छयते। भाण्डात्समाचयने। समाचयनं राशीकरणम्। सम्भाण्डयते। भाण्डानि समाचिनोतीत्यर्थं। चीवरादर्जने परिधाने वा। संचीवरयते भिक्षुः। चीवराण्यर्जयति परिधत्ते वेत्यर्थः। णिङो णकारः सामान्यग्रहणार्थः। न तु वृद्ध्यर्थः। असम्भवात्। ङकारस्तदविघातार्थः आत्मनेपदार्थश्च। अत एव पुच्छादय उत्तरसूत्रे न निवेशिताः॥

मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ एभ्यो दशभ्यः कृत्र्थे णिच् स्यात्। मुण्डं करोति मुण्डयति। मिश्रयति। श्लक्ष्णयति। लवणयति। व्रताद्भोजने तन्निवृत्तौ च॥ पयः शूद्रान्नं वा व्रतयति। वस्त्रात्समाच्छादने॥ संवस्त्रयति। इह भोजनतन्निवृत्ती व्रतशब्दस्यार्थौ। समाच्छादनं तु वस्त्रशब्दस्य। प्रत्ययस्तु कृत्र्थे। श्रूयते चभोजने व्रतशब्दः। यदस्य पयो व्रतं भवति। आत्मानमेव तद्वर्धयति त्रिव्रतो वै मनुरासीत्। द्विव्रता असुराः। एकव्रता देवा इति। पस्पशायां च। शक्यञ्चानेन श्वमांसादीन्यपि व्रतयितुमिति। अयमेव व्रतशब्दो दर्शादिवद्वि-

परीतलक्षणया तन्निवृत्तौ वर्तते । संवस्त्रयति प्रावारमित्यत्र प्रावारमाच्छादयतीत्यर्थ इति माधवः । हलादिभ्यस्त्रिभ्यो ग्रहणे प्रत्यय । हलिं गृह्णाति हलयति । कलिं गृह्णाति कलयति । कृतं गृह्णाति कृतयति । तुस्तानि विहन्ति वितूस्तयति । तूस्त केश इति भट्टः । जटीभूताः केशा इति न्यासः । पापमिति वैजयन्ती । स्यादेतत् । प्रातिपदिकाद्धात्वर्थे इत्येव सर्वमिदं सिद्धम् । न च तत्करोतीत्यादिना तत्र धात्वर्थनियमः । राजानमतिक्रान्तवान् अत्यरराजदित्यादेरपीष्टत्वात् तत्किं मुण्डादिसूत्रेणेति चेत् । अत्राहुः । मुण्डयति माणवकं मिश्रयत्यन्नं श्लक्ष्णयति वस्त्रं लवणयति व्यञ्जनमिति सापेक्षेभ्योपि णिजर्थमिदम् । हलिकल्यो-स्त्वत्वनिपातार्थम् । तथा च वार्तिकम् । हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति । तथाहि । हलि इ कलि इ इति स्थिते अचोञ्णितीति वृद्धिः प्राप्नोति णाविष्ठवदिति टिलोपश्च । तत्र लोप शब्दान्तरप्राप्त्या अनित्य । वृद्धिस्तु टिलोपे सत्यप्राप्तेः । उभयोरनित्ययो परत्वाद्वृद्धौ कृतायां ऐकारस्य आयादेशात्पूर्वमेव परत्वात् वार्णादाङ्गस्य बलीयस्त्वाच्च लोपेनाग्लोपित्वमभवतीति सन्वल्लघुनीतिसन्वद्भावः स्यात् । दीर्घोलघोरिति दीर्घश्च । न च टिलोपस्य अचः परस्मिन्निति स्थानिवद्भावात्तेन व्यवधानान्न दोष इति वाच्यम् । चङ्परे णौ यदङ्गं तस्य योभ्यासो लघुपरः तस्य सन्वत् लघोर्दीर्घश्चेति हरदत्तादिभि पुरस्कृते कैयटैकीयमततयोपन्यस्ते व्याख्याने स्थानिवद्भावस्याकिञ्चित्करत्वात् । चङ्परे णौ यदङ्गं तत्र परतो योभ्यास तस्येति भाष्यकैयटमतेपि अभ्यासस्य टिलोपादनन्तरं जातत्वेन आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वाप्रसङ्गात् । अत्वनिपातने तु यद्यपि परत्वाद्वृद्धिस्तथापि अमेव लुप्यतइति सन्वद्भावदीर्घौ न भवतः ।

एवं च बलिपटुप्रभृतिभ्यो णिचि अबीबलत् अपीपटदिति भवति न त्वबबलदपपटदिति । स्यादेतत् । णौचङ्यीत्यत्रत्यभाष्येण सहैतद्विरुध्यते । तत्र हि वृद्धेर्लोपो बलीयानिति स्थितम् । युक्तं चैतत्, शब्दान्तरप्राप्तौ सत्यामपि कृताकृतप्रसङ्गित्वमात्रेण क्व चिन्नित्यत्वाभ्युपगमात् । यदाह । भुवोवुकोनित्यत्वादित्यादीति । ज्ञापकं चात्र नाग्लोपिशास्विति सूत्रे अगिति प्रत्याहारग्रहणम् । तथाहि । अवर्णान्तेष्ववर्णोपधेषु ऋवर्णान्तेषु च वृद्धावप्यवर्ण एव लुप्यते । तत्र अल्लोपिनां नेत्येव वाच्यम् । इवर्णोवर्णान्तयोस्तु वृद्धौ कृतायामैकारौकारौ लुप्येते न त्वक् । न च स्वामिनमाख्यत् असस्वामत् । गोमिनमाख्यत् अजुगोमत् । मातुरं(?)ख्यत् अममादत् । यादृशमाख्यत् अययादत् । तादृशमाख्यत् । अततादादित्यादौ यत्र वृद्धेरप्रसंगादिको लोपस्तत्र ह्रस्वनिवृत्तये अग्ग्रहणमिति वाच्यम् । अनभिधानात्तत्र णिच एवानुत्पत्तेः । एतच्च भाष्यकारेण ज्ञापकत्वस्य समर्थनादवसीयते । न चैवमपि स्रग्विणमाख्यदसस्रजादित्यत्र विमन्तोर्लुकि उपधाया वृद्धौ ह्रस्वनिवृत्त्यर्थं अग्लोपग्रहणं स्यात् अस्ति ह्यत्राभिधानम् । टेरित्यत्र भाष्ये स्रजयतीत्युदाहरणादिति वाच्यम् । एवमपि स्रजयतीत्यत्र वृद्ध्यभावस्य सिद्धान्तसम्मतत्वेन टेरित्यत्र भाष्यकारेण स्रजयतीति निर्देशादकृद्वृत्तइति परिभाषया वा वृद्धेरप्रसङ्गेन ह्रस्वभाविन्या उपधाया एव अभावात् । अतः प्रत्याहारग्रहणे ज्ञापकं वृद्धेः पूर्वं टिलोप इति । तत्कथमिहोच्यते वृद्धौ सत्यां टिलोप इतीति चेत् । अत्र माधवः । परत्वाद्वृद्धिरिति मुख्यः पक्षः । वृद्धेर्लोपो बलीयानिति तु प्रौढिवादमात्रमित्येकं मतम् । तद्विपरीतं मतान्तरम् । भाष्यद्वयप्रामाण्याद् वृद्धेः पूर्वं पश्चाद्वा कामचारेण टिलोप इति अपपटत् अपीप-

टदिति रूपद्वयमपि साध्विति चापरं मतमिति मतत्रयमपि सु-ध्धातुवृत्तावुपनिबद्धवान् । तत्राद्यं मतं हरदत्तस्य द्वितीयं कैयट-स्य तृतीयं त्वन्येषामिति विवेकः । एतद्बलाबलचिन्ता तु करि-ष्यते । अयं च भेदो णिभिन्नविषयः णेर्णाचि तु ण्यल्लोपावि-ति विप्रतिषेधान्निष्कर्षरीत्या ऽपवादत्वाद्वा प्रागेव णिलोपः । उपधाह्रस्वत्वे सन्वद्भावदीर्घयोश्च णेर्णचीत्युपसंख्यानाण्ण्याकृ-तिनिर्देशाद्वा अवीवददित्येव रूपमिति सप्तमे वक्ष्यामः । प्रकृ-तमनुसरामः । मुण्डादिसूत्रे केषांचिद्ग्रहणं प्रपञ्चार्थं मुण्डादयः सर्वेपि सत्यापपाशेत्यत्रैव पठितुं युक्ताः । एवं हि एक-वाक्यता लभ्यते । द्विर्णिद्ग्रहणं च न कर्तव्यमिति लाघवम् । तथा तु न कृतमित्येव ॥

धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ एकाच् ह-लादिः समभिह्रियमाणक्रियावृत्तिर्यो धातुः तस्मात्स्वार्थे यङ् स्यात् समभिहारोत्र पौनःपुन्यं भृशार्थो वा । यद्यपि विप्रकी-र्णानां एकत्र राशीकरणं समभिहारशब्दस्य मुख्योर्थः । तथा-प्यसौ धान्यादीनामेव सम्भवति । न तु धातुवाच्यायाः क्रिया-याः । अमूर्तत्वात् । अतो गौणोर्थो गृह्यते । स च न प्रत्ययस्य वाच्यः । प्रकृत्यर्थं प्रति विशेष्यतापत्तेः किन्तु द्योत्योर्थः । अत एव टाबादयस्तरबादयश्च स्वार्थिका एवेति निरूढः पन्थाः । यदा तु प्रकृत्यर्थप्राधान्यमौत्सर्गिकं आख्यात इव टाबादिष्वपि त्यज्यते तदा टाबादयो वाचका इत्यपि पक्षः सम्भवत्येव । स्वीकृतश्चायं लिङ्गादिविधौ भाष्येपीति तत्रतत्र स्फुटम् । पुनः पुनरतिशयेन वा पच्यति पापच्यते । दीर्घोकित इति दीर्घः । देदीप्यते । गुणो यङ्लुकोरिति गुणः । ननु क्रियासमभिहारे चे-ति वार्तिकेन नित्यवीप्सयोरिति वा पदद्विर्वचनमिह कुतो नेति

चेत्र। यङैव क्रियासमभिहारस्य द्योतितत्वात्। न चैवं लुनीहिलुनीहीत्यत्रापि न स्यादिति वाच्यम्। केवलेन लोटा तुल्यरूपो हि क्रियासमभिहारे लोट्समभिहारं द्योतयितुं सहायतया द्वित्वमपेक्षते। अन्यथा संशयापत्तेः। यङ् तु न तथेतिवैषम्यात्। धातोरिति किम्। आर्धधातुकत्वं यथा स्यात्। तेन ब्रुवोवाचिरित्यादि सिध्यति। एकाचः किम्। पुनःपुनर्जागर्ति। हलादेः किम्। भृशमीक्षते। यङो द्वित्वं बोभूयते मरीमृज्यतइत्यादौ गुणवृद्धिनिषेधार्थम्। न चैवमवयवे चरितार्थस्य समुदायं प्रत्यविशेषकत्वात् यङन्तादात्मनेपदं न स्यादिति वाच्यम्। ङिदन्ताद्धातोस्तदिति अनुदात्तङित इति सूत्रएव प्रपञ्चितत्वात्। भृशं शोभते भृशं रोचते इत्यत्रानभिधानाद्यङ् नेति भाष्यम्। कथं तर्हि रुच दीप्तौ शुभ शोभायामिति धातू व्याचक्षाणैः धातुवृत्तिकारैः रोरुच्यते शोशुभ्यते इत्युदाहृतमिति चेत्। भाष्ये भृशार्थोपादानात् पौनःपुन्ये भवत्येवेत्याशयेनेत्याहुः। शोभतइति शब्विकरणस्योदाहरणात्तौदादिकस्य यङ् भवत्येवेति धातुचन्द्रोदये सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णु ग्रहणम्। सूच पैशून्ये। सूत्र अवमोचने। मूत्र प्रस्रवणे चुरादिण्यन्ताः। अट गतौ। ऋगतौ। अश भोजने अशू व्याप्तौ। द्वयोरपि ग्रहणम्। अस आद्यानां त्रयाणां अनेकाच्त्वात् ततोऽन्येषां अहलादित्वात्, ऊर्णोतेस्तु अनेकाच्त्वादहलादित्वाच्चाप्राप्तौ वचनम्। तत्र ऊर्णोतेर्वक्ष्यमाणेन णुवद्भावेनापि सिद्धम्। सोसूच्यते। सोसूत्र्यते। मूत्रिसूत्री अदन्तौ चुरादिणिच् अतोलोपः। यङ् णिलोपः द्वित्वं हलादिः शेषः। अभ्यासस्य गुणः। अभ्यासात्परस्य षत्वं तु न भवति। अनादेशत्वात्। न चैषौ षोपदेशौ। अदन्तत्वेनानेकाच्त्वात्। षोपदेशलक्षणे हि सेकृसृषादिपर्युदासात् तस्मादत्र एकाच्त्वं वि

चक्षितमिति निष्कर्षः । सोमूच्यते सोसूत्र्यतइति भाष्योदाहरणं चात्र प्रमाणम् । षोपदेशलक्षणे एकाच्त्वं विशेषणं देयमिति वदतो माधवस्याप्ययमेवाशयः । सोसूच्यते । अटाट्यते । अजादेर्द्वितीयस्येति ट्यशब्दस्य द्वित्वं सन्यङोरिति षष्ठीति वक्ष्यमाणत्वात् । अर्यते । गुणोर्तिसंयोगाद्योर्यङिचेति गुणः । र्यशब्दस्य द्वित्वम् । न च नन्द्राःसंयोगादय इति रेफस्य द्वित्वनिषेधः । यकारपरस्यं नायं निषेध इति षष्ठे वृत्तिकारोक्तेः । न चैतदप्रामाणिकम् । प्रकृतसूत्रस्थस्य अर्यतइति भाष्यस्यैव तत्र प्रमाणत्वात् । अशाश्यते । ऊर्णोनूयते । ऊर्णुञ् आच्छादने । नोपधोयम् । तस्याष्टमिकं णत्वम् । तस्यासिद्धत्वान्नुशब्दस्य द्वित्वं पूर्वत्रासिद्धीयमद्विर्वचनइत्यनित्यम् । उभौसाभ्यासस्येति लिङ्गात् । स्यादेतत् । लुनीहिलुनीहीत्येवायं लुनाति । अत्र यङा लोट् बाध्येत । अन्तरङ्गो हि यङ् क्रियासमभिहारमात्रापेक्षत्वात् । लोट् तु बहिरङ्गः क्रियाभेदाश्रये धातुसम्बधे भावकर्मकर्तृषु विधानात् । तथा लोट् सावकाशोपि क्व ? अनेकाचि अजादौ च । जागृहिजागृहीत्येवायं जागर्ति ईक्षस्वेक्षस्वेत्येवायमीक्षते । अत्राहुः । वेत्यनुवर्तते । यदा न यङ् तदा लोट् भविष्यति ॥

नित्यं कौटिल्ये गतौ ॥ गतौ वर्तमानाद्धातोः कौटिल्ये एव द्योत्ये यङ् स्यात् न तु क्रियासमभिहारे । क्रमु पादविक्षेपे द्रम गतौ । चंक्रम्यते । दन्द्रम्यते । अवधारणार्थान्नित्यग्रहणान्नेह भृशं क्रामति । ननु यथा वडवाया वृषे वाच्ये इत्यनेन अपत्ये प्राप्तस्ततोपकृष्य विधीयते । यथा वा भीतः क्तो भूते प्राप्त ततोपकृष्य वर्तमाने विधीयते । एवमत्रापि धातुमात्रात् क्रियासमभिहारे यङ् विहितो गतिवचनात्तु कौटिल्यइति तक्रकौण्डिन्यन्यायेनैव बाध सिद्धः । सत्यम् । अत एव नित्यग्रहण

तिकयोः प्रत्याख्यातम् ॥

। लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ॥ एभ्यो यङ् स्यात् धात्वर्थगर्हायां द्योत्यायाम्। लुप्लृच्छेदने । षद विशरणादौ । यत्तु आङः सदिः पद्यर्थे इति चौरादिको ण्यन्त स इह न गृह्यते एकाच इत्यनुवृत्तेरिति हरदत्तस्तच्चिन्त्यम् । प्रकृतिग्रहणे ण्यधिकस्याप्राप्तेः । अन्यथा लुपादेरपि हेतुण्यन्तस्य वारणीयतया सदेरेवोपन्यासे बीजाभावाच्च । चर गतौ । जप व्यक्तायां वाचि । जभी गात्रविनामे । दह भस्मीकरणे । अत एव दशेति निपातनात् यङ्लुकि नलोप । दन्दशीति । गॄ निगरणे, तुदादि । गॄ शब्दे क्र्यादिः । तत्र अदन्तविकरणसाहचर्यात्तुदादेरेव ग्रहणमित्येके । द्वयोरपीत्यन्ये । गर्हितं लुम्पति लोलुप्यते । सासद्यते । चञ्चूर्यते । चरफलोश्चेति नुक् । उत्परस्यातः । हलिचेति दीर्घः । जञ्जप्यते । जञ्जभ्यते । दन्दह्यते । दन्दश्यते । जपादीनां चतुर्णामभ्यासस्य जपजभदहदशभञ्जपशाञ्चेति नुक् । निजेगिल्यते । ऋतइद्धातो रपरत्वं द्विर्वचनम् । अभ्यासस्य गुणः । जेगिर् य इति स्थिते ग्रोयङीति लत्वम् । न च परत्वाद्धलिचेति दीर्घ । तस्यासिद्धत्वात् । लत्वे कृते तु विहतनिमित्तत्वाद्दीर्घः । भावेति किम् । साधनगर्हायां मा भूत् । मन्त्रं जपति वृषल । अत्र स्वरवर्णादिभ्रंशाभावाद्गर्हा नास्ति । कर्त्राख्यं साधनं तु गर्हितं शूद्रस्य वेदे अनधिकृतत्वात् । नित्यग्रहणमवधारणार्थमिहानुवर्तते । तस्य व्याख्यानं प्रत्याख्यानं च पूर्ववत् ॥

प्रपञ्चार्थम् । मालिन्या उपश्लोकयतीत्यादौ सापेक्षादुत्पत्त्यर्थं च । धात्वर्थ इत्यविशेषोक्तावपि स्वभावलभ्योर्थविशेषो वृत्तिकारादिभिर्निर्दिश्यते । तद्यथा । सत्यमाचष्टे सत्यापयति । सत्यं करोतीति तु भाष्यम् । अर्थवेदसत्यानामापुग्वक्तव्य ॥ आपुग्वचनसामर्थ्याट्टिलोपो न । अर्थापयति वेदापयति । पुकैव सिद्धे आकारोच्चारणमन्यतो विधानार्थं तेन लिखापयतीत्यादि सिद्धमिति कश्चित् । तन्न । पुगेव करिष्यतइति भाष्यविरोधात् । तस्माल्लिखापयतीत्यपप्रयोग एवेत्याहुः । पादौ प्रक्षालापयतीति गृह्यप्रयोगस्तु छन्दोवदृषयः कुर्वन्तीति समाधेय इति हरदत्तादयः । पाशं विमुञ्चति विपाशयति । रूपं पश्यति रूपयति । वीणयोपगायति । उपवीणयति । तूलेनानुकुष्णाति अनुतूलयति तृणाग्रम् । अनुकुष्णाति अनुघट्टयतीत्यर्थ इति हरदत्त । श्लोकैरुपस्तौति उपश्लोकयति । सेनया अभियाति अभिषेणयति । उपसर्गात्सुनोतीति षत्वम् । अभ्यषेणयत् । प्राक्सितादड्व्यवायेपीति षत्वम् । त्वच संवरणे, पुंसिसंज्ञायामिति घ । त्वचं गृह्णाति त्वचयति । टिलोपस्य स्थानिवत्त्वादुपधावृद्धिर्न । उक्तादेव धातो क्विपि हलन्तात्तत्करोतीति णौ त्वाचयतीत्युपधावृद्धिर्भवत्येव । प्रकृत्यैकाजिति टिलोपाभाव । तस्मात्सूत्रे त्वचेत्यकारो विवक्षितो न तु सत्यापेतिवदुच्चारणार्थ इत्यवधेयम् । वर्मणा सन्नह्यति संवर्मयति । वर्णं गृह्णाति सवर्णयति । चूर्णैरवध्वंसयति अवचूर्णयति । चुरादिभ्यः स्वार्थे । चोरयति । चिन्तयति ॥

हेतुमति च ॥ हेतु कर्तुः प्रयोजकः तद्व्यापारः प्रवर्तनारूपो हेतुमान् तस्मिन्वाच्ये धातोर्णिच् स्यात् । पाचयति देवदत्तो यज्ञदत्तेन । यज्ञदत्तनिष्ठविक्लित्त्यनुकूलव्यापारविषयिणी प्रवर्तना

देवदत्ताश्रयेत्यर्थः । प्रवर्तनानेकधा । प्रेषणमध्येषणं तत्समर्थाचरणं चेति । भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणम् । आज्ञेत्यर्थः । गुर्वादेराराध्यस्य प्रवर्तना अध्येषणम् । प्रार्थनेत्यर्थः । तत्समर्थाचरणमपि बहुधा अनुमतिरुपदेशोनुग्रह इति । तत्र यस्यानुमतिं विना क्रिया न निष्पद्यते सोनुमतिमात्रे प्रयोजकः । यथा राजादिः । वैद्यादिस्तु ज्वरितः कषायं पिबेदिति उपदेशमात्रेण प्रवर्तकः । यस्तु केन चिज्जिघांसितं पलायमानं रुणद्धि सोपि हन्तुरनुग्राहकत्वात् प्रयोजक एव । तदिह अर्थप्रकरणादिगम्या अमी विशेषाः । सर्वानुगतं प्रवर्तनासामान्यं तु णिचोर्थः । स च णिचः शक्य इति मुख्यः पक्षः । द्योत्य इति पक्षान्तरमप्याकरे स्थितम् । यद्यपि हेतुशब्दस्य ससम्बन्धिकत्वात् हेतुमानित्युक्ते यं प्रति प्रयोजकत्वं स एव लभ्यते । यथा पितृमानित्युक्ते पुत्रः । तादृशश्चेह कर्ता कारकाधिकारे हेतुसंज्ञोक्तेः क्रिया च । तथा च पक्तुः पाकस्य वा हेतुमत्त्वं युक्तम् । तथापि करणेइत्यधिकारात् नेह कर्ता गृह्यते । प्रकृत्यैवोक्तत्वाच्च न पाकः । किन्तु पाकपक्रपेक्षया यो हेतुस्तदीयव्यापार एव स्वभावतो लोके णिजर्थ-

त्वाच्च । अणौ कर्तुर्णौ कर्मत्वमित्यादिव्यवस्थाऽनुपगमाच्च । प्रणाययति अभिप्रापयतीत्यादौ उपसर्गस्य प्रकृत्यर्थगतिविशेषद्योतकत्वे णत्वपत्वे स्त । णिचा सम्बन्धे तु नेत्यष्टमे स्फुटत्वाच्च । अतोत्र पक्षे नातीवाभिनिवेष्टव्यम् । स्यादेतत् । प्रार्थनायामस्य णिजर्थत्वे णिचो लोडादीनाञ्च पर्यायप्रसङ्गः । ततश्च पृच्छतु मां भवानिति वक्तव्ये णिजपि प्रयुज्येतेति चेत् । कर्तुः प्रयोजको हि हेतुः प्रैषविषयस्तु नाद्यापि कर्तृत्वेनावधारितः । तथा च प्रयोज्यप्रवृत्त्युपहिता प्रवृत्तिर्णिजर्थः । केवला तु लोडर्थ इति विवेकः । उक्तं च । द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोड् विधीयते । सक्रियस्य प्रयोगस्तु यदा स विषयो णिच इति । किञ्च प्रयोक्तृधर्मः प्रयुक्तिर्लोडर्थः । अनियतकर्तृका तु णिजर्थः । पचेति हि वक्तुरेव प्रेरणा गम्यते । पाचयतीत्यत्र तु वक्तृभिन्नस्य । तत्करोतीत्युपसंख्यानम् । सूत्रयत्याद्यर्थं । गणपाठसिद्ध एवायमर्थ उपसंख्यानेनापि प्रदर्शितः । इह करोतीत्यत्र प्रकृत्यर्थमात्रं विवक्षितं न प्रत्ययार्थः । तेन ण्यन्तात् भावकर्मणो भूतभविष्यतोः द्वित्वबहुत्वयोश्च लः सिध्यति । अयं णिच् प्रातिपदिकादेव न तु सुबन्तादिति माधवः । युक्तञ्चैतत् । सुप इत्यधिकारस्येह विच्छिन्नत्वात् । किञ्च चुरादिषु ह्येवं पठ्यते प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । तत्करोति तदाचष्टे । तेनातिक्रमाति । कर्तृकरणाद्धात्वर्थे इति । अस्यार्थ । प्रातिपदिकाद्धातोरर्थविशेषरूपे वाच्ये णिच् स्यात् । इष्ठनीव चास्मिन बहुलं कार्यं स्यादिति । कूलमुद्रुजयति उत्कूलयति । अस्यैव प्रपञ्चः तत्करोतीत्यादिः । एवञ्च प्रातिपदिकादित्युपक्रमान्नेदं सुबन्ताद्विधायकम् । तथा च प्रकृतवार्त्तिकमपि तत्समानार्थकत्वात्तथैव । तेनातिक्रामतीत्येतत्तु

कर्तृकरणादित्यस्यैव प्रपञ्चः । कर्तृग्रहणञ्च करणस्यैव विशेषणं करणत्वेन लोके प्रसिद्धानां चक्षुरादीनामेव ग्रहणमिति शङ्काव्युदसनाय । अन्यथा चक्षुषा पश्यति चक्षयतीत्यादावेव स्यान्न तु करिभिरवबध्नाति अवकरयतीत्यादौ । एवञ्च तत्तेनेतिशब्दौ कर्मकरणयोरुपलक्षकौ करणस्य कर्मणश्च समर्पकात्प्रातिपदिकादित्यर्थः । सुबन्तादुत्पत्तौ तु हस्तिनातिक्रामति अतिहस्तयतीत्यादौ णौ सुपो लोपे टिलोपे च कृते अन्तर्वर्तिविभक्त्या पदत्वाज्जश्त्वं स्यात् । न च टिलोपस्य स्थानिवत्त्वम् । अज्झलादेशत्वात् । हरदत्तस्तु सुबन्ताण्णिचमभिप्रैति । यदाह तदिति द्वितीयान्तोपलक्षणमिति । न चास्मिन्पक्षे पदकार्यप्रसङ्गः । इष्टवदित्यतिदिष्टया भसंज्ञया पदत्वस्य बाधात् । अत एव हि पटिष्ठ इत्यादौ सुबन्तादिष्ठनि जश्त्वादिपदकार्याप्रवृत्तिः । किञ्च स्रग्विणमाचष्टे स्रजयतीत्यादौ माधवमतेप्येषैव गतिः । सुबन्तादुत्पन्नयोर्विन्मतोर्लुकि तत्प्रकृतेः सुबन्तत्वात्प्रत्ययलक्षणेन पदकार्यप्रसङ्गस्य स्पष्टत्वात् । तदिह मतभेदेन प्रातिपदिकात्सुबन्ताद्वा णिजिति स्थितम् । आद्यपक्षेपि यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणाद्ङ्यावन्तादपि भवति । अत एव णाविष्ठवदित्यत्र भाष्ये इष्ठवदित्यतिदेशस्य पुंवद्भावटिलोपयणादिलोपविन्मतोर्लुगर्थमिति पुंवद्भावोपि प्रयोजनतयोक्तः । इदञ्च दिङ्मात्रं न तु परिगणनमिति षष्ठएवाकरे स्पष्टम् । उदाहरणानि तु प्रपञ्चयामः । एनीमाचष्टे एतयति । हरिणीमाचष्टे हरितयति । न चात्र पुंवद्भावस्य इष्ठनि विशिष्याविधानात्कथमतिदेश इति वाच्यम् । विशेषातिदेशे सामान्यस्याप्यतिदेशात् । वसिष्ठवदत्र वर्तितव्यमित्युक्ते हि ब्राह्मणत्वं सामान्यनिबन्धनमप्यतिदिश्यतएव । तथेह भसंज्ञा-

निमित्ततद्धितत्वप्रयुक्तः पुंवद्भावोपीत्यदोषः । नन्वेतयतीत्यादौ टिलोपेन ङीपि निवृत्ते तत्सन्नियोगशिष्टत्वान्नकारोपि निवर्त्यताम् । तथा च टिलोपेनैव गतार्थत्वे किमर्थं पुंवद्भावोपि पृथक् प्रयोजनतया भाष्ये गणित इति चेत् । अत्र कैयटः । सन्नियोगशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थमिदं तेन ऐनेय श्यैनेय इत्यत्र यस्येति लोपे कृतेपि नकारो न निवर्तते इत्याह । हरदत्तस्तु फलान्तरमपि मतान्तरत्वेनाह । इडविडमाचष्टे ऐडविडयति । दरदं दारदयति । इडविडशब्दो जनपदस्य क्षत्रियजातेश्च वाचकः । तस्माज्जनपदशब्दात् क्षत्रियादञ्, दरच्छब्दात् द्व्यञ्मगधेत्यण् । अञणोस्तद्राजसंज्ञा तेतद्राजा इति सूत्रेण, अञादीनामापादपरिसमाप्तेस्तद्विधानात् अतश्चेतिलुक् । अकाररूपस्य तद्राजप्रत्ययस्य स्त्रियां लुगिति हि सूत्रार्थः । ततश्च इडविद् दरत् स्त्री । ऐडविडो दारदश्च पुमान् । पुंवद्वचनेन च स्त्रीशब्दस्य पुंशब्देऽतिदिष्टे सिद्धमिष्टम् । न चैवं गोत्रत्वेन जातित्वाज्जातेश्चेति पुंवद्भावनिषेधः शङ्क्यः । औपसंख्यानिकस्य नायं निषेध इति वक्ष्यमाणत्वात् । न चैवमप्यजादिगुणवचनादेवेत्युक्तेरिष्ठन एयाभ्यामसम्भवेन कथं तद्वदित्यतिदेश इति वाच्यम् । नहीष्ठनि दृष्टस्यैवातिदेशः किन्तु सम्भावितस्य । अन्यथा अतिराजयतीत्यादौ टिलोपो न स्यात् । नन्वस्मिन्पक्षे ऐनेयः श्यैनेय इति कथं सिद्ध्येदिति चेत् । अत्र माधवः । अनन्यथासिद्धमपि ऐडविडयतीत्याद्युदाहृत्य एतयति श्येतयतीत्युदाहरन् भाष्यकारः सन्नियोगशिष्टपरिभाषाया अनित्यत्वं ज्ञापयतीत्याह । वस्तुतस्तु पुंवद्भावस्यैकाच्सु टिलोपस्याभाषितपुंस्केषु च चारितार्थ्येपि एतयतीत्यादावन्तरङ्गत्वेन पुंवद्भाव एव ज्ञाप्यः सिद्धश्च प्रत्ययविधाविन्युक्तत्वेन प्रत्ययोत्पत्तेः पूर्वमेव प्रवृत्तत्वात् । अत एव नकारर-

हितप्रयोगासिद्धिः। न चात्र टिलोपेपि सन्नियोगशिष्टन्यायेन नकारनिवृत्तिः सुलभेति वाच्यम्। उक्तन्यायेन नकारनिवृत्तौ कर्तव्यायामच परस्मिन्निति स्थानिवद्भावस्य दुर्वारत्वात्। अत एव पञ्चेन्द्राण्यो देवता अस्येति पञ्चेद्र इत्यादौ स्थानिवद्भावेनानुगादिश्रवणे प्राप्ते स्थानिवद्भावनिषेधार्थे क्विलुगुपधेति वार्त्तिके लुग्ग्रहणमिति भाष्यवार्त्तिकादौ स्पष्टम्। अत एवाभ्यासिकारसहितमेतदिति रूपं सिद्धम्। टिलोपे तु प्रक्रियादशायां परिनिष्ठिते रूपे वा ऽवर्णपरत्वाभावेन स्थानिवद्भावानतिपत्तावुक्तरूपासिद्धिः। न चाल्लोपस्यापि स्थानिवद्भावः। तस्य ङीनिमित्तत्वेपि णिजनिमित्तत्वादिति ध्येयम्। पृथुमाचष्टे प्रथयति। चङि वृद्धे पूर्वं टिलोप इति पक्षे अग्लोपित्वात्सन्वल्लघुनीत्यस्याप्रवृत्तेः। अपप्रथत्। परत्वाद्वृद्धौ आवादेशात्पूर्वं टिलोपे अनग्लोपित्वादपिप्रथत्। पक्षद्वयमपीदं मुण्डमिश्रेति सूत्रे प्रपञ्चितम्। एवं मृदुमाचष्टे म्रदयति। अमम्रदत्। अमिम्रदत्। भ्रशयति क्रशयति द्रढयति एषां चङि सर्वथाप्यग्लोपित्वात्। अबभ्रशत्। अचक्रशत्। अदद्रढत् इत्येकमेव रूपम्। परिवृढयति। अत्रोपसर्गस्य पृथक्करणात्पर्यवृढयत् पर्यववृढत्। पृथुं मृदुं भृशं चैव कृशं च दृढमेव च। परिपूर्वं वृढञ्चैव षडेतान् रविधौ स्मरेत्॥ कविं पटु वा आचष्टे कवयति पटयति। अचकवत्। अचीकवत्। अपपठत्। अपीपठत्। कुमारीमाख्यत्। अचुकुमारत्। अत्र एकमेव रूपम्। सन्वल्लघुनीति दीर्घो लघोरिति च सूत्रे चङ्परे णौ परे अचा अव्यवहितं यल्लघु तस्मिन्परे योऽभ्यासः तस्येति कैयटादिसम्मते सूत्रार्थे यद्यभ्यासात्परं लघु न तच्चङ्परणिपरमिति दीर्घत्वस्याप्रसङ्गात्। चङ्परे णौ यदङ्गन्तस्य योऽभ्यासो लघुपरः तस्येति हरदत्ता

दिपसेति कुमारीशब्दस्य पुंवद्भावेन ह्रस्वादावप्यग्लोपित्वात् । न-र्दीमाख्यत् अननर्दादित्यादि । ननु कैयटमते येननाव्यवधानमि-तिन्यायेन एकव्यञ्जनव्यवहिते अजीहरदित्यादौ सन्वद्भावो-स्तु नाम । अचिचणदित्यादौ तु कथमिति चेत् । असस्मरदि-त्यादावित्वाभावार्थमत्स्मृदृत्वरेति अत्वविधानेन संयोगव्यवधा-नेपि भवतीति ज्ञापनात् । ऊढमाख्यत् औजढत् । ऊदिमाख्यत् औजिढत् । कर्तारमाचष्टे करयति । भर्तारं भरयति । दोग्धार-न्दोहयति । तुश्छन्दसीति तुशब्दलोपोपि णावतिदिश्यतइत्येके । अन्ये तु छन्दस्युपदिष्टोसौ णावपि छंदस्येवातिदिश्यतां नाम । भाषायान्तु कथं भवेत् । तस्माट्टिलोपे कर्तयतीत्याद्येव रूपमि-त्याहुः । त्वां मां वा आचष्टे त्वापयति । मापयति । इह मत्य-योत्तरपदयोश्चेति एकार्थयोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमौ । अतो-गुणइति पररूपात्पूर्वं नित्यत्वाट्टिलोपे वृद्धौ पुगित्येकं मतम् । यस्त्वास्तु परादप्यन्तरङ्गत्वं बलीयस्त्वात्पररूपत्वे प्रकृत्यैकाजि-ति टिलोपाभावाद्वृद्धौ त्वादयति मादयतीत्येव रूपमिति वदन्ति । प्रकृत्यैकाजित्येतत्पत्याख्यानभाष्यन्तूदाहरणविशेषे ऽन्यथासिद्धिरित्येतावन्मात्रपरम् । तथाहि । वृत्तिकारोदाहृतेषु मध्ये मेष्ठादय आभान्सूत्रेण सिद्धाः । तत्यागोपज्येष्ठवदकारोच्चार-णसामर्थ्यात् । इष्टेमेयः स्वनेकाचोप्यवाशिष्टस्य नेष्यते । टिलोपो भवत्येनात् । कनिष्ठादावि‌दं तुल्यं तृन्लोपस्य भवत्वेनात् ॥ कैयटमाध-वादिग्रन्थास्त्विहानुकूल्या इति वक्ष्यामः । अङ्गवृत्तपरिभाषया वृ-द्धिमकृत्वा त्वदयति मदयतीत्यन्ये प्रतिपन्नाः । युवामावां वा आचष्टे । युष्मयति अस्मयति । युवावौ द्विवचने इत्यत्र यद्यपि द्विवचने इत्यर्थग्रहणं तथापीह युवावौ न स्तः । विभक्तिपर

भावात् । प्रातिपदिकादेव हि णिजिति माधवादयः । सुबन्तादिति हरदत्तपक्षेपि अन्तरङ्गानपीति न्यायेन विभक्तेर्लुकापहारात् ॥ त्वामतिक्रान्तमतिक्रान्तौ वा अतित्वाम् । अतिक्रान्तान् अतित्वान् । आचष्टे । अतित्वयति अतिमयति । युष्मदस्मदोरेकार्थत्वेन प्रत्ययोत्तरपदयोश्चेति त्वमौ । अन्तरङ्गत्वात्पूर्वरूपं ततष्टिलोप इति माधवः । तच्चिन्त्यम् । उपसर्गस्य पृथक्करणेन प्रकृत्यैकाजिति प्रकृतिभावात् । तस्मादतित्वादयति अतिमादयतीत्येव बोध्यम् । अत्रापि पररूपात्पूर्वं नित्यत्वाट्टिलोप इति मते अतित्वापयति अतिमापयति । युवामावां युष्मानस्मान्वा अतिक्रान्तमतिक्रान्तावतिक्रान्तान्वा आचष्टे अतियुष्मयति अत्यस्मयति । इदानीं ण्यन्तात्क्विबपि कश्चिद्विशेष उच्यते ॥ तत्र त्वां मां वा आचष्टइति आख्येयैक्ये त्वाप् माप् । त्वाद् माद् त्वद् मद् इति प्रागुक्तमतभेदेन त्रिधा प्रातिपदिकानि । युवामावां युष्मानस्मान् वा आचष्टइति आख्येयस्यानेकत्वे त्वमयोरभावाण्णौ टिलोपे क्वौ णिलोपे वेश्चापृक्तलोपे युष्म् अस्म् इति मान्ते प्रातिपदिके भवतः । ततः स्वादयः । तत्र प्रातिपदिकाष्टकादपि विभक्तीनां यथायथं ङे प्रथमयोरम्, शसोन, भ्यसोभ्यम्, पञ्चम्याअत्, एकवचनस्यच, युष्मदस्मद्भ्यां ङसोश्, सामआकमिति सूत्रसप्तकेन विहिता आदेशा भवन्ति । एवं युष्मदस्मदोरनादेशे, द्वितीयायाञ्च, प्रथमायाश्चद्विवचनेभाषायामिति त्रिसूत्र्या विहितमात्वं योचीति यत्वं च भवत्येव । शेषेलोपस्तु आन्वयत्वनिमित्तेतरविभक्तौ परतोन्त्यलोप इति व्याख्याने भवत्येवाशेषशब्दस्य मान्ताच्छेपरत्वमाश्रित्य टिलोप इति व्याख्याने तु न भवत्येवाख्येयस्यानेकत्वे । तत्र हि शेषेलोपेनापहार्यं मान्तारूपं णाविष्ठवदित्यतिदिष्टेन टिलोपेनैवापहृतम् । आख्येयैक्ये

तु भवत्येव प्राक् टिलोपाभावात्। टिलोपं स्वीकृत्य पुक्तौ पान्तत्वमिति मते तु न भवत्येव। अजादौ यत्वविधानादात्वं हलादावेव पर्यवस्यति। त्वाहौसौ, यूयवयौजसि, तुभ्यमह्यौङयि, तवममौङसीति चतुःसूत्रीविहिताः प्रकृत्यादेशास्तु आख्येयैकत्वे न भवन्त्येव मपर्यन्ताभावात्, आख्येयद्वित्वबहुत्वयोस्तु वैकल्पिकाः। तथाहि। मपर्यन्तस्येत्यत्र मान्तस्येत्येव सिद्धे परिग्रहणसामर्थ्याद्युष्मदस्मदोर्मान्तत्वावस्थायां नादेशा इत्येकं मतम्। परिग्रहणाभावे मान्तस्यैव स्यात्। सति तु तस्मिन् मान्ते ततोधिके च भवतीति मतान्तरम्। उभयमिदं तस्मिन्नेव सूत्रे व्युत्पादयिष्यते। मतभेदाच्चेह फलितो विकल्पः। तत्र आख्येयद्वित्वे सुजस्ङेङस्सु परत्वात् त्वाहादिप्रवृत्तावपि औ अम् इत्यादिषु वचनान्तरेषु विभक्तिपरत्वाद्युवावौ एकस्मिन्मते स्त एव मतान्तरे तु न त्वाहादयो नापि युवाविति विवेकः। अथ रूपाणि, आख्येयैक्ये सौ त्वां माम्। वृद्धिर्नेतिवादिनान्तु शेषेलोपे त्वं मं शेषेलोपाट्टिलोपः। स चाचक्षाणे न प्रवर्त्ततइति पक्षेप्याख्येयैक्यस्येव दान्तयोरित्युक्तम्। यान्तयोस्तु पक्षे त्वायम्। मायम्। इत्थं सङ्कलनया त्रीणि, औङि त्वां मामित्येकमेव। प्रथमायाश्चद्विवचनइत्यात्वं जसि साविव त्रीणि शेषेलोपस्य यान्तयोः पाक्षिकत्वात्। अम्औटोः त्वां माम्। शसि त्वान् मान् द्वितीयायाञ्चेत्यात्वम्। आङि। त्वाया माया। अवृद्धौ तु त्वया मया त्वाभ्यां माभ्यां त्वाभिः माभिः। ङयि अम् शेषेलोपः। वृद्धिपक्षे आतोधातोरित्यालोपः त्वं मम्। पक्षे त्वायं मायम्। त्वाभ्यां माभ्याम्। त्वाभ्यंमाभ्यम्। भ्यसि शेषेलोपः। अभ्यमादेशपक्षे तु शेषेलोप आल्लोपे च त्वभ्य मभ्यम्। अवृद्धिपक्षेप्येवम्। मान्तपक्षे त्वायभ्यं मायभ्यम्। तत्र भ्यसि अङ्गवृत्तपरिभाषया बहुवचने झल्येदित्येत्त्वं न। त्वत्

मत्।शेषेलोपे वृद्धिपक्षे आल्लोपः । त्वायत् मायत्।त्वाभ्यां माभ्याम् । त्वत् मत् । त्वायत् मायत् । त्वाम । त्वाय माय । त्वायो मायो । अवृद्धौ तु त्वयोः मयोः। त्वाकं माकम्। त्वायाकं मायाकम् । त्वायि मायि । त्वायो मायोः । अवृद्धौ तु त्वयि मयि । त्वयोः मयो । त्वासु मासु । एवञ्च । आख्येये-ऽयेत्र सुजसोश्चतुर्थ्यां भ्यसि च त्रयम्। टौसङिङिटाम्भ्यस्सु रूपे द्वे निश्चितुष्वैकमस्त्यतः ॥ इदं त्ववधेयम् । कृतः कर्त्तर्यसंज्ञायामिति विशेष्यनिघ्नतोक्तेराचक्षाणस्य क्लीवत्वे सुजसोरसर्वनामस्थान-त्वेन भत्वादातोधातोरिन्यालोपे त्वं ममित्येव रूपम् । अवृद्धि-वादिनां सम्बोधने एङ्ह्रस्वादिति हल्मात्रलोपे हे त्व हे म । स्त्रीत्वे तु टाप् माप्त । सन्निपातपरिभाषया समाधेयः । यत्तु केवले समाधानद्वयम् अलिङ्गत्वाट्टिलोपाद्वेति तदिह न भवतीति दिक् । अथाख्येयद्वित्वे रूपाणि । सौ त्वं अहम् । प्रकृत्यादेशा-भावे युषं असम् । शेषेलोपस्याप्यभावे युष्मम् अस्मम् इत्थं त्रीणि । युवाम् आवाम् । युषाम् असाम् । जसि । यूयं वयम् । युषम् असम् । युष्मम् अस्मम् । अमौटो युवाम् आवाम् । युषाम् असाम् । युवान् आवान् । युषान् असान् । युवया आवया । युष्या अस्या । युवाभ्याम् आवाभ्यां, युषाभ्याम् असाभ्याम् । युवाभिः आवाभिः। युषाभिरसाभि । तुभ्य मह्यम् । युषम् असम् । युष्मम् अस्मम् । युवाभ्याम् आवाभ्याम् । युषाभ्याम् असाभ्याम् । युवभ्यम् आवभ्यम् । युष्मभ्यम् अस्मभ्यम् । भ्यमादेशपक्षे तु युष्मभ्यम् । अत्र सयोगान्तलोपो न भाव्ये झल इत्यनुवर्त्तनात् । अननुवृत्तिपक्षे तु युड्भ्यम् । अस्मदस्तु स्कोरिति सलोपे अम्भ्यम् । शेषेलोपे तु ओभ्यम् । युवत् आवत् । युषत् असत् । युष्मत् अस्मत् । युवाभ्याम् आवाभ्याम् । युषाभ्याम् । असाभ्याम् । भ्यसि ङसि च त्रीणि ।

तव मम । युप अस । युष्म अस्म । युवयोः आवयोः । युष्यो । अस्योः । युवाकम् । आवाकम् । युपाकम् । असाकम् । युष्माकम् । अस्माकम् । युवयि आवयि । युष्वि अस्मि । युवयो । आवयोः । युष्योः । अस्मोः । युवासु आवासु युपासु असासु । एवञ्च चतुर्थ्या भ्यसि चत्वारि व्याख्याने द्वे तथान्यत । सुजस्ङेङस्ङसिभ्यस्सु आमि च त्रीणि निश्चिनु ॥ अथाख्येयबहुत्वे रूपाणि । त्वम् अहम् । युपम् असम् । युष्मम् । अस्मम् । युपाम् असाम् । यूयं वयम् । युषम् असम् । युष्मम् अस्मम् । युपाम् असाम् । युपान् असान् । युष्या अस्या । युपाभ्याम् असाभ्याम् । युपाभिः असाभिः । तुभ्यं मह्यम् । युपम् असम् । युष्मम् अस्मम् । युपाभ्याम् । असाभ्याम् । युपभ्यम् असभ्यं युष्मभ्यम् । युद्भ्यम् अभ्यम् अोभ्यम् । युपत् । असत् । युष्मत् अस्मत् । युपाभ्याम असाभ्याम् । उपत् असत् । युष्मत् अस्मत् । तव मम । युप अस । युष्म । अस्म । युष्योः । अस्योः । युपाकम् । असाकम् । युष्माकम् । अस्माकम् । युष्यि । अस्यि । युष्योः । अस्यो । युपासु असासु । एवञ्च, ङसिभ्यमाम्सु द्वे रूपे चतुर्थ्या भ्यसि तु त्रयम् । सुजस्ङेङस्सु च तथाख्येयभूम्न्येकमन्यत ॥ इह सर्वत्र प्रकृत्यादेशयन्त्वात्वशेषलोपेषु कर्तव्येषु णिलोपो न स्थानिवत् यत्रौ लुप्तत्वादिति दिक् । श्वानमाचष्टे शावयति । श्वन् इ इति स्थिते णाविष्ठवदित्यतिदेशेन ह्वौ टिलोपौ प्राप्तौ टेरित्येकः नस्तद्धित इत्यपरः । तत्र प्रकृत्यैकाजिति प्रकृतिभावो येननाप्राप्तिन्यायेन टेरित्यस्यैवेति तस्मिन्निवृत्तेपि नस्तद्धित इति भवत्येव । तत इष्ठवदित्यतिदिष्टया भसंज्ञयैव वकारस्य सम्प्रसारणे वृद्धावावादेशः । न च नविष्ठ इत्यादौ इष्ठनि ओर्गुणः पूर्वस्य दृष्ट इति इहाप्यतिदिश्यतेति वाच्यम् । तस्मिन्कर्तव्ये

सम्प्रसारणटिलोपयोरसिद्धवदत्रेत्यसिद्धत्वात् । अन्ये तु व्र-सिष्ठ इत्यादौ नान्तलक्षणाट्टिलोपात्परत्वाट्टेरित्येव प्रवर्त्तते । तच्चेह प्रकृतिभावेन निवृत्तम् । नस्तद्धितइति तु इष्ठनि क्वापि न दृष्टमिति तस्येहानतिदेशात् । सम्प्रसारणपूर्वत्वयोः शुनयतीति रूपमाहुः । न च टिलोपयोराभीयत्वेन अन्योन्यस्यासिद्धत्वान्कथं विप्रतिषेध इति वाच्यम् । विप्रतिषेधे आभीयमसिद्धत्वं नास्तीति वक्ष्यमाणत्वात् । विद्वांसमाचष्टइत्यत्र णौ टिलोपे विद्वयतीति दौर्गाः । अत्र संप्रसारणाभावश्चिन्त्य इत्यात्रेयः । अङ्गवृत्तपरिभाषया चिन्त्योद्धारो बोध्यः। संप्रसारणे वृद्धावावादेशे च विदावयतीत्येके । अन्ये तु विदयतीत्याहुः । तथाहि । नित्यत्वाट्टिलोपात्प्राक् संप्रसारणन्ततोन्तरङ्गत्वात्पूर्वरूपे पश्चाट्टिलोपः । न च टिलोपस्यापि नित्यत्वम् । शब्दान्तरप्राप्त्या अनित्यत्वात् । ननु सम्प्रसारणमात्रेण न शब्दान्तरप्राप्तिः किन्तु पूर्वरूपेण । यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमिति चेन्न । यस्यचेत्यस्य असार्वत्रिकतायाः हरदत्तादिभिरुक्तत्वात् । उदञ्चमाचष्टे उदीचयति । अत्र उपसर्गस्य पृथक्करणात् क्विबन्तात् लुप्तनकारादच्छब्दाण्णिच् । प्रकृत्यैकाजिति टिलोपाभावे इष्ठवदित्यतिदेशेन भत्वे अच इत्यल्लोपे प्राप्ते तदपवाद उदईदितीत्वम् । चङि तु उदैचिचत् । अत्र णिलोपस्य द्विर्वचनेचीति स्थानिवत्त्वादजादेर्द्वितीयस्येति चिशब्दस्य द्वित्वम् । अङ्गस्याद् वृद्धिः । ल्यपि लघुपूर्वत्वाभावेन अयादेशाभावाण्णिलोपे उदीच्य । प्रत्यञ्चमाचष्टे प्रतीचयति । अत्राच इत्यल्लोपः । चाविति पूर्वपदस्य दीर्घः। चङि चिशब्दात्पूर्वमटि यणादेशे प्रत्यचिचत् । इकोसवर्णेइति प्रकृतिभावपक्षे प्रति अचिचत् । ल्यपि प्रतीच्य । सम्यञ्चमाचष्टे

समीचयति। चङि। सम्यचिचत्। समि अचिचत्। समीच्य। तिरोऽञ्चतीति तिर्यङ्। तिरसस्तिर्यलोपेइति तिर्यादेशः। तमाचष्टे तिराययति। इष्टवद्भावेन टिलोपेनाञ्चतेरपहारे वृद्धयायौ। न चात्र अञ्चेतेर्लोपात् तिरसस्तिरिः कथमिति वाच्यम्। अलोपे इति हि अच इति विधीयमाने लोपे तिर्यादेशो वार्यते। तस्यैवानन्तरत्वात्। इह तिरेरिकारस्य वृद्धयायोः कृतयोरकृतयोर्वा लोपः प्राप्तो ऽङ्गवृत्तपरिभाषया न भवति। यद्वा चिणोलुङ्न्यायेन प्रथमप्रवृत्तटिलोपस्य असिद्धवदत्रेत्यसिद्धत्वात् पुनष्टिलोपो न। अत एव तिरेः स्थानिवत्त्वेनाव्ययत्वात् अव्ययानां भमात्रे इति प्राप्तोपि टिलोपो न भवति, एवं यस्येति लोपोपि न भवति। परया वृद्ध्या बाधाद्वा। चङि अग्लोपित्वेन उपधाह्रस्वो न। अतितिरायत्। सह अञ्चतीति सध्र्यङ्। सहस्यसध्रिः। सध्र्यञ्चमाचष्टे सध्र्याययति। असस्रधायत्। पूर्ववत्पुनष्टिलोपो न। स्यादेतत्। यदि तिरिसध्र्योरिकारे टिलोपस्याप्रवृत्तौ चिणोलुङ्न्यायेनासिद्धत्वं मूलम्। तर्हि कुमारीमाचष्टे कुमारयतीति न सिध्येत्। तत्रापि इष्टवद्भावेन प्रवृत्तस्य पुंवत्त्वस्य तेनैव कुमाराकारलोपे असिद्धत्वापत्तेरिति चेन्मैवम्। अतिदिश्यमानानाङ्कार्याणामुत्पत्तिदेश एव देश इत्यभ्युपगमात्। पुंवत्त्वस्य च भस्याढेतद्धितइति आभीयेभ्यः प्रागेवोत्पत्तेः। अत एव भाष्यकारेण लोहिनीमाचष्टे लोहितयतीत्युदाहृतम्। विष्वग्यञ्चमाचष्टे विष्वद्राययति। देवद्र्यञ्चमाचष्टे देवद्राययति। विष्वग्देवयोश्चेति चकारात् सर्वनाम्नोद्र्यादेशे सर्वद्राययति। अदसोऽन्यादेशे अमुमुआययति। अदमुआययति अदद्राययति। चङि। अजादित्वात् द्वितीयस्य द्वित्त्वम्। अल्लोपित्वान्नोपधाह्रस्वः। आमुमुमुआयत्। आददमुआयत्। आददद्रायत्। आचे

पूर्वत्रासिद्धीयमद्विर्वचनइति मुत्वस्यासिद्धत्वाभाव । इमाचष्टे आययति, प्रकृत्यैकाजिति प्रकृतिभावाट्टिलोपाभावे वृद्धौ आयादेश । चङि उपधाह्रस्वे द्वितीयस्य द्वित्वे माभवानाययत् । न च द्वित्वे कर्तव्ये णौ कृतं स्थानिवदिति वृद्ध्यादेः स्थानिवत्त्वं शङ्क्यम् । स्थानिरूपस्य यत्र द्विर्वचनं लभ्यते तत्र हि तत् । इह तु णेरेव द्विर्वचनमिति माधवः । वस्तुतस्तु अचिकीर्त्तदित्यत्र अतिव्याप्तिं वारयितुमो पुयणजीति ज्ञापकस्य सजातीयविषयतामाश्रित्य अवर्णवदुत्तरखण्डएव स्थानिवद्भावप्रवृत्तिरिति द्विर्वचनेचीतिसूत्रएवावोचाम । स्पष्टञ्चैतदेवपुरादितिसूत्रे रक्षितपदमञ्जर्यादिष्वपि । उत्तरखण्डस्यावर्णवत्तापि न प्रयोगपर्यवसायिन्येवेत्याग्रह किन्तु प्रक्रियावस्थागतापि । तेन औजिढदपीप्यदित्यत्र द्विर्वचनोत्तरकाल टिलोपेन लोपः पिबतेरित्यनेन च उत्तरखण्डे अवर्णापहारेपि न क्षतिः । भुवमाचष्टे भावयति । चङि अबीभवत् । णौकृतस्य स्थानिवत्वात् भूशब्दस्य द्वित्वम् । पुनरुत्तरखण्डे वृद्ध्यावौ ह्रस्व । ततः सन्वद्भावे ओः पुयण्जीतीत्वम् । दीर्घोलघोरिति दीर्घः । नन्विह भूइत्यस्य द्वित्वे सत्युत्तरखण्डे वृद्ध्यावन्ह्रस्वत्वानि प्रवृत्तानि । एवञ्च अभ्यासस्यानादिष्टादचः पूर्वत्वात् तस्य सन्वद्भावेन पुयण्लक्षणे इत्वे कर्तव्ये णौचङीति ह्रस्वस्य अच परस्मिन्निति स्थानिवत्वे अलघुपरत्वात्कथमित्वमिति चेत् । उच्यते । ओ पुयणजीती· त्वस्य सन्वदतिदेशस्य च आरम्भसामर्थ्यात् स्थानिवद्भावस्येहाप्रवृत्ते । भ्रुवमाख्यत् अबुभ्रवत् । अत्र यः अवर्णपरो यण् नासाव· भ्यासात्परः । यश्च परः पवर्गः नासाववर्णात्पर इति इत्वाभाव । अशिश्रयत् । णौ कृतस्य स्थानिवत्वेन श्रिशब्दस्य द्वित्वम् । स्तम्भमाख्यत् । अजीहयत् । गाम् अजूगवत् । रायम् । अरीर·

यत्। नावम्। अनूनवत्। स्वश्वम्। स्वाशश्वत्। स्वराचष्टे। स्वयति। अव्ययानां भमात्रे इति टिलोप। प्रकृत्यैकाजिति प्रकृतिभावस्तु येननाप्राप्तिन्यायेन आनन्तर्याच्च टेरित्यस्यैव टिलोपस्य नान्यस्येत्युक्तम्। णौ कृतत्वेन टिलोपस्य स्थानिवत्वात् स्वरशब्दस्य द्वित्वे असस्वदित्येके। अजादेशस्यैव स्थानिवत्त्वं, अयं स्वज्झलादेश इति स्थानिवत्वाभावात् स्विशब्दस्य द्विर्वचने असिस्वदित्यन्ये। बहूनाचष्टे भावयति। अत्रेष्ठस्य पिद्वेति इष्ठनि विहितत्वात् बहोर्भूभावः। पिडागमस्तु न भवति णाविष्टुपमेये सप्तमीश्रवणेन इष्ठवदिति उपमानादपि सप्तम्यन्ताद्वतिः। तेन इष्ठनि परे पूर्वस्य यत्कार्यं तस्यैवातिदेशो नत्विष्ठनः कार्यस्यापीति सिद्धान्तात्। प्रातिपदिकस्येति वचनस्य प्रत्ययकार्यानतिदेशार्थत्वाच्च टेरिति सूत्रे कैयटेन भावयतीत्युदाहृत्य पिट्सन्नियोगशिष्टत्वाद्भूभावस्य पिडभावे अस्याप्यभावात्। बहयतीत्येकीयमतत्वेनोपन्यस्तम्। हरदत्तेन तु सोपपत्तिकत्वात्तत्रैव प्राबल्यमिति मन्यमानेन बहयतीति स्वपक्षत्वेनोक्त्वा भावयतीत्येकीयमतेनोक्तम्। अत एव पुरुषकारेपि भावयतीति चिन्त्यमित्युक्तम्। वस्तुतस्तु कैयटपक्ष एव प्रबलः। तथाहि। इष्ठवदिति कार्यातिदेशः। कार्यस्यैव प्राधान्यात्। तथा च इष्ठवद्वचनमेव प्रकृतौ दृष्टानामिह विधायकमिति तदेव भूभाव विधत्ते, तथा च सन्नियोगाभावः स्पष्ट एव। चान्द्रकौमारशाकटायनेषु तु इष्ठनि युग्वेति बहोरेव युकं विधाय भूययतीति स्वीकृतम्। स्थूलमाचष्टे स्थवयति। दूरं दवयति। युवानं यवयति। ह्रस्वयति। क्षेपयति। क्षोदयति। अत्राद्येषु गुणस्य अचोञ्णितीति वृद्धिः प्राप्ता। अङ्गवृत्त इति वा प्रातिपदिकाद्धात्वर्थे बहुलमिति बहुलग्रहणाद्वा न भवति। युवतिशब्दादपि इष्ठनि लिङ्गविशिष्टपरि-

भाषया स्थूलदूरेति यणादिपरलोपादेः सत्त्वाण्णावपि तदतिदेशात् यवयतीत्येव रूपम् । यद्वा पुंवद्भावे कृते यणादिपरलोपात्तदेव रूपम् । शीकरव्यतिकरमरीचिभिर्दूरयत्यवनते विवस्वतीति कालिदासप्रयोगस्तु चिन्त्य इति सुधाकरादयः । वस्तुतस्तु दूरमयते दूरात् तं करोतीति समाधेयम् । स्रग्विणमाचष्टे स्रजयति। अत्रातिदेशाद्विनो लुक् । प्रकृत्यैकाजिति टिलोपो न । अतउपधाया इति वृद्धिस्तु अङ्गवृत्त इति न भवतीति भाष्ये स्थितम् । गोमन्तमाचष्टे गावयति मतुब्लुकि अचोञ्णितीति वृद्धिः। चङि अग्लोपित्वात्सन्वद्दित्वदीर्घत्वयोरभावे असस्रजत् । अजुगवत् इत्यादि । युवानमल्प वाचष्टे कनयति, युवाल्पयोः कनन्यतरस्यां, पक्षे, यवयति । युवतिमल्पां वेति विग्रहेप्येवम् । अन्तिकमाचष्टे नेदयति । बाढमाचष्टे साधयति । अन्तिकबाढयोर्नेदसाधौ। प्रशस्यमाचष्टे प्रशस्ययति । इह प्रशस्यस्यश्र, ज्यचेति श्रज्यौ न भवतः । उपसर्गस्य पृथक्करणादिति माधवः । यत्तु सुधाकरेण श्रापयतीत्युदाहृतम् । यच्च शाकटायनेन श्रपतिज्ययतीति । तत्सर्वं भाष्यविरोधादुपेक्ष्यम् । वृद्धमाचष्टे ज्यापयति । अयञ्च ज्यादेशः वर्षादेशेन सह विकल्पते । प्रियस्थिरेति प्रादय.। प्रियमाचष्टे प्रापयति । स्थिरं स्थापयति स्फिरं स्फापयति। उरुम् वरयतीति सुभ्वातौ माधवः । ऊर्णुधातौ तु वृद्धिं स एवोदाजहार । बहुलं बंहयति । गुरुं गरयति। वृद्धं वर्षयति। तृप्रं दुःखं तदाचष्टे त्रपयति । दीर्घं द्राघयति । वृन्दारकं वृन्दयति इति इष्ठवद्भावोदाहरणप्रपञ्च ॥ प्रकृतमनुसरामः । सूत्रङ्करोति सूत्रयति । इह व्याकरणस्य सूत्रङ्करोतीति वाक्ये द्रव्यरूपं, सूत्रं सूत्रशब्देनोच्यते । लक्ष्यलक्षणसमुदायश्च व्याकरणशब्दार्थः । तयोरंशांशिभावात् षष्ठी।वृत्तौ तु सूत्रशब्दोऽनर्थकः करोत्यर्थपरोवेति

पक्षद्वयेपि सूत्रस्य पदार्थैकदेशत्वात् न तेन व्याकरणं सम्बध्यते। किन्तु करोत्यर्थेनैवेति व्याकरणं सूत्रयतीति द्वितीयैव भवति । तत्रापि सम्बन्धसामान्यविवक्षायां मातुः स्मरतीतिवत् षष्ठी भवत्येवेति दिक्। आख्यानात्कृतस्तदाचष्टइति णिच् कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् ॥ आख्यायतइत्याख्यानम्। बाहुलकात्कर्मणि ल्युट्। आख्यानशब्देन च तदभिधायी शब्दो गृह्यते अर्थे कृदन्तत्वासम्भवादिति प्राञ्चः। वस्तुतस्तु करणे ल्युट्। कंसवधमाचष्टे कंसं घातयति। इह कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् कंसवध इति कृदन्त आख्यानशब्दः। ततो द्वितीयान्तात्प्रातिपदिकाद्वा णिच्। कृतो ऽप्प्रत्ययस्य लुक्। तस्यैव या प्रकृतिः हन् इति, तस्याः विकारपरित्यागेन स्वेनैव रूपेणावस्थानम्। यद्यपि कृतो लुकि कृते तत्सन्नियोगशिष्टस्य वधादेशस्य निवृत्तिः सिद्धैव। हनश्चवध इति सूत्रेण हि अप्प्रत्ययवधादेशौ सन्नियोगशिष्टौ। तथापि सीतायोगमाचष्टे सीतया योजयतीत्यत्र कुत्वस्यासन्नियोगशिष्टत्वेन तन्निवृत्त्यर्थप्रकृतिप्रत्यापत्तिवचनमिति कैयटहरदत्तमाधवादयः। वस्तुतस्तु निमित्तापायन्यायेनैव तत्सिद्धेस्तस्यानित्यत्वज्ञापनार्थमिदम् । नहीदं वचनं नापि न्याय इति वदद्भिरपि अकृतव्यूहपरिभाषायाः तत्स्थानापन्नायाः पुरस्कृतत्वाचस्या एवानित्यत्वमनेन ज्ञाप्यतइति निष्कर्षः। इदन्चाचःपरस्मिन्निति सूत्रएव प्रपञ्चितमस्माभिः। एवञ्च कंसहन् इ इति स्थिते अङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्यैव प्राप्ता ततश्चाट्द्विर्वचनयोर्दोष स्यात्। अत उक्तं प्रकृतिवच्चकारकमिति। अस्यार्थः। प्रकृतेर्हेतुमण्णिचः प्रकृतेः षष्ठ्यन्ताद्वतिः। वधादेः कृदन्तस्य यत्कारकं कंसादिकं तस्य कृत्प्रकृतेर्हन्यादेः हेतुमण्णौ धातावनन्तर्भूतं द्वितीयान्तं यद्रूपं तदेव

भवतीति। अत एव राजागनमाचष्टे राजानमागमयतीत्यत्र नकारश्रवणमप्युपपन्नम्। अनेन चातिदेशेन कारकस्य धातावनन्तर्भावे लब्धे तद्व्यतिरिक्ताद्व्यादेरेव णिच्। एतेन कंसमजीघतदित्यत्र द्विर्वचने यथाभिमतं सिध्यतः। नन्वेनमपि होहन्तेरिति हनस्तोचिण्णलोरिति च कुत्वतत्वे न प्राप्नुतः। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानादिति चेत्। अत्र हरदत्तमाधवादयः। प्रकृतिवच्चेति चकारो भिन्नक्रमः। कारकमित्यस्यानन्तरं द्रष्टव्यः। कार्यशब्दश्चाध्याहार्य। हेतुमण्णिच्प्रकृतौ यादृशङ्कारकं तथेहापि, यादृशञ्च तत्र कार्यं अड्द्विर्वचनतत्वकुत्वादि तदपीह तथैवेत्यर्थः। इह च, अड्द्विर्वचने अतिदेशद्वयेनापि सिध्यतः। असङ्कीर्णोदाहरणन्तु द्वितीयादिकं कुत्वतत्वादिकञ्चेति विवेकः। इह कंसवधसुभद्राहरणादिनिरूढोपाख्यानएव णिजिति नाग्रहः। किन्तु प्रतिपादनमात्रे। तेन राजागमनमाचष्टे राजानमागमयति। यद्यपीह कृत्प्रकृतौ राजा कर्तासीत्। तथापि गमेर्हेतुमण्णौ गतिबुद्धीति कर्मीभूतः। तद्वच्चेहापि। राजानमित्यस्य प्रकृतिभागो यद्यपि अन्तर्वर्तिन्या षष्ठ्या प्रत्ययलक्षणेन पदम्। तथापि नकारश्रवणं भवत्येव रूपातिदेशबलात् देवदत्तपाकमाचष्टे देवदत्तेन पाचयतीति तृतीयैव भवति। गतिबुद्धीति नियमेन कर्मत्वापहारे कर्तृत्वस्यैव स्थितेरिति दिक्। दृश्यर्थायां च प्रवृत्तौ मृगाणां रमणं मृगरमणम्। कर्तृषष्ठ्या समास। तदाचष्टे मृगान् रमयति। यदा प्रतिपाद्यकर्तृकदर्शनार्थमाख्यातं, तदैव णिजिष्यते नान्यदित्येतदर्थं वचनम्। येयमाख्यातरूपा वृत्तिः सा यदि दृश्यर्थः। तेन स्वयं मृगरमणमनुभवन् अन्यस्मै दर्शयितुमाचष्टे इत्यस्मिन्विषये मृगान् रमयतीति प्रयोगः। यदा तु अरण्ये दृष्टं मृगरमणं ग्राममेत्यान्यस्मा आचष्टे एवं तत्र मृगा रमन्तइति

तस्मिन्नाख्याते बोधनीये मृगरमणमाचष्टे इति वाक्यमेव भवति । अत्र कैयटादयः । दृश्यर्थानामेवेति नियमो मृगरमणादिविषयक एव । न तु सार्वत्रिकः । तेन राजागमनादौ दृश्यर्थप्रवृत्त्यभावेपि णिज् भवत्येवेत्याहुः । लोपश्च कालान्तसंयोगे मर्यादायाम् । इह आख्यानादिति न सम्बध्यते । शेषं पूर्ववत् । सन्निहितया आख्यानक्रियया सह कालस्य साकल्येन सम्बन्धे बोधनीये णिच् । मर्यादावचनस्याङो लोपश्चेत्यर्थः।उदाहरणन्तु विवसनं विवासः,अतिक्रमणं घञ् रात्रेर्विवास इति कर्तृषष्ठ्या समासः।ततः आङ्मर्यादाभिविध्योरित्याङासहाव्ययीभावः।आरात्रिविवासमाचष्टे रात्रिं विवासयति। यावद्रात्रेरतिक्रमणं तावत्कथाः कथयतीत्यर्थः। वसिक्रियायां कर्तृभूताया रात्रेर्हेतुमण्णौ सावत्कर्मत्वं वसेरकर्मकत्वात्तद्वदत्रापि णौ कर्मत्वं रात्रिमित्यस्य लुप्तषष्ठ्यन्तत्वेन प्रकृतिभागस्य पदत्वे इकोसवर्ण इति पाक्षिकः प्रकृतिभावः प्राप्तः पूर्ववद्रूपातिदेशान्निवर्तते । इहाख्येयं णिच्प्रकृत्या अनुपात्तमपि अर्थाद्गम्यते । तद्वाचकस्तु भारतकथामित्यादिः शब्दो नेह प्रयोक्तव्यः । तत्समभिव्याहारे हि सति णिजेव नोत्पद्यते अनभिधानात् । अत्र च प्रमाणं वक्ष्यमाणं भाष्यकारीयं प्रत्याख्यानमेव । नहि फलभेदे प्रत्याख्यानं सम्भवति । प्रत्याख्यानपक्षे च कथामित्यादेर्यथा न प्रयोगस्तथा प्रत्याख्यानावसरएव स्फुटीभविष्यति । तथाप्रकृतिवच्चकारकमित्यस्य पूर्वोक्ते विपरीतक्रमाध्याहारव्याख्यानेपि भाष्यकारीयप्रत्याख्यानं प्रमाणमिति दिक् । चित्रीकरणे प्रापि ॥ आख्यानादिति विहाय शिष्टं सम्बध्यते । कृदन्तादाश्चर्यकरणे गम्यमाने प्राप्नोत्यर्थे णिच् स्यात् । कृल्लुगादि पूर्ववत् । उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं प्राप्नोति सूर्यमुद्गमयति । इह उज्जयिन्या माहिष्मती दूरदेशस्थेति तावतो देशस्य

प्रागुदयादतिक्रमणमाश्चर्यकरणम् । प्रकृतिवच्चकारकामिति सूर्यस्य पृथग्भावः। संग्रामयतेरेव सोपसर्गादित्युक्तेरुच्छन्दस्यापि पृथक्करणम् । सूर्यस्य हेतुमण्णौ कर्मत्वात् इहापि कर्मत्वे सूर्यमुद्गमयादित्यादि। नक्षत्रयोगे ज्ञि॥ नक्षत्रयोगवाचिनः कृदन्ताज्ज्ञानार्थे णिच् । शेषं प्राग्वत् । पुष्येण योगः कर्तृकर्मकः योग इत्यर्थः। पुष्यो हि चन्द्रमसं युनक्ति सम्बध्नाति।इह कर्मणोपि गम्यमानत्वादुभयप्राप्ताविति नियमात्कर्तरि षष्ठ्यभावे तृतीया । अन्तर्द्धौ येनादर्शनमिच्छतीतिवत्। पुष्ययोगं जानाति पुष्येण योजयति।युजेः कर्तुं पुष्यस्य गत्यादिकर्तृष्वनन्तर्भावेण हेतुमण्णौ न कर्मता किन्तु कर्तृत्वमेवेति । इहापि तथा, तेन तृतीयैव । इदञ्च आख्यानात्कृत इत्यादि वार्त्तिकजातं भाष्यवार्त्तिकयोरेव प्रत्याख्यातम् । तदीयलक्ष्यजातस्य आरोपेणापि सूपपादत्वात् । तथाहि । कंसं घातयतीति तावदारोपः । ये हि कंसाद्यनुकारिणां नटानां व्याख्यानोपाध्यायाः ते कंसानुकारिणं नटं सामाजिकैः कंसबुद्ध्या गृहीतं तादृशेनैव वासुदेवेन घातयन्तीव । येपि चित्रं व्याचक्षते इयं मथुरा अयं प्रासादः अयं भगवान् वासुदेवः प्रविष्ट इत्यादिक्रमेण, तेपि तथैव । येपि ग्रन्थं वाचयन्त कंसवधमाचक्षते ग्रन्थिका नाम तेपि तत्तत्पदार्थविषयकनिश्चयोत्पादनात्तास्ताः क्रिया निर्वर्तयन्तीव । तथा च स्पष्ट आरोपः । किञ्च गच्छ हन्यते कंसः गच्छ घानिष्यते किं गतेनेह तेन हत कंस इत्यादिषु निरूढेषु व्यवहारेषु तवाप्येषैव गतिः । नह्यत्र णिज्विधिः किञ्चिदुपकरोति । उक्तोदाहरणेषु णिच्प्रवेशाभावात् । उक्तञ्च शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान् । प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यत,इति ॥ एवं राजानमागमयतीत्यादावपि बोध्यम् । राजानमानयतीत्यादौ हि णिजभावात्तवाप्येषैव गतिः ।

रात्रिं विवासयतीत्यत्रापि विचित्रकथाख्यानेन रात्रिरनेनैव गमितेति आरोपः । निशाम्निनायेत्यादौ च तवाप्येषैव गतिः । सूर्यमुद्गमयतीत्यत्रापि प्रयोज्यप्रयोजकभावाध्यारोपः तदालम्बनन्तु माहेश्मत्यां सूर्योद्गमनं लभेयेत्येवरूपस्य देवदत्ताभिप्रेतार्थस्य निर्वृत्तिरेव । यो हि यस्य प्रवर्त्यः स तस्याभिमतं निर्वर्त्तयति । तत्र स्वभृत्यर्थं प्रवर्तमाना अपि शिष्यादयो गुर्वभिप्रेतमपि उद्दिशन्त्येव । सूर्यस्तु न देवदत्ताभिमतोद्देशेन प्रवर्ततइति वैषम्यम् । तथापि अभिमतार्थसम्पत्तिमात्रेण आरोपे न काचित् क्षतिः । एवं पुष्येण योजयतीत्यत्रापि ज्योतिःशास्त्रपरिशीलनेन पुष्ययोगस्य सर्वान्प्रत्याविष्करणात् योजयतीवेत्यारोपः ॥

इति श्रीशब्दकौस्तुभे तृतीयस्याध्यायस्य
प्रथमपादे द्वितीयमाह्निकम् ॥

कण्ड्वादिभ्यो यक् ॥ एभ्यो धातुभ्यो यक् स्यात्स्वार्थे । कण्डूञ् । कण्डूयति । कण्डूयते । न च कण्ड्वादीनि प्रातिपदिकान्येवेति वाच्यम् । गुणनिषेधार्थेन यकः कित्त्वेन तेषां धातुत्वसिद्धेः । न चैवं धातोरित्यनुवृत्तैवे यथ्यर्थमिति वाच्यम् । प्रातिपदिकानां वारणीयत्वात् । न चैते धातव एवेति वाच्यम् । कण्ड्वादिषु केषां चिद्दीर्घपाठेन प्रातिपदिकत्वसिद्धेः । यदि हि धातव एव ते स्युस्तर्हि वाग्रहणं निवर्त्य नित्यो यगिति तावदाश्रेयम् । अन्यथा शबादौ कण्डवतीत्याद्यनिष्टरूपप्रसङ्गात् । एवं स्थिते ह्रस्वान्तादपि यकि मन्तूयतीत्यादिवदकृत्सार्वेति दीर्घत्वे कण्डूयतीत्यादिसिद्धेः किं दीर्घपाठेन । तस्मात् कित्त्वदीर्घाभ्यां ज्ञापकाभ्यां धातवः प्रातिपदिकानि चेति द्विविधाः कण्ड्वादय इति स्थितम् । उक्तञ्च भाष्ये । धातुप्रकरणाद्धातुः

कस्य चासञ्जनादपि॥ आहचायमिमं दीर्घं मन्ये धातुर्विभाषित इति। तत्र धात्वधिकारात् धातुभ्य एव प्रत्यय.। स च नित्य इति सिद्धान्त.। स्यादेतत्। एषां प्रातिपदिकत्वमेवास्तु त्यज्यतां दीर्घपाठः प्रत्ययस्य कित्वञ्च। नचैवमकृत्सार्वेति दीर्घे क्ङिति विधीयमान इह न स्यादिति वाच्यम्। तत्र क्ङितीत्यस्य निवृत्तेः। न चैवमुरुया धृष्णुयेत्यादावतिप्रसङ्गः। तस्य छान्दसत्वात्। न च यको नित्यत्वे कण्डूरिति न सिद्ध्येदिति वाच्यम्। कण्डूयशब्दात्सम्पदादित्वाद्भावे क्वौ अल्लोपे लोपोव्योरिति य लोपे च तत्सिद्धे। न च यलोपेऽल्लोपस्य स्थानिवत्त्वं शङ्क्यम्। नपदान्तेति निषेधात्। न चैवमल्लोपस्य स्थानिवत्वादुवङ् स्यादिति वाच्यम्। सति स्थानिवत्त्वे अकारान्तस्यैव धातुतेति पूर्वदले उवङोप्राप्तेः। तर्हि यण् स्यादिति चेत्। अस्तु. तस्य ऊठ् करिष्यते। न च ऊठि कर्तव्ये अल्लोपस्य स्थानिवत्त्वेन क्विप्परत्वं नास्तीति वाच्यम्। वकारस्य आदिष्टादचः पूर्वत्वात्। ननु स्थानिद्वारकमनादिष्टादच पूर्वत्वमस्त्येव। 'न च तस्याशास्त्रीयत्वान्नातिदेश इति माधवोक्तं युक्तम्। अनादिष्टादचः पूर्वत्वमाश्रित्य कर्तव्यस्य अचःपरस्मिन्नित्यतिदेशस्य शास्त्रीयतया स्थानिवत्सूत्रेण अतिदेशातिदेशस्य दुर्वारत्वात्। अन्यथा नपदान्तेति सूत्रे सवर्णग्रहणस्य वैयर्थ्यापत्तेरिति चेन्न। स्थानिद्वारकस्य अनादिष्टादच पूर्वत्वस्य असार्वत्रिकतायाः प्रागेव निर्णीतत्वात्। अत एव ऊठि कृते पुनरुवङ् न। यद्वा क्वौ लुप्तं न स्थानिवदिति निषेधादयणेव मास्तु। नन्वेवमपि कण्ड्वावित्यादौ संयोगपूर्वकत्वेन ओःसुपीत्यस्याप्रवृत्तौ उवङ् स्यादिति चेत्। अस्तु, क्विपः प्रत्ययलक्षणेनोठ करिष्यामः। तत्स्मा प्रातिपदिकान्येवैतानि दीर्घकित्वे च निष्फले इति चेत्।

मैत्रम् । उवङो बहिरङ्गत्वेनासिद्धतया ऊठो दुर्बलत्वात् । किञ्चोक्तरीत्या हि कण्डूरितिवत् मन्तूरित्यादि स्यात् । मन्तरित्यादि च न सिध्येत् । अथ धातोःकर्मण इत्यतो वाग्रहणमनुवर्तेत तर्हि यद्यपि मन्तुरित्यादि हूस्वं सिद्धं तथापि कण्डूरितिवद्लोपयलोपाभ्यां मन्तूरित्यपि स्यात् । तथा यगनुत्पत्तिपक्षे मन्तुरित्यादिवत् कण्डुरित्यपि स्यात् । किञ्च सुखादिभ्यो यक्प्रत्यये तस्य अनार्द्धधातुकत्वादतोलोपाभावे अकृत्सार्वेति दीर्घे सुखायतीत्यादि स्यात् । सुख्यतीत्यादि चेष्यते । अथ हलन्तमेव पठ्येत, तर्हि सुखं दुःखमित्यकारान्तं न सिध्येत् । तस्माद्यथान्यासमेव मनोरमम् । नन्वेवमपि प्रातिपदिकैः कण्ड्वौमन्तुरित्यादि यद्यपि सिद्धं तथापि यगन्तेभ्यः क्वौ अनिष्टं स्यादेव । तद्यथा । कण्डूयतेः कण्डुर्वौ कण्डुवः । मन्तूयतेः मन्तू । सुखादे सुगित्यादि हलन्तम् । नैष दोषः । यगन्तेभ्यः क्विप एवानुत्पत्तेः । उक्तं हि भाष्ये । । नैतेभ्य क्विप् दृश्यतइति । कथन्तर्हि कण्डूयतेरप्रत्ययः कण्डूरिति नपदान्तसूत्रे उक्तमिति चेत् । क्यजन्तात्क्विपास्त्वेहि । तत्र च कण्डुनावित्युवाङिष्ट एव । एवं प्रातिपदिकादाचारक्विबन्तात्क्यङन्ताद्वा क्विप्यपि बोध्यम् । स्यादेतत् । कण्ड्वादयः प्रातिपदिकान्येव यथान्यासं दीर्घाश्च सन्तु । ककारस्तु त्वङ्गतां वाग्रहणञ्चानुवर्त्यताम् । यगन्तात्क्विपोनभिधानञ्च आवयो स्तुल्य तत्किं कण्ड्वादीनां धातुत्वेनेति चेत्, उक्तरीत्या सुख्यतीत्याद्यसिद्धेः, प्रातिपदिकात्प्रत्यये तस्यानार्द्धधातुकत्वेन सुखायतीति स्यादिति हि स्पष्ट एव दोष । यत्तु कौमुद्याम् । कृञर्थे यक् स्यात् । धातवः प्रातिपदिकानि चेति कण्ड्वादयो द्विविधाः । कण्डूं करोति कण्डूयते । नामधातुत्वाद्यथेष्टं द्वित्वे प्राप्ते कण्ड्वादेस्तृतीयस्य इत्युक्तं तदेत-

त्सर्वमाकरविरुद्धमनेकदोषग्रस्तञ्च । तथाहि । कृञर्थइति व्याख्यानेन करणे इत्यस्यानुवृत्तिर्लभ्यते तच्च व्यर्थं धात्वर्थमात्रस्यानुवृत्तिं विनापि लाभात् । ततोतिरिक्तस्य चानन्वयात् । एवञ्च कण्डूं करोतीति विग्रहप्रदर्शनमप्ययुक्तम् । नामधातुत्वादिति च सुतरामशुद्धम् । धात्वधिकाराद्धातुभ्य एव यगिति सिद्धान्तात् । अथ प्रातिपदिकादेव यकमभ्युपैषि तर्हि लङादौ कण्डवतीत्यादि स्यात् । अथ प्रातिपदिकान्येव कण्ड्वादीनीत्यभिप्रैषि तर्हि सुख्यतीत्यादि न सिध्येत् । द्विविधाः कण्ड्वादय इति स्वोक्तिविरोधश्च । आकरविरोधस्तु स्पष्ट एवेत्यास्तां तावत् । मान्यास्तु अनेकदोषदुष्टमपीम प्रक्रियाप्रघट्टकं कथञ्चित्समर्थयन्ते । तद्यथा । प्रातिपदिकान्येव कण्ड्वादय तेभ्यश्च वैकल्पिको यक् इति पक्षेणायं ग्रन्थ । अत एवोक्तं कृञर्थे इति विगृहीतञ्च कण्डूं करोतीति च । नहि धातुभ्यो यकि प्रातिपदिकेभ्यो वा नित्ये यकि अयं विग्रहः सम्भवति । एवञ्च नामधातुत्वादित्याद्यपि सम्यगेव । कथन्तर्हि द्वैविध्यमुक्तमिति चेत् । यगन्ताः सन्तो धातवः । केवलास्तु प्रातिपदिकानीत्याशयात् । यद्वा यगन्तधात्ववयवेषु तेषु धातुशब्दो गौण । प्रत्ययसदसत्त्वाभ्याम् अवस्थाभेदाद् द्वैविध्यम् । न चैव सुख्यतीत्यादौ अतोलोपो न स्यादिति वाच्यम् । यकः कित्त्वेन आर्धधातुकत्वाल्लाघवाच्चार्धधातुकत्वस्यैव ज्ञापनात् । अत एव द्विविधा इत्येवोक्तं न तु धातुभ्यएव यगिति । तदिदं भाष्यादिविरुद्धमपि लक्ष्ये विसंवादाभावादस्तु कथञ्चित् । अथोदाहरणानि । कण्डूञ् गात्रविघर्षणे । अवयवे कृतं लिङ्गं समुदायं विशिनष्टि । एवमग्रेपि । कण्डूयति । कण्डूयते । मन्तु अपराधे । रोषइत्येके । मन्तूयति । चन्द्रस्तु ञितं पठित्वा मन्तूयते इत्य-

प्याह। वल्गु पूजामाधुर्ययोः। वल्गूयति। तद्वल्गुना युगपदुन्मिषितेन। असु उपतापे। असूयति। असूयुः। मृगय्वादयश्चेत्युप्रत्यय इति माधवः। एतेन सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयव इति भट्टिप्रयोगो व्याख्यातः। केचित्तु असू असूञ् इति पठित्वा आद्यस्य सान्तस्य अस्यति, द्वितीयस्य दीर्घान्तस्य असूयति असूयते इत्याहुः। लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने च। लेट्यति। लोट्यति। लेटिता लोटिता। अल्लोपयलोपौ। केचित् लेट्लोटौ दीप्त्यर्थावाहुरिति माधवः। पूर्वभाव· पूर्वत्वम्। अत्र केचित् पूर्वशब्दं प्रकृतिनिर्देशार्थमाश्रित्य पूर्व्यतीत्युदाहरन्ति। तथा चान्तःकरणवृत्तिवर्गे भट्टमल्लेनोक्तम्। शेते द्रायति निद्राति सस्ति स्वपिति पूर्व्यति। निद्रायते संविशति निद्रायां संस्ति मन्दते इति॥ अस्यार्थो धातुचन्द्रोदये उक्तः। शेतेप्रभृतीनि दशाख्यातानि निद्रायाम्। पस स्वप्ने अदादिः। पसि शयनइत्येके पेठुरिति तत्रैव क्षीरस्वामी। पूर्व्यतीति कण्ड्वादियगन्त इत्यादि। तथा देवेनाप्युक्तम्। पूर्व्यतीति तु यस्स्वप्ने तत् कण्ड्वादिषु दर्शनादिति। एतच्च अमोघायां शाकटायनधातुवृत्तौ अर्थनिर्देशरहिते गणपाठे पूर्वस्य पाठाभावादयुक्तमिति पुरुषकारैरेव दूषितम्। युक्तञ्चैतत्। जयादित्येनापि लेट्लोट् इत्येव पाठात्। हरदत्तेन च धौर्त्ये पूर्वभावे स्वप्ने चेति तद्विवरणात्। एतेन बुद्धिवर्गे मनसागोचरीकारे मनस्वित्वे मनस्यतीति भट्टमल्लोक्तिरपि प्रत्युक्ता। न्यायसाम्यात्। जयादित्येन हि असु इत्येव निर्दिष्टम्। हरदत्तेन तु अथ कण्ड्वादीनामर्थनिर्देश इत्युपक्रम्य कण्ड्वादीन् विवृण्वता असु इति प्रतीकमुपादाय मानसउपतापे इति विवृतम्। अत एव असु मनस उपतापइति पठतामपि मनस इति षष्ठ्यन्तमुपतापविशेषणम्। न तु प्रकृतिनिर्देशः। वृत्तिपद

मञ्जर्यादिविरोधात् । धातुचन्द्रोदयकारस्य तु मनस्यतीति कण्ड्वादियगन्तमिति भूयसा ग्रन्थसन्दर्भेण व्याचक्षाणस्यापि तत्रापरितोषोस्त्येव । अत एव मनस्यते इति पाठमाश्रित्य मनःशब्दाद्वृत्तिविषये तद्वतिवर्तमानात् क्यङन्तोक्त्वा इद शोभेततरामित्युपसञ्जहार । लेला दीप्तौ । ध्यायतीव लेलायतीवेति श्रुतिः । इरस् इरज् इरञ् ईर्ष्यायाम् । इरस्यति । इरज्यति । ईर्यति । ईर्यते । हलिचेति दीर्घः । एषां त्रयाणां यथायथमन्येप्यर्थाः सन्ति । तथाहि । इरज्यन्नग्ने प्रथयस्वजन्तुभिरिति मन्त्रे दीप्त्यर्थोयमिति भट्टभास्करादयः । इरज्यन्तावसव्यस्य भूरेरितिमन्त्रऐश्वर्यार्थ इति । ईर्यतिर्गतिस्थानेपि । उक्तञ्चामरेण चर्यात्वीर्यापथिस्थितिरिति । इयस् ऐश्वर्यइति गणरत्नमहोदधौ । इयस्यति । उपस् प्रभातीभावे । उपस्यति रात्रिः । वेद धौर्त्ये स्वप्ने च । वेद्यति । मेधा आशुग्रहणे । मेधायति । कुषुभ क्षेपे । कुषुभ्यति । मगध परिवेष्टने । नीच दास्यइत्यन्ये । मगध्यति । तन्तस् पम्पस् दुःखे । तन्तस्यति । पम्पस्यति । सुख दुःख तत्क्रियायाम् । तच्छब्देन सुखदुःखार्थौ । सुखदुःखरूपायां क्रियायामित्यर्थः । सुख्यति । दुःख्यति । सुख दुःख चानुभवतीत्यर्थ । सपर पूजायाम् । अकारान्तोयं महोदधौ । सपर्यति । अरर आराकर्मणि । आरा प्रतोदः । अर्यति । भिषज चिकित्सायाम् । भिषज्यति । भिष्णज उपसेवायाम् । भिष्णज्यति । सारस्वती त्वा मघवन्न भिष्णक् । छान्दसो लुक् । इषुध शरधारणे । इषुध्यति । चरण वरण गतौ । चरण्यति । वरण्यति । चुरण चौर्ये । चुरण्यति । तुरण त्वरायाम् । तुरण्यति । भुरण धारणपोषणयोः । रणधारणयोरित्यन्ये । भुरण्यति । गद्गद वाक्स्खलने । गद्गद्यति । एला केला खेला विलासे । ए-

लायति । केलायति । खेलायति । एला स्थानइलेत्यपरे । इलायति । लेखा स्खलने च । लेखायति । अकारान्तोयमित्यन्ये । तत्रातोलोप: । लेखयति । लिट अल्पकुत्सनयोः । लिटयति । लाट जीवने । लाटयति । हृणीङ् रोषणे लज्जायाञ्च । कथं न पत्या धरणी हृणीयतइति श्रीहर्षः । महीङ् पूजायाम् । अत्र पूजा पूज्यमानकर्तृका तेनायमकर्मकः । महीयते । पूजामधिगच्छतीत्यर्थः । मातापितरौ चास्य स्वर्गे लोके महीयेते इति भाष्यम् । रेखा श्लाघासादनयोः । आसादनं प्राप्ति प्रापणं वा । रेखायति । श्लाघामनुभवत्यनुभावयति वेत्यर्थः । द्रवस् परितापपरिचरणयोः । द्रवस्यति । तिरस् अन्तर्धौ । तिरस्यति । अगद नीरोगत्वे । अगद्यति । उरस् बलार्थः । उरस्यति, बलवान् भवतीत्यर्थ. । तरण गतौ । तरण्यति । पयस् प्रसृतौ । पयस्यति । सम्भूयस् प्रभूतभावे । सम्भूयस्यति । अम्बर संवर सम्भरणे । अम्बर्यति संवर्यति । गणरत्नमहोदधौ आकृतिगणत्वात् रैथवलादिभ्यो यकि रायति धवलयतीत्याद्युक्तम् । कण्ड्वादीनां तृतीयस्य द्वे इति वक्ष्यते । तेन सनि कण्डूयियिषतीत्यादि ॥

गुपूधूपविच्छिपणिपनिभ्य आय ॥ एभ्य आयप्रत्ययः स्यात् स्वार्थे । गुपू रक्षणे । गोपायति । धूप सन्तापे । धूपायति । विच्छ गतौ । विच्छायति । विच्छेस्तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि शो न तु शप् । तेन विच्छायन्ती विच्छायन्तीति । आच्छीति नुम्विकल्प: । अन्ये तु तुदादिपाठसामर्थ्यात्सार्वधातुकेप्यस्य आयप्रत्ययो वैकल्पिक इत्याहु । पण व्यवहारे स्तुतौ च । पन च । पणपनेति पठनीये पनचेति पृथक्पाठसामर्थ्यात् स्तुतावेवाय, न्तत्साहचर्यात्पणेरपि स्तुतावेवायप्रत्ययः । अनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदम् । प

णायति । पनायति । स्तौतीत्यर्थः । व्यवहारे तु शतस्य पणते इति जयादित्यादयः । अन्ये तु व्यवहारार्थादप्यायमिच्छन्ति । तथा च भट्टिः । न चोपलेभे वणिजां पणायामिति । अस्मिन्नपि पक्षे पणिष्यते पणायिष्यतीत्यादौ अनुबन्धः केवले चरितार्थ एव । अत एव पनेरपि आयप्रत्यये परस्मैपदमेव ॥

ऋतेरीयङ् ॥ ऋतिः सौत्रः तस्मादीयङ् स्यात् । ऋतीयते । ईयङो ङित्त्वस्य गुणनिषेधेन चरितार्थत्वेपि धातोर्ङिदन्तत्वाद्यङन्तादिवात्मनेमदम् । यथा चैतत्तथा अनुदात्तङित इति सूत्र एवावोचाम ॥ ऋतेश्छङिति सिद्धे ईयङ्वचनं धातुप्रत्ययानामायन्नादयो नेति ज्ञापनार्थम् । तेन शमेः ख. शङ्ख इत्यादि सिध्यतीति वृत्तिकारादयः । हरदत्तस्तु द्विवचनविभज्योपपदेतरपृछसुनाविति वक्तव्ये ईयसुन्वचनमधातुप्रत्ययेष्वपि आयन्नाद्यभावं ज्ञापयेदिति प्रतिवन्दिनमाह । तत्र ईयसुन्वचनं प्रक्रियालाघवार्थमेव न तु ज्ञापनार्थम् । आयन्नादीनां निर्विषयतापत्तेः । न च विनिगमनाविरह । ण्यक्षत्रियेत्यादिसौत्रनिर्देशानामेव विनिगमकत्वादिति समाधानं बोध्यम् । ऋतिः सौत्रो घृणायां वर्त्तत इति वृत्तिः । यद्यपि घृणाशब्दो नानार्थ. । घृणा जुगुप्साकृपयोरितिवचनात् । तथापीह जुगुप्सार्थ एव । ऋतीयाशब्दस्य बीभत्सापर्यायतया निघण्टुषु पाठादिति हरदत्तादयः । भट्टमल्लस्तु आख्यातचन्द्रिकायां तृतीयकाण्डे नानार्थवर्गे ऋतीयते स्याद् घृणयोरिति पठन् नानार्थतामियेष । अर्तनं च ऋतीया च स्त्णीया च घृणार्थका इति वदन्नमरोप्यत्रानुकूलः । यदि हि जुगुप्सामात्रार्थत्वमिच्छेत्तर्हि स्तृणीया च जुगुप्सने इत्येव स्पष्टं पठेत् । नानार्थे घृणाशब्दं प्रयुंजानस्तु ऋतेरपि तथात्वमभिमैतीति पदचन्द्रिकाव्याख्याने धातुचन्द्रोदये कृष्णप्रबोधः । आर्धधातुकाविवक्षायान्तु

ईयङ्भावपक्षे शेषत्वात्परस्मैपदमेव । आनर्त । अर्तितासि । अर्तिष्यति । आर्तीत् । आर्तिष्यत् । अत्रात्मनेपदं समुदाहरन् प्रसादकारस्तु भ्रान्त एव ॥

कमेर्णिङ् ॥ स्वार्थे । कामयते । नन्विह अतउपधाया इति वृद्धेः क्ङितिचेतिनिषेधः प्राप्नोति । न च णित्वसामर्थ्याद्वृद्धिः । णेरनिटीतिविशेषणेन चरितार्थत्वात् । न च ङकारोप्यात्मनेपदेन चरितार्थ इति वाच्यम् । तावता प्रतिषेधस्य बलीयस्त्वानपायात् । न च कमेर्मित्संज्ञाप्रतिषेधार्थेन कम्यमिचमामितिवचनं वृद्ध्यभावे व्यर्थं सत् वृद्धिमिह ज्ञापयतीति वाच्यम् । णिङन्तादिचण्णमुलोः कृतयोः चिण्णमुलोर्दीर्घोन्यतरस्यामिति वैकल्पिके दीर्घे प्राप्तेतन्निवृत्त्या मित्त्वप्रतिषेधस्य सार्थक्यात् । न च तत्र दीर्घग्रहणं परित्यज्य प्रकृतो ह्रस्व एव विकल्प्यताम् । तथा च कमेर्मित्संज्ञाप्रतिषेधोपि मास्त्विति वाच्यम् । णिजन्ताद्यङन्ताद्वा णिचि सति ततश्चिण्णमुलोः अशमि अशामि शमं शमं शामं शामम् अशंशमि अशंशामि, शंशमं शंशमं शंशामं शंशाममिति रूपद्वयस्य दीर्घग्रहणं विना अनिर्वाहात् । दीर्घविधिम्प्रति हि णियङोर्लोपस्य न स्थानिवत्त्वं नपदान्तेति निषेधात् । ह्रस्वविधिम्प्रति तु स्थानिवत्त्वे सति चिण्णमुलपरस्य णिचः णियङ्भ्यां व्यवधाने ह्रस्वविकल्पो न प्रवर्तेत । यथाश्रुतसूत्ररीत्या चेदम् । पूर्वत्रासिद्धीयेनेत्युक्त्वा सवर्णानुस्वारादिग्रहणं न कर्तव्यमिति पक्षे तु णिजन्ताण्णाचि ण्याकृतेरैक्यात् सिद्धम् । शंशामं शंशाममिति तु यङ्लुगन्ताण्णमुलिति नपदान्तसूत्रएवावोचाम । अस्मिन्निष्कृष्टपक्षेपि चिण्णमुलोरितिसूत्रे दीर्घग्रहणं कर्तव्यमेव । तथाहि । हेड् अनादरे घटादिः । एच इक् । हिडयति । अत्र चिण्णमुलोः कृतयोः ह्रस्वे विकल्प्यमाने आहिडि अहेडीति स्यात् ।

दीर्घे तु अहिडि अहीडि इति भवति । एवञ्च कमेरपि चिण्णमुलोः दीर्घविकल्पे प्राप्ते तद्व्यावृत्त्या कृतार्थो मित्वनिषेधो वृद्धिं ज्ञापयितुं नालम् । किञ्च आयादयआर्द्धधातुकेवेति णिङभावे णिचि कृते वृद्धौ सत्यां मितांह्रस्वइति ह्रस्वं वारयितुं मित्संज्ञाप्रतिषेधः, सर्वथा ऽपि नायं वृद्धेर्ज्ञापकः । तस्मात् क्ङितिचेति निषेधं वारयितु कश्चिदुपायो वक्तव्य इति चेत् । सत्यम् । उक्त एवासौ तद्धितकाम्योरिक्प्रकरणादिति ॥

आयादय आर्धधातुके वा ॥ आर्द्धधातुकविवक्षायामायादयो वा स्यु । जुगोप । गोपायाञ्चकार । आनर्त । ऋतीयाञ्चक्रे । कामयाञ्चक्रे । चकमे । इहार्द्धधातुकइति यदि परसप्तमी स्यात् तदा प्रवृत्ता आयादय आर्द्धधातुके परे पक्षे निवर्तन्तइत्यर्थ स्यात् । तत्र बहवो दोषाः । तथाहि । आयप्रत्ययान्तात् स्त्रीभावविवक्षायामप्रत्ययादित्यकारप्रत्यये कृते आयनिवृत्तिपक्षे गोपेत्यानिष्टं स्यात् । गुप्तिरिति चेष्टं न सिध्येत् । तथा ऋतीयशब्दाल्लिटि प्रत्ययान्तत्वेनामि ईयप्रत्ययस्य निवृत्तौ ऋताञ्चकारेति स्यात्, आनर्तेति च न स्यात् । तथा आर्तितासि । अर्तिष्यति । ऋत्यात् । आर्तीदित्यादौ परस्मैपदं न स्यात् । तथा तास्यादेरार्द्धधातुकस्य ईयङ्निवृत्तिं प्रति निमित्तत्वेन नधातुलोपइति निषेधात् तन्निमित्तो गुणो न स्यात् । अथोच्येत नानेन निवृत्तिर्विकल्प्यते किन्तु प्रवृत्तिरेवेति । तत्रापि आयादिविधिभिः सहास्यैकवाक्यता भिन्नवाक्यता वा । आद्ये गुपादिभ्य आर्द्धधातुके परे आयो वेत्यर्थ स्यात् । एवमुत्तरत्रापि । ततश्च आर्द्धधातुकएव विकल्पेनायादयः सार्वधातुके तु नैव स्युः । अथोच्येत गुपादिसूत्रएव आर्धधातुकेवेति वक्तव्ये आयादयइति न कर्तव्यमिति लाघवे स्पष्टे सति गौरवं सोढा । आयादयआ

र्धधातुकेवेति पृथक्सूत्रकरणसामर्थ्यात् व्यापारभेदेनैकवाक्यता।
ततश्चायमर्थः। गुपादिभ्य आयादयो नित्यं भवन्तीत्युत्सर्गः।
आर्द्धधातुके परे तु वा भवन्तीति। एवञ्च विकरणवत् प्रत्य-
ये परे आयादयः प्रवर्तेरन्। ततश्च गुपेः क्तिनि आयपक्षे
अल्लोपयलोपयोः गोपातिरित्यनिष्टं स्यात्। गोपायेति चेष्टं न
सिध्येत्। तस्माद्दृष्ट एवात्र परसप्तमीपक्षः॥

सनाद्यन्ता धातवः॥ सनादयो णिङन्ताः प्रत्यया अन्ता-
श्चरमावयवा येषान्ते संघाता धातुसंज्ञाः स्युः। जुगुप्सते। का-
मयते। सुप्तिङन्तमित्यत्र अन्तग्रहणेन संज्ञाविधौ प्रत्ययग्रहणे
प्रत्ययग्रहणपरिभाषा न प्रवर्त्ततइति तत्प्रतिप्रसवार्थमिहान्तग्रहणं
न त्वयमपूर्वविधिः। गौरवात्। देवदत्तश्चिकीर्षतीत्यादौ देवद-
त्तादेः समुदायस्य संज्ञाप्रसङ्गाच्च। प्रतिप्रसवे तु लाघव उक्तदो-
षाभावश्चेति स्पष्टमेव। भूवादय इत्यस्यानन्तरमेव सनाद्यन्ता
श्चेति न सूत्रितं सनादीनामियत्तानवगमात्। णिङो ङकारेण
प्रत्याहारमाश्रित्य सङन्ताश्चेति कुतो न सूत्रितमिति चेत् -
चङादिष्वपि ङकारसत्वेन सन्देहापत्ते। इहैव सनाद्यन्ता इत्य-
स्यानन्तरं भूवादयश्चेति सूत्रयितुमुचितं तथा न कृतमित्येव।
एतत्सूत्रं भाष्ये प्रत्याख्यातम्। तथाहि। जहत्स्वार्थायांवृत्तौ चि-
कीर्षजिहीर्षेत्यादिसङ्घाता एवार्थवन्तः तदवयवा अनर्थकाः। स-
र्वे सर्वपदादेशा इत्यत्र च अर्थवत्त्वेव स्थान्यादेशभावविश्रान्तेः।
एरुरित्यादौ तेस्तुरिति पर्यवस्यतीत्युक्तम्। एवञ्चेहापि करण-
विशिष्टेच्छार्थस्येषः प्रसङ्गे चिकीर्षशब्दः तथा हरणविशिष्टेच्छार्थ-
वृत्ते प्रसङ्गे जिहीर्षशब्दः गुपेः प्रसङ्गे गोपायशब्दः पुत्रवि-
शिष्टेच्छावृत्तेरिषेः प्रसङ्गे पुत्रीयशब्द इत्यादि पर्यवसाने स्थानिव-
द्भावेन सिद्धं धातुत्वम्। जगृध्यादिवत्। पचत्वित्यत्र तोस्तिव-

दीर्घे तु अहिडि अहीडि इति भवति
मुलोः दीर्घविकल्पे प्राप्ते तद्व्यावृत्त्या
ज्ञापयितुं नालम् । किञ्च आयादय
णिचि कृते वृद्धौ सत्यां मितांहृस्वइ
प्रतिषेधः, सर्वथा ऽपि नायं वृद्धेर्ज्ञाप
निषेधं वारयितु कश्चिदुपायो वक्तव्य
एवासौ तद्धितकाम्योरिक्प्रकरणादि

आयादय आर्धधातुके वा ॥ अ
यो वा स्यु । जुगोप । गोपायाञ्चका
क्रे । कामयाञ्चक्रे । चकमे । इहार्द्धध
स्यात् तदा प्रवृत्ता आयादय आर्द्धध
त्यर्थं स्यात् । तत्र बहवो दोषाः । ह
स्त्रीभावविवक्षायामप्रत्ययादित्यकारप्र
गोपेत्यनिष्टं स्यात् । गुप्तिरिति चेष्टं
शब्दाल्लिटि प्रत्ययान्तत्वेनामि ईयप्र
कारेति स्यात्, आनर्तेति च न स्या
तिष्यति । ऋत्यात् । आर्तीदित्यादौ
तास्यादेरार्द्धधातुकस्य ईयङ्निवृत्ति
पद्यते निषेधात् तन्निमित्तो गुणो न
निवृत्तिर्विकल्प्यते किन्तु प्रवृत्तिरे
सहार्थैर्वाक्यता भिन्नवाक्यता
धातुके परे आयो वेत्यर्थ स्य
आर्द्धधातुकएव विकल्पेनायाद
अथोच्येत गुपादिसूत्रएव आर्ध
न कर्तव्यमिति लाघवे स्पष्टे सां

[redacted]

ग्रहणस्य तासिव्यावृत्त्या कृतार्थत्वेन धातूपदेशावस्थायामेव नुम् भवतीत्ययमर्थो न साधितः स्यादिति वाच्यम्। नुम्विधावुपदेशिवद्वचनं प्रत्ययसिध्यर्थमिति वचनस्यैव शरणीकरणात् धिन्विकृण्व्योरिति सनुम्कनिर्देशाज् ज्ञापकाद्वा। वामनस्तु तासेरिकार उच्चारणार्थ इत्याशयेन इदितोनुम्धातोरिति धातुग्रहणं धातूपदेशावस्थायामेव नुम् यथा स्यादित्येवमर्थं मन्यते। तन्मते मन्ता हन्तेत्यत्र टिलोपस्यासिद्धत्वान्नलोपो नेति बोध्यम्। इदमिदानीं विचार्यते। लकारं निमित्तत्वेनाश्रित्य विधीयमानाः स्यादयो विकरणाः किं लावस्थायामेव स्युः, उत लादेशेषु कृतेष्विति। आद्ये पक्षे लावस्थायान्तासौ कृते तस्य प्रत्ययाद्युदात्तत्वे कृते लादेशाः स्युः ततश्च तेषां स्वरः सतिशिष्टः। ततश्च तासेः परस्य लसार्वधातुकस्यानुदात्तवचनमप्राप्तविधिरेव स्यात्। एवञ्च सतिशिष्टेपि विकरणस्वरो लसार्वधातुकस्वरं न बाधतइत्यस्यार्थस्य ज्ञापकमेतदिति प्राचः सिद्धान्तो भज्येत। ततश्च या दम्पती समनसा सुनुतइत्यत्र सतिशिष्टस्य विकरणस्वरस्य बलीयस्त्वापत्तौ मध्योदात्तं तिङन्तं स्यादिष्यते त्वन्तोदात्तम्। एवं प्रीणीताश्वान्, हिन्वन्ति सूरमित्यादिष्वपि स्पष्टो दोष। द्वितीये तु पक्षे तासिस्वरः सतिशिष्ट इति शेषनिघातेनैव लसार्वधातुकानुदात्तत्वे सिद्धे तासिग्रहण ज्ञापकमिति सिध्यति। किन्तु गमिष्यति पठिष्यतीत्यादि न सिद्ध्यति। तथाहि। सार्वधातुके यगुत्सर्गः तस्यापवादाः शबादयः स्यादयश्च। तत्र शबादीनामवकाशः गच्छति पठति। स्यादीनान्तु गंस्यते पठिष्यतइति। गमिष्यति पठिष्यतीत्यत्रोभयप्रसङ्गे परत्वाच्छप् प्राप्नोति। अथोच्येत। यकः शबादीनाञ्च नोत्सर्गापवादभाव। विविक्तविषयत्वात्। यग्विधौ हि भावकर्मग्रहणमनुवर्त्तते तच्चावश्यमनुवर्त्यम्। पचति पठती-

स्यादौ शपि परे यङ् मा भूदिति। एवमपि गमिष्यति पठिष्यतीत्यादि सिध्यतु नाम। यक्शपोरुत्सर्गयोः स्यादिभिरपवादैर्बाधसम्भवात्। किन्तु देविष्यति सेविष्यतीत्यादि न सिध्येदेव। तथाहि। विकरणानां यक्शपावुत्सर्गौ। तदपवादाः श्यनादयः स्यादयश्च। श्यनादीनामवकाशः दीव्यति सीव्यति। स्यादीनान्तु पक्ष्यते। देविष्यति सेविष्यतीत्यत्रोभयप्रसङ्गे परत्वात् श्यनादयः स्युरिति। अत्र बहुधा समाहितं भाष्ये। तथाहि। शबादेशा श्यनादयः करिष्यन्ते। दिवादिभ्य इति पञ्चम्या अनुवृत्तायाः कर्त्तरि शबिति प्रथमायाः षष्ठीप्रकल्पनात्। एवञ्च दिवादिभ्यः स्यादिविषये शबेव नास्ति स्यादिभिरपवादैर्बाधात्। तदादेशाः श्यन्नादयस्तु दूरापास्ता एव। अथ वा दिवादिभ्यः श्यन्नित्यादिषु स्यादयोऽनुवर्तिष्यन्ते। दिवादिभ्यः श्यन् भवति लृलुटोस्तु स्यतासी भवतः। दिवादिभ्य इत्येव। एवमग्रेपि। एतेन लावस्थायामेव प्राप्नुवन्तः स्यादयः सार्वधातुकोत्पत्तिं किमर्थं प्रतीक्षन्ताम्। ततश्च कथं तासेर्लसार्वधातुकानुदात्तवचनस्य उक्तार्थज्ञापकत्वं सङ्गच्छतामिति दूषणं प्रत्युक्तम्। सार्वधातुकेयगित्यादौ अनुवृत्तिबलादेव सार्वधातुकोत्पत्तेः प्रतीक्षणीयत्वात्। अथ वा श्यनादयः शबादेशा मा भूवन् मा चानुवर्त्तन्तामुत्तरन् स्यादयः। किन्तु देविष्यतीत्यादौ स्यादीन् बाधित्वा परत्वात्तावल्लादेशाः। न चानित्यास्ते. आतृतीयाध्यायसमाप्तेर्धात्वधिकारात् स्यादिभिर्व्यवधाने धातोः परस्य लस्याभावेन आदेशाप्राप्तेरिति वाच्यम्। धातोर्विहितस्य लस्येति विहितविशेषणाश्रयणेन लादेशानां नित्यत्वात्। एवञ्च कृतेषु लादेशेषु उभये प्रसक्ताः स्यादयः श्यनादयश्च तत्रान्तरङ्गत्वात्स्यादय एव भविष्यन्ति न तु श्यन्नादयः। सार्वधातुकत्वं कर्त्तरीत्यर्थवि-

शेपञ्च अपेक्षमाणानान्तेषां वहिरङ्गत्वात् ॥

सिब्बहुलं लेटि ॥ धातोः सिप्प्रत्ययो बहुलं स्यात् लेटि परे। जोषिषत्। जुषी प्रीतिसेवनयोः। अनुदात्तेत्। व्यत्ययेन परस्मैपदम्। सिप इट् लेटोडाटाविति तिपोट्। इतश्चलोपं इतीकारलोपः। बहुलग्रहणान्नेह। पताति दिद्युत्। सिब्बहुलञ्छन्दसि णिद्वक्तव्यः॥ प्रणआयूषितारिषत्। अयामीवांसवितासाविषत्। णित्त्वाद्वृद्धिः। देवस्यहेलोवयासिसीष्ठाः। इह यातेरवपूर्वाल्लिङ्। बहुलवचनात्। सिप् थास् सीयुट्सुट् इट्। एकाचउपदेशेनुदात्तादिति निषेधस्तु न भवति। सिपा व्यवधानात्। सीयुटः सस्य षत्वाभावश्छान्दसः। तिङ्ङतिङ इति निघातः। यच्छन्दयोगे तु यासिसीष्ठा इति पदमाद्युदात्तमेवेष्यते। यद्यपि प्रत्ययस्वरेण थास उदात्तत्वादन्तोदात्तं पदम्प्राप्तं तथापि सूत्रभङ्गेन सिपन्त्यक्त्वा सवयं कर्तव्य इति भाष्योक्ते। सपि कृते अनुपदेशात् परत्वेन छन्दस्युभयथेति सार्वधातुकत्वेन च लसार्वधातुकानुदात्तत्वादिष्टसिद्धिः। सपः पित्त्वाभावे उदात्तनिवृत्तिस्वरेण इट उदात्तत्वं स्यात्। तस्मादिह सप पित्त्वादन्तत्वे स्वरार्थं इति स्थितम्। यथाश्रुतसूत्ररीत्या तु पित्त्वं व्यर्थमेव। तथा च वार्तिकं, पित्करणानर्थक्यं चानच्कत्वात्। इटोनुदात्तार्थमिति चेत्। आगमानुदात्तत्वात्सिद्धमिति ॥

कास्प्रत्ययादाममन्त्रे लिटि ॥ कास्धातोः प्रत्ययान्तेभ्यश्च आम् स्याल्लिटि न तु मन्त्रे। कासृ शब्दकुत्सायाम्। कासाञ्चक्रे। लोलूयाञ्चक्रे। अमन्त्रे किम्। कृष्णो नोनाव। अच्छन्दसीति तु नोक्तं ब्राह्मणे इष्टत्वात्। पुत्रमामन्त्रयामास। अथेह शुनःशेप ईक्षाञ्चक्रे इत्यादि। कास्यनेकाच इति वक्तव्यम्, चुलुम्पाद्यर्थम्। चुलुम्पाञ्चकार। चुलुम्पतिर्वार्तिककारवचनबलात्साधुः। इहाव्याप्त्य-

तिङ्याप्तिपरिहाराय प्रत्ययग्रहणमपनीय तत्स्थाने अनेकाज्ग्रहणं कर्तव्यमिति प्रागेव व्याख्यातम् । चकासाञ्चकार । दरिद्राञ्चकार । आतऔणल इत्यत्र ओकारे विधातव्ये औकारविधानं दरिद्रातेरार्धधातुके लोप इत्याकारस्य लोपेपि औकारस्य श्रवणार्थम् । तेन ददरिद्रावित्यपि भवतीत्याहुः । उर्णोतेस्तु न भवति । नुवद्भावातिदेशात् । न चैवमपीजादेरित्युत्तरसूत्रेणानेकाच्त्वनिरपेक्ष आम् स्यादेवेति वाच्यम् । आमश्च प्रतिषेधार्थमिति नुवद्भावफलेषु पाठसामर्थ्यात्तस्या अप्यप्रवृत्तेः । भाष्यकारेण संहितया सूत्रपाठमाश्रित्यानृच्छोदयायास इत्यत्र अनृच्छ उ इत्युकारप्रश्लेषेण. उकारान्तस्याम्निषेधाच्च । नन्वेवमुशब्दादाचारक्विपि इजादेरित्याम् पूर्वोदाहृते माधवादिसम्मतश्चानेन भाष्येण विरुध्येतेति चेन्न । प्रथमपक्षेण तत्सम्भवात् । द्वितीयपक्षे तु मा भूदाम् । यथालक्षणमप्रयुक्तइत्यभ्युपगमात् । यद्वा । उश्चासौ उश्चेति प्रश्लिष्टनिर्देशेन उदन्तस्यैव गुरुमतः पर्युदासः । स च इजादेरिति सूत्रस्यैव शेषः । तेन वल्गुफल्गुप्रभृतिभ्यः क्विबन्तेभ्योऽनेकाच्त्वप्रयुक्त आम् भवत्येवेति सर्वं सुस्थम् । अत्र काशिका । आमो मित्त्वमदन्तत्वाद्गुणत्वं विदेस्तथा । आस्कासोराम्विधानाच्च पररूपं कतन्तवत् ॥ अस्यार्थः । मित्त्वाभावोऽमित्त्वम् । आमो मकारस्य हलन्त्यमितीत्संज्ञा न भवति । कुतः । अत् अन्ते समीपे यस्य तथात्वात् । सूत्रे विधानवेलायां समीपे अकारवत्त्वादिति यावत् । प्रसङ्गादाह । विदेरामि गुणाभावोपि तथा । अदन्तत्वादेवेत्यर्थः । उषविदजागृभ्य इति सूत्रे हि आम्प्रत्ययसन्नियोगेन विदेरदन्तत्वं निपात्यते । तत्रालोपस्य स्थानिवत्त्वात् गुणो न भवति । यदि तु विद ज्ञानइति धातुपाठएव अकारो विवक्ष्यते तदा वेत्तीत्यादि न

सिध्येत्। अकारश्रवणप्रसङ्गात्। इदानीमाम्प्रत्ययस्य पान्तत्वमङ्गीकृत्यापि मित्त्वाभावे ज्ञापकमाह। आस्कासोराम्विधानाचेति। आमः अमित्त्वमित्यनुषङ्गः। दयायासश्च कास्प्रत्ययादिति सूत्राभ्यामास्कासोराम्विधानादमित्त्वमामोनुमीयते। सति हि मित्त्वे आस्कासोराम् भवन् अचामन्त्यादाकारात्परं स्यात्। तथा च सवर्णदीर्घत्वे सति अकिञ्चित्करः स्यादिति भावः। नन्वदन्तत्वपक्षे आमामन्त्रइति निर्देश्यं स्यादत आह। पररूपमिति। यथा सर्वत्रलोहितादिकतन्तेभ्य इति सूत्रे पररूपं निपातनात् शकन्ध्वादित्वाद्वा एवमिहापीति भावः॥

इजादेश्च गुरुमतोनृच्छः॥ इजादिर्यो धातुर्गुरुमान् ऋच्छतिभिन्नस्तस्मादाम् स्याल्लिटि नतु मन्त्रे। ईहाञ्चक्रे। ऊहाञ्चक्रे। इजादेरिति किम्। ततक्ष। गुरुमतः किम्। इयेषिथ। नन्विह गुणे कृते गुरुमत्ताप्यस्त्येवेति चेत्सत्यम्। गुरुमद्ग्रहणे सति सन्निपातपरिभाषया इहाम्न। लिडानन्तर्यहेतुकत्वाद् गुरुमत्तायाः। यद्वा। लिटीति विहितविशेषणम्। इजादेर्गुरुमतो विहितो यो लिट् तस्मिन्निति। तेन लिण्निमित्ता या गुरुमत्ता तस्मान्न भविष्यति। अनृच्छः किम्। आनर्छ। आनर्छतुः। आनर्छुः। अनृच्छ इति शक्यमकर्तुम्। ऋच्छत्यृतामिति लिटि परे गुणविधानाल्लिङ्गादेव आमो ऽप्रवृत्तेः। न च तत्र ऋच्छतीत्यनेन अर्तेरेव श्तिपा निर्देश इति वाच्यम्। ऋच्छत्यृतामिति सवर्णदीर्घेण स्वरूपेणैवार्तेः प्रश्लेषात्। प्रश्लेषे च बहुवचनं प्रमाणम्। अत्र श्लोकवार्त्तिकं, वाच्यमूर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्। आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात्॥ अत्र यदि भावातिदेशः। आमिटोस्त्वभावातिदेशः। नौ तौ तयोरभावात्। इडुपग्रह इट्प्रतिषेधः॥ विभाषागुणइति पञ्चमी। फलस्य चात

हेतुत्वम्, अध्ययनेन वसतीतिवत् । एकाच इति वर्त्तमाने इन्युकः कितीति य इट्प्रतिषेधः ततोपि हेतोर्णुवद्भावो वाच्य इत्यर्थः । प्रोर्णोनूयते । प्रोर्णुनाव । प्रोर्णुतः । प्रोर्णुतवान् ॥

दयायासश्च ॥ एभ्य आम् स्याल्लिटि । दय दानगतिरक्षणेषु । अय गतौ । आस उपवेशने । त्रयोप्यनुदात्तेत । दयाञ्चक्रे । पलायाञ्चक्रे । उपसर्गस्यायताविति लत्वम् । आसाञ्चक्रे ॥

उपविदजागृभ्योन्यतरस्याम् ॥ एभ्य आम् वा स्याल्लिटि । उष दाहे । विद ज्ञाने । सत्ताविचारणार्थयोस्तु आत्मनेपदिनो-र्लाभार्थस्य चोभयपदिनो नेह ग्रहणम् । परस्मैपदिभ्यामुषविदजागृभ्यां साहचर्यात् । ओषाञ्चकार । उवोष । विदेरिह आमुसन्नियोगेनादन्तत्वनिपातनाद् गुणो न । विदाञ्चकार । विवेद । जागराञ्चकार । जजागार ॥

भीह्रीभृहुवां श्लुवच्च ॥ एभ्यो लिट्याम्वा एषां श्लाविव कार्यं च । किं पुनस्तत् । द्वित्वमित्वञ्च । बिभयाञ्चकार । बिभाय । जिह्रयाञ्चकार । जिह्राय । बिभराञ्चकार । बभार । जुहवाञ्चकार । जुहाव । इह द्वित्वं सर्वेषाम् । इत्त्वन्तु बिभर्तेः । भृञामिदिति श्लौ विधानात् ॥

कृञ् चानुप्रयुज्यते लिटि ॥ आम पश्चात् लिट्परः कृञ् प्रयुज्यते । कृञिति प्रत्याहारः कृभ्वस्तीत्यत्र कृञोद्वितीयेति ञकारेण । तेन कृभ्वस्तयो ग्राह्या । अत्र च प्रमाणम् आम्प्रत्ययवत्कृञोनुप्रयोगस्येति सूत्रे कृञ्ग्रहणम् । अनुप्रयोगसामर्थ्याद-स्तेर्भूभावो न । अन्यथा हि कृभ्वनुप्रयुज्यतइत्येव ब्रूयात् । याचयाञ्चकार । याचयांबभूव । याचयामास । इहानुप्रयुक्तस्यास्ते-र्भावकर्मणोरितङ् । तत्र एशि इटि च रूपे विप्रतिपद्यन्ते । तथाहि ।

उभयत्रापि इण्तीति हादेशे कृते ईक्षामाहे इति केचित्। ता-
स्मिसाहचर्यादिट्येवहत्वमित्यन्ये। तस्माहन्तुर्यदेव सार्वधातुकपूर्व
एति हत्वम्। तेनोभयत्रापि ईक्षामासे इति रूपमित्यपरे। स्या-
देतत्। आमन्तमेतदनभिव्यक्तपदार्थकं नह्यस्मात् कारकवि-
शेषः सङ्ख्याविशेषो वावगम्यते। तत्र विशेषसमर्पणाय न्यायत
एवानुप्रयोगलाभात्किमनेन सूत्रेणेति चेत्। अत्रोच्यते। क्रि-
यामात्रविवक्षायां कारकतत्सङ्ख्ययोश्चाविवक्षायां पाकमेरणा
जातेत्यादिप्रयोगास्तावत्सर्वसम्मताः। तत्र तथैव पाचयामि-
त्येतावन्मात्रप्रयोगे प्रसक्ते तं वारयितुमिदम्। किञ्चास्तिभ-
वत्योरिव विद्यतेरपि प्रयोगे न्यायतः प्रसक्ते तमपि वारयितुमे-
तत्। किञ्च निवृत्तप्रेषणाद्धातोः प्राकृतेर्थे णिचि सामान्यवाचका-
नुप्रयोगार्थं सूत्रमेतत्। अपि च। पश्चादेव प्रयोगो यथा स्यात्
न तु पूर्वमिति। तेन चक्रे ईक्षामित्यादि न भवति। अपि च,
अव्यवहितएव पश्चाद्भावो मुख्यः। तथा च व्यवहितानिवृत्त्यर्थ-
मपीदम्। तेन ईक्षां राजा चक्रइत्यादि न भवति। कथन्तर्हि बह्वृ-
चब्राह्मणे तान् ह राजा मदयामेव चाकरेति। छान्दसत्वादित्यवेहि।
कथन्तर्हि भट्टिकाव्ये, उक्षाम्प्रचक्रुर्नगरस्य मार्गान्। विभयाम्प्र-
चकारासाविति। कथञ्च रघुकाव्ये। तं पातयां प्रथममास पपात
पश्चात्। प्रभ्रंशयां योनहुषञ्चकारेति। प्रमाद एवायम्। विपर्यास-
निवृत्त्यर्थं व्यवहितनिवृत्त्यर्थञ्चेति वार्तिकविरोधादित्याहुः। इहा-
प्प्रकृतेः कृभ्वस्तीनाञ्च सामान्यविशेषवचनतया तदर्थयोरभे-
दान्वयो बोध्यः। अत एव प्रत्याहारे ऽन्तर्भूतस्यापि सम्पदो
नुप्रयोगो न भवति। अनन्वितार्थकत्वात्। यत्तु सनाद्यन्ता इत्य-
तो धात्वधिकारात् धातूपसर्गसमुदायस्य नानुप्रयोग इति। तन्न।
एवमपि योत्र धातुः पादिः तन्मात्रस्य उक्तरीत्यैव वारणीयत्वात्।

एवञ्च सामान्यस्य सन्निहिते विशेषे पर्यवसानात् तद्गतसाधना दिविशेषाभिधानम् आमन्तगतविशेषाभिधानमेवेति सम्पद्यते । अत एव अनुप्रयुज्यमानयोर्भूस्त्योरामन्तवशेन सकर्मकत्वात् ताभ्यां कर्मणि लिट् । तथाच माघः । तस्यातपत्रं बिभरांबभूवे इति । श्रीहर्षश्च । तपर्तुपूर्तावपि मेदसाम्भरा विभावरीभिर्बिभरा म्बभूविरे इति ॥

१ विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ॥ वेत्तेर्लोट्याम् गुणाभाव लोटो लुक् लोट्परस्य कृञोनुप्रयोगश्च वा निपात्यते । इतिशब्दः सर्वेषां लोड्वचनानामुपलक्षणार्थं । सूत्रे प्रथमपुरुषबहुवचनप्रयोगस्तु प्रचुरप्रयोगत्वमात्रेण । विदाङ्करोतु विदाङ्कुरुतां विदांकुर्वन्तु ॥

१ अभ्युत्सादयांप्रजनयांचिकयांरमयामकःपावयांक्रियाद्विदामक्रन्निति च्छन्दसि॥एते छन्दसि वा निपात्यन्ते।सदिजनिरमीणां ण्यन्ताना लुङ्याम्प्रत्ययः।चिनोतेरपि शुद्धस्य लुङ्याम् द्विर्वचनं कुत्वञ्च अकरित्यनुप्रयोगः प्रत्येकं चतुर्भिः सम्बध्यते । पवते पुनातेर्वा ण्यन्तस्य आशीर्लिङि आम् क्रियादित्यनुप्रयोगश्च । विदेर्लुङ्याम् गुणाभावः । अक्रन्नित्यस्यानुप्रयोगश्च । अकरिति कृञो लुङि तिप्। मंत्रेघसेतिच्लेर्लुकि तिपो हल्ङ्यादिलोपः । अक्रन्निति तत्रैव बहुवचनं अभ्युत्सादयामकः । अभ्युदसीषददिति पक्षे भाषायांच । प्रजनयामकः प्राजीजनत् । चिकयामक । अचैषीत् । रमयामकः । अरीरमत् । पावयांक्रियात् । पाव्यात् । विदामक्रन् । अवेदिषुः ॥

इति श्रीशब्दकौस्तुभे तृतीयस्य प्रथमे तृतीयमान्हिकम् ॥

च्लिलुङि ॥ धातोश्च्लिप्रत्ययः स्यात् लुङि परे ॥ इकारो लेरिति सामान्यग्रहणार्थं । चकारः स्वरार्थ इत्युत्तरसूत्रे

स्फुटीभविष्यति । अस्यादेशाः सिजादयो वक्ष्यन्ते । न-न्वेवं किं च्लिप्रत्ययेन सिजेवोत्सर्गः प्रत्ययोस्तु तदपवादा-श्च क्सादयः सन्तु । न च मन्त्रेघसेतिसूत्रे सर्वधातुषु लेरित्येके-नैव निर्वाहे लाघवार्थं च्लिः कर्तव्यः । अन्यथा हि घसृल्गृग-मर्थमङो ग्रहणम् । आकारान्तेषु धेटोन्तर्भावाच्चदर्थं चङो ग्रह-णम् । तस्य हि विभाषाधेट्श्व्योरिति चङस्ति । धात्वन्तरार्थं सिचो ग्रहणम् । यदि तु जनेः दीपजनेति विहितस्य चिणो लुक् छन्दसि दृश्यते ततस्तस्यापीति त्रीणि चत्वारि वा ग्रहणानि कर्तव्यानि स्युरिति वाच्यम् । च्लिपक्षेपि च्लिलुङि च्लेःसिच् मन्त्रेघसेति सूत्रेषु मिलित्वा च्लिच्लेर्लेरिति त्रयाणां ग्रहणस्य तुल्यत्वात् । न चोक्तरीत्या साम्येपि च्लिपक्षे लाघवान्तरम-स्ति । गातिस्थेति सूत्रे सिच इत्यपनीय तत्स्थाने लेरित्यभिषि-च्य मन्त्रेघसादिसूत्रे तस्यैवानुवर्तनादिति वाच्यम् । एवं हि व-दन् अकृतेष्वेव सिजाद्यादेशेषु तदपवादो लेरेव लुगित्यभिमैपि, किं वा आदेशेषु कृतेषु स्थानिवद्भावो नेति । नाद्यः । अगुः अस्थुरित्यादौ सिचः परत्वाभावेन सिजभ्यस्तेति जुसो ऽप्र-वृत्तिप्रसङ्गात् । न च आत इति जुस् । तत्रापि सिच इत्यस्या-नुवृत्तेः । अथोच्येत आत इति सूत्रे सिज्ग्रहणं नानुवर्तते तथाच अगुरित्यादौ विध्यर्थं तत् न तु नियमार्थम् । व्यावर्त्या-भावात् । न चाभुवन्निति व्यावर्त्यम् । तत्र जुसः प्राप्तेरेवाभावात् । न च सिजभ्यस्तेति प्राप्तिः । लावस्थायामेव लुगिति पक्षस्य इदानीं परिगृहीतत्वात् । न चैवमवान् इत्यत्रापि आत इति नित्यो जुस् स्यादिति वाच्यम् । लङःशाकटायनस्यैवेति नियमा-द्विकल्पोपपत्तेरिति । एवमपि मा हि गातां मा हि स्याताामित्या-दिषु आदिःसिचोन्यतरस्यामित्येष स्वरो न सिद्ध्येत् । तस्मा-

स्थानस्थायां लोप इति प्रथम पक्षो दुष्ट एवेति स्थितम् । न द्वितीय । एवं हि सति विभाषाघ्राधेडिति सूत्रेणापि च्लयादेशानामेव लुगिति धेटश्चङोपि स स्यात् । तत्र यदा विभाषाधेट्श्व्योरिति चङो विकल्पितत्वेन पक्षे सिचि कृते तस्य लुगलुकौ तदा अधात् अधाताम् अधुः । अधासीत् अधासिष्टाम् अधासिषुरिति सिद्धमिष्टम् । चङोपि लुगभावपक्षे अदधत् अदधताम् अदधन् इति सिद्धम् । लुक्पक्षे तु नलुमतेत्यङ्गाधिकारानिर्देश इति मते प्रत्ययलक्षणेन द्विर्वचने अदधादित्यपि चतुर्थ रूप स्यात् । नलुमतेति नाङ्गाधिकारनिर्देशः किं स्वाङ्गमनाङ्ग वा लुमता लुप्ने प्रत्यये परे पूर्वस्य प्राप्तं सर्वं निषिध्यतइति मुख्यपक्षे तु चङो लुकि द्वित्वाभ्यचौ सिज्लुका तुल्यमेव रूपमिति अधादित्यादौ यद्यपि न दोषः, तथापि बहुवचने अधानित्यनिष्टमपि चतुर्थं रूप स्यादेव, इष्यते तु त्रैशब्द्यम् अधु अधासिषु अदधन्निति।न च चङो लुकि आत इति जुस भविष्यतीति वाच्यम् । तत्र सिच इत्यस्यानुवृत्तेः । अन्यथा तस्य नियमार्थतानुपपत्तौ अभूवन्नित्यत्र प्रत्ययलक्षणेन सिजभ्यस्तेति जुसप्रसङ्गात् । ननु च्लयभ्यस्तविदिभ्यश्चेति वक्ष्यामि । एवञ्च चङ्लुक्यपि च्लेः परत्वाज्जुस् भविष्यति । आत इति सूत्रेपि लिग्रहणानुवृत्त्यैव नियमात् अभूवन्नित्यत्र जुस् न भविष्यति । माहिगातामित्यादौ आदि सिच इति स्वरोपि सिद्धः । एवञ्च कृतेष्वादेशेषु लुगिति पक्षो निर्बाध एवेति चेन्न । यदि च्लयभ्यस्तेति सूत्रे तर्हि वसाद्चङ्क्षु दोषापत्तेः । अघुक्षन् अवोचन् अदधन् अत्रापि हि जुस् प्राप्नोति । तस्मात्सिजभ्यस्तेत्येव वक्तव्यम् । आत इत्यत्र च सिज्ग्रहणमनुवर्तनीयम् । एवञ्च चङ्लुकि बहुवचने अधानिति प्राप्नोतीति दोषः स्थित एव । तस्माद् गातिस्थेत्यत्र सिच इत्येव वक्तव्य

मू । ततश्च च्लिपक्षेपि च्लिच्लेर्लेरिति त्रयाणां ग्रहणं तुल्यमेवेति स्थितम् । प्रत्युत च्लेरकरणे महल्लाघवम् । मन्त्रेघसेत्यादिसूत्रे हि अङ्ग एव ग्रहणं कर्तव्यम् । सिच् तु गातिस्थेतिसूत्रादनुवर्त्य । धेटो जनेश्च चङ्चिणौ वैकल्पिकौ तत्र यानि लुगुदाहरणानि तानि सिच एव लुका सिद्धानि । न चैवम् आदिः सिचोन्यतरस्यामिति स्वरः स्यादिति वाच्यम् । चङ्चिणोर्ग्रहणेपि पाक्षिकस्य तस्य दुर्वारत्वात् । तस्मात् च्लिलुङीतिसूत्रं व्यर्थमेवेति चेत् । अत्राहु । असति च्लौ मन्त्रेघसेत्यत्र येभ्यः सिचो लुक् तेषामादिः सिच इतिस्वरः स्यात् । सति त्वस्मिन् लेरिति लावस्थायामेव लुकि सिजभावाद्यथायथं स्वरः । किञ्च आकारान्तेभ्यः सिचो लुकि जुस् प्राप्नोति लेस्तु लुकि अन्तिभाव एव भवति । अपि च । शलइगुपधादितिसूत्रे अनिट इत्यनेन च्लिं विशेषयितुमपि च्लिरेष्टव्य । असति हि च्लौ अनिट इति धातोरेव विशेषणं स्यात् । ततश्चाधुक्षदिति न सिद्ध्येत् । ननूदित्वादिड्विकल्पे पाक्षिकेणेडभावेन अनिड्वायमिति चेत्, तर्हि नित्यं क्स स्यात् । ततश्चागूहीदिति न सिद्ध्येत् । अनिट इति च्लेर्विशेषणे तु यदा च्लिरनिट् तदा क्स यदा सेट् तदा सिजिति सिद्धमिष्टम् । तस्मात् यथायथ स्वरोन्तिश्चागुहीदिति च्ले फलमिति स्थितम् । भाष्ये तु च्लिः प्रत्याख्यातः । यदुक्तम् । आदिः सिच इति स्यादिति । तन्न । तस्य वैकल्पिकतया इष्टस्वरस्य निर्बाधत्वात् । सर्वविकल्पानां छन्दसि व्यवस्थितत्वेन अनिष्टस्यानापात्रत्वात् । यदपि आकारान्तेभ्यो जुस् स्यादिति । तदपि न । मन्त्रे तादृशस्योदाहरणस्याभावात् । अत्रैव भाष्यकारीयप्रत्याख्यानमेव प्रमाणम् । यदपि अगुहीदिति न सिद्ध्येदिति, तदपि न। गुहादयो विकल्पितेट इटोभावाभ्या मि

लिङ्गने ॥ श्लिषः परस्यानिट च्लेर्योयं क्सादेश स आलिङ्गनएव न त्वर्थान्तरे, एवं चार्थान्तरे सावकाशोऽङ् आलिङ्गने क्सेन बाध्यते.। आश्लिक्षत् कन्यां देवदत्त । आलिङ्गनएवेति किम् । समाश्लिषज्जतु काष्ठम् । इह अङेव, प्रत्यासत्तौ ह्यत्र श्लिषिर्वर्तते न तूपगूहनपरिष्वङ्गापरपर्याये आलिङ्गने। उपाश्लिक्षातां जतुना काष्ठे । नन्विह शलइगुपधादिति क्सो दुर्वार । आलिङ्गने एवेति नियमेन हि अनन्तरस्येति न्यायेन श्लिष या इति प्राप्तिः अङ्बाधनार्था सैव नियम्यते न तु तत प्राचीनमपीति चेन्न । योगविभागसामर्थ्येन सर्वस्याः क्सप्राप्तेः नियमनात् । आत्मनेपदे च अङो ऽप्राप्तेः सिजेव पर्यवस्यति । नन्वेवमपि आलिङ्गनएवेति आदेशनियमोयमिति कुत, अर्थनियम एवाय किं न स्यात् आलिङ्गने क्स एवेति । ततश्चालिङ्गने अङ् मा नाम भूत् । आत्मनेपदे तु अनालिङ्गनेपि पूर्वेण क्सो दुर्वार एवेति चेत् । सत्यम् । उभयथेह नियमसम्भवेपि प्रत्ययनियम एवाश्रीयते लक्ष्यानुरोधात् । विधेयविभक्तिनिर्देशेन प्रधानत्वाद्वा भाष्यकारोक्तव्याख्यानाद्वेति न कश्चिद्दोष । श्लिष इति योगे अनिटः किम् । श्लिष आलिङ्गन इत्यस्यैव ग्रहण यथा स्यात्। श्लिषु प्लुषु प्लुषु दाहे इत्यस्य सेटो ग्रहण मा भूत्। सानुबन्धकत्वादेव तदग्रहणे तु अनिट इति नावश्यकमिति दिक्। श्लिष इति योगविभागसिद्धश्च क्सः पुरस्तादपवादन्यायेन अङमेव बाधते न तु च्लिण, तेन समाश्लेषि कन्या देवदत्तेनेति चिणेव भवति ॥

नदृशः ॥ दृशः च्लेः क्सो न स्यात् । अदर्शत् । अद्राक्षीत् । इरितोवेत्यङ्पक्षे ऋदृशोऽङीति गुण । सिच्पक्षे सृजिदृशोर्झल्यमिति ॥

णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् ॥ एभ्यश्च्लेश्चङ् स्यात् कर्तृवाचिनि लुङि परे। णीति णिङ्णिचोः सामान्यग्रहणम् । अचीकमत । अचीकरत् । अशिश्रियत् । अदुद्रुवत् । असुस्रुवत् । कर्त्तरि किम्। अकारयिषातां घटौ देवदत्तेन । चङो ङकारो गुणनिषेधार्थः । चकारश्चङीति विशेषणार्थः। अङीत्युच्यमाने अस्यतिवक्तिख्यतिभ्योऽङ् लिपिसिचिह्वश्च पुषादिद्युताद्यॢदितः परस्मैपदेषु इरितो वा जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च इति चादि अतिप्रसङ्गः । यदि तु णिश्रीत्यादौ ङ एव क्रियेत तदा शक्यं चिन्त्वमकर्तुम् । कर्मरुपसंख्यानम् ॥ आयादय आर्धधातुकेवेति यदा णिङ् नास्ति तदर्थमिदम् । अचमत । अत्र भाष्यम् । नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः । अथ पत्काषिणो यान्ति येऽचीकमत भाषिणः ॥ अस्यार्थः । अचकमताचीकमतेति शब्दयोः साधुत्वे तुल्येपि अचकमतेत्यस्य विशेषलक्षणसापेक्षतया तत्प्रयोगे क्लेशाधिक्यात्फलाधिक्यम् । तेन कमेर्लुङि किं रूपमिति पृष्टे अचकमतेति ये श्रुयुस्ते सुयुक्तै रथैः स्वर्गं यान्ति यैस्त्वचीकमतेत्युक्तं ते पादौ कषन्तीति पत्काषिणो यान्ति । हिमकाषिहतिषु चेति पादस्य पदादेशः। अन्ये तु व्याचक्षते । अकमिष्टेति यैरुक्तं तएवोपचारादकमिष्टशब्देनोच्यते । ते ऽमी सुयुक्तैर्वडवारथैर्गच्छन्तोऽपि सुखं न प्राप्नुवन्ति अपशब्दोच्चारणात्। अचीकमतभाषिण स्तु पत्काषिणोऽपि सुखं यान्ति ॥

विभाषा धेट्श्व्योः ॥ आभ्यां च्लेश्चङ् वा स्यात् । अदधत् । सिच्पक्षे विभाषाघ्राधेट्शाच्छासः इति वा लुक् । अधात् । अधासीत् । अशिश्वियत् । पक्षे जॄस्तम्भिवति त्वङ् । श्वयतेरः । अश्वत् । सिचि वृद्धिः प्रतिषेधे गुण । अश्वयीत् । कर्तरीत्येव । अधिषातां गावौ वत्सेन। कर्मणि द्विवचनम्। स्थाघ्वोरिच्चेति कित्त्वेत्वे॥

गुपेश्छन्दसि ॥ गुपेः परस्य च्लेश्चङ् वा स्यात् छन्दसि ।

आयप्रत्ययाभावस्थलएवेदम्। सूत्रे केवलस्योच्चारणात्। इमाम्नोमित्रावरुणौ गृहानजूगुपतं युवम्। गुपू रक्षणे लङ् थसस्तम्। तुजादीनांदीर्घोभ्यासस्येति अभ्यासदीर्घ इति हरदत्तः। कल्पसूत्रेषु तु प्रायेण ह्रस्व एव पठ्यते। पक्षे अगौप्तम्। अगोपिष्टम्। ऊदित्वादिङभावे वदव्रजेति वृद्धिः। झलोझलीति सिचो लोप। इट्पक्षे नेटीतिवृद्धिनिषेधः। गुण। आयप्रत्ययपक्षे। अगोपायिष्टम्। इति चत्वारि छन्दसि। भाषायान्तु चङन्तं वर्जयित्वा त्रीणि रूपाणि॥

नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः॥एभ्यो ण्यन्तेभ्यः च्लेश्चङ् न स्यात् छन्दसि। मा त्वायतो जरितु काममूनयीः। त्वायतस्त्वामिच्छतो जरितुस्तोतुः मम काममभिलाषं मा उनयीः। ऊनं मा कार्षीरित्यर्थ। मा ऊनन इति भाषायाम्। ऊन परिहाणे। चुरादावदन्त। णिच् सिप् चङ् णौ कृतस्याल्लोपस्य स्थानिवद्भावादजादेर्द्वितीयस्येति नशब्दस्य द्विर्वचनम्। अग्लोपित्वान्न सन्वद्भावदीर्घोपधाह्रस्वत्वानि। इह वृत्तिपदमञ्जर्यो प्रायेणौनिनदिति पाठः। तत्र अभ्यासे इकारः मामादिकः। इदञ्च द्विर्वचनेचीति सूत्रे स्फुटीकृतमस्माभि। मा त्वाग्निर्ध्वनयीद्धूमगन्धि। ध्वन शब्दे चुरादिरदन्त। घटादिर्नान्तश्च। भाषायां तु। अग्लोपित्वान्न सन्वत्। अदध्वनत्। घटादेस्तु अनग्लोपित्वात् अदिध्वनत्। ऐलयीत्। ऐलिलदिति भाषायाम्। इल प्रेरणे चुरादि। आर्दयीत्। आर्दिददिति भाषायाम्। अर्द गतौ याचने च अर्द हिंसायां हेतुमण्ण्यन्तौ। इह सूत्रे छन्दसीत्यस्यानुवृत्तिर्वृत्त्यादिमहाग्रन्थसमता। तथा च भट्टि। अजिग्रहत्तं जनको धनुस्तयेनार्दिददैत्यपुरं पिनाकीति। प्रक्रियाकौमुद्यां तु द्वयमपि लोकइत्युक्तम्। छन्दसीति नानुवर्त्तते। वि-

भाषेतिचानुवर्ततइति तद्राशयः । इदञ्चायुक्तम् । मूत्रे नञो वैयर्थ्यापत्तेः । सकलमहाग्रन्थविरोधाच्चेत्यास्तान्तावत् ॥

अस्यतिवक्तिख्यातिभ्योऽङ् ॥ असु क्षेपणे । वच परिभाषणे, ब्रूञो वचिश्च, ख्या प्रकथने, चक्षिङादेशश्चेति माधवः । वस्तुतस्तु सार्वधातुकमात्रविषयः ख्यातिः । इह त्वादेशस्यैव ग्रहणम् । एभ्यश्च्लेरङ् स्यात् कर्तृवाचिनि लुङि परे । अस्यतेः पुषादिपाठादेव अङि सिद्धे पुनर्ग्रहणमात्मनेपदार्थम् । पर्यास्यत । पर्यास्येताम् । पर्यास्यन्त । उपसर्गादस्यत्यूह्योर्वेतिवचनमित्यात्मनेपदम् । अङ् । अस्यतेस्थुक् । कर्मकर्तरि तु मत्यये परत्वाच्चिण् अन्यत्र अङ् । पर्यासि । पर्यास्येताम् । पर्यास्यन्त । अवोचत् । अवोचताम् । अवोचन् । वच उम् । अख्यत् । अख्यताम् । अख्यन् । आतोलोपः । कर्त्तरीति किम् । कर्मणि मा भूत्, चिण्सिचावेव यथा स्याताम् । निरासि । निरासिषाताम् ॥

लिपिसिचिह्वश्च ॥ एभ्यश्च्लेरङ् स्यात् । लिप उपदेहे । अलिपत् । षिच क्षरणे । असिचत् । ह्वेञ् स्पर्द्धायां शब्दे च । अह्वत् । अस्यतिवक्तिख्यातिलिपिसिचिह्व इति तु नोक्तम् । एकसूत्रत्वे हि अस्यत्यादीनामपि उत्तरसूत्रे अनुवृत्तौ विकल्पः स्यात् ॥

आत्मनेपदेष्वन्यतरस्याम् ॥ पूर्वेण नित्ये प्राप्ते विभाषेयम् । अलिपत । अलिप्त । असिचत । असिक्त । अङभावे सिच् । झलोझलीति सलोपः । लिङ्सिचाविति किन्त्वाद् गुणाभावः । अह्वत । अह्वास्त ॥

पुषादिद्युताद्यॢदितः परस्मैपदेषु ॥ श्यन्विकरणपुषादेर्द्युतादेर्ॡदितश्च परस्य च्लेरङादेशः स्यात्परस्मैपदेषु । पुष पुष्टौ, शुष शोषणे, इत्येवमादिरादिवादिगणसमाप्तेः पुषा-

दिः । यत्तु मध्ये ण्णिङ मीतौ ङ्कादिति ङ्कत्करणं तद्वयादिसमा स्त्यर्थम् । अस्यतिवक्तीति सूत्रे अस्यतिग्रहणमात्मनेपदार्थं पुषादित्वादिति वार्तिककारवचनं चात्र प्रमाणम् । अपुषत् । अशुपत् । यस्तु भ्वादिः पुष पुष्टौ श्रिषु श्लिषु प्रुषु प्लुषु दाहे इत्येवमादि .सोत्र न गृह्यते । द्युतादीनां पृथक्करणाज्ज्ञापकात् । ते हि तत्र पुषेरुत्तरत्र पठ्यन्ते । योपि पुष पुष्टौ, मुष स्तेये इति क्र्यादिषु । पठित सोप्यत्र न गृह्यते । तत्र हि चत्वार एव धातव । यदि च ते जिघृक्षिता स्युर्लृदित एव ते क्रियेरन् । यत्तु स्वरिते त्वादेरपि तेनैव सिद्धत्वादिति हरदत्तेनोक्तम्। तन्न तेषां निरनुबन्धकत्वात्‌ग्रहः स्वरितेत्त्वेप्यादिशब्दार्थालाभात्। अड आदिशब्दार्थत्वे तु अपिशब्दार्थालाभादिति दिक् । अथ सिद्धान्तेपि पुषादयो द्युतादयश्च लृदित एव कुतो न पठिता इति चेन्न । प्रत्येकं लृकारपाठे विपरीतगौरवापत्तेः । न चानुबन्धान्तरेण लृकारो निमातुं शक्यः। तत्तत्कार्यानिर्वाहप्रसङ्गात् । आदितामीदितामुदितामूदिताञ्च तत्र सत्वात्। तद्यथा । पुषादिषु ञिष्विदा गात्रप्रक्षरणे, मदीहर्षे, शमु उपशमे, षिधू संराद्धौ इति पठ्यन्ते । द्युतादिष्वपि श्विता वर्णे, ञिमिदा स्नेहने, ञिष्विदा स्नेहनमोचनयोः, स्रसुध्वंसु अवस्रंसने, स्यन्दू प्रस्रवणे, कृपू सामर्थ्ये इति पठ्यन्ते । अद्युतत् । अश्वितत् । द्युद्भ्योलुङीति पाक्षिकं परस्मैपदम् । गम्लृ, अगमत् । परस्मैपदेष्विति किम् । अद्योतिष्ट । इह नन्दिग्रहिपचादिभ्य इतिवत् पुषद्युतादील्येक एवादिशब्दः पठितु युक्तः तथा तु न कृतमित्येव॥

सर्तिशास्त्यर्तिभ्यश्च ॥ एभ्यश्च्लेरङ् स्यात् । शासु अनुशिष्टौ अस्यैव ग्रहणम् । सर्त्यर्तिभ्यां परस्मैपदिभ्यां साहचर्यात् । न त्वाङः शासु इच्छायामित्यात्मनेपदिन इह ग्रहणम् । आर्तिस

र्योरपि ऋमृ गताविति जौहोत्यादिकयोरेवेह ग्रहणम् । अविद्यमानशपा शासिना साहचर्यात् तेन भौवादिकयोः सिजेव। चकारेण परस्मैपदेष्वित्यनुकृष्यते । तच्चोत्तरार्थं न त्विहान्वेति । पृथग्योगकरणसामर्थ्यात् । अन्यथा हि पुषादिद्युताद्य्लृदित्सर्तिभ्य इत्येव पठेत् । एवं हि पृथग्विभक्तिनिर्देशश्चकारश्च न कर्त्तव्यो भवति। अथ वा मण्डूकप्लुत्या उत्तरत्रैव परस्मैपदग्रहणं सम्बन्ध्यते । यद्वा । इहानुकृष्टं सत् परस्मैपदे दृष्टो यः शासिरिति व्याख्येयम् । शासइदङ्हलोरिति सूत्रे कैयटग्रन्थोप्येवं नेयः । सर्ति । असरत् । ऋदृशोङीति गुणः । अशिषत् । शासइदङ्हलोः, शासिवसीति षत्वम् । आरत् । समन्यवो यत्समरन्त सेनाः। समोगम्यृच्छिभ्यामित्यत्र अर्त्तिश्रुदृशिभ्यश्चेति वार्त्तिकेनात्मनेपदम्। बहुलं छन्दस्यमाङ्योगेपीत्यडभावः । समारन्त ममाभीष्टाः । सङ्कल्पास्त्वय्युपागते इति भट्टिः । यत्तु समोगम्यृच्छीत्यत्र भाष्ये सिजुदाहरणं तज्जौहोत्यादिकस्येति तत्रैवावोचाम ॥

इरितो वा ॥ इरितो धातोश्च्लेरङ् वा स्यात् परस्मैपदेषु । अभिदत् । अभैत्सीत् । परस्मैपदेषु किम् । अभित्त । स्वरितेत्वात्तङ् ॥

जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ एभ्यश्च्लेरङ् वा। अजरत् । अजारीत् । स्तम्भुः सौत्रो धातुः । अस्तभत्। अस्तम्भीत् । म्रुचु म्लुचु गतौ । अम्रुचत् । अम्रोचीत् । अम्लुचत् । अम्लोचीत् । ग्रुचु ग्लुचु स्तेयकरणे । अग्रुचत् । अग्रोचीत् । ग्लुञ्चु खञ्जगतौ । अग्लुचत् । अग्लुञ्चीत् । अश्वत् । अश्वयीत् । अशिश्वियत् । विभाषाधेट्श्व्योरित्यत्र व्युत्पादितमेतत् । ग्लुचुग्लुञ्च्वोरेकतरोपादानेनापि रूपत्रयं यद्यपि सिद्ध्यति । तथापि ग्लुञ्चावुपात्तेऽग्लुचत् अग्लुचीदिति द्वयम् । ग्लुचेस्तु सिचि

अग्लोचीत् । तथा ग्लुचावुपात्ते तस्याग्लुचत् अग्लोचीत् ग्लुञ्चेस्त्वग्लुचीदिति । तथापि अर्थभेदात्सूत्रकृता उभावुपात्तौ । भाष्यकृता तु धातूनामनेकार्थत्वेनेष्टसिद्धिमाश्रित्य अन्यतरो न कर्त्तव्य इत्युक्तम् । एतेन द्वयोरुपादानसामर्थ्यात् ग्लुञ्चेरनुनासिकलोपो न भवतीति जयादित्योपन्यस्तङ्केषां चिन्मतं परास्तम् । भाष्यविरुद्धत्वात् ॥

कृमृदृरुहिभ्यश्छन्दसि ॥ एभ्य श्च्लेरङ् वा स्याच्छन्दसि । अकरत् । अमरत् । व्यत्ययेनेह परस्मैपदम् । अदरत् । यत्सनोः सानुमारुहत् । यत्तु ऋग्भाष्ये इमामृचं व्याचक्षाणैरुक्तम् । रुहेर्लङि तिपि शपि संज्ञापूर्वको विधिरनित्य इति लघूपधगुणो न भवतीति, तत्प्रौढिवादमात्रमित्यवधेयम् । लोके तु, अकार्षीत् । अमृत । अदारीत् । अरुक्षत् ॥

चिण्ते पदः । पद गतौ । अस्मात् च्लेश्चिण् स्यात् तशब्दे परे । आत्मनेपदैकवचनमेवात्र गृह्यते न तु तस्थस्थमिपामिति विहितः । धातोरात्मनेपदित्वेन तस्येहासम्भवात् । वेति निवृत्तम् । उत्तरत्र अन्यतरस्यांग्रहणात् । उदपादि सस्यम् । समपादि भैक्षम् । तइति किम् । उदपत्साताम् । उदपत्सत ॥

दीपजनबुधपूरितायिप्यायिभ्योन्यतरस्याम् ॥ एभ्यश्च्लेश्चिण् वा स्यात्ते परे । अदीपि । अदीपिष्ट । अजानि । अजनिष्ट । अबोधि । अबुद्ध । अपूरि । अपूरिष्ट । अतायि । अतायिष्ट । अप्यायि । अप्यायिष्ट । जनी प्रादुर्भावे, बुध अवगमने इत्यनयोर्दिवाद्योरिह ग्रहणम् । यत्तु जन जनने भ्वादिः, बुध बोधने, बुधिर् बोधने भ्वादी, तेषां नेह ग्रहणं नित्यात्मनेपदिभ्यां दिवादिभ्याञ्च दीपिपूरिभ्यां साहचर्येण तादृशयोरेव जनिबुध्योर्ग्रहणात् । यत्तु अकर्मकसाहचर्यादकर्मकयोरेवेति

माधवेनोक्तम् । तच्चिन्त्यम् । क्रमादमुं नारद इत्यबोधि सः, अबोधि तज्जागरदुःखसाक्षिणीत्यादिप्रयोगविरोधात् । अयञ्च विकल्प कर्तर्येव । भावकर्मणोस्तु नित्यश्चिण् परत्वात् । इह कर्तरीत्यनुवृत्तेर्वा ॥

अच कर्मकर्तरि ॥ अजन्ताद्धातोश्च्लेश्चिण् वा स्यात्कर्मकर्त्तरि तशब्दे परे । प्राप्तविभाषेयम् । अकृत मा कट स्वयमेव । अलावि अलविष्ट वा केदारः स्वयमेव । अच इति किम् । अभेदि काष्ठं स्वयमेव । कर्मकर्तरीति किम् । अकारि कटो देवदत्तेन ॥

दुहश्च ॥ दुहश्च्लेश्चिण् वा स्यात्कर्मकर्त्तरि तशब्दे परे । अदोहि अदुग्ध वा गौः स्वयमेव । चिण् भावे । लुग्वाइहेति क्सस्य वा लुक् । पक्षे अधुक्षत । कर्मकर्तरीति किम् । शुद्धकर्मणि चिणेव यथा स्यात् । अदोहि गौर्गोपालकेन । अप्राप्तविभाषेयम् । नदुहस्नुनमांयक्चिणाविति चिणः प्रतिषेधात् । तत्र दुहिग्रहणं यक्प्रतिषेधार्थम् । चिण्ग्रहणन्तु स्नुनमर्थम् ॥

न रुधः ॥ रुधश्च्लेः कर्मकर्त्तरि चिण् न । अरुद्ध गौः स्वयमेव । शुद्धे कर्मणि तु अरोधि गौर्गोपालकेन । रुधिर् आवरणइत्यस्यैवात्र ग्रहणं न तु अनोरुधकामे इत्यस्य कर्तृस्थभावकत्वेन कर्मकर्तुरभावात् ॥

तपोऽनुतापे च ॥ अस्मात् च्लेश्चिण् न स्यात् कर्मकर्त्तरि अनुतापे च । अनुतापः पश्चात्तापः । तस्य ग्रहणमकर्मकर्त्रर्थम् । तत्र हि भावकर्मणोरपि प्रतिषेधो भवति । कर्मवत्कर्मेति कर्मवद्भावातिदेशस्थलेऽपि, अतप्त तपस्तापस । तप आर्जिजदित्यर्थः । अत्र तपस्तप कर्मकस्यैवेति कर्मवद्भावातिदेशात्प्राप्तिः । अनुतापे, अन्वतप्त पापेन । पूर्वं यत्पापं कर्म कृतं तेन पश्चा-

दभ्याहत इत्यर्थ' । शुद्धे कर्मणि लकारः । पापेनेति कर्त्तरि तृतीया ।, कर्मविवक्षायां शोकार्थे वा तपौ भावे लकारः । हेतौ तृतीया । यदा तु अभ्याहननार्थस्य तपेः कर्मस्थभावकस्य कर्मकर्त्ता विवक्ष्यते तदा कर्मवत्कर्मणेत्यातिदेशादात्मनेपदम् । तदापि हेतौ तृतीया ॥

चिण् भावकर्मणोः ॥ धातोश्च्लेश्चिण् स्यात् भावकर्मवाचिनि तशब्दे । अत्रापि भवता । अकारि, कटस्त्वया । चिण्ग्रहण स्पष्टार्थम् । चिण्तेपद इत्यतस्ते इत्यस्यैव चिण्ग्रहणस्याप्यनुवृत्तेः । यत्तु दीपजनेत्यत्र अन्यतरस्यांग्रहण, तन्नरुध इत्यत्रैव निवृत्तम् । अन्यथा नञो वैयर्थ्यापत्तेः । न च प्रतिषेध एव इहानुवर्त्ततेति वाच्यम् । तस्य प्राप्तिपूर्वकत्वात् । भावकर्मणोश्च केनापि चिणः प्राप्तेरभावात् । न च श्लिष इति विभक्तेन योगेन विधीयमानः क्सः पुषाद्यङमिव इमं चिणमपि बाधेत । अतोत्र चिणेव यथा स्यात् क्सो मा भूदित्येतदर्थं पुनश्चिण्ग्रहणमिति प्रकृतसूत्रे भाष्यारूढ प्रयोजनमस्त्येवेति वाच्यम् । तस्यापि पाक्षिकत्वात् । समुदायापेक्षायां ह्येतदुक्तम् । अवयवापेक्षायां पुरस्तादपवादन्यायेन श्लिषेः क्सोऽङमेव बाधते न तु चिणमिति प्रागेवोक्तम् ॥

सार्वधातुके यक् ॥ भावकर्मवाचिनि सार्वधातुके परे धातोर्यक् स्यात् । आस्यते शय्यते त्वया । अयङ्यिक्ङितीति शीङोयादेशः । क्रियते कटः । इह कर्मणि यक् भवतीत्यस्यावकाशः शुद्धं कर्म, पच्यते ओदनः । कर्तरि शपोवकाशः । शुद्धः कर्ता । कर्मकर्तर्युभयंप्रसङ्गे, । यग्विधाने कर्मकर्तर्युपसंख्यानं तर्हि कर्तव्यम् । न कर्तव्यम् । कार्यातिदेशात्सिद्धम् । कर्मवत्कर्तरीत्यनेनैव हि यगात्मनेपदादीनि विधीयन्ते इति यगेव पर. ।

शास्त्रातिदेशपक्षेपि नदुहस्नुनमांयक्चिणाविति ज्ञापकात् कर्मकर्तरि यगेव भविष्यति । अत्रेदमवधेयम् । भावकर्मकर्त्तारो लकारार्थाः। लः कर्मणिचभावेचाकर्मकेभ्य इति सूत्रात् । तत्र हि चकारेण कर्तरीत्यनुकृष्यते । तच्च वाच्यार्थसमर्पकमिति पूर्वसूत्रे स्थितम् । उत्तरत्रापि तयोरेवकृत्येत्यत्र तथैवेति सन्दंशात्मायपाठाच्च मध्येपि वाच्यसमर्पकतैवोचिता प्रधानभूतधात्वर्थाश्रयः कर्ता फलाश्रयश्च कर्म । फलव्यापारयोश्च धातुनैवोपात्तत्वात् । आश्रयमात्रं लकारार्थे । अनन्यलभ्यस्यैव शब्दार्थत्वात् । ततश्च तिङामपि स एवार्थः । तेषां लादेशत्वात् स्थान्यर्थाभिधानसमर्थस्यैव चादेशत्वात् । विकरणास्तु द्योतका । तत्रापि शबादयो धात्वर्थे व्यापारे आश्रयस्य विशेषणतां द्योतयन्ति । यक्चिणौ तु फले । ननु विपरीतमेवास्तु कर्तरि शबित्यादेरप्यनुशासनस्य स्वरसेन शबादय एव वाचकाः । लकारास्तु द्योतका इतीति चेन्न । आशीर्लिङि लिटि च अदादिजुहोत्यादिषु च शबाद्यभावेपि तत्प्रतीते । यद्यपि, क्वचित्तिङामभावेपि प्रतीयन्ते त्रयोप्यमी ।अशाम्यकारिगच्छेति चिण्शप्सन्निधिमात्रतः ॥ अधोगविभरित्यादौ धातुमात्रेपि कर्तृधीः । तथाप्यासत इत्यादौ धात्वभावेपि कर्तृधीः ॥ तथापि तत्र परमते लुप्तस्मृतं बोधकम् । अस्माकन्तु य शिष्यते स लुप्यमानार्थाभिधायीत्युक्ताभ्युपगमात् सर्वं सुस्थम् । तत्र कर्तृकर्मणी वदन् तिङ् तन्निष्ठां सङ्ख्यामपि प्रतिपादयतीति कर्तृकर्मणोर्द्वित्वे बहुत्वे च द्विवचनबहुवचने भवत- । भावे लस्तु असत्त्वावस्थापन्नां धात्वर्थभूतां क्रियामेव अभिधत्ते द्योतयति वेति तत्र प्रथमपुरुषैकवचनमेव भवति न मध्यमोत्तमौ । युष्मदस्मत्सामानाधिकरण्याभावात् । नापि द्विवचनबहुवचने । द्वित्वबहुत्वयोरप्रतीतेः । एकव-

चनन्तु उत्सर्गः करिष्यतइति भाष्याद्भवति । अत्र बहुवचनं नेत्यप्युत्सर्गः। उष्ट्रासिका आस्यन्ते।हतशायिकाः शय्यन्ते इत्यत्र भाष्ये तदभ्युपगमात्। उष्ट्राणां हि आसिकाः स्वरूपत एव विलक्षणाः हताश्च नानाप्रकारं शेरते उत्ताना अवतानाः विकीर्णकेशाः विस्रस्तवस्त्राः इत्यादि। तत्साम्यादाख्यातवाच्यस्यापि भावस्य स्वरूपगतभेदावभासाद्बहुवचनं भवत्येव । इवशब्दप्रयोगमन्तरेणापि इवार्थावगतिर्भवति परत्र परशब्दः प्रयुक्त इति न्यायात्। तदयमर्थः । यादृशानि हतानामनेकप्रकाराणि शयनानि तादृशानि देवदत्तादिभिः क्रियन्तइति । एवञ्चेह आसिका शायिका इति द्वितीयाबहुवचनान्तं क्रियाविशेषणत्वेन कर्मत्वात्। न चैवं क्लीबत्वमेकवचनं च स्यादिति वाच्यम् । स्त्रियां क्तिन्नित्यधिकारात् स्त्रीत्वावधारणेन सामान्ये नपुंसकमित्यस्याप्रवृत्तेः । बहुत्वावधारणेन च एकवचनाप्रवृत्तेरिति दिक् । केचित्तु कर्मण्ययं लकार इति मन्वाना आसिकाशयिकाशब्दौ प्रथमान्तावित्याहुः । तथाहि । आसिकाशायिकयोर्भावतया कालभावाध्वगन्तव्या इति कर्मत्वे गोदोहः सुप्यतइतिवत् कर्मणि लः । उष्ट्रासिकाहतशायिकयोश्च आख्यातप्रकृत्युपस्थिते आसनशयने प्रति परिच्छेदकत्वेनान्वयः । गोदोहस्येव स्वापे, परिच्छेदकत्वं च आसिकाशायिकयोः सादृश्यद्वारकं गोदोहस्य तु कालोपाधिनेत्यन्यदेतत्। एतच्च विवक्षान्तरे भवत्येवति कैयटादयः । भाष्यकारैस्तु भावेपि लविधाने बहुत्वं स्वीकृतमित्युक्तम्। न चैवमाख्यातवाच्यस्य भावस्य असत्त्वावस्थापन्नतेति सिद्धान्तो भज्येतेति वाच्यम् । लिङ्गयोगस्य करणादिकारकयोगस्य चेह असत्त्वावस्थात्वेन विवक्षितत्वात्। अत एव पचति भवति, पच्यते भवति, पश्य मृगो धावतीत्यादौ वाक्यार्थभूतायाः

क्रियाया. क्रियान्तरं प्रति कर्तृत्वकर्मत्वाभ्यामन्वयेपि न का चित् क्षति । न चैतावता घञादिसाम्यं, घञादिवाच्यो हि भावः सलिङ्गः यथायथं सकलकारकान्वितश्चेति वैषम्यस्य स्पष्टत्वात् । अत्र वैषम्ये अनुभवबलकल्प्यः शब्दशक्तिस्वभाव एव नियामक । तदेतदुक्तम् । कृदभिहितो भावो द्रव्यवत्प्रकाशतइति । कृत्स्वपि तुमुनादौ न सत्वार्थकत्वम् । एतच्च अव्ययकृतो भावइति वार्त्तिके स्फुटीभाविष्यति । अनव्ययकृत्स्वपि शयितव्यं भवद्भिरित्यादौ एकत्वसंख्याया एवान्वय. न तु द्वित्वादेरित्यादि यथानुभवं यथाकरञ्च विवेक्तव्यम् ॥

कर्त्तरि शप् ॥ कर्तृवाचिनि सार्वधातुके परे धातो. शप् स्यात् । पकार स्वरार्थः । ङित्त्वप्रतिषेधार्थश्च । शकारः सार्वधातुकार्थः । शप्श्यनोरित्यादौ विशेषणार्थश्च । पचति पठति । कर्तृग्रहण कर्मवत्कर्मणेत्यत्रोपयोक्ष्यते । इह तु सार्वधातुके शप् भवतीति सामान्यविधानेपि न क्षतिः । भावकर्मणोर्यगादेरपवादत्वात् । कर्त्रर्येव शप पर्यवसानात् । न च यग्विधौ भावकर्मग्रहणं नानुवर्ततइति वाच्यम् । पचतीत्यादौ शबादिनेव निमित्तत्वेनाश्रित्य यकः प्रसङ्गात् ॥

दिवादिभ्यः श्यन् ॥ शपोपवाद. । दीव्यति । सीव्यति । मृग अन्वेषणइति चुरादावदन्तेष्वात्मनेपदी पठ्यते । तस्य, पयःपारावार परमपुरुषोयं मृगयते इत्यादि भवति । दिवादिष्वपि पाठात् मृग्यतीति साधु । कण्ड्वादिषु वा मृगशब्दो द्रष्टव्य इति हरदत्तादयः ॥

वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलष ॥ एभ्यः श्यन् वा । टुभ्राशृ टुभ्लाशृ दीप्तौ । भ्रमु अनवस्थाने, भ्रमु चलने द्वयोरपि ग्रहणम् । क्रमु पादविक्षेपे । क्लमु ग्लानौ । त्रसी उद्वे

गे । त्रुटी छेदने । लष कान्तौ । इह अनवस्थानार्थो भ्रमिः क्लमित्रसी च दिवादयः । त्रुटिस्तौदादिकः । इतरे भौवादिकाः । अत उभयत्रविभाषेयम् । भ्राश्यते । भ्राशते । भ्लाश्यते । भ्लाशते । भ्राम्यति । भ्रमति । दैवादिकस्य भ्रमेः शमामष्टानां दीर्घ. श्यनीति श्यनि दीर्घः । भौवादिकस्य तु न भवति । अशमादित्वात् । क्राम्यति । क्रामति । क्रमः परस्मैपदेष्विति दीर्घः । अयञ्च शितीत्यनुवृत्तेः शपि श्यनि च भवति । कौमुद्यान्तु क्रमो दीर्घः स्याच्छपीति व्याख्याय श्यनि ह्रस्व एवोदाहृतः । तदशुद्धमेव । क्लाम्यति । क्लामति । ष्ठिवुक्लमुचमांशितीति दीर्घ. । क्लमेर्दिवादिपाठ. पुषादिकार्यार्थः । कौमुद्यान्तु भौवादिकस्य तु क्लमतीत्युक्तं तदपाणिनीयमेव । त्रस्यति । त्रसति । त्रसेर्दिवादिपाठे फलं चिन्त्यमिति हरदत्तः । त्रुट्यति । त्रुटति । लष्यति । लषति ॥

यसोऽनुपसर्गात् ॥ अनुपसर्गाद्यसेः श्यन् वा स्यात् । यस्यति । यसति । अनुपसर्गात्किम् । आयस्यति । प्रयस्यति । इह नित्यं श्यन् । यसु प्रयत्न इत्यस्य दैवादिकत्वात् ॥

संयसश्च ॥ सम्पूर्वाद्यसे. श्यन्वा । संयस्यति । संयसति । इह यसः संयसश्चेत्येव वक्तुं युक्तम् । सोपसर्गाच्चेत् संयस एव न तु प्रयसादेरिति नियमेनेष्टसिद्धेः ॥

स्वादिभ्यः श्नुः ॥ स्पष्टम् । सुनोति । षिञ् बन्धन इत्यस्य स्वादौ क्र्यादौ च पाठात् सिनोति सिनातीत्युभयं भवति ॥

श्रुवः शृ च ॥ श्रुवः श्नुः प्रत्ययः स्यात्तत्संनियोगेन शृ इत्ययमादेशश्च । शृणोति । शृणुतः । शृण्वन्ति ॥

अक्षोऽन्यतरस्याम् ॥ अक्षू व्याप्तौ भौवादिकः । अस्मात् श्नुर्वा स्यात् । अक्ष्णोति । अक्षति ॥

तनूकरणे तक्षः ॥ श्नुर्वा स्यात्। काष्ठं तक्ष्णोति। तक्षति वा। तनूकरणे किम्। संतक्षति। वाग्भिर्भर्त्सयतीत्यर्थः॥

तुदादिभ्यः शः॥ तुदति। नुदति। तुद् ति नुद् ति इति स्थिते परत्वात्प्राप्तं गुणं नित्यत्वाच्छो बाधते॥

रुधादिभ्यः श्नम्॥ एभ्यः श्नम् प्रत्ययः स्यात्। मित्त्वादन्त्यादचः परः। तक्रकौण्डिन्यन्यायेनायं शपं बाधते। शकारः श्नान्नलोप इति विशेषणार्थः। नान्नलोप इत्युच्यमाने यज्ञानां यत्नानामित्यत्रापि स्यात्। न च नामीति दीर्घत्वे कृते नादितिव्यपदेशाभावान्न भविष्यतीति वाच्यम्। एकदेशविकृतस्यानन्यत्वेन सत्यपि दीर्घे नादिति व्यपदेशसम्भवात्। किञ्च परत्वाल्लोपेनैव भाव्यम्। न च ततोपि परत्वात्सुपिचेति दीर्घोस्त्विति वाच्यम्। सन्निपातपरिभाषया तस्य नाप्रवृत्तेः। न चैवं रामाणामित्यादौ नामीति दीर्घोपि न स्यादेवेति वाच्यम्। आरम्भसामर्थ्यान्नामीति दीर्घे कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तेः। सुपिचेति दीर्घस्तु रामाभ्यामित्यादौ चरितार्थः सन्निपातपरिभाषां बाधितुं नेष्टे। यत्तु हरदत्तेनोक्तं कष्टायेतिनिर्देशात्सामान्यापेक्षज्ञापकाद्दीर्घो भविष्यति। एवमपि तस्य पूर्वस्माद्विधौ स्थानिवत्त्वात्तच्छब्द एवायमिति नलोपः स्यादेवेति। तच्चिन्त्यम्। सामान्यापेक्षेण हि ज्ञापकेन परिभाषायाः क्वाचित्की अप्रवृत्तिरिति लक्ष्यानुरोधात्सिध्यतु नाम, औत्सर्गिकी तत्प्रवृत्तिः किमर्थमिह त्याज्या। यत्नानामित्यादिलक्ष्यसिद्ध्यर्थमेवेति चेन्न। सत्यपि दीर्घे लक्ष्य न सिध्यतीति समनन्तरमेवोक्तत्वात् स्वयमपि लक्ष्यासिद्धेर्वक्ष्यमाणत्वाच्च। किञ्च पूर्वस्माद्विधाविति अतिस्थवीयः। तस्य हि पूर्वस्मान्निमित्तत्वेनाश्रितादित्यर्थ स्थितः। यच्चेह्नानादिष्टादचः पूर्व नकारव्यञ्जनमात्रं

न तन्निमित्तत्वेनाश्रितम्, यच्च निमित्तं नकाराकारसंघातः नासावनादिष्टादचः पूर्व इति यत्किञ्चिदेतत् । तस्मात्प्रागुक्तविधया एकदेशविकृतस्यानन्यत्वात्प्राप्तिः । दीर्घात्प्रागेव वेति विशेषणार्थः शकारः । न चैवमपि विश्नानां प्रश्नानामित्यत्रातिप्रसङ्गः । अनर्थकत्वात् । न च विकरणेष्वेवमेवेति वाच्यम् । एकदेशिमते तस्य वाचकत्वात् । मुख्यमतेपि द्योत्येनार्थेनार्थवत्त्वात् । अत एव प्रत्ययसंज्ञाया अन्वर्थत्वेपि श्नामि तत्प्रवृत्तौ लशक्वतद्धिते इति शस्येत्संज्ञा सिध्यति । किञ्च लक्षणप्रतिपदोक्तपरिभाषयापि विश्नानामित्यादौ नातिप्रसङ्गः । तस्मात् श्नान्नलोप इति विशेषणार्थः श्नमः शकार इति स्थितम् । न चार्धधातुकसंज्ञानिवृत्त्यर्थोपि सोस्तु । सत्यां हि तस्यां अनक्ति भनक्ति, अतोलोपः स्यात् । रुणद्धि भिनत्ति, गुणः स्यात् । हिनस्ति तृणेढि, इडागमः स्यात् । नेड्वशीति तु नेह प्रवर्त्तते अकृत्त्वादिति चेन्न । सत्यप्यार्द्धधातुकत्वे क्षत्यभावात् । न च लोपो गुण इड् वेति त्रितयं स्यादित्युक्तमिति चेन्न । त्रितयस्याप्यागमत्वात् श्नमः पूर्वभागस्य चानङ्गत्वात् । तथाहि । यस्मात्प्रत्ययविधिरित्यस्यायमर्थः । प्रत्यये विधीयमाने यत्पञ्चम्या निर्दिष्टं धातोः प्रातिपदिकादित्यादि तदादि तस्मिन्परतोङ्गमिति । इह तु यत्पञ्चमीनिर्दिष्टं रुधादिभ्यो धातुभ्य इति न तस्मात् प्रत्ययः परः यस्माच्च पूर्वभागात्प्रत्ययः परः नासौ तस्मिन्विधीयमाने पञ्चम्या निर्दिष्ट इति दिक् । रुणद्धि । भिनत्ति ॥

तनादिकृञ्भ्य उः ॥ तनादिभ्यः कृञश्च उप्रत्ययः स्यात् । तनोति । करोति । कृञ्ग्रहणं भाष्ये प्रत्याख्यातम् । तनादित्वादेव सिद्धेः । ननु तनादिकार्यापेक्षनियमार्थं तदस्तु । तेन

तनादिभ्यस्तथासोरिति वैकल्पिकस्य सिजलुको ऽप्रवृत्तौ अकृत अकृथा इत्यत्र द्वैरूप्यं न भवतीति चेत् । मैवम् । सत्यपि लुग्विकल्पे तदभावे ह्रस्वादङ्गादिति लोपेनेष्टसिद्धेः । न च विकल्पेन नित्यस्य बाधः । विकल्पं प्रति नित्यस्यासिद्धत्वात् । न च तनादिपाठसामर्थ्यादपवादो वचनप्रामाण्यादिति न्यायेनासिद्धत्वबाधनाद्विकल्पेन नित्यस्य बाधः । तनादिपाठस्य विकरणविधौ चरितार्थत्वात् । विकल्पोपप्लतया इत्यादौ चरितार्थः । प्रत्युत क्रियमाणे कृञ्ग्रहणे तनादिषु कृञः पाठस्य अन्यार्थत्वात् । येननाप्राप्तिन्यायेन विकल्पो नित्यविधिं बाधेत । कृञ्ग्रहणन्तु विकरणविधौ तनादिषु पाठश्चरितार्थो मा भूदित्येवमर्थं स्यात् । तस्मात्कृञ्ग्रहणपरित्याग एवोचितः ॥

धिन्विकृण्व्योर च ॥ धिवि प्रीणने । कृवि हिंसाकरणयोः, अनयोरकारोन्तादेशः स्यादुप्रत्ययश्च । शपोपवादः । अतोलोपः । तस्य स्थानिवद्भावाल्लघूपधगुणो न । धिनोति । कृणोति । नुमनुषक्तयोर्ग्रहणं नुम्विधिरुपदेशावस्थायामेव प्रवर्त्तनइति ज्ञापनार्थम् । तेन नुम्विधावुपदेशिवद्वचनं मन्ययासिद्धयर्थमिति वचनं न कर्तव्यं भवति । सिचस्तासेश्चेकार उच्चारणार्थ इति पक्षे नुम्विधौ धातुग्रहणमपि न कर्तव्यं भवति । तज्ज्ञाप्यस्यानेनैव ज्ञापनात् ॥

क्र्यादिभ्यः श्ना ॥ स्पष्टम् । क्रीणाति । प्रीणाति ॥

स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यश्नुश्च ॥ आद्याश्चत्वारः सौत्राः । स्कुञ् आप्रवणे । एभ्यः श्ना स्यात् श्नुश्च । स्तभ्नाति स्तभ्नोति । हौ शानच् । स्तभान । स्तभ्नुहि । स्तुभ्नाति । स्तुभ्नोति । स्कभ्नाति । स्कभ्नोति । स्कभ्नोति । स्कुभ्नोति । स्कुनाति । स्कुनीते । उदित्करणसामर्थ्यात्सौत्राणामपि धातूनां

सर्वार्थत्वं न त्वेतद्विकरणमात्रविषयत्वम् ॥

हल श्नः शानज्झौ ॥ हल परस्य श्नाप्रत्ययस्य शानच् स्याद्धौ परे । पुषाण । मुषाण । लोट् । सिप् तस्य हि । क्र्यादिभ्य श्ना । तस्य शानच् । चित्त्वादन्तोदात्तः । सन्निपातपरिभाषाया अनित्यत्वाद्धेर्लुक् । हल किम् । क्रीणीहि । हौ किम् । पुष्णाति । श्न इति स्थानिनिर्देश आदेशत्वलाभाय । इतरथा हि प्रत्ययान्तरमेवेदं स्यात् । ननु तथैवास्तु को दोष इति चेन्न । पच पठेत्यादावपि शपं बाधित्वा शानच्प्रसङ्गात् । न च क्र्यादिभ्य इति अनुवर्त्ततइति वाच्यम् । स्तभान स्तुभानेत्यादिचतुर्णामसिद्ध्यापत्ते । न च स्तम्भ्वादयोप्यनुवर्तयितु शक्याः । विशेषविहितेन शानचा इव श्न इव श्नोरपि बाधे स्तभ्नुहीत्यादेरसिद्धिप्रसङ्गात् । न च श्नुश्चेत्यप्यनुवर्त्यम् । क्र्यादेरपि श्नुप्रसङ्गात् । न च स्तम्भ्वादिभ्य एव श्नु शानच् तु तेभ्यः क्र्यादिभ्यश्चेत्यत्र प्रमाणमस्ति । तस्माद्यथान्यासमेवास्तु । शानचः शित्करणे प्रयोजनं चिन्त्यम् । स्थानिवद्भावेनैव सिद्धेरिति हरदत्त । अत्रेयं चिन्ता । अनुबन्धकार्येति क्व चिदनल्विधाविति निषधः प्रवर्त्ततइति ज्ञापनार्थमिदम् । तेन वार्त्तिकमते ब्रूतादित्यत्र ईण्न, भष्यमते तु भविषीष्टेत्यत्र ङित्त्व नित्य न भवति । एतच्च क्ङितिचेति सूत्रे स्फुटीकृतमस्माभिः ॥

छन्दसि शायजपि ॥ अपिशब्दाच्छानच् हौ अहौ च । गृभाय जिह्वया मधु । बधान देवसवितः । हृग्रहोर्भश्छन्दसीति गृह्णातेर्हकारस्य भकार । अनिदितामिति बध्नातेर्नलोपः । यो अस्कभायदुत्तरम् । अस्कभ्नादित्यर्थः ॥

व्यत्ययो बहुलम् ॥ विकरणा प्रत्यान्ताः तेषां छन्दसि बहुल व्यत्ययः स्यात् । व्यतिगमनं व्यत्यय । व्यतिपूर्वादिणो

भावे एरच्। क्वचिदन्योन्यविषयावगाहनम्। क्व चित् द्वौ विकरणौ। क्वचित् त्रय। आण्डाशुष्णस्य भेदति। शुष्णास्याण्डानि भेदति। भिनत्तीति प्राप्ते। न ह्यस्या अपरञ्च न जरसामरते पति। म्रियतइति प्राप्ते। जीवचामरवासाधो व्याधमाजीवपामर इत्यपि पुगगादौ छान्दसदर्शनात्समाधेयम्। इन्द्रो वस्तेन नेषतु। नयतेर्लोटि तिपि शप्सिपौ द्वौ विकरणौ। इन्द्रेण युजा तरुषेम वृत्रम्। तरेमेत्यर्थः। तरतेर्विध्यादौ लिङ् मस्। उः सिप् शप् इति त्रयो विकरणा। धातोर्गुण। तरुष् मस् इति स्थिते नित्यङ्डित इति सलोपः। यासुट् अतोयेयः यलोप। आद्गुण। बहुलग्रहण सर्वविधिव्यभिचारार्थम्। तथा च भाष्यम्। सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिद्ध्यति बाहुलकेन ॥ सुपां व्यत्ययः, युक्तामातासीद्धुरि दक्षिणाया। दक्षिणस्यामिति प्राप्ते। तिङां, चपाल ये अश्वयूपाय तक्षति। तक्षन्तीति प्राप्ते। लादेशव्यंग्यः क्रियासाधनविशेषरूपः स्वार्थपरार्थत्वादिरुपग्रहशब्दस्य वाच्यः। यथोक्तम्। य आत्मनेपदाद्भेद क्वचिदर्थस्य गम्यते। अन्यतश्चापि लादेशान् मन्यन्ते तमुपग्रहमिति ॥ आत्मनेपदादिति लादेशादिति च हेतौ पञ्चमी। इह तु तन्मतीतिनिमित्ते परस्मैपदे आत्मनेपदे च उपग्रहशब्दो लक्षणया वर्तते। ब्रह्मचारिणमिच्छते। इच्छतीति प्राप्ते। प्रतीपमन्यऊर्मिर्युध्यति। युध्यतइति प्राप्ते। मधोस्तृप्ता इवासते। मधुन इति प्राप्ते। भाषायान्तु यद्यप्यर्द्धर्चादित्वादुभयलिङ्गो मधुशब्दोस्ति तथापि अर्थविशेषएव तथा। मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः। अर्द्धर्चादिगणे पाठात् पुन्नपुंसकयोर्मधुरिति शाश्वतकोशात् ॥ अमृते तु नपुसक एव। अत एव व्यत्ययोदाहरणं दत्तम्।

प्रायस्तु, सरसमकरन्दनिर्भरासु प्रसवविभूतिषु वीरुधां विरक्तः । ध्रुवममृतपनामवाञ्छयासामधरमधुं मधुपस्तवाजिहीते इत्यत्रामृतवाचकमधुशब्दं पुंल्लिङ्गं प्रयुञ्जानश्चिन्त्यः । शाश्वतकोशात् । नरः पुरुषः । आधासवीरैर्दशभिर्वियूयाः । वियूयादिति प्राप्ते । यु मिश्रणे विपूर्वः, आशिषि लिङ् । कालवाची प्रत्ययः कालः । श्वोग्नीनाधास्यमानेन । लुटो विषये लट् । हल् । त्रिष्टुभौजःशुफितमुग्रवीरम् । शुभ शुम्भ शोभार्थे, सकारस्य फकार आश्वलायनसूत्रे । तैत्तिरीये भकार एव पठ्यतइति हरदत्तः । वस्तुतस्तु आश्वलायनसूत्रेपि भकार एव पठ्यते । हल्व्यत्ययोदाहरणन्तु सुहितमिति प्राप्तइति भाष्यानुरोधेन स्पष्टम् । अच् । उपगायन्तु मां पत्नयो गर्भिण्यः । दीर्घस्य ह्रस्वः । स्वरव्यत्ययः पराद्विश्छन्दसिबहुलमित्यत्र वक्ष्यते । कर्तृशब्दः कारकमात्रस्योपलक्षणं तद्वाचिनीनां विभक्तीनां व्यत्यय इति हरदत्तः । एवन्तु सुप्तिङ् इत्येव गतार्थता स्यात्, तस्मात्कारकवाचिनां कृत्तद्धितादीनामपि व्यत्यय उदाहार्यः । तथा च कर्मण्यण्सूत्रे भाष्यम् । अत्रादायेति च कृतां व्यत्ययश्छन्दसीति । तच्च तत्रैव स्फुटीकरिष्यामः । यार्डीति प्रत्याहारः यको यशब्दादारभ्य लिङ्याशिष्यङिति ङकारेण तेषां व्यत्ययः प्रागेवोदाहृतः । एवं सुप्तिङ्प्रभृतीनां व्यत्ययं शास्त्रकृत्पाणिनिरिच्छति । स च बाहुलकेन सिध्यति । बहूनर्थान् लात्यादत्तइति बहुलं तस्य भावो बाहुलकम् । मनोज्ञादित्वाद्वुञ् ॥

लिङ्याशिष्यङ् ॥ छन्दसि धातोरङ् प्रत्ययः स्यात् आशिषि लिङि परे । स्थागागमिवचिविदिशकिरुहिष्वेवायमङ्भागेण दृश्यते । उपस्थेयं दृषमन्तुग्रियाणाम् । उपपूर्वात्तिष्ठतेराशिषि लिङ् मिपोम् । यासुट् । छन्दस्युभयथेति सार्वधातुकसंज्ञया अपि

सत्वात् लिङःसलोपोनन्त्यस्येति सलोपः । अङि आतो लोपः । अतो येयः । सत्यमुपगेयम् । गमेम जानतो गृहान् । मन्त्रं वोचेमाग्नये । वचउम् । विदेयमेनां मनसि प्रविष्टाम् । व्रतं चरिष्यामि तच्छकेयम् । अस्रवन्तीमारुहेमास्वस्तये । दृशेरग्वक्तव्यः ॥ पितरञ्च दृशेयं मातरञ्च । अङि तु सति ऋदृशोऽङीति गुणः स्यात् । अथ कथं उपस्थेयाम शरणं वृहन्तेति । स्थेमेति हि प्राप्नोति । अत्र भाष्ये, सार्वधातुकत्वाल्लिङः सलोप आर्द्धधातुकत्वादेत्वमिति, एर्लिङीतिसूत्रेणेतिभावः । अङ् चात्र न कार्यः । बाहुलकात् ॥

इति श्रीशब्दकौस्तुभे तृतीयस्य प्रथमे चतुर्थमान्हिकम् ॥

कर्मवत्कर्मणा तुल्यक्रियः ॥ कर्मशब्देन स्वनिष्ठा क्रिया लक्ष्यते । कर्मस्थया क्रियया तुल्यक्रियो लकारवाच्यः कर्त्ता कर्मवत् स्यात् । व्यत्ययो बहुलं लिङ्याशिष्यङिति द्विलकारको निर्देशः । लुप्तनिर्दिष्टो वा लकारः । लोपस्तु संयोगान्तस्येति हलोयमामिति वा । तत्र लग्रहणमिहानुवृत्तं षष्ठ्या विपरिणम्यते । लुप्तषष्ठीकं वा, षष्ठ्यर्थश्च वाच्यत्वम् । कर्त्तरि शबितिसूत्रात्कर्तृग्रहणमनुवृत्तं प्रथमया विपारिणम्यते । तेनाभिमतार्थलाभः । यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनम् । भिद्यते काष्ठं स्वयमेव । अभेदि काष्ठं स्वयमेव । कारिष्यते कटः स्वयमेव । आत्मनेपदस्य त्रीण्यपि इमान्युदाहरणानि । यक्चिण्चिण्वद्भावानां तु क्रमेणेति विवेकः । निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम् । निवर्त्तमाने कर्मत्वे स्वे कर्तृत्वेवतिष्ठते ॥ अस्याञ्चावस्थायामकर्मकत्वात् कर्त्तरि भावे च लकाराः । तत्र यदा कर्तरि तदा शुद्धे कर्त्तरीव रूपेषु प्राप्तेषु पूर्वावस्थायां भिदेः कर्मीभूते काष्ठे यादृशी क्रिया द्विधा भवनरूपा करोतेः कर्मणि च कटे उत्पत्तिरूपा । तया तुल्यक्रियोयं भिदिकृञोः कर्त्ता

लकारवाच्यश्चेत्यतिदेशाद्यगादिचतुष्टयमप्राप्तिः। यथा निवृत्तप्रेषणस्याकर्मकत्वं यथा च क्रियायाः क चित्कर्मस्थत्वं क्व चिन्न तथा णेरणाविति सूत्रे व्युत्पादितम्। कर्मणेति किम्। करणाधिकरणाभ्यां तुल्यक्रिये मा भूत्। साध्वसिश्छिनत्ति। साधु स्थाली पचति। नन्विह करणाधिकरणत्वावस्थायामसिस्थाल्योर्व्यापारो वस्तुतः सन्नपि धातुना नोपादीयतइति चेत्। किं ततः। नह्यस्मिन् सूत्रे सादृश्यप्रतियोगिभूतायाः क्रियाया धातूपात्तत्वं शब्देनाश्रितं येन कर्मग्रहणं विनाप्यतिप्रसङ्गो न भवेत्। किञ्च कर्तृस्थाक्रिया अप्यस्यैव व्यावर्त्याः। गच्छति ग्रामः स्वयमेव। आरोहति हस्ती स्वयमेवेति। अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधातीत्यादि। नन्वेवं करोत्यर्थस्य यत्नस्यापि ज्ञानेच्छादिवत्कर्तृस्थत्वात् कारिष्यते कटः स्वयमेवेति कथमुदाहृतमिति चेन्न। करोतेरुत्पादनार्थत्वस्य प्रागेव वर्णितत्वात्। लकारवाच्यः किम्। भावे लकारोत्पत्तौ मा भूत्। भिद्यते कुसूलेन। इह सत्यतिदेशे कुसूलाद् द्वितीया स्यात्। किञ्च लकारवाच्यत्वविशेषणाभावे कृत्याः खलर्थाश्च अस्मिन् कर्तरि स्युः। भेत्तव्यः कुसूलः स्वयमेवेति। ईषद्भेदः कुसूलः स्वयमेवेति। इष्यते तु भावएव, भेत्तव्यं कुसूलेन कुसूलस्य वा। कृत्यानां कर्त्तरिवेति वा षष्ठी। ईषद्भेदं कुसूलेन। यत्त्विह वार्त्तिके कृत्यक्तखलर्थेषु प्रतिषेध इत्युक्तम्। तत्र क्तग्रहणमविवक्षितम्। अन्यत्र सह पाठादिह पठितम्। भवत्येव हि एभ्यो ऽकर्मकत्वात् गत्यर्थाकर्मकेति सूत्रेण कर्त्तरि क्तः। तथा च सिनोतेर्ग्रासकर्मकर्तृकस्येति निष्ठानत्वे सिनो ग्रासः स्वयमेवेति कर्तरि क्त उदाहरिष्यते। अन्ये त्वाहुः। क्तग्रहणं विवक्षितमेव। गवा दुग्धं पय इत्युदाहरणसम्भवात्। अत्र हि गोः कर्मकर्तृत्वात् तत्र कर्मवदतिदेशे सति क्तः

स्यात् । नह्यत्र सिद्धान्ते गत्यर्थाकर्मकेत्येनत्प्रवर्त्तने पयोरूपेण कर्मणा सकर्मकत्वात् । न चैवं सकर्मकत्वादेव कर्मवदित्यतिदेशो न भविष्यतीति वाच्यम् । दुहिपच्योर्बहुलं सकर्मकयोरिति प्रतिप्रसवात् । न च बहुलग्रहणादेव प्रवृत्तिः । तस्य भाष्ये प्रत्याख्यातत्वादिति दिक् । वतिग्रहणन्तु शक्यमकर्तुम् । तथाहि । लकारवाच्यस्य कर्तुः कर्मसंज्ञैवास्तु । न च कर्मसंज्ञया कर्तृसंज्ञाया बाधः । एकसंज्ञाधिकारादन्यत्र संज्ञानां समावेशात् । न चैवं सकर्मकत्वाभावे लो न स्यादिति वाच्यम् । आनुपूर्व्या सिद्धत्वात् । कर्मसंज्ञा हि लकारोत्पत्तिं प्रतीक्षते । लकारवाच्यस्यैव कर्तुस्तद्विधानात् । ततः प्राक् चाकर्मकत्वानपायेन भावेचाकर्मकेभ्य इति भावे कर्तरि च लविधेरप्रत्यूहत्वात् । नन्वेवमपि यगात्मनेपदे न स्यातां शुद्धयोः कर्मकर्त्रोः सावकाशयोर्यक्शपोः परत्वात् शप्प्रसङ्गात् । भावकर्मणोरित्यात्मनेपदस्य शेषात्कर्तरीति परस्मैपदस्य च विप्रतिषेधेन परत्वात्परस्मैपदमसङ्गाच्चेति चेन्न । भावकर्मणोर्विहितेन यका अपवादभूतेन आक्रान्तविषयं परिहृत्य सार्वधातुकेशबिति उत्सर्गस्य प्रवृत्तिसम्भवात् । कर्त्तरिशबिति सूत्रे कर्तृग्रहणमतिरिच्यते । तस्यैतत्फलं कर्तैव यः कर्ता तत्र शबादयो यथा स्युः कर्मकर्त्तरि मा भूवन्निति । नन्वस्मिन् हरदत्तपक्षे नदुहेत्यादिना यकि निषिद्धे शप् न स्यात् । तथा च लिङ्लिटोरिव निर्विकरणप्रयोगापत्तिरिति चेत् । एवं तर्हि कर्त्तरीति योगो विभज्यते । भावकर्मणोरित्यत्रापि भावे कर्मणि चेति । ततः कर्मणीत्यनुवर्त्य कर्मणि कर्त्तरि यक् भवति शपोऽपवादः । नदुहेत्यादौ अपवादाभावात्पुनरुत्सर्गस्य स्थितिः । एतच्च व्याख्यानं यग्विधावेव भाष्ये स्थितम् । एवन्तावद्यक् सिद्धः । नदुहस्नुनमामिति लिङ्गाच्च । तथा कर्त्तरि कर्मत्वात्

कर्त्तरीत्यनुवर्त्य कर्तव य कर्त्ता तत्र परस्मैपदं न तु कर्मकर्त्तरीति व्याख्यानादात्मनेपदम् । तस्माद्वत्करणे त्यक्तेपि सर्वमिष्टं सिद्ध्यतीति स्थितम् । क्रियमाणे तु वत्करणे अतिदेशोयमिति स्पष्टमेव । स च षोढा । रूपनिमित्ततादात्म्यव्यपदेशशास्त्रकार्यातिदेशभेदादिति स्थानिवत्सूत्रे व्युत्पादितम् । इह तु आदितस्त्रयाणामसम्भवः । व्यपदेशातिदेशस्तु संज्ञापक्षान्न भिद्यते । तत्र वत्करणं व्यर्थम् अतो द्वावेव शिष्येते । तत्रापि शास्त्रातिदेशे यगात्मनेपदेसिद्ध्यर्थं पूर्वोक्तयत्न आस्थेय इति क्लिष्टता । प्रधानं च कार्य, तदर्थत्वादतिदेशान्तराणाम् । अतः कार्यातिदेश एवायम् । न चास्मिन्पक्षे द्वितीयाप्यतिदिश्येत । तथा च भिद्यते कुसूलेनेति भावे लकारे कर्तरि द्वितीया स्यादिति वाच्यम् । लवाच्यस्यैव कर्तुः कर्मवदतिदेश इत्युक्तत्वात् । न चैवमपि भिद्यते कुसूल इत्यत्र दोषापात्ति । अभिहितत्वेन द्वितीयाया अप्रवृत्तेः । नन्विह अनभिहिताधिकारो नास्तीति चेत् । सत्यम् । तथापि वत्करणसामर्थ्यात् यथानभिहिते कर्मणि प्रत्ययः तथैवानभिहिते कर्तर्यपि लभ्येत । तेनाभिधानमस्तीत्युक्तमेव । ननु निवृत्तप्रेषणा लुनातिभिनत्त्यादयो ऽकर्मकाः द्विधा भवतीतिव ॥ तत्कर्तुः कर्मणा तुल्यक्रियत्वम् इति चेन्न । नह्यस्मिन्प्रयोगे यत्कर्म तेन तुल्यक्रियतां ब्रूमः किं तर्हि प्रयोगान्तरे यत्कर्म तेन । नन्वेवं पचत्योदनं देवदत्त राध्यत्योदनः स्वयमेवेत्यादावतिप्रसङ्ग इति चेत् । अत्र वार्तिकम् । कर्मदृष्टश्चेत्समानधाताविति ॥ न्यायसिद्धं चेदं, धातोरिति ह्यनुवर्तते कर्तृकर्मणी च धातोरन्यत्र न सम्भवत इति सामर्थ्यादेव सिद्धे तदनुवृत्तिरेकत्वविवक्षार्था । यस्मिन्नेव धातौ यत्कर्म तेन तुल्यक्रियस्तस्यैव कर्तेति । तेन धातुभेदे न भवति । स्यादेतत् । एकस्यापि रूपभेदे-

न कर्तृत्व कर्मत्वं च दृश्यते । आत्मानमात्मना वेत्सीति यथा । एवं च ओदनः पच्यतइत्यादावपि प्राकृते कर्मण्येव लकारोस्तु तत्किं निवृत्तप्रेषणत्वाश्रयणेन, किञ्च कर्मवदित्यतिदेशेन । न चैवं भिद्यते कुसूलेनेति भावे लो न स्यादिति वाच्यम् । इष्टापत्तेः । कर्मण्येव हि सोस्तु । अत्राहु । एवं सति नदुहस्नुनमामित्यादिना यक्चिणोः प्रतिषेधस्य विषयविभागो न लभ्येत । अपि च नमते दण्डः कारयते अचीकरत कट इत्यादौ यक्चिणो प्रतिषिद्धयोरपि शप्चङौ न स्याताम् । अकर्तृत्वात् । किं च पचत्योदन इत्यपि प्रयोगः प्रसज्येत । तस्मान्निवृत्तप्रेषणतामाश्रित्यातिदेशसूत्रमारब्धव्यमेवेति । करणेन तुल्यक्रियः कर्त्ता बहुलं कर्मवदिति वक्तव्यम् । परिवारयति कण्टकैर्वृक्षम् । परिवार्यन्ते कण्टका वृक्षम् । अत्रात्मनेपदं सिध्यति । न च णिचश्चेत्यनेन तत्सिद्धि । क्रियाफलस्य कर्तृगामित्वे सत्येव तत्प्रवृत्तेः । इह तु तदभावेप्यात्मनेपदस्येष्यमाणत्वात् । बहुलग्रहणान्नेह । साध्वसिश्छिनत्ति । सकर्मकाणां प्रतिषेधो वक्तव्यः ॥ अन्योन्यमाश्लिष्यतः । अन्योन्य स्पृशतः । एतच्च न्यायसिद्धम् । तथाहि । कर्मस्थया क्रियया या तुल्या क्रिया यस्य कर्तुरित्युक्ते सन्निधानादिदं गम्यते । यत्क्रियावेशादसौ कर्ता सैव चेत्कर्मत्वोपयोगिनीति । न चैतदिहास्ति । स्वयमनाश्लिष्यतोपि परेणाश्लिष्यमाणस्य कर्मत्वसम्भवात् । परसमवेतसंयोगाख्यफलानुकूलव्यापारयोश्चलनात्मकयोरेकधातूपात्तयोरपि स्वरूपेणात्र भेदात् । एतेन भिद्यमानः कुसूल पात्राणि भिनत्तीत्यपि व्याख्यातम् । द्विधाभवनस्य दैवगत्या कुसूलनिष्ठत्वेपि पात्रनिष्ठकर्मतायामप्रयोजकत्वात् । स्वयमभिद्यमानोपि हि कुसूलः उपरि पतन् पात्राणि भिनत्त्येव । नन्वेवमपि पचिरुधादीनां

द्विकर्मकाणामेकस्य कर्मणः कर्तृत्वेऽप्यपरेण सकर्मकत्वावस्थायां कर्मवद्भावे प्राप्ते तन्निषेद्धुं सकर्मकाणां प्रतिषेधवचनं कर्तव्यमेवेति चेत् । योगविभागात्सिद्धम् । तथाहि । तपः । तपेरेव सकर्मकस्य न त्वन्यस्य । ततः, तप कर्मकस्यैव । तपेरित्यनुवर्तते । यद्वा वार्तिके योगविभागः करिष्यते दुहिपच्योर्बहुलं सकर्मकयोः । अत्र दुहिपच्योः सकर्मयोरित्येकं वाक्यं नियमार्थं दुहिपच्योरेव न त्वन्येषामिति । दुग्धे गौः पयः । तस्मादुदुम्बरः सलोहितं फलं पच्यते । गौरुदुम्बरश्चात्र कर्मकर्ता । अकथितं चेति सूत्रे दुह्यादिपरिगणेन पचिरपि बोध्य इत्युक्तं प्राक् । तत्रेदं वार्तिकमुपष्टम्भकमित्यवधेयम् । ओदनं पच्यतीत्यादावतिप्रसङ्गनिवारणाय बहुलमिति द्वितीयं वाक्यम् । तच्च प्रत्याख्यातं भाष्ये । दुहिपच्योरिति हि कर्मकर्तृविषयकम् । कर्मस्थया क्रियया तुल्यक्रियएव विधायकं नियामकं वा । उभयथापि ओदनंपचतीत्यादौ प्रसङ्ग एव नास्तीति । न च कर्मकर्तर्येव परस्मैपदार्थं बहुलवचनं, तस्यानिष्टत्वादिति दिक् । सृजियुज्योः श्यंस्तु ॥ अनयोः सकर्मकयोः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम् । यगपवादश्च श्यन् । सृजेः श्रद्धोपपन्ने कर्तर्येवेति वक्तव्यम् । सृज्यते स्रजं भक्तः । श्रद्धया निष्पादयतीत्यर्थः । असर्जि, श्रद्धया निष्पादितवान् । युज्यते ब्रह्मचारी योगम् । श्यनि सति प्रकृतेराद्युदात्तत्वं भवति । यकि तु लसार्वधातुकानुदात्तत्वे यक एवोदात्तत्वं स्यात् । कौमुद्यां तु श्रद्धावत्कर्तृकात् सृजेर्यक्चिणौ कर्तरीति केचिदित्युक्तम् । तत्र यगित्यशुद्धम् । आत्मनेपदानुक्तेश्च न्यूनतेति दिक् । भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात् ॥ भूषावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ न भवत इति वक्तव्यमित्यर्थः । अलं

कुरुते कन्या स्वयमेव । अलमकृत । भूषाफलस्य शोभाख्यस्य कर्मणि दर्शनात् कर्मस्था भूषा। ण्यन्तानां तु भूषार्थानां वक्ष्यमाणेनापि यक्चिणोः प्रतिषेधेन सिद्धत्वान्नेह मुख्योदाहरणता । भूषयते कन्या स्वयमेव । अबुभूषत कन्या स्वयमेव । किरादि । अवकिरते हस्ती स्वयमेव । अवाकीर्ष्ट हस्तिनं कश्चित् । पांस्वादिनावकिरति । तत्र सौकर्यात् हस्ती कर्तृत्वेन विवक्ष्यते । गिरते। अगीर्ष्ट। किरादिस्तुदाद्यन्तर्गण । सन् । चिकीर्षते कटः स्वयमेव । अचिकीर्षिष्ट । इहेच्छायाः कर्तृस्थत्वेपि करोतिक्रियापेक्षं कर्मस्थक्रियत्वम् ॥

तपस्तपःकर्मकस्यैव ॥ तप सन्तापे। अस्य कर्ता कर्मवत्स्यात्स च तपःकर्मकस्यैव नान्यकर्मकस्य। क्रियाभेदाद्विध्यर्थमेतदिति वृत्तिः। तथाहि। उपवासादीनि तपांसि तापसं तपन्ति दुःखयन्तीत्यर्थः । तथा च तापसस्य कर्मत्वे तपेर्दुःखनमर्थः । कर्तृत्वे तु अर्जनमर्थः । तापसस्तप्यते, तपोर्जयतीति यावत् । नन्वेवमपि शरीरसन्तापलक्षणक्रिया अवस्थाद्वयेपि तुल्या नहि शरीरसन्तापादन्यत् अर्जनं नाम तापसस्य व्यापारोस्ति । तथा च भाष्यसम्मतं नियमार्थत्वमेव वृत्तिकृता कुतो नादृतमिति चेत्।अत्राहुः। वस्तुतश्शरीरसन्तापस्य सत्वेपि शब्दान्न तत्त्वेन भानं किं त्वर्जनत्वेनैव। अन्यथा तपसः कर्मत्वानुपपत्तेः।तथाच तुल्यक्रियत्वाभावात् विध्यर्थतैवेति।लुङि, अतप्त तपस्तापसः।तपोनुतप्तेचेति चिण प्रतिषेधात्सिच् । तस्य झलोझलीति लोपः । तप कर्मकस्येति किम् । उत्तपति सुवर्णं सुवर्णकारः । एवकारस्तु व्यर्थ एव। श्रुतस्य तस्य अन्वयो वक्तव्य इति चेत् ।सत्यम् । वाक्यं भित्वा कथंचिदन्वयः प्रदर्शित एव ॥

न दुहस्नुनमां यक्चिणौ ॥ एषां यक्चिणौ न स्तः । कर्म-

वदतिदेशेन प्राप्तयोरयं निषेधः । अनन्तरस्येति न्यायात् । तेन शुद्धे कर्मणि भावे स्त एव । दुहेरनेन यक् निषिध्यते।चिण् तु दुहश्चेति सूत्रेण प्रागेव विभाषितः, दुग्धे गौः स्वयमेव।अदुग्ध, अदोहि गौः स्वयमेव।यकि प्रतिषिद्धे शप्। अदादित्वात्तस्य लुक्। दादेरिति घः। झषस्तथोरिति धत्वम् । जश्त्वम् । अप्रधाने दुहादीनामिति यस्मिन्कर्मणि लकारस्तस्य कर्तृत्वविवक्षा । प्रधानं कर्म तु कर्मैव । स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी।इतिवत् । चिणभावे क्सः । लुग्वादुहेति लुक् । प्रस्नुते । प्रास्नोष्ट । चिणि प्रतिषिद्धे सिच् । नमते दण्डः स्वयमेव । अनंस्त । अ-

स्वयमेव । आत्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदान्तर्भावितण्यर्थाः पुनश्च निवृत्तप्रेषणास्तदिहोदाहरणम् । तद्यथा । वेः शब्दकर्मणः, अकर्मकाच्च । विकुर्वते सैन्धवाः वल्गन्तीत्यर्थः । तान्विकिरोति, वल्गयतीत्यर्थः । पुनः सौकर्यात्कर्तृत्वे विकुर्वते सैन्धवाः स्वयमेव । व्यकुषत । यत्तु वृत्तौ पठ्यते आहन्ति माणवकम् । आहते माणवकः स्वयमेवेति । तदयुक्तम् । आहन्ति माणवकमित्यस्य सकर्मकत्वादात्मनेपदाभावाच्चेति हरदत्तः । अन्ये त्वाहुः । आत्मनेपदाकर्मकेति धातूपलक्षणं, हन्तिश्चायम् आङो यमहन इत्यत्र यदा कर्माविवक्षया अकर्मकः तदा आत्मनेपदस्य निमित्तम् । तस्यात्र सकर्मकत्वेपि अविरुद्धमुदाहरणमिति ॥

कुषिरजो· प्राचां श्यन् परस्मैपदं च ॥ कुष निष्कर्षे । रञ्ज रागे । अनयोर्धात्वोः कर्मकर्तरि यक् न स्यात् किन्तु श्यन् परस्मैपदं च । आत्मनेपदापवादः । कुष्यति पादः स्वयमेव । रज्यति वस्त्रं स्वयमेव । प्राचांग्रहणं विकल्पार्थम् । कुष्यते । रज्यते । नदुहेति सूत्रात् यक् नेत्यनुवर्त्य तस्मिन्नेव स्थले श्यन् विहितः । तत्सन्नियोगशिष्टं च परस्मैपदम् । तेन आशीर्लिङ्लिटोः स्यादीनां च विषये श्यन्परस्मैपदे भवतः । कोषिषीष्ट पादः स्वयमेव । रंक्षीष्ट वस्त्रं स्वयमेव । चुकुषे । ररञ्जे । कोषिष्यते । रंक्ष्यते । अकोषि । अरञ्जि इत्यादि । श्यन्यकोः स्वरे नुमि च विशेषः । कुष्यन्ती जंघा । श्यनि शप्श्यनोर्नित्यमिति नुमागमः नित्त्वादाद्युदात्तश्च । यकि तु आच्छीनद्योरिति नुम्विकल्पः । लसार्वधातुकानुदात्तत्वेन यक एवोदात्तत्वं च स्यात् ॥

धातोः ॥ आतृतीयसमाप्तेरधिकारोयम् । यद्यपि धातोरेकाचोहलादेरिति सूत्राद्धातुग्रहणमनुवर्ततएव तथापि आर्द्धधातुकसंज्ञाया आश्रितशब्दव्यापारत्वलाभाय पुनर्धातुग्रहणम् ।

अन्यथा लूभ्यां पूभ्यामित्यादौ भ्यामादेरिद् प्रकृतेर्गुणश्च स्यात्। धातोरित्येवमविधानात्तु न भवति। तथा कृत्संज्ञा उपपदसंज्ञा चास्मिन्नेव धात्वधिकारे यथा स्यादित्येवमर्थमपीदम्। अन्यथा पूर्वत्रापि स्यात् ततश्च करिष्यतीत्यत्र स्यप्रत्ययस्य कृत्संज्ञायां कृदन्तस्य प्रातिपदिकत्वे सोरुत्पत्तिः स्यात्। एकवचनस्यौत्सर्गिकत्वात्। प्रातिपदिकार्थेति सूत्रे वचनग्रहणाच्च। तथा च्लि लुङीत्यस्य लुङन्तउपपदे च्लिरित्यर्थः स्यात्। वासरूपविधिश्च पूर्वत्र प्रवृत्तौ वसादिभि सिचः समावेशः स्यादिति। तस्मात् धातोरिति कर्तव्यमिति स्थितम्। एतच्च शक्यं प्रत्याख्यातुम्। तथाहि। शमिधातोरिति यद्धातुग्रहण तदेव द्वितीयं सार्वधातुकार्द्धधातुकसंज्ञयोरनुवर्तिष्यते। कृदुपपदसंज्ञे वासरूपविधिश्च आधिकारेणैव व्याख्यास्यते। प्रत्यय परश्चेत्यादिवत्। तेन पूर्वत्र न तत्प्रसङ्गः॥

तत्रोपपदं सप्तमीस्थम्॥ सप्तम्यन्ते पदे कर्मणीत्यादौ प्रतिपाद्यत्वेन स्थितं कुम्भादिकं सप्तमीस्थं तद्वाचकं पदमुपपदसंज्ञं स्यात्। तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यात्। महासंज्ञाकरणसामर्थ्यात्। पदमत्र संज्ञि। तेन समर्थपरिभाषा व्याप्रियते। संज्ञाप्रदेशा उपपदमतिङित्यादयः॥

कृदतिङ्॥ अस्मिन् धात्वधिकारे तिङ्भिन्न प्रत्यय कृत्संज्ञ स्यात्। कर्तव्यम्। करणीयम्। अतिङ् किम्। चीयात्। संज्ञाप्रदेशाः कृत्तद्धितसमासाश्चेत्येवमादय। अतिङिति शक्यमकर्तुम्। कथं चीयादिति। ज्ञापकात्सिद्धम्। अकृत्सार्वधातुकयोरिति सूत्रे अकृदित्येव सिद्धे पुनः सार्वधातुकग्रहण ज्ञापयति न तिङां कृत्संज्ञा भवतीति। न च श्यन्निवृत्त्यर्थं सार्वधातुकग्रहणमिति वाच्यम्। दिवादिषु ह्रस्वान्तस्य दीर्घार्हस्याभावेन व्या

वर्त्वामसिद्धेः । भाष्ये तु तिङां कृत्संज्ञायामिष्टापत्तिः कृता । न चैवं तिङन्तस्य प्रातिपदिकत्वात्स्वाद्युत्पत्तिः स्यादिति वाच्यम् । तिङा एकत्वादेरुक्तत्वात् । न च वचनग्रहणादुक्तेपि तदापत्तिः । एक इत्यादौ चरितार्थत्वात् । अविशायनेतमविष्ठनौ तिङश्चेत्यनेन तिङन्तानामसुबन्तत्वज्ञापनात् । न चैवमपि पचति पठतीत्यत्र ऱ्हस्वस्यपितिकृतीति तुक्प्रसङ्गः । तुग्विधौ धात्वादेरिति सूत्रात् धातुग्रहणानुवृत्तेः । एवमपि चिकीर्षति जिहीर्षतीत्यादौ स्यादिति चेन्न । शपा व्यवधानात् । एकादेशे कृते नास्ति व्यवधानमिति चेन्न । एकादेशस्य पूर्वविधौ स्थानिवद्भावात् । न च स्थानिवद्भावं बाधित्वा परत्वादन्तवद्भावः, । तस्य प्रत्याख्यास्यमानत्वात् । न चैवमपि अतिङिति प्रत्याख्यायमाने पचेरन्नित्यत्र प्रातिपदिकान्तत्वान्नलोपः स्यादिति वाच्यम् । झस्यरन्निति नकारोच्चारणसामर्थ्यादेव लोपाप्रवृत्तेः । इह तर्हि चीयादिति कृद्यकारत्वाद्दीर्घो न स्यादिति चेत् । नैष दोषः । सार्वधातुकप्रतिषेधो ज्ञापयति अकृतीति प्रतिषेधः तिङ्क्षु न प्रवर्तत इति । न चैवमपि तिङ्समासे कृदुत्तरपदस्वरः स्यादिति वाच्यम् । इष्टापत्तेः । यो जात एव पर्यभूषदित्यादौ तथैव पाठस्य निर्विवादत्वात् । गतिकारकोपपदात्कृदिति सूत्रे कृद्ग्रहणस्य प्रत्याख्यास्यमानत्वाच्चेति दिक् ॥

इति श्रीशब्दकौस्तुभे तृतीयस्य प्रथमे पञ्चममाह्निकम् ॥

वासरूपोऽस्त्रियाम् ॥ परिभाषेयम् । अस्मिन्धात्वधिकारे स्त्र्यधिकारव्यतिरेकेण यत्रासरूपोपवादप्रत्ययो विधीयते तत्र वेत्युपतिष्ठते । एवञ्च ददातिदधात्योर्विभाषेत्यादिवद्वैकल्पिकत्वेनैव अपवादे शास्त्रात्प्रमिते तद्वदेव पक्षे उत्सर्गः प्रवर्तते । इगुपधज्ञाप्रीकिरः कोपवादः तद्विषये ण्वुल्तृचावपि भवत ।

विक्षेपकः विक्षेप्ता विक्षिपः। नचैवमातोनुपसर्गेक इति कस्य विषये कर्मण्यणपि पक्षे प्रवर्तेत। सरूपो, साविति चेत्। किं ततः। गुणवृद्धिशास्त्रेष्विक्पदस्येव कविधौ वेति पदस्य उपस्थितिर्हि ज्ञातैव। अन्यथा ण्वुलादेरपि दुर्लभत्वात्। सत्याञ्च वेत्यस्योपस्थितौ कथं सरूपस्यापि पक्षे प्रवृत्तिर्न भवेदिति चेत्। सत्यम्। असरूपग्रहणसामर्थ्यात् यम्प्रत्यसरूपता तं प्रत्येवास्य पाक्षिकता। अन्ये तु प्रति बाधकतैवेति न कश्चिद्दोषः। ततश्च असरूपो ऽपवादप्रत्यय उत्सर्गस्य वा बाधकः स्यादिति फलितोर्थः। अस्त्रियां किम्। चिकीर्षा। अत्र क्तिन्न भवति। स्त्रीग्रहणं स्वर्यते। स्वरितेनाधिकारगतिर्भवतीति स्त्रियांक्तिन्नित्यधिकारे विकल्पो नेति सिद्धान्तः। यदि तु स्त्रियामभिधेयायां नेत्युच्येत तदा विक्षेपिका विक्षेत्रीति क्विषये ण्वुल्तृचौ न स्याताम्। अथापि स्त्रियामित्येवंशब्दमुच्चार्य विहिते निषेध इत्युच्येत तर्हि व्यावक्रोशी व्यावस्त्रुष्टिरिति कर्मव्यतिहारे। णचो विषये क्तिन्न स्यात्। द्वयोरपि स्त्रियामित्युच्चार्य विधानात्। अत्र केचित्। उत्सर्गापवादयोर्द्वयोरपि स्त्र्यधिकारनिवेशितत्वे सति प्रतिषेधोयमित्याहुः। अन्ये तु अपवादमात्रस्यापीति। तत्राद्ये मते आसना आस्या स्त्र्यधिकारविहितेनापि युचापवादेन सह ऋहलोर्ण्यतः समावेशः सिध्यति घञस्तु क्तिनादिना ऽनभिधानान्न समावेशः। द्वितीयपक्षे तु घञः क्तिन्नादिभिरसमावेशः सिध्यति। आस्येत्यत्र तु कृत्यल्युटोबहुलमिति ण्यदिति विवेकः। नन्विह सारूप्यं प्रयोगे उपदेशे वा। नाद्यः। ग्रामणीग्रामण्य इति क्विबादिविषये ऽणादीनामप्रवृत्तिप्रसङ्गात्। न हि क्विबादयः प्रयोगे रूपवन्तः। लोपविधानात्। नान्त्यः। अनुबन्धाभिन्नेषु कणप्रभृतिष्वतिप्रसङ्गादिति चेन्न। अनुबन्धानामनेका-

न्तत्वेन द्वितीयपक्षे दोषाभावात् । एकान्तत्वेपि नानुबन्धकृतमसारूप्यम् । ददातिदधात्योर्विभाषेति लिङ्गात् । अन्यथानुबन्धकृतादसारूप्यादेव ददः दध इति शविषये दायो धाय इति णोपि भविष्यतीति किं विभाषाग्रहणेन । अनित्येयं वासरूपपरिभाषा । अर्हे कृत्यतृचश्चेत्यत्र कृत्यतृज्ग्रहणाल्लिङ्गात् तेन क्तल्युटतुमुन्खलर्थेषु वासरूपविधिर्न भवतीति सिद्धान्तः । हसितं हसनं छात्रस्य । अत्र क्तल्युड्विषये घञ् न । तुमुन् । इच्छति भोक्तुम् । अत्र इच्छार्थेषुलिङ्लोटाविति लोण्न भवति । लिङ् तु भवत्येव । लिङ्चेति वचनात् । एवं चास्मादेव नियमादिह लोट् सुपरिहरः । अतोत्र तुमुन्ग्रहणमापाततः । खलर्थे । आतोयुच् । ईषत्पानः । अत्र खल् न भवति । ननु स्त्र्यधिकारादूर्ध्वं वासरूपन्यायो नास्तीत्येवाश्रीयताम् । मैवम् । आसित्वा भुङ्क्ते आस्यते भोक्तुमित्याद्यसिद्धिप्रसङ्गात् । इह हि भोजनार्थत्वादासनस्य पूर्वकालता गम्यते । क्त्वाप्रत्ययश्च तुमर्थाधिकाराद्भावे तत्रैव च लकार इति समानविषयत्वाद्बाध्यबाधकभावः स्यात् । मैपातिसर्गेति सूत्रे स्त्रियांक्तिन्नित्यत ऊर्ध्वं वासरूपविधेरभावादिति कौमुदीग्रन्थस्तु आकरविरुद्ध इति दिक् ॥

कृत्याः ॥ अधिकारोयम् । अवधिविशेषस्तु ज्ञापकात्सिद्धः । अर्हेकृत्यतृचश्चेति सूत्रे कृत्या इत्येव वक्तव्ये तृज्ग्रहणं योगापेक्षं ज्ञापकम् । ण्वुल्तृचावित्येतद्योगात्प्राक् कृत्यसंज्ञा ऽधिक्रियतइति । संज्ञाप्रदेशाः, कृत्यानां कर्तरिवेत्यादयः । बहुवचनमनुक्तसमुच्चयार्थम् । तेन केलिमर उपसंख्यानमित्यादिसूत्रेणैव सूचितं भवति । अत्र सूत्रे वृत्तिकारः शब्दकृत्या इति प्रक्षिप॥

तव्यत्तव्यानीयरः ॥ धातोरेवैते प्रत्ययाः स्युः । तकाररेफौ स्वरार्थौ । कर्त्तव्यम् । करणीयम् । वसेस्तव्यत्कर्तरि णिच्च ॥

वस निवासे इत्यस्य ग्रहणम्, न तु वस आच्छादनइत्यस्य लुग्विकरणस्य। तयोरेवेति वचनात् कर्त्तरि न प्राप्नोतीति वचनम्। वसतीति वास्तव्यः । तद्धितांतो वा । वास्तुनि भवो वास्तव्यः । दिगादित्वाद्यत् । अत्रास्तव्य इत्यत्र स्वरभेदोपि नास्ति । तव्यत्प्रत्यये हि कृत्योकेष्णुचार्वादयश्चेत्यन्तोदात्तत्वम्। यत्प्रत्यये तु यतोऽनाव इत्यनेनेति । केलिमर उपसंख्यानम् ॥ कृत्या इति बहुवचनेनैतत्सूचितमित्युक्तम् । ककारो गुणवृद्धिनिषेधार्थः । रेफ स्वरार्थः । पचेलिमा माषाः । पक्तव्याः । भिदेलिमाः सरला । भेत्तव्या । शुद्धे कर्मणि प्रत्ययो भाष्ये स्थित । वृत्तिकारस्तु कर्मकर्तरि चायमिष्यतइत्याह । तद्भाष्यविरुद्धम् ॥

अचो यत् ॥ अजन्ताद्धातोर्यत्स्यात् । चेयम् । जेयम् । ननु पूर्वसूत्रे एव यदपि निर्दिश्यताम् । अज्ग्रहणं च मास्तु । हलन्ताण्ण्यतं वक्ष्यति । परिशेषादजन्तेभ्य एव यत् भविष्यति इति चेत् । अजन्तभूतपूर्वादपि यथा स्यादित्येवमर्थमिदम् । दित्स्यं धित्स्यम् । इह हि दाञो धाञश्च सनन्तस्य दित्स धित्स इति स्थिते आर्द्धधातुके इति विषयसप्तमीमाश्रित्य सनोऽतोलोपे कृते साम्प्रतिकं हलन्तत्वमस्तीति ण्यत्स्यात् । अज्ग्रहणात्तु भूतपूर्वमजन्तत्वमाश्रित्य यत्प्रवर्तते । तेन यतोऽनाव इत्याद्युदात्तत्वम् । ण्यति तु कृते तित्स्वरितत्वं स्यात् । चिकीर्ष्यमित्यादौ तु ण्यद्यतोर्विशेषो नास्ति । यतोऽनाव इत्यत्र द्व्यज्ग्रहणानुवृत्ते । आर्द्धधातुक इत्यस्य परसप्तमीत्वे तु इहाज्ग्रहणं न कर्त्तव्यमेव । तकिशसिचतियतिजनीनामुपसंख्यानम् ॥ तके हसने । शसु हिंसायाम् । चते याचने । यती प्रयत्ने । जनी प्रादुर्भावे । तक्यम् । शस्यम् । चत्यम् । यत्यम् । जन्यम् । अत्र जनेर्यद्विधान यतोऽनाव इति स्वरार्थं जनिवध्योश्चेति वृद्धिनिषेधेन ण्यत्यपि रूपे

विशेषाभावात्। इह शंसिमपि केचित्पठन्तीति हरदत्तः। तेन तद्वान्नराशंस्यशाध्यं च। अत्राद्युदात्तः सिध्यति। अपाठपक्षे तु ण्यन्तादचोयति सिध्यतीति बोध्यमिति वदन्ति। तदेतत्सर्वमीडवन्देत्यादिसूत्रविस्मरणमूलकत्वादुपेक्ष्यम्। हनो वा वध च॥ हन्तेर्वा यत्, तत्सन्नियोगेन च वधादेशो वक्तव्य इत्यर्थः। वध्यः। घात्यः। यदभावे ण्यत्। हनस्तोचिण्णलोरिति तत्वम्। होहन्तेरिति कुत्वम्। यद्यपि वधमर्हतीति वध्य इति रूपं यदित्यनुवर्तमाने दण्डादिभ्य इति तद्धितेन यतापि सिध्यति तथाप्यसिवध्यो मुसलवध्य इत्यत्र समासो न सिध्येत्। कृति पुनः कर्तृकरणेकृतेति सिध्यति। न च असिवधमर्हतीति विग्रहे कृतसमासादेव तद्धितोस्त्विति वाच्यम्। दण्डादिषु केवलस्य वधशब्दस्य पाठात्। तदन्तविधेश्च प्रतिषेधात्। स्वरे भेदाच्च। असिवधशब्दाद्यति हि तित्स्वरितमिति स्वरितः प्रसज्येत। कृदन्तेन समासे तु कृदुत्तरपदप्रकृतिस्वरेण वध्यशब्द आद्युदात्तः। अत एव वध्यशब्देन तद्धितान्तेन सह सुप्सुपेति समास इत्यपि न वाच्यम्। अन्तोदात्तप्रसङ्गात्। वध्यशब्दे कृतद्धितान्ते प्रकारकृतविशेषस्य सत्वाच्च। एतेन गिरौडश्छन्दसीति वार्तिकप्रत्याख्यानपरं भाष्यमप्यपास्तम्। अत एव कुतलब्धकीनकुशला इत्यादीनां चारितार्थ्यमिति दिक्। अत्रत्यभाष्यादिपर्यालोचनया असमस्तवध्यशब्दे विशेषाभाव इति लभ्यते। तथा च दण्डादिभ्य इत्येव सूत्रं, यच्चानुवर्तते। दण्डादिभ्यो य इति निरनुबन्धपाठस्तु माधादिकं इति माधवो हंतिधातौ स्फुटीचकार। हरदत्तग्रन्थपर्यालोचने तु इदं च वचनं यद्विधौ भाष्यादौ पठितमपि ण्यद्विधौ मृजेर्विभाषेत्यस्याग्रे एव पाठ्यमित्येव भाष्यतात्पर्यं युक्तम्। विकल्पाकरणेन लघुत्वा-

वस निवासे इत्यस्य ग्रहणम्, न तु वस आच्छादनइत्यस्य लुग्विकरणस्य। तयोरेवेति वचनात् कर्त्तरि न प्राप्नोतीति वचनम्। वसतीति वास्तव्यः। तद्धितान्तो वा। वास्तुनि भवो वास्तव्यः। दिगादित्वाद्यत्। अत्रास्तव्य इत्यत्र स्वरभेदोपि नास्ति। तव्यत्प्रत्यये हि कृत्योकेष्णुचार्वादयश्चेत्यन्तोदात्तत्वम्। यत्प्रत्यये तु यतोऽनाव इत्यनेनेति। केलिमर उपसंख्यानम् ॥ कृत्या इति बहुवचनेनैतत्सूचितमित्युक्तम्। ककारो गुणवृद्धिनिषेधार्थः। रेफः स्वरार्थः। पचेलिमा माषाः। पक्तव्याः। भिदेलिमाः सरलाः। भेत्तव्याः। शुद्धे कर्मणि प्रत्ययो भाष्ये स्थितः। वृत्तिकारस्तु कर्मकर्तरि चायमिष्यतइत्याह। तद्भाष्यविरुद्धम् ॥

अचो यत् ॥ अजन्ताद्धातोर्यत्स्यात्। चेयम्। जेयम्। ननु पूर्वसूत्रे एव यदपि निर्दिश्यताम्। अज्ग्रहणं च मास्तु। हलन्तात्ण्यतं वक्ष्यति। परिशेषादजन्तेभ्य एव यत् भविष्यतीति चेत्। अजन्तभूतपूर्वादपि यथा स्यादित्येवमर्थमिदम्। दित्स्यं धित्स्यम्। इह हि दाणो धाञश्च सनन्तस्य दित्स धित्स इति स्थिते आर्द्धधातुके इति विषयसप्तमीमाश्रित्य सनोऽतोलोपे कृते साम्प्रतिकं हलन्तत्वमस्तीति ण्यत्स्यात्। अज्ग्रहणात्तु भूतपूर्वमजन्तत्वमाश्रित्य यद्भवति। तेन यतोनाव इत्याद्युदात्तत्वम्। ण्यति तु कृते तित्स्वरितेत्व स्यात्। चिकीर्ष्यमित्यादौ तु ण्यद्यतोर्विशेषो नास्ति। यतोनाव इत्यत्र द्व्यज्ग्रहणानुवृत्तेः। आर्द्धधातुक इत्यस्य परसप्तमीत्वे तु इहाज्ग्रहणं न कर्त्तव्यमेव। तकिशसिचतियतिजनीनामुपसंख्यानम् ॥ तकि हसने। शसु हिंसायाम्। चते याचने। यती प्रयत्ने। जनी प्रादुर्भावे। तक्यम्। शस्यम्। चत्यम्। यत्यम्। जन्यम्। अत्र जनेर्वधिप्रकरणे(?) यतोनाव इति स्वरार्थं जनिवध्योश्चेति वृद्धिनिषेधेन ण्यत्यपि रूपे

विशेषाभावात्। इह शंसिमपि केचित्पठन्तीति हरदत्त.। तेन तद्वान्नराशंस्यराध्यं च। अत्राद्युदात्त सिध्यति। अपाठपक्षे तु ण्यन्तादचोयति सिध्यतीति बोध्यमिति वदन्ति। तदेतत्सर्वमीडवन्देत्यादिसूत्रविस्मरणमूलकत्वादुपेक्ष्यम्। हनो वा वध च॥ हन्तेर्वा यत्, तत्सन्नियोगेन च वधादेशो वक्तव्य इत्यर्थः। वध्य। घात्यः। यदभावे ण्यत्। हनस्तोचिण्णलोरिति तत्वम्। होहन्तेरिति कुत्वम्। यद्यपि वधमर्हतीति वध्य इति रूपं यदित्यनुवर्तमाने दण्डादिभ्य इति तद्धितेन यतापि सिध्यति तथाप्यसिवध्यो मुसलवध्य इत्यत्र समासो न सिध्येत्। कृति पुनः कर्तृकरणेकृतेति सिध्यति। न च असिवधमर्हतीति विग्रहे कृतसमासादेव तद्धितोऽस्त्विति वाच्यम्। दण्डादिषु केवलस्य वधशब्दस्य पाठात्। तदन्तविधेश्च प्रतिषेधात्। स्वरे भेदाच्च। असिवधशब्दाद्यति हि तित्स्वरितमिति स्वरितः प्रसज्येत। कृदन्तेन समासे तु कृदुत्तरपदप्रकृतिस्वरेण वध्यशब्द आद्युदात्तः। अत एव वध्यशब्देन तद्धितान्तेन सह सुप्सुपेति समास इत्यपि न वाच्यम्। अन्तोदात्तप्रसङ्गात्। वध्यशब्दे कृत्तद्धितान्ते मकारकृतविशेषस्य सत्वाच्च। एतेन गिरौडड्छन्दसीति वार्तिकप्रत्याख्यानपरं भाष्यमप्यपास्तम्। अत एव कृतलब्धनीतकुशला इत्यादीनां चारिताथ्र्यमिति दिक्। अत्रत्यभाष्यादिपर्यालोचनया असमस्तवध्यशब्दे विशेषाभाव इति लभ्यते। तथा च दण्डादिभ्य इत्येव सूत्रं, यच्चानुवर्तते। दण्डादिभ्यो य इति निरनुबन्धपाठस्तु ग्रामादिक इति माधवो हंतिधातौ स्फुटीचकार। हरदत्तग्रन्थपर्यालोचने तु इद च वचनं यद्विधौ भाष्यादौ पठितमपि क्यब्विधौ मृजेर्विभाषेत्यस्याग्रे एव पाठ्यमित्येव भाष्यतात्पर्यं युक्तम्। विकल्पाश्रयणेन लघुत्वा-

दिति लभ्यते । तस्मिन्नपि पक्षे वध्यशब्दो धातुस्वरेणाद्युदात्तः वधप्तुपित्वादनुदात्तः । न च नञ्समासे ययतोश्चातदर्थइत्यस्य प्रवृत्त्यभावेन स्वरे दोष इति वाच्यम् । कृत्योकेष्णुच्चार्वादयश्चेत्यस्य प्रवृत्त्येष्टसिद्धेः । असमस्ते एव विशेषाभावस्य प्रतिपाद्यत्वाच्च ॥

पोरदुपधात् ॥ पवर्गान्तादकारोपधात् धातोर्यत् स्यात् । ण्यतोपवादः । शप्यम् । लभ्यम् । पोः किम् । वाक्यम् । चजोःकुघिण्ण्यतोरिति कुत्वम् । अदुपधात्किम् । कोप्यम् । तपरकरणं किम् । आप्यम् । कुप कोपने, आप्लृ व्याप्तौ, आभ्यां ण्यति तित्स्वरः । यति तु यतोनाव इति स्यात् ॥

शकिसहोश्च ॥ स्पष्टम् । शक्यम् सह्यम् ॥

गदमदचरयमश्चानुपसर्गे ॥ व्यत्ययेन पञ्चम्यर्थे सप्तमी । एभ्योनुपसर्गेभ्यो यत्स्यात् । गद्यम् । मद्यम् । चर्यम् । यम्यम् । अनुपसर्गे किम् । न नैषधे कार्यमिदं निगाद्यम् । प्रमाद्यम् । प्रचार्यम् । यमेः पूर्वेणैव सिद्धे नियमार्थं वचनम् अनुपसर्गादेव यथा स्यात् सोपसर्गान्मा भूदिति । कथं तर्हि, तेन तत्र न भवेद्विनियम्यम् । अनियम्यस्य नायुक्तिः । त्वया नियम्या ननु दिव्यचक्षुषेत्यादि । प्रमादपाठ एवायम् । विनियाम्यमित्यादि दीर्घ एव तु पठनीय इति हरदत्तः । नियमे साधुर्नियम्य इति तत्रसाधुरिति यदित्यन्ये । केवलाद्यतं कृत्वा निशब्देन समास इत्यपरे । चरेराङि चागुरौ ॥ सोपसर्गार्थं वार्तिकम् । आचर्यो देशः । गन्तव्य इत्यर्थः । अगुरौ किम् । आचार्यो गुरुः ॥

अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥ अवद्यादयस्त्रयो यथासंख्यं गर्ह्यादिष्वर्थेषु निपात्यन्ते । तत्र वदेर्नञि उपपदे वदःसुपिक्यप्चेति यत्क्यपोःप्राप्तयोर्यदेव यथा स्यात् सोपि ग-

र्ह्यायामेव यथा स्यादित्युभयार्थं निपातनम्। अवद्यं पापम्। अवचनार्हत्वात्। गर्ह्ये किम्। अनुद्यं गुरुनाम। तद्धि न गर्ह्यं वचनार्हं तु न भवति। आत्मनाम गुरोर्नाम नामातिकृपणस्य च। श्रेयस्कामो न गृह्णीयात् ज्येष्ठापत्यकलत्रयोरिति स्मृतेः॥ अत्र वदःसुपीति क्यबेव भवति। यजादित्वात् सम्प्रसारणम्। नलोपो नञः, तस्मान्नुडचि। पणेर्व्यवहारार्थात् ण्यति प्राप्ते यत् विधीयते। पण्यः कम्बलः। पण्या गौः। पाण्यमन्यत्। स्तुत्यर्हमित्यर्थः। पणितव्यशब्दस्य साधारणत्वेऽपि निपातनस्य रूढ्यर्थत्वात् पण्यशब्दस्य व्यवहर्तव्ये एव रूढत्वादर्थनियमो लभ्यते। उक्तञ्च, धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च। अनुबन्धविकाराणां रूढ्यर्थं च निपातनमिति॥ वृङ् सम्भक्तौ अस्माद्यत्। अप्रतिबन्धे। शतेन सहस्रेण वर्या कन्या। शतसहस्रशब्दावनियतवचनौ कन्याया वरणे वरयितॄणां नियमो नास्तीत्यर्थः। वृङ एवेदं निपातनम्। तत्रैव अनिरोधसम्भवात्। तेन वृञ् वरणे इत्यस्मात् एतिस्तुशासित्यादिना क्यबेव। वृत्या। इह सूत्रे अवद्यादीनि अविभक्तिकानि पृथक् पदानि न तु द्वंद्वस्य जसन्तस्य निर्देशः। तेन वर्येति स्त्रियामेव निपात्यते। अस्त्रियान्तु ऋहलोरिति ण्यदेव। वार्या ऋत्विजः। इति वृत्तिकारमतम्। न चात्र एतिस्त्विति क्यप् शङ्क्यः। तत्र वृञ एव ग्रहणं न तु वृङ इति वक्ष्यमाणत्वात्। भट्टिस्तु द्वन्द्वाज्जसा निर्देशं मन्वानः पुंल्लिङ्गेऽपि यतं प्रायुङ्क्त। सुग्रीवो मम वर्योऽसौ भवता चारुविक्रम इति। पुरुषोत्तमादयोऽप्येवम्॥

वह्यं करणम्॥ वह्यं निपात्यते करणं चेद्भवति। वहन्त्यनेनेति वह्यं शकटम्। करणे किम्। वाह्यमन्यत्। वहनकर्मेत्यर्थः॥

अर्यः स्वामिवैश्ययोः॥ ऋ गतौ अस्मात् ण्यति प्राप्ते यत्

निपात्यते । अर्यः स्वामी वैश्यो वा । स्वामिवैश्ययोः किम् । आर्यो ब्राह्मणः । प्राप्तव्य इत्यर्थः । अत्र भाष्ये स्वामिन्यन्तोदात्तत्वञ्चेत्युक्तम् । वैश्ये तु यतोनाव इति आद्युदात्तमेव । अथ यो वैश्यः स्वामी च तत्र कथमिति चेत् । वैश्यत्वविवक्षायामाद्युदात्तम् । स्वामित्वविवक्षायामन्तोदात्तम् । अत एव अर्यः स्वाम्याख्या चेदिति फिट्सूत्रे आख्याग्रहणं कृतम् । तथा चेदृशे विषये युगपदर्थद्वयविवक्षा न कर्तव्यैवेति फलितोऽर्थः ॥

उपसर्या काल्या प्रजने ॥ उपपूर्वात्सृधातोर्भौवादिकात् जौहोत्यादिकाच्च यत् निपात्यते प्रथमगर्भग्रहणे प्राप्तकाला चेत् । उपसर्या गौः । गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः । काल्याप्रजनइति किम् । उपसार्या शरदि मथुरा प्राप्तव्येत्यर्थः । कर्मणि ण्यत् । काल्येत्यत्र तदस्यप्राप्तमिति वर्त्तमाने कालाद्यदिति यत् । प्रजननं प्रजनः भावे घञ् । जनिवध्योश्चेति वृद्धिनिषेधः ॥

अजर्यं सङ्गतम् ॥ नञ्पूर्वाज्जीर्यतेः कर्तरि यन्निपात्यते सङ्गतं चेद् विशेष्यम् । सङ्गतमिति नपुंसके भावे क्तः । न जीर्यतीत्यजर्यं सतां सङ्गतम् । इह अजर्यमिति समुदायस्य सङ्गतं वाच्यमित्यर्थो न ग्राह्यः । उदाहरणे सहप्रयोगानुपपत्तेः । न च घटः कलश इतिवत् व्याख्यानपरतया सहप्रयोगः । तेन सङ्गतमार्येण रामाजर्यं कुरु द्रुतमिति भट्टिप्रयोगात् । मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्धेति कालिदासप्रयोगस्तु सङ्गतमित्यध्याहृत्य व्याख्येयः । सङ्गतं किम् । अजरिता कम्बलः । कर्तरि निपातनमित्युक्तत्वात् भावे सङ्गतकर्तृकेपि ण्यदेव भवति । अजार्यं सङ्गतेनेति ॥

वदः सुपि क्यप् च ॥ अनुपसर्गइति वर्ततइति वृत्तिकृत् ।

वदेर्धातोरनुपसर्गे सुप्युपपदे क्यप् स्यात् चाद्यत् । ब्रम्होद्यम् । ब्रम्हवद्यम् । भावे क्यप् । पूर्ववत्सम्प्रसारणम् । ब्रम्ह वेदः तस्य वदनमित्यर्थः । ननु सकर्मकाद्भावे कृत् प्रत्ययो दुर्लभः । भावेचाकर्मकेभ्यः, तयोरेवकृत्यक्तखलर्था इति वक्ष्यमाणत्वादिति चेत् । सत्यम् । उत्तरसूत्रादिह भावग्रहणस्यापकर्षणान्नोक्तदोषः । इह सूत्रे अनुपसर्गग्रहणस्यानुवृत्तिर्यद्यपि वृत्तिभाष्यादिषु स्थिता तथापि सा नावश्यकी । सत्सूद्विषेति सूत्रे उपसर्गग्रहणं ज्ञापकम्, अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं नेति वक्ष्यमाणेन गतार्थत्वात् । सर्वथाप्युपसर्गे नेति फलं निर्विवादम् । तेनेह ण्यदेव । प्रवाद्यम् । अनुवाद्यम् । अपवाद्यम् । यत्तु भट्टवार्त्तिके अनूद्यामिति प्रयुक्तं व्याकरणाधिकरणे । तत्र निश्चयार्थेनुशब्दे उपपदे क्यपं विधाय नञ्समासे सति कथञ्चित्समाधेयमिति न्यायसुधायामेव स्पष्टम् ॥

भुवो भावे ॥ भवतेरनुपसर्गे सुप्युपपदे क्यप् स्यात् भावे । यत्तु नानुवर्त्तते पूर्वसूत्रे चानुकृष्टत्वात् । ब्रम्हणो भावो ब्रम्हभूयम् । सुपीत्येव । भव्यम् । अनुपसर्गइत्येव । प्रभव्यम् । ननु अनुपसर्गे भवतिरकर्मकः तस्माद्भावएव भविष्यति तत्किं भावग्रहणेनेति चेन्मैवम् । प्राप्त्यर्थात्कर्मणि प्रसङ्गात्सत्तार्थकादपि कालादिकर्मणि प्रसङ्गाद् उत्तरार्थत्वाच्च ॥

हनस्त च ॥ हन्तेर्धातोरनुपसर्गे सुबन्तउपपदे भावे क्यप् स्यात् तकारश्चान्तादेशः । ब्रह्महत्या । एतत्सूत्रविहितक्यप्प्रत्ययान्तस्य स्वभावात् स्त्रीलिङ्गत्वमेव लोके । छन्दसि तु क्लीबतापीष्यते । सत्तादेव दस्युहत्याय जज्ञिषे । छन्दसि स्त्रियां क्यप् चिद्वक्तव्यः । तराति ब्रह्महत्यां योऽश्वमेधेन यजते । सुपीति किम् । घातो वर्त्तते । ण्यत्तु न भवति । सकर्मकाद्भावे वि-

धानाभावात् । कर्माविवक्षायामकर्मकत्वेपि न भवत्यनभिधानात् । अनुपसर्गइत्येव । मघातो वर्त्तते ॥

। एतिस्तुशास्वृदृजुषः क्यप् ॥ सुप्यनुपसर्गे भावइति निवृत्तम् । एभ्यः क्यप् स्यात् । एतीति इण एव ग्रहणं नेङिकोः । तयोरधिपूर्वयोरेव प्रयोगादेतीति निर्देशानुपपत्तेः । तथा च रक्षार्थं वेदानामध्येयं व्याकरणमिति भाष्ये प्रदेव प्रयुक्तः । केचित्तु इण्वदिक इति वक्तव्यमिति वचनादधीत्यमित्युदाहरन्ति । इत्य । कथन्तर्हि उपेयमिति । इङ् गताविति दैवादिकाद्यत् । स्तुत्यः । शिष्यः । शासइदङ्हलोरिति इत्वम् । शासिवसीति षत्वम् । आङः शासु इच्छायामित्यस्यापि ग्रहणमविशेषात् । तेन आशास्यमिति धातुस्वरेण मध्योदात्तं पदं भवति । ण्यति तु गतिकारकोपपदात्कृदिति अन्तस्वरितत्वं स्यात् । केचित्तु शासु अनुशिष्टावित्यस्यैव ग्रहणमिच्छन्ति । वृ इति वृञो ग्रहणं न वृङः पूर्वोत्तरसाहचर्येणोभयपदिनो ग्रहणाज्ज्ञापकात् । यदयं ईडवन्दवृशंसदुहांण्यत इति वार्याशब्दस्याद्युदात्तत्वं शास्ति तत्र हि ईडिवन्दिभ्याम् अकारवद्विकरणप्रकृतिभ्यां साहचर्यात् आत्मनेपदिनो वृङो ग्रहणम् । वृत्यः । दृत्यः । जुष्यः । क्यबिति वर्तमाने पुनः क्यब्ग्रहणं बाधकबाधनार्थम् । तेन ओरावश्यके ण्यतं बाधित्वा क्यबेव भवति । तथाहि । इह सूत्रे स्तौतिग्रहणस्यावकाश आवश्यकाविवक्षायां स्तुत्य इति, ओरावश्यकइत्यस्यावकाशोऽवश्यलाव्यम् । अवश्यस्तुत्य इत्यत्र उभयप्रसङ्गे परत्वात् ण्यत् स्यात् पुनः क्यब्ग्रहणात् क्यबेव भवति । शंसिदुहिगुहिभ्यो वेति वक्तव्यम् ॥ शस्यम् । शंस्यम् । दुह्यम् । दोह्यम् । गुह्यम् । गोह्यम् । एतच्च वृत्तावेव स्थितम् । भाष्ये तु नास्ति । तत्र प्रशस्यस्यश्रः, ईडवन्दवृशंसदुहांण्यत इति सूत्रद्वयप्रामाण्यात् शंसेः

सिद्धम्। इतरयोस्तु मूलं मृग्यम्। आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्॥ अञ्जू व्यक्तिम्रक्षणादिषु। अस्मात् बाहुलकात्करणे क्यप्। अनिदितांहलइति नलोपः। आज्यम्। ननु ण्यत्येव नलोपः कस्मान्नोक्त इति चेन्न। कुत्वप्रसङ्गात्। तित्स्वरप्रसङ्गाच्च। तस्मात्क्यबन्त एवायम्। नन्वेवमवग्रहः प्राप्नोति। न चेष्टापत्तिः। आज्यं किमासीत्परिधिः क आसीदित्यादौ पदकारैस्तदकरणादिति चेत्। अत्र भाष्यम्। न लक्षणेन पदकारा अनुवर्त्याः पदकारैस्तु लक्षणमनुवर्त्यमिति। अयमाशयः। संहितैव नित्या पदविच्छेदस्तु पौरुषेयः। अत एवार्थविनिश्चयाभावान्नावगृह्णन्ति। यथा हरिद्रव इति। अत्र किं हरिशब्द इकारान्त उत हरिच्छब्दस्तकारान्त इति सन्देहः। किञ्च वनेन वाय इति मन्त्रे वेति वाय इति च चकार शाकल्य इत्युपन्यस्य उदात्तं ह्येवमाख्यातमभविष्यत् इति अथायिशब्दे अद्स्वरप्रसङ्गेन दूषयित्वा वेरपत्यं वाय इत्येकपदेन सिद्धान्तं कुर्वन् यास्कः पदविभागस्य पौरुषेयत्वं स्पष्टमेवाचष्टे। अपि च सति पदत्वे अवग्रहो, ऽसति तु नेति द्वयमपि प्रायोवादमात्रं सम्प्रदायानुरोधादुभयस्यापि बहुधा परित्यागो दृश्यतएव। गोभिर्मदाय गोभ्यो गातुमित्यादौ अवग्रहाभावात्। ईयिवांसमतिस्रिधः, देवयन्तो यथामतिमित्यादावग्रहाच्चेति दिक्। प्रक्रियाकौमुद्यान्तु अज गतौ क्षेपणे चेत्यस्य आज्यमित्युक्तं तन्तु भाष्यविरुद्धम्, अर्थानंनुगुणञ्चेति प्रामाणिकैरुपेक्ष्यमेव॥

ऋदुपधाच्चाक्लृपिचृतेः॥ ऋकारोपधाद्धातोः क्यप् स्यात् क्लृपिचृती वर्जयित्वा। वृत् वृत्यम्। वृधु वृध्यम्। अक्लृपिचृतेरिति किम्। कृपू सामर्थ्ये। कल्प्यम्। कृपेर्लत्वस्यासिद्धत्वात् ऋकारलृकारयोः सवर्णसंज्ञाविधानाच्च ऋदुपधत्वम्। चृति हिं-

सम्रान्यनयोः। चर्त्यम्। तपरकरणं किम्। चृत संशब्दने, णिजभावे ण्यदेव भवति। कीर्त्यम्। इदमेव च तपरकरणं लिङ्गम्, अनित्यण्यन्ताश्चुरादय इत्यत्र। णिजन्तात्तु णिलोपे कृते चाकृते च दित्स्यमितिवद्यदेव। तेन यतोनाव इत्याद्युदात्तता भवति॥

ई च खनः॥ खनः क्यप् स्यात् ईकारश्चान्तादेशः। दीर्घनिर्देशः प्रश्लेषार्थः। तत्र द्वितीय इकारो येविभाषेत्यात्वबाधनार्थः। अन्यथा येविभाषेत्यस्यावकाशः खायते खन्यते। इत्वस्यावकाशः यस्मिन्पक्षे आत्वं नास्ति। आत्वपक्षे उभयप्रसङ्गे परत्वादन्तरङ्गत्वाच्चात्वं स्यात्। येविभाषेति विषयसप्तमी। तथा च यकारादौ बुद्धिस्थएव भवदात्वमन्तरङ्गम्। अयं त्विकारः क्यपा सह विधानाद्बहिरङ्गः। तदित्थम्। येविभाषेति विषयसप्तमीति पक्षमाश्रित्य सूत्रकृता दीर्घोच्चारणं कृतम्। भाष्यकृता तु परसप्तमीमाश्रित्य प्रत्याख्यातम्। तथाहि। परसप्तमीपक्षे इत्वमन्तरङ्गम्। परनिमित्तमनपेक्ष्य विधानात्। क्यप्सन्नियोगशिष्टं हि तत्। तथाच तदेवात्वस्य बाधकम्। ननु ह्रस्वादेशे तस्य पूर्वेण सह आद्गुणे सत्यपि षत्वतुकोरसिद्ध इति एकादेशस्यासिद्धतया ह्रस्वस्यपितिकृतीति तुक् स्यात् अतो दीर्घ एव विधेय इति चेन्न। पदान्तपदाद्योरेकादेशस्तुग्विधावसिद्धः न त्वन्योपीति वक्ष्यमाणत्वात्। अन्यथा वृक्षे छत्रमित्यत्र डावाद्गुणस्यासिद्धत्वात् छेचेति ह्रस्वाश्रयो नित्यस्तुक् स्यात्। इष्यते तु दीर्घात्पदान्ताद्वेति वैकल्पिक इति दिक्। खेयम्॥

भृञो ऽसंज्ञायाम्॥ क्यप् स्यात्। भृत्याः कर्मकराः। भर्तव्या इत्यर्थः। तथाच क्रियाशब्दोयं न तु संज्ञा। समश्च व-

हुलम् ॥ असंज्ञायामेव सूत्रेण नित्यं प्राप्तस्य क्यपो विकल्पार्थमिदं वार्त्तिकम् । सम्भृत्याः । सम्भार्याः । असंज्ञायां किम् । भार्यो नाम क्षत्रियः । सञ्ज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति । स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति ॥ अथवा बहुलकृत्याः सञ्ज्ञायामिति च स्मृतम् ॥ यथा पत्यं यथा जन्यं यथा भित्तिस्तथैव सा ॥ अस्यार्थः । ते तव सूत्रकारस्य भार्याशब्दो न सिध्यति ण्यतं बाधित्वा संज्ञायां समजनिषदेत्यादिना क्यपः प्रसङ्गात् । ननु भृञोऽसंज्ञायामिति प्रकृतसूत्रे संज्ञायां निषेधसामर्थ्यात् संज्ञायां समजेत्यादिसूत्रान्तरप्राप्तोऽपि क्यप् भृञ सञ्ज्ञायां न भविष्यति । न चैवं तत्र संज्ञायामित्यस्य वैयर्थ्यं, धात्वन्तरेषु चरितार्थत्वात् इत्याशङ्क्याह । सञ्ज्ञायामित्यादि । प्रतिषेधस्येति शेषः । असंज्ञायामित्यस्य प्रतिषेधस्य पुंसि भार्यो नाम क्षत्रिय इत्यत्र दृष्टत्वात् चरितार्थत्वात् । तथा च सामर्थ्यं नास्तीति भावः । तस्मात् भार्याशब्दो न सिद्ध्यतीति चोद्य सुस्थम् । उत्तरमाह । स्त्रियां भावाधिकारोऽस्तीति । ननु सञ्ज्ञायांसमजेति सूत्रे वृत्तिकृद्वक्ष्यति भावइति न स्मर्यते पूर्वएवाधिकार इति । युक्त चैतत् । समजन्ति तस्यामिति समज्या । निषीदन्ति तस्यामिति निषद्येत्यादिदर्शनात् । तत्कथमुच्यते स्त्रियां भावाधिकारोऽस्तीति । सत्यम् । स्त्रियां स्त्रीप्रकरणे संज्ञायांसमजेत्यादिना क्यपि विधीयमाने भावस्याधिकारः । अभिधेयत्वोपगमलक्षणो व्यापारोऽस्ति । शब्दशक्तिस्वाभाव्याद्भावएव क्यप् न तु कर्मणीत्याशय । एतदपरितोषादेवाह । अथवेति । न पतन्त्यनेनेत्यपत्यम् । अजन्तात् भावकर्मणोर्विधीयमानोऽपि यत् हलन्तात्करणे च भवति । जन्यमित्यत्रापि हलन्तायत् भित्तिरित्यत्र षिद्भिदादिभ्योऽङ् इत्यङो विषये

क्विन्। सर्वमिदं यथा बाहुलकाद्भवति। एवं भार्याशब्दे क्यबविषये ण्यद्भवतीत्यर्थ । अथवा इत्थं समाधेयम् । क्यब्विधौ भृञ् भरणे इति भ्वादिरेव गृह्यते न जौहोत्यादिको डुभृञ् । द्वयनुबन्धकत्वात् । एवञ्च विभर्तेर्वा भृञ्भरणइति दीर्घान्तात् क्र्यादेर्वा ण्यति भार्याशब्दो निर्बाध एवेति ॥

मृजेर्विभाषा ॥ ऋदुपधत्वान्नित्यं क्यपि प्राप्ते विकल्पार्थं सूत्रम् । परिमृज्य' । परिमार्ग्यः । ण्यत्पक्षे मृजेर्वृद्धि । चजोरिति कुत्वम् ॥

राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥ एते सप्त क्यबन्ता निपात्यन्ते । अभिषिक्तः क्षत्रियो राजा तेन सोतव्यो ऽभिषवद्वारेण निष्पादयितव्य इत्यर्थे कर्मणि क्यप् । दीर्घत्वञ्च निपात्यते रूढ्यर्थम् । यद्वा लतात्मक सोमो राजा । राजानं क्रीणन्तीत्यादौ दर्शनात् । स सूयते कंड्यते अत्रेत्यर्थे अधिकरणे क्यप् । निपातन रूढ्यर्थम् । तेन आद्यपक्षे अश्वमेधादौ द्वितीयपक्षे ज्योतिष्टोमादौ च नातिप्रसङ्गः । राजसूयशब्दश्च पुन्नपुंसकलिङ्गो ऽर्धर्चादित्वात् । सरत्याकाशमार्गे इति सूर्यः । सृ गतौ । कर्तरि क्यप् निपातनादुत्त्वं रपरत्वं हलिचेति दीर्घः । यद्वा षू प्रेरणे तुदादिः । सुवति कर्मणि लोकं प्रेरयतीत्यर्थे कर्तरि क्यपि कृते क्यपोरुडागमश्च निपात्यते । मृषोपपदाद्वदेः कर्मणि क्यप् । पक्षे यति प्राप्ते नित्यं क्यप् निपात्यते । विशेष्यनिघ्नोयम् । भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्यगुणा मृषोद्या इति माघ । रोचते असौ रुच्य । कर्तरि क्यप् । गुपेरादेः कुत्वञ्च संज्ञायाम् ॥ कुप्यम् । सुवर्णरजतातिरिक्तस्य धनस्येयं संज्ञा । कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः। कर्मकर्तरि निपातनम्। इहान्तोदात्तत्वमपि निपात्यते । शुद्धे तु कर्मणि कृष्टपाक्य इत्ये-

व भवति। न व्यथते अव्यथ्यः। कर्तरि क्यप्। अत्र वार्तिकानि। सूर्यरुच्यव्यथ्याः कर्तरि॥ मृसार्तिभ्याञ्च सर्वेरुत्वम्॥ सुवतेर्वा रुडागमः॥ कुप्यं संज्ञायामिति॥

भिद्योद्ध्यौ नदे॥ भिदेरुज्झेश्च कर्तरि क्यप् उज्झेर्धत्वञ्च। भिनत्ति कूलं भिद्यः। उज्झत्युदकम् उद्ध्यः। नदे किम्। भेत्ता। उज्झिता॥

पुष्यसिध्यौ नक्षत्रे॥ पुषि. सिधेश्च अधिकरणे क्यप् निपात्यते नक्षत्रे अभिधेये। पुष्यन्त्यस्मिन्नारब्धा अर्था इति पुष्यः। सिध्यन्त्यस्मिन्निति सिध्यः। नक्षत्रे इति किम्। पोषणं सेधनम्। पुष्यसिध्यशब्दौ पर्यायौ, स्वरूपपरत्वात् सूत्रे द्वन्द्वः। पुष्ये तु सिध्यतिष्यावित्यमरः। तत्र तुष तुष्टावित्यस्मात् बाहुलकादधिकरणे ण्यति तुष्यतिष्येति निपातनादुकारस्येकार इत्येके। पुष्यः तिष्य कलियुगइत्यमरव्याख्याने क्षीरस्वामी त्वाह। त्विष दीप्तौ, अघ्न्यादयश्चेत्यौणादिकयत्प्रत्ययान्तः। निपातनाद्वलोपः॥

विपूयविनीयजित्या मुञ्जकल्कहलिषु॥ पूङ्नीञ्जिभ्य क्यप् निपात्यते यथासंख्यं मुञ्जादिषु वाच्येषु। पूङ् पवने। विपूर्व। विपूयो मुञ्जः। रज्ज्वादिकरणाय शोधयितव्य इत्यर्थः। मुञ्जस्तृणविशेषः। विनीयः कल्कः। कल्कशब्दोयमस्ति पिष्टे औषधविशेषे। यथा पथ्याशुण्ठीसैन्धवांशस्य कल्कः पेयो नित्यं सर्वरोगक्षयायेति। अस्ति च पापे। तपो न कल्कोध्ययनं न कल्क इत्युपक्रम्य तान्येव भावोपहतानि कल्क इति महाभारते दर्शनात्। इह तु प्रथमस्य ग्रहणमिति केचित्। अविशेषेणेति हरदत्तः।तथाच माघःमायुङ्क्त, अविनीयसंभ्रमविकासिभक्तिभिरिति। जि अभिभवे। जित्यो हलिः। बलेन कृष्य इत्यर्थः। महद्-

लं हलिः । कृष्टसमीकरणार्थं स्थूलकाष्ठमुच्यते । विपव्यम्, विनेयम् । जेयश्चान्यत् । सर्वत्र अचोयत् ॥

मत्यपिभ्यां ग्रहेः ॥ क्यप् स्यात् । मत्तस्य न प्रतिगृह्यम् । तस्मान्नापिगृह्यम् । छन्दसीति वक्तव्यम् ॥ लोके तु प्रतिग्राह्यम् । अपिग्राह्यम् ॥

पदास्वैरिबाह्यापक्ष्येषु च ॥ एषु चतुर्ष्वर्थेषु गृहेर्धातोः क्यप् स्यात् । प्रगृह्यम्पदम् । यस्यं प्रगृह्यसंज्ञाविहितेति वृत्तिः । यद्यपि पदावयवस्य द्विवचनादेः प्रगृह्यसंज्ञा न तु पदस्य तथापि अवयवधर्मस्य समुदाये उपचारो बोध्यः । यद्वा यौगिकोयं पदशब्दः पठ्यते गम्यतेनेनार्थ इति । असन्निकर्षश्चात्र गृहेरर्थः । अग्नी अत्रेत्यादौ हि प्रकृतिभावात् । यणाद्यभावे कियतापि कालेन व्यवधानात् परस्परमचो न सन्निकृष्यन्ते । तथा च वन्ह्यचप्रातिशाख्यम् । स्वरान्तर तु विवृत्ति । सा वा स्वरभक्तिकालेति । स्वरभक्तिकालस्तु अर्द्धमात्रा पादमात्रा वा । द्राघीयसि सार्द्धमात्रेति तत्रैवोक्तत्वात् । तथा चाचोरन्तरालस्य विवृत्तिसंज्ञकस्य वर्णशून्यकालस्य क्व चिदर्द्धमात्रत्वं क्व चित्पादमात्रत्वं चेति फलितोर्थ । एतद्व्यवस्था तु शिक्षासु बोद्धव्या । अवगृह्यं पदम् । यस्यावग्रहः क्रियतइति वृत्तिः । अवग्रहो विच्छेद । अत्रापि गृहेरर्थ प्राग्वत् । मात्रा ह्रस्वस्तावदवग्रहान्तरमिति प्रातिशाख्यात् । अत्र पदकाले समासे पूर्वपदमेव गृह्यमिति हरदत्त । उपलक्षणञ्चैतत् । हरिभिरित्यादेरपि सद्ग्राह्यत्वात् । तस्मात् महापदसंज्ञायान्ते य एकदेश पदकाले विच्छिद्य पठ्यते स सर्वोप्यवगृह्यमिति स्थिति । स्वेनैव ईरितुं शीलमस्य स्वैरी स्वतन्त्रः । अस्वैरी परतन्त्र । गृह्यका इमे, गृहीतका इत्यर्थः । उभयप्रानुकम्पायां कन् । पञ्जरादिबन्धेन परतन्त्रीकृताः शुकादय उ-

च्यन्ते । गृहासक्ताः पक्षिमृगाः छेकास्ते गृह्यकाश्च ते इत्यमरः । वाह्यायाम् । ग्रामगृह्या, नगरगृह्या सेना । ग्रामनगराभ्यां बहिर्भूतेत्यर्थः । स्त्रीलिङ्गनिर्देशात्पुन्नपुंसकयोर्न भवति । पक्षे भव पक्ष्य । दिगादित्वाद्यत् । वासुदेवगृह्य । आर्यगृह्यः । तत्पक्षाश्रित इत्यर्थः ॥

विभाषा कृवृषो ॥ क्यप् स्यात् । पक्षे ण्यत् । कृत्यम् । कार्यम् । वृषु सेचने । वृष्यम् । वर्ष्यम् ॥

युग्यञ्च पत्रे ॥ पतन्त्यनेन पत्रं वाहनम् । दाम्नीशसेत्यादिना करणे ष्ट्रन् । तस्मिन्नर्थे युजे कर्मणि क्यप् कुत्वञ्च निपात्यते । युग्यो गौः । पत्रे किम् । योग्यमन्यत् । ण्यति च जोरिति कुत्वम् । अत्र हरदत्तः । प्राग्घितीयेन यतेदं सिद्धम् । तद्वहतिरथयुगप्रासङ्गमिति । स्वरेपि नास्ति भेद । क्यपि धातुस्वर, यत्यपि यतोनाव इत्याद्युदात्तत्वम् । अयुग्यमित्यत्रापि न स्वरभेदः । ययतोश्चातदर्थे । कृत्योकेष्णुचार्वादयश्चेत्युभयत्रापि अन्तोदात्तत्वविधानात् । तस्मादिदं सूत्रं शक्यमकर्तुमिति । अत्रेदं वक्तव्यम् । युग्योगौरित्यादिसिद्धावपि युग्यो हस्तीति वृत्तावुदाहृतं तद्धितेन न सिध्यति । नहि हस्ती युग वहतीति । कृता तु सिध्यति युज्यते सम्बध्यते ह्यसो कुथादिनेति । किञ्च असत्यस्मिन्सूत्रे ण्यत्प्रत्ययेन योग्यो गौरित्यपि स्यात् । अपि च स्वरभेदोपि पाक्षिकोस्त्येव । ऋतुर्भवत्युक्थ्य इत्यादौ निस्स्वरदर्शनात् । यतोनाव इति सूत्रे यदन्ते द्व्यच्के एकाच्प्रकृतिक एव प्रवर्ततइति वेदभाष्यकारप्रतिपादिते पक्षे स्वरभेदस्य दुर्वारत्वादिति दिक् ॥

अमावस्यदन्यतरस्याम् ॥ अमाशब्दः सहार्थे वर्तते । अमात्य इत्यादौ दर्शनात् । तस्मिन्नुपपदे वसेर्धातोराधि करणे ण्यत्

तन्निमित्तायां वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते । निपातनादेव कालविशेषे रूढिर्लभ्यते । अमा सह सन्निकृष्टौ वसतोऽस्यां चन्द्रार्कौ इत्यमावस्या । अमावास्या । एकदेशविकृतस्यानन्यत्वात् अमावास्यायावेति दीर्घमध्यमनूद्य विहितस्तद्धितो ह्रस्वमध्यादपि सिद्ध्यति । यदि तु यत्प्रत्ययान्तस्येदं पाक्षिकं निपातनमित्याश्रीयेत तदा यता मुक्ते अमावास्येत्यधिकरणे ण्यदेव तावद्दुर्लभः । अथापि बाहुलकाल्लभ्येत, एवमपि अमावास्यायावेत्यत्र ण्यदन्तग्रहणे यदन्त न गृह्येत । किञ्च ण्यत्पक्षे उपपदसमासो न स्यात् । मयूरव्यंसकादित्वाद्भविष्यतीति चेत् । एवमपि गतिकारकोपपदादिति स्वरो न स्यात् । किं त्वन्तोदात्तः स्यात् । इष्यते तु तित्स्वर एव । अमावास्यासुभगासुशेव । यदाग्नेयोऽष्टाकपालोऽमावास्यायामित्यादौ स्याशब्दे स्वरितत्वस्य शेषनिघातस्य च पठ्यमानत्वात् । तस्मात् ण्यदन्तस्यैव वृद्धौ सत्यां पक्षे ह्रस्वो निपात्यते इति यथाव्याख्यानमेवादर्त्तव्यम् । तथा च भाष्यम् । अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम् । तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति ॥ इह व्यक्तिभेदाश्रयो द्विवचननिर्देशः । एकस्येति शेषः । ण्यतोः, ण्यदन्तयोः । अमापूर्वयोर्वसोर्मध्ये एकस्य अवृद्धितां ह्रस्वम्, अहं निपातयामि । सूत्रकारेणैक्यमापन्नस्येयमुक्तिः । तथा सति, तयोः शब्दयोरेका तद्धितवृत्तिर्ययोः तत्ता सिध्यति एकदेशविकृतस्यानन्यत्वात् । एवं निपातयतो मे स्वरोपि सिध्यति । स च व्याख्यात एव । न च सिद्धान्तेपि उत्तरपदप्रकृतिस्वरो दुर्लभः । सूत्रे सप्तम्यभावेन उपपदसंज्ञाया अप्रवृत्तौ उपपदात्परत्वाभावादिति वाच्यम् । अमेति सप्तम्या लुका निर्देशादिति भावः ॥

छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यख- न्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचा- य्यपृडानि ॥ एतानि सप्तदश छन्दसि निपात्यन्ते । कृती छेदने अस्मात् निस्पूर्वात्क्यपि प्राप्ते ण्यत् आद्यन्तयोर्विपर्यासः निसः षत्वं च निपात्यते । निष्टर्क्यं चिन्वीत पशुकामः । देवशब्दउपपदे ह्वयतेर्जुहोतेर्वा क्यप् दीर्घत्वं तुगभावश्च । स्पर्द्धन्ते वा उ देवहूये । अत्र प्रपूर्वादुत्पूर्वाच्च नयतेः क्यप् । प्रणीयः । उन्नीयः । उत्पूर्वाच्छिषेः क्यप् । उच्छिष्यम् । मृङ् प्राणत्यागे । स्तृञ् आच्छादने । ध्वृ हूर्छने । एभ्यो य- त् । मर्यः । स्तर्या । स्त्रियामेवास्य निपातनम् । ध्वर्यः । खने- र्यत्ण्यतौ । खन्यः । खान्यः । देवशब्दउपपदे यजेर्यप्रत्ययः । शु- न्धध्वं दैव्याय कर्मणे देवयज्यायै । प्रत्ययस्वरेणान्तोदात्तत्वे कृ- दुत्तरपदप्रकृतिस्वरः । स्त्रीलिङ्गएवेदं निपातनम् । आङ्पूर्वात्पृ- च्छेः क्यप् । आपृच्छ्यं धरुणं वाज्यर्षति । प्रतिपूर्वात्सीव्यतेः क्यप् षत्वञ्च । प्रतिषीव्यः । ब्रह्मण्युपपदे वदेर्ण्यत् । वदः सुपिक्यप्चेति प्राप्तयोः क्यब्यतोरपवादः । ब्रह्मवाद्यम् । अथ कथं ब्रह्मोद्यं वदन्तीति । छन्दसि विशेषविहितेन ण्यता लो- के चरितार्थस्य वदःसुपीति क्यपः बाधप्रसङ्गात् । न च वास- रूपन्यायः । सरूपत्वात् । नानुबन्धकृतमसारूप्यमित्युक्तत्वात् । सत्यम् । कृद्व्यत्ययोत्र बोध्य । उक्तं हि । कालहलच्स्वरकर्तृयङां चेति । तत्र हि कर्तृग्रहणं कृत्प्रत्ययपरमित्यवोचाम । भवतेस्तौते- श्च ण्यत् । भाव्य । स्ताव्य । उपपूर्वाच्चिनोतेर्ण्यत् आयादे- शश्च निपात्यते पृडे उत्तरपदे । मृड सुखने । पृड च । इत्येतस्मा- दिगुपधलक्षणः कः । उपचाय्यपृडम् । हिरण्यइति वक्तव्य- म् ॥ उपचेयपृडमेवान्यत् । अत्र वार्त्तिकम् । निष्टर्क्ये व्यत्ययं नि-

यात् निसः पत्वं निपातनात् । ण्यदायादेश इत्येतौ उपचाय्ये निपातितौ ॥ ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः । ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥ व्यत्ययमिति । आद्यन्तविपर्यासमित्यर्थः । चतुर्भ्य इति देवहूयादिषु चतुर्भ्यो धातुभ्यः क्यप्, उपसर्गभेदान्नयतेर्भेदः । द्वौ क्यपाविति । द्वाभ्यां धातुभ्यां द्वाविति भावः । ण्यद्विधिश्चतुरिति । सुजन्तम् । चतुरो वारान् ण्यद्विधीयतइत्यर्थ ॥

ऋहलोर्ण्यत् ॥ ऋवर्णान्तात् धातोर्हलन्ताच्च ण्यत् स्यात् । कार्यम् । हार्यम् । वाच्यम् । पाच्यम् । सूत्रे पञ्चम्यर्थे षष्ठी । ऋ इति च अर्तेर्ग्रहणं न भवति किन्तु वर्णग्रहणम् । हला साहचर्यात् । परङ्कार्यमिति निर्देशात् । ईडवन्दवृशंसदुहांण्यत इति लिङ्गाच्च । अत्र वार्त्तिकानि । पाणौ सृजेर्ण्यद्विधिः ॥ ऋदुपधत्वात्प्राप्तस्य क्यपोपवादः । पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः॥ समवपूर्वाच्चेति वक्तव्यम् ॥ समवसर्ग्या । लपिदभिभ्याञ्चेति वक्तव्यम् ॥ अपलाप्यम् । अवदाभ्यम् । आभ्यां पोरदुपधादिति प्राप्तस्य यतोपवाद । अत्र दभिर्धातुष्वपठितोपि वार्त्तिकवचनात् चुराद्यन्ते बहुलमेतन्निदर्शनमिति बहुलग्रहणाच्चुलुम्पादिवत्साधु । तथा च प्रयुज्यते । न तानशन्ति न दभाति तस्कर इति, विष्णुर्गोपा अदाभ्य इति च । जयादित्यस्तु आद्यं वार्त्तिकद्वयम् एतिस्तुशास्वृतिसूत्रे पठित्वा तृतीयवार्त्तिकोक्तयोर्धात्वोर्मध्ये लपिम् आसुयुवपीति सूत्रे रपेरुपरि प्रक्षिप्य अनुक्तसमुच्चयार्थेन चकारेण दभेः सङ्ग्रहमाह । तत्र वैरूप्यं निर्बीजमेवेत्यवधेयम् ॥

ओरावश्यके ॥ उवर्णान्ताद्धातोर्ण्यत् स्यात् आवश्यके द्योत्ये । अवश्यं भाव आवश्यकम् । मनोज्ञादित्वाद्वुञ् । अव्ययानां भमात्रे टिलोपः । लाव्यम् । पाव्यम् । द्योतितार्थस्यापि

क्वचित्प्रयोगो दृश्यते । लाघवं प्रयत्नादरात् । अवश्यलाव्यम् । अत्रोपपदसमासासम्भवेपि मयूरव्यंसकादेराकृतिगणत्वात्समासः । उत्तरपदप्रकृतिस्वरत्वमपि तत्रैव निपातनाद्बोध्यम् ॥

आसुयुवपिरपित्रपिचमश्च ॥ आङ्पूर्वात्सुनोतेर्युप्रभृतिभ्यश्च ण्यत् स्यात् । अचोयत् पोरदुपधादिति यथायोगं प्राप्तस्य यतोपवाद । अत्र रपेरुपरि लपिर्वृत्तिकृता प्रक्षिप्त इत्युक्तम् । पुञ् अभिषवे । आसाव्यम् । यु मिश्रणे । याव्यम् । युञ् बन्धनइत्यस्य तु सानुबन्धकत्वान्नेह ग्रहणम् । वाप्यम् । राप्यम् । अपत्राप्यम् । आचाम्यम् ॥

आनाय्यो ऽनित्ये ॥ नयतेराङ्पूर्वात् ण्यदायादेशौ निपात्येते। रूढ्यर्थमपि निपातनम् । तेन घटादौ न भवति । किन्तु दक्षिणाग्निविशेषएव भवति । तथाहि । दक्षिणाग्नेर्योनिर्विकल्प्यते । वैश्यकुलाद्वित्तवतः भ्राष्ट्राद्वा । गार्हपत्याद्वेति । तत्र यो गार्हपत्यादानीयते आहवनीयेन सहैकयोनिः तत्रैवेदं निपातनं तस्य चानित्यत्वम् । सततमप्रज्वलनात् । अत्र भाष्यम् । आनाय्यो ऽनित्यइति चेद्दक्षिणाग्नौ कृतं भवेत् । एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत् ॥ चेदित्यस्यानन्तर घटादिष्वतिप्रसङ्ग इति शेषः। भवेदिति सम्भावने लिङ्, निपातनादेव रुढि सम्भाव्यतइत्यर्थ । एकयोनाविति । आहवनीयेन सहेति शेषः । आनेय इति घटादावनित्ये भिन्नयोनौ च दक्षिणाग्नौ अचोयदिति यदेव भवतीत्यर्थ ॥

प्रणाय्योसम्मतौ ॥ सम्मानन सम्मति । प्रीतिविषयभावोपगमनं कर्मव्यापारोत्र विवक्षितः । तथा भोगविषयआदरोपि सम्मति । तन्त्रेणार्थद्वयं विवक्षितम् । तेन पूजानर्हे निष्कामे च प्रपूर्वान्नयतेः ण्यदायादेशौ निपात्येते । प्रणाय्यश्चोरः । ज्येष्ठाय

पुत्राय पिता ब्रह्म ब्रूयात् प्रणाय्यायान्तेवासिने नान्यस्मै कस्मै चन ॥

पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥ यथासंख्यं चतुर्षु चत्वारो निपात्यन्ते । पाय्यं मानम् । मीयतेऽनेन मानम् । माङो ण्यत्प्रत्ययः करणे । आतो युक् चिण्कृतोरिति युक् धात्वादेः पत्वञ्च निपातनात् । मेयमन्यत् । सान्नाय्यं हविर्विशेषः । सम्यङ् नीयते होमार्थमग्निं प्रतीति । सम्पूर्वान्नयतेर्ण्यदायादेशौ उपसर्गदीर्घत्वञ्च निपात्यते । ऐन्द्रन्दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायामिति विहितयोर्दधिपयसोः संज्ञेयम् । भाष्यस्तु यथाश्रुतग्राही हविर्मात्रे प्रायुङ्क्त । प्रतिशरणमशीर्णज्योतिरग्न्याहितानां विधिविहितविरिब्धैः सामिधेनीरधीत्य । कृतगुरुदुरितौघध्वसमध्वर्युमुख्यैर्हुतमयमवलीढे साधुसान्नाय्यमग्निरिति ॥ नन्विदमपि दधिपयोविषयकमेव किं न स्यादिति वाच्यम् । चन्द्रोदयास्तमयवर्णनपूर्वकं सूर्योदयमनन्तरं पठितस्यास्य कृष्णप्रतिपद्विषयत्वेन तत्र दधिपयोयोगस्यासम्भवात् । हविर्विशेषवाचकस्य सामान्ये विशेषान्तरे वा लक्षणेत्यपि बोध्यम् । निकाय्यो निवासः । निपूर्वाच्चिनोतेरधिकरणे ण्यत् आयादेश आदेः कत्वञ्च निपात्यते । निचीयतेऽस्मिन्धान्यादिकमिति विग्रहः । निचेयमन्यत् । अत्रार्थे निकायशब्दोऽप्यस्ति स च निवासचितिशरीरोपसमाधानेष्वादेश्च कः इत्यत्र व्युत्पादयिष्यते । धाञो ण्यत्प्रत्यय सामिधेन्याम् । समिधामाधानी सामिधेनी । समिधामाधाने षेण्यण् । प्रोवाजा इत्यादिका ऋक् सामिधेन्य । अयञ्च न सर्वा सामिधेनी धाय्येत्युच्यते किन्तु समिध्यमानवतीं समिद्धवतीं चान्तरेण विहितेषु प्रक्षिप्यमाणा धाय्या भवन्ति इत्यादिरेव । सूत्रे सामिधेनीग्रहणं प्रयोगविष-

योपलक्षणार्थम्। तथा चासामिधेन्यामपि दृश्यते। धाय्याः शंसति। अग्निर्नेता त्वं सोमक्रतुभिरिति ज्योतिष्टोमे मरुत्वतीये शस्त्रविधानमेतत्। तत्र धीयते अनया सामिदिति करणे ण्यदिति हरदत्तग्रन्थः पृथुपाजा इत्यादिविषयः। धीयतइति धाय्येति कर्मणि ण्यदिति माधवग्रन्थस्तु अग्निर्नेतेत्यादिसाधारण इति निवेकः। सर्वथायं विशेषो निपातस्य रूढ्यर्थत्वाल्लभ्यते॥

क्रतौ कुण्डपाय्यसञ्चाय्यौ॥ एतौ निपात्येते क्रतौ वाच्ये। तत्र कुण्डशब्दे तृतीयान्ते उपपदे पिबतेर्धातोरधिकरणे यत् प्रत्ययो निपात्यते युक्च। कुण्डेन पीयते अस्मिन्सोम इति कुण्डपाय्यः क्रतुः। ननु अत्र ण्यदेव निपात्यतां प्रकृतत्वात्। एवञ्च युक् न निपातनीयः। आतोयुगित्येव सिद्धत्वादिति लाघवमपीति चेत्। मैवम्। तित्स्वरप्रसङ्गात्। इष्यते तु यतोनाव इत्याद्युदात्तत्वम्। कृदुत्तरपदप्रकृतिस्वरेण तस्यैव परिनिष्ठितत्वात्। तथा च प्रयुज्यते। यस्ते शृङ्गवृषो नपात् प्रणपात् कुण्डपाय्य इति। सम्पूर्वाच्चिनोतेर्ण्यत् आयादेशश्च निपात्यते। सञ्चीयते असौ सञ्चाय्यः क्रतुः। क्रताविति किम्। कुण्डपानं, सञ्चेयः॥

अग्नौ परिचाय्योपचाय्यसमूह्याः॥ एते निपात्यन्ते अग्नावभिधेये। अग्निश्चेह न ज्वलन किन्तु तद्धारणार्थमिष्टकाचयननिर्मितस्थलविशेषः। तत्रैव निरूढत्वात्। परिपूर्वादुपपूर्वाच्च चिनोतेर्ण्यदायादेशौ निपात्येते। परिचाय्यः। उपचाय्यः। सम्पूर्वाद्वहेः सम्प्रसारणं दीर्घत्वञ्च निपात्यते। समूह्यं चिन्वीत पशुकामः। अग्नाविति किम्। परिचेयम्। उपचेयम्। संवाह्यम्। इह सम्पूर्वादूह वितर्के इत्यस्मादनेकार्थत्वाद्वहेरर्थे वर्तमानादृलन्तत्वाण्ण्यति समूह्यमिति सिद्धम्। युक्तं चैतत्। समूह्य चिन्वीत

पशुकाम । पशवो वै पुरुष । पशुनेवास्मै तत्समूहतीति वह्यर्थेन ऊहिना ब्राह्मणे समूह्यशब्दस्य निरुक्तत्वात् । उक्तञ्च वार्तिककृता । समूह्य इत्यनर्थकं वचनं सामान्यकृतत्वात् । वह्यर्थमिति चेद्वहतेस्तदर्थत्वात्सिद्धम् । ऊहिविग्रहाच्च ब्राह्मणे सिद्धमिति ॥

चित्याग्निचित्ये च ॥ चित्येत्यत्र कर्मणि क्यप् निपात्यते । यतोपवाद । धातुस्वरेणाद्युदात्तं पदम् । चीयते असौ चित्योग्नि । अग्नेश्चयनमग्निचित्या । भावे यकारप्रत्ययस्तुक्च निपात्यते । न तु क्यप् । तेनान्तोदात्तत्व भवति । इह सूत्रे अग्नावित्यनुवर्तते तच्च चित्यशब्दस्यैव विशेषणं नाग्निचित्याशब्दस्य। तस्य भावे निपातितत्वात् । तेनाग्नेरन्यत्र चेयमित्येव भवति ॥

समाप्ता कृत्याः ॥

ण्वुल्तृचौ ॥ धातोर्ण्वुल्तृचौ स्तः । इत ऊर्ध्वमध्यायपरिसमाप्तेरुत्सर्गत कर्तरिकृदित्युक्ते कर्तरि प्रत्यया । पाचक । पक्ता । तृचश्चकारः सामान्यग्रहणाविघातार्थं । तुश्छन्दसि, तुरिष्ठेमेयः सु इति । एवञ्चाप्तृन्निति सूत्रेपि तृन्तृचोः पृथक्ग्रहण विहाय अप्तृ स्वसृ इत्येव ग्रहणमुचितम् ॥

नन्दिग्रहिपचादिभ्यो ल्युणिन्यच ॥ नंद्यादेर्ल्युः ग्रह्यादेर्णिनि पचादेरच स्यात् । नन्दिग्रहिपचादयश्च न धातुपाठे सन्निविष्टा संगृह्यन्ते । किन्तर्हि नन्दनरमणइत्येवमादिषु प्रातिपदिकगणेषु ये प्रकृतिभागास्तइह बुद्ध्या पृथक्कृत्य गृह्यन्ते। नन्वेवं किमनेन सूत्रेण गणपाठादेव नन्दनादिशब्दानां साधुत्वोपपत्तेरिति चत् । अत्र हरदत्तः । असत्यस्मिन्नष्टाध्याय्यां क्वचिदप्यनुपयोगात् गणपाठो नापेक्षिष्यते इति । तस्यायमाशय । एतएव साधव इति स्वरूपनियमपरं हि व्याकरणशास्त्रं तच्च सूत्रेष्वेव हि

तत्सर्वमिति न्यायेन सूत्रात्मकम् । तथा च यत्सूत्रे कथमपि न विषयीकृतं तस्य गाव्यादिवदर्थादिसाधुत्वं प्रसज्येतेति । नन्दिवाशिमदिदूषिसाधिवर्द्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् । टुनदि समृद्धौ । नन्दयतीति नन्दन । वाशृ शब्दे वाशन । मदी हर्षे मदनः । दुष वैकृत्ये दोषोणाविल्यूत्वं दूषणः । राध साध संसिद्धौ । विप्रो यज्ञस्य साधनः । ल्युः कर्त्तरीति पुंस्त्वम् । कथन्तर्हि होतुराहुतिसाधनं धेनुरिति । करणे ल्युटि सामान्ये नपुंसकं भविष्यति । वृधु वृद्धौ वर्द्धनः । शुभ शुम्भ शोभार्थे शोभनः । रुच दीप्तौ रोचनः । सहितपिदम संज्ञायाम् । षह मर्षणे सहनः । तप सन्तापे तपन । दमु उपशमे दमनः । जप जल्प व्यक्तायां वाचि । जल्पन । रमु क्रीडायां रमणः । दृप हर्षविमोचनयो दर्पणः । क्रदि आह्वादे रोदने च । सङ्क्रन्दनः । कृष विलेखने सङ्कर्षण । हृषु अलीके हर्षण । अर्द हिंसायां जनमर्दयतीति जनार्दन । कर्मण्याणि प्राप्ते । एवमुत्तरत्रापि कर्मण्युपपदे द्रष्टव्यम् । यु मिश्रणे । यवनः । षूद क्षरणे । मधुर्नामासुरस्तं सूदयतीति मधुसूदनः । ञिभी भये विपूर्वात् णिचि भियोहेतुभयेषुगिति पुक् विभीषण । लूञ् छेदने । निपातनाल्लत्वम् । लवणः । णश अदर्शने दमु उपशमे ण्यन्तौ । चित्तं नाशयतीति चित्तनाशन । कुलं दमयतीति कुलदमनः । शत्रुदमनः । इति नन्द्यादिः । ग्रह उपादाने ग्राही । षह मर्षणे उत्साही । दसु उपक्षये । उदासी । भस भर्त्सनदीप्त्योः । उद्भासी । तिष्ठतेरातोयुक् । स्थायी । मन्त्रि गुप्तपरिभाषणे चुरादिः । मन्त्री । अर्द हिंसायाम् समर्दी । रक्षश्रुवपशा नौ । रक्ष पालने । निरक्षी । श्रु श्रवणे । निश्रावी । डुवप् बीजसन्ताने । निवापी । शो तनूकरणे । निशायी । चत्वारो ऽमी निपूर्वाः । याचृ

व्याहृसंव्याहृव्रजवदवसां नञ्पूर्वाणाम् । डुयाचृ याच्ञायाम् । हृञ् हरणे । व्रज गतौ । वद व्यक्तायां वाचि । वस निवासे । अयाची । अव्याहारी । असंव्याहारी । अव्राजी । अवादी । अवासी । अचामचित्तवत्कर्तृकरणाम् । अजन्तानां धातूनाम् अचेतनकर्तृकाणां णिनिर्भवति । प्रतिषिद्धार्थानामेव । अकारी । अहारी । शीङ् स्वप्ने । विशयी । वृद्ध्यभावो निपातनात् । षिञ् बन्धने विषयी । वृद्ध्यभावः प्राग्वत् । इह षत्वमपि निपातनादिति गणरत्नमहोदधिव्याख्यायां वर्द्धमान । विशयी । विषयी देशे इति वृत्तिः । अभिभावी भूते । अभिभूतवान् अभिभावी । राध संसिद्धौ । अपराधी । रुधिर् आवरणे । अवरोधी । उपरोधी । परिभावी । इह पाक्षिको वृद्ध्यभावो निपात्यते । इति ग्रहादिः । डुपचष् पाके । वच परिभाषणे । इत्यादि । आकृतिगणोयम् । तथा च शिवशमरिष्टस्यकरे इति सूत्रे कृञो ऽच्प्रत्ययः कृतः । कर्मणिघटो ऽठच् इति सूत्रे च घटेः । तथा यङोचिचेति सूत्रेण अस्मिन्नच् प्रत्यये परे यङोलुग्विहितः । भाष्ये च अजपि सर्वधातुभ्यो वक्तव्य इत्युक्तम् । किमर्थं तर्हि पचाद्यनुक्रमणमिति चेत् । नदट् इत्यादौ अनुबन्धासञ्जनार्थम् । कर्मोपपदानामिगुपधानां च बाधनार्थम् । अन्येषान्तु प्रपञ्चार्थम् । तथाहि । नदट् । भषट् । प्लवट् । चरट् । गरट् । तरट् । चोरट् । देवट् । सूदट् । एते टितः । नद अव्यक्ते शब्दे । टो ङीबर्थः । नद । नदी । भष भर्त्सने भषी । प्लुङ् गतौ प्लवी । चर गतौ चरी । गॄ निगरणे । गरी । तॄ प्लवनतरणयोः । तरी । चुर स्तेये । चोरी । दिवु क्रीडादौ । देवी । सूदिरुक्तार्थे । सूदी । मिष स्पर्द्धायाम् । मेषः । कुप क्रोधे । कोप । सृप्लृ गतौ । सर्प । इह दिविप्रभृतिषु इगुपधत्वात्कः प्राप्त ।

डुभृञ्। जारं बिभर्तीति जारभरा। श्वानं पचतीति श्वपचा। अनयोः कर्मण्यण्प्राप्तः। न्यङ्क्वादिषु श्वपाकशब्दस्य पाठात् पक्षे कर्मण्यणपि भवतीति कैयटादयः। जूपमृङ्गप्रभृतीनान्तु पाठः प्रपञ्चार्थ एवेति विवेकः॥

इगुपधज्ञाप्रीकिरः कः॥ इगुपधेभ्यो जानातेः प्रीणातेः किरतेश्च कः प्रत्ययः स्यात्। विक्षिपः। विलिखः। विधः। कृशः। जानातीति ज्ञः। आतोलोपइटिचेत्यालोपः। प्रीञ् तर्पणे इयङादेशः। प्रीणातीति प्रियः। कृ विक्षेपे। ऋतइद्धातोः। किरतीति किरः। सूत्रे तु इतरेतरयोगद्वन्द्वे व्यत्ययेन पञ्चम्येकवचने कृशब्दस्य धात्वनुकरणत्वेन प्रकृतिवदनुकरणमित्यतिदेशात् ऋत इत्त्वं बोध्यम्। समाहारद्वन्द्वे तु नपुंसकत्वेन ह्रस्वे सतीत्त्वं न स्यात्॥

आतश्चोपसर्गे॥ आकारान्ताद्धातोरुपसर्गे उपपदे कप्रत्ययः स्यात्। श्याद्व्यधेति प्राप्तस्य णप्रत्ययस्यापवादः। प्रस्थः। सुग्लः। सुम्लः॥

पाघ्राध्माधेट्दृशः शः॥ एभ्यः पञ्चभ्यः शप्रत्ययः स्यात्। पिबतीति पिबः। जिघ्रः। धमः। धयः। स्त्रियान्तु टाप्। धया। यद्यपि धेटष्टित्वात् स्तनन्धयीत्यत्रेव इहापि ङीप् प्राप्नोति। तथापि खशन्ते एव ङीप् न तु शप्रत्ययान्ते इति नासिकास्तनयोरिति सूत्रे हरदत्तः। इह सूत्रे उपसर्गइति केचिदनुवर्तयन्ति तत्तु बहूनामसम्मतम्। तथा च प्रायुंक्त श्रीहर्षः। फलानि धूमस्य धयानधोमुखानिति। श्रूयते च यदापश्यः पश्यते रुक्मवर्णमिति। अत्र पिबतेरेव ग्रहणं न तु पा रक्षणइत्यस्य। लुग्विकरणत्वात्। घ्रः संज्ञायां प्रतिषेध॥ अत्र च व्याघ्रादिभिरिति सौत्रनिर्देशो लिङ्गम्। व्याघ्रः। आतश्चोपसर्गे इति कः॥

अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥ अनुपसर्गेभ्यो लिम्पादिभ्यः शप्रत्ययः स्यात् । लिम्पतीति लिम्पः । विन्दतीति विन्दः । सूत्रे लिम्पविन्देति भाविना नुमा सनुम्कौ निर्दिष्टौ । तेन विकरणेतराणामग्रहणम् । लाभार्थस्यैव तु ग्रहणम् । धृञ् धारणे धृङ् अवस्थाने । ण्यन्तयोर्द्वयोरपि ग्रहणम् । धारयः । अथ कथं न मह्यमनोत्तरधारयस्य :तइति श्रीहर्षः । परत्वाद्धि सूत्रधारादिष्विव कर्मण्यणा भाव्यम् । तथा च वार्त्तिकम् । अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेनेति ॥ सत्यम् । कर्मणः शेषत्वविवक्षायामणोऽप्राप्त्या शे कृते शेषषष्ठ्यन्तेन समासो भविष्यति । एतेन गङ्गाधरभूधरजलधरादयो व्याख्याताः । पार कर्मसमाप्तौ । पारयतीति पारयः । विद् चेतनाख्यानादिषु चुरादिः । ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्तः । वेदयतीति वेदयः । एजृ कंपने ण्यन्तः । उदेजयतीत्युदेजयः । चिति संज्ञाने चुरादिः । चेतयतीति चेतयः । सत सुखे चुरादिण्यन्त इति वोपदेवः । सातिः सौत्रो हेतुमण्ण्यन्त इति हरदत्त । सातयः । वासरूपन्यायेन क्विपि सात् । सम्पदादित्वाद्भावे क्विब्वा । एवञ्च एप एवानन्दयतीति श्रुतिबलादानन्दयितृविज्ञानमानन्दमित्यादिश्रुतिबलादानन्दरूपं ब्रह्म साच्छब्दार्थः । तदस्त्येषामिति सात्वन्तो भक्ताः । एतेन सात्वतां पतये नम इत्यादि व्याख्यातम् । सदेव सात् इत्युक्त्वा आर्षत्वञ्च वदन्तः प्रत्याख्याताः । षह मर्षणे चुरादिर्हेतुमण्ण्यन्तो वा । साहयः । उदाहरणेषु लिम्पिविन्दिभ्यां तुदादिभ्यःशः । शेमुचादीनामिति नुम् । धारयादिषु शब्गुणायादेशाः । अनुपसर्गादिति किम् । प्रलिपः । नौ लिम्पेरिति वक्तव्यम् ॥ निलिम्पा नाम देवाः । गवादिषु विन्देः संज्ञायामिति वक्तव्यम् । गोविन्दः । अरविन्दः । च-

कस्य नाभिनेम्योरन्तराले स्थितानि काष्ठानि अर, तदाकाराणि दलानि सादृश्यात्तच्छब्दभाञ्जि लभतइत्यर्थे कर्मण्यणो बाधनायेदम् ॥

ददातिदधात्योर्विभाषा ॥ श स्यात् । पक्षे श्याद्व्यधेति णः । दद । दधः । दाय । धायः । अनुपसर्गादित्येव । प्रदः प्रधः । दद दाने दध धारणे आभ्यामपि ददो दध इति सिद्धम् । दाधाभ्यां णे दायो धाय इति । सत्यम् । स्वरार्थमिदं सूत्रम् । अददः । अदधः । अत्र नञ्स्वरेण आद्युदात्तत्वं यथा स्यात् । अजन्तत्वे त्वच्कावशक्तावितिं अन्तोदात्तत्वमिति महान् भेदः ।

ज्वलितिकसन्तेभ्यो णः । इतिशब्द आद्यर्थे । ज्वल दीप्तौ इत्येवमादिभ्यो धातुभ्यः कस गतावित्यन्तेभ्यो णो वा स्यात् । ज्वलः । ज्वाल । चल । चालः । अनुपसर्गादित्येव । प्रज्वलः । कसिमपीत्य वृदिति ये पठन्ति तेषां मते कसन्तग्रहणं चिन्त्यप्रयोजनम् । ज्वलधातुश्च यद्यपि घटादिषु परस्मा च्चेति द्विः पठ्यते तथापि द्वितीय एवेह गृह्यते । घटादिपाठस्य मित्संज्ञायां चरितार्थत्वात् । इतरस्य चानन्यार्थत्वात् । ज्वलादिषु भ्रमु चलनइति पठ्यते । तस्माण्णे भ्रम इति रूपं नोदात्तोपदेशस्येव वृद्धिनिषेधात् । ज्वलादिपाठस्तु स्वरार्थः । अभ्रम इत्यत्र अच्कावशक्तावितिं स्वरो मा भूदिति । तनोर्णे उपसंख्यानम् ॥ अवतनोतीत्यवतानः । विभाषेत्यनुपसर्गादिति च नात्र वार्त्तिके सम्बध्यते ॥

श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च ॥ अनुपसर्गादिति निवृत्तम् । उत्तरसूत्रे पुनरनुपसर्गग्रहणात् । एवञ्च तत्सम्बद्धं विभाषाग्रहणमपि निवर्त्तते । श्यैङ्प्रभृतिभ्यो णः स्यात् । श्यैङ् गतौ अस्य आदन्तत्वादेव सिद्धे उपसर्गे कं बाधितुं

ग्रहणम् । अवश्याय । प्रतिश्याय । आतोयुगिति युक् । ए तेतावश्यतेर्ग्रहणं व्याख्यातम् । आत्, दाय । धायः । इह सूत्रे श्या आत् इति प्रश्लेषो न तु शीङो यणादेशेन, नापि अ-तते, अच्छब्दान्तानां वा यतिप्रभृतीनाम् । नाप्यकारान्तानाम् । अत्र च व्याख्यानमेव शरणम् । व्यध ताडने । व्याधः । स्रु ग-तौ आङ्पूर्वे सम्पूर्वश्च । आस्रावः । संस्राव । इण गतौ अति-पूर्वः । अत्यायः । षोन्तकर्मणि । हृञ् हरणे । अवपूर्वः । अव-सायः । अवहारः । लिह आस्वादने । लेहः । श्लिष आलिङ्गने श्लेष । श्वस प्राणने श्वासः ॥

दुन्योरनुपसर्गे ॥ दुनातेर्नयतेश्च अनुपसर्गाण्णः स्यात् । दुनोतीति दावः । नयतिसाहचर्यात्सानुबन्धकस्य दुनोतेरिह ग्रह-णम् । निरनुबन्धकाद्दवतेस्तु पचाद्यच् । दवः । करणसाधनो वा ऋदोरपित्यबन्त । दवदावौ वनारण्यवह्नी इत्यमरः । नयतीति नायः । अनुपसर्गे किम् । प्रदवः । प्रणयः ॥

विभाषा ग्रहः ॥ णः स्यात् । पक्षे अच् । व्यवस्थितविभा-षेयम् । तेन जलचरे ग्राहः । ज्योतिषि ग्रहः । भवतेश्चेति व-क्तव्यम् ॥ भवो देवः संसारश्च । भावा पदार्था । एतद्वक्त-व्यं भाष्ये नास्ति । भावा इति तु भाप्त्यर्थाच्चुरादेण्यन्तादचि बोध्यम् ॥

गेहे कः ॥ ग्रहे कः स्यात् गेहे कर्तरि ॥ गृह्णाति धान्यादि-कमिति गृहम् । तात्स्थ्याद् गृहा दाराः । गृहशब्दोऽर्धर्चादि । तत्र पुल्लिङ्गो बहुवचनान्त एव । नपुंसकस्तु अभिधेयवचनः । द्विवि-धोपि वेश्मनि मुख्यः । दारेषु गौणः । तथा च न गृहं गृहमि त्याहुर्गृहिणी गृहमुच्यते इति वेश्मनि मुख्यतामभिप्रेत्यैव व्यव हरन्ति । वृत्तिकारास्तु तन्त्रावृत्त्योरन्यतराश्रयणेन सूत्रे गेहश

ब्देन अर्थद्वयं निर्दिश्य प्रत्ययविधानात् दारेष्वपि गृहशब्दं मु-ख्यमेवेच्छन्ति । गेह इति च प्रत्ययार्थस्य कर्तुर्विशेषणम् । न तूपपदं गृहपतिनासंयुक्तइति निर्देशादिति न्यासकारहरदत्तौ । गृह ग्रहणइति चुरादावदन्ताण्णिचि पचाद्यचा भ्वादेरिगुपधलक्षणेन कप्रत्ययेन वा गृहशब्दस्य सिद्धौ निर्देशस्यान्यथोपपत्तेर्दुर्बलमिदं ज्ञापकम् । व्याख्यानादेव तु कर्तृविशेषणतेत्यवधेयम् । वस्तुतस्तूक्तरीत्यैव गृहशब्दसिद्धेर्गेहेक इति सूत्रं शक्यमकर्तुमिति दिक् ॥

शिल्पिनि ष्वुन् ॥ धातोः ष्वुन् स्यात् शिल्पिनि कर्तरि । क्रियाकौशलं शिल्पं तदस्यास्तीति शिल्पी । पूर्वेण साहचर्यात् । शिल्पिनीत्यपि प्रत्ययार्थस्य विशेषणम् । अत्र भाष्ये नृतिखनिरंजिभ्य इति परिगणनं कृतम् । नर्तकः । नर्तकी । खनकः । खनकी । जनीजॄष्क्नसुरञ्जोऽमन्ताश्चेति मित्त्वोक्तिर्ज्ञापयति रञ्जेरक्ङित्यपि क्वचिदनुनासिकलोपो भवतीति न्यासकारहरदत्तादयः । एवञ्च रञ्जेर्णौ मृगरमणइति रजकरजनरजस्सूपसङ्ख्यानमिति च वार्त्तिकं ज्ञापनसिद्धार्थानुवादकम् । रजकः । रजकी । षित्वान्ङीष् । भाष्यमते तु ङीष् न भवति । तथाहि । षष्ठे रजकरजनरज सूपसङ्ख्यानमिति वार्त्तिकं प्रत्याख्यातुं भाष्यकृतोक्तं कित एते औणादिका इति । तत्र कैयटः । रजक इति क्वुन् शिल्पिसंज्ञयोरिति क्वुन् । रजनमिति रञ्जेः क्युन्निति क्युन् । रज इति भूरञ्जिभ्यां किदित्यसुन्प्रत्ययः । रजकीत्यत्र तु पुंयोगलक्षणो ङीष् । अपुंयोगे तु ङीपा न भाव्यमिति भाष्यकाराभिप्राय इति । एवञ्च भाष्यमते नृतिखनिभ्यामेव ष्वुन् न तु रञ्जेरिति स्थितम् ॥

गस्थकन् ॥ गायतेस्थकन् स्यात् शिल्पिनि कर्त्तरि । गा-

थकः । गामादाग्रहणेष्वविशेषेपि गै शब्दइति इह गृह्यते न तु गाङ्गताविति । थकन्प्रत्ययो हि गायत्यर्थविषयमेव शिल्पिनमभिधातुं समर्थः ॥

ण्युट् च ॥ गायतेर्ण्युट् स्यात् शिल्पिनि कर्त्तरि । गायनः । गायनी । योगविभाग उत्तरत्रास्यैवानुवृत्त्यर्थः ॥

हश्च व्रीहिकालयोः ॥ जहातेर्जिहीतेश्च ण्युट् स्यात् व्रीहौ काले च कर्त्तरि । जहात्युदकमिति हायनो व्रीहिः । अम्बुनोधिकं वर्धनात् । जिहीते जलमिति वा विग्रहः । जलं प्रायेणापेक्षते, इत्यर्थः । जाङ्गलदेशोद्भवा व्रीहिविशेषा हायना इत्याहु. । प्रलयावस्थायां जहाति भावानिति जिहीते गच्छति परिच्छेदकत्वेन व्याप्नोतीति वा हायनो वर्षम् । अत्रापि व्रीहिकालयोरिति नोपपदम् । त्रिचतुर्भ्यां हायनस्येति लिङ्गात् ॥

प्रुसृल्वः समभिहारे वुन् ॥ एभ्यो वुन् स्यात् साधुकारिणि कर्त्तरि । समभिहारग्रहणेन साधुकारित्वं लक्ष्यते, भूय. सहचारात् । यो हि यां क्रियां पुनःपुनरनुतिष्ठति स तत्र कौशलं लभतइत्युत्सर्ग. । तेन सकृदपि यः सुष्ठु करोति तत्र भवति बहुशोपि दुष्टं कुर्वति न भवति । प्रवक । सरक । लवक । सूत्रे प्रुसृल्व इति पञ्चम्याः स्थाने जस् ॥

आशिषि च ॥ अप्राप्तप्रार्थनाविषयीभूतेर्थे वर्त्तमानाद्धातोर्वुन् स्यात्कर्तरि । जीवतात् जीवकः । नन्दतात् नन्दकः । आशिषि प्रयोक्तृधर्म. । पित्रादिगतेच्छाविषयीभूतयोर्जीवननन्दनयोः कर्तरि पुत्रादौ पित्रादेरियमुक्तिः ॥

इति श्रीशब्दकौस्तुभे तृतीयस्य प्रथमे पादे
षष्ठमाह्निकम् ॥ पादश्च समाप्तः ॥

कर्मण्यण् ॥ कर्मण्युपपदे धातोरण्प्रत्ययः स्यात् । कर्म

च समवेत्युक्तम् । तत्सर्वमविशेषादिह गृह्यते । निर्वर्त्ये, कुम्भं करोतीति कुम्भकारः । विकार्ये, काण्डलावः । प्राप्ये, वेदाध्यायः । पद्येवं, ग्रामं गच्छति आदित्यं पश्यति हिमवन्तं शृणोतीत्यादौ प्राप्नोति । सत्यम् । अनभिधानान्नेति भाष्यम् । तच्चानभिधानं यत्राभियुक्तैरुक्तं तत्रैव । अन्यत्र तु यथालक्षणं भवत्येव । यत्तु वृत्तौ त्रिविधं कर्मेह गृह्यतइत्युक्तं तस्यायमाशयः । आदित्यं पश्यतीत्यादौ मा भूदित्येवमर्थं कर्मणि निर्वर्त्यमानविक्रीयमाण इति वक्तव्यमित्याशङ्क्य वार्त्तिककृतोक्तम् । कर्मणि निर्वर्त्यमाने विक्रियमाणइति चेद्वेदाध्यायादीनामुपसङ्ख्यानमित्यादि । एवं स्थिते त्रिविधमपीह कर्म गृह्यते । न तु प्राप्यं न गृह्यतइति । एवञ्च त्रिविधमिति वृत्तिं दृष्ट्वा सूत्रान्तरोक्तं नेह गृह्यतइति न भ्रमितव्यम् । तथा च दिवः कर्मचेत्यत्र संज्ञासमावेशस्य प्रयोजनमुक्तम्, मनसा देव इत्यत्र कर्मत्वादण् करणत्वात्तृतीयेति । एवञ्च वृक्षावासः पर्वतावास इत्याद्यपि यथाभिधानं भवत्येव । शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वञ्च ॥ शील समाधौ । कमु कान्तौ । भक्ष अदने । चुरादिण्यन्तः । चरिर्गत्यर्थः आङ्पूर्वः । णस्य णित्करणं चरेर्वृद्ध्यर्थम् । कृदुत्तरपदप्रकृतिस्वरं बाधितुं पूर्वपदेत्यादि । मांसं शीलयति मांसशीला । मांसकामा । मांसभक्षा । अत्र अणि सति ङीप्स्यात् । णेप्यण्कार्यमिति तु ताच्छीलिकएवेति वक्ष्यते । मनेर्दीर्घत्वञ्चेति सप्रत्ययान्तत्वादन्तोदात्तो मांसशब्दः । कल्याणचारा । कल्याणशब्दो लघावन्त इति मध्योदात्तः । ईक्षिक्षमिभ्यां चेति वक्तव्यम् ॥ अत्रापि पूर्वपदप्रकृतिस्वरत्वे चेति सम्बध्यतएव । वाक्यभेदस्तु वैचित्र्यार्थः । सुखप्रतीक्षा । बहुक्षमा । स्यादेतत् । यो मांसम्भक्षयति तस्य मांसं भक्षो भवति । तत्र भक्षयतेः क-

मेण्यरजन्तेस्य बहुव्रीहिणा सिद्धम् । एवमन्यत्रापि । यस्तु अण्यन्तस्तस्य घञन्तस्य बहुव्रीहिः । न च बहुभक्ष इत्यत्र बहोर्नञ्वदिति उत्तरपदान्तोदात्तत्वं स्यादिति वाच्यम् । भावे अजन्तेन बहुषु भक्षोस्येति विग्रहोपपत्तेः। न ह्यत्र बहुस्वरमाप्तिरस्ति। उत्तरपदार्थस्य बहुत्वाभावात् । एवञ्च वार्त्तिकद्वयमपि नारम्भणीयमिति चेत् । मैवम् । कर्मण्यणं बाधितुं तस्यावश्यारभ्यत्वात्।अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन ॥ पचादिभ्योच् अनुपपद अकारः । तस्यावकाशः । पचतीति पचः । कर्मोपपदस्यावकाशः काण्डलावो व्रजति । ओदनपाच इत्यत्र उभयप्रसङ्गे परत्वादणेव । तेनोपधावृद्धिः । उपपदसमासश्च नित्यो भवति । अचि तु षष्ठीसमासो वैकल्पिकः स्यात् । कथं तर्हि गङ्गाधरः श्रीधरः वज्रधरः भूधरः स्रग्धरेत्यादि । अत्र केचित् । युगपद्विवक्षायां हि भवतु विप्रतिषेधः। केवलप्रकृत्यर्थविवक्षायान्तु अचि कृते पश्चात्कर्मसम्बन्धे सिद्धं रूपमिति । अत्र हरदत्तः । एवं सति ओदनपच इत्यपि स्यात् । तच्चानिष्टम् । किञ्चोक्तरीतिर्न्यायविरुद्धा एकत्वात्प्रयोगस्य । न हि तस्मिन्नेव प्रयोगे विवक्षितं चाविवक्षितं च कर्म भवति । तस्मादोदनपच इत्यसाधुरेव। गङ्गाधरादयस्तु संज्ञाशब्दा इत्याह । अत्रेदं वक्तव्यम् । परिनिष्ठिते प्रयोगे कर्मान्वयसत्वेपि प्रक्रियादशायां क्रमेण विवक्षायां न क्षतिः । कथमन्यथा शक्यञ्चेत्यादौ अन्तरङ्गः पदसंस्कारो बहिरङ्गश्चीत्वेन न विहन्येतेत्यादि तत्रतत्रोच्यते । किञ्च कर्मणः शेषत्वविवक्षयापि गङ्गाधरादिशब्दानां सौष्ठवे सम्भवति रथन्तरादिवन्न केवलं संज्ञात्वमाश्रयितुं युक्तम् । ओदनपचशब्दोपि उक्तरीत्या प्राप्नोत्येव । यदि त्वस्यासाधुत्वे प्रमाणमस्ति तर्ह्यनभिधानं शरणीक्रियतामित्यास्तां

तावत्। प्रकृतमनुसरामः। पचादिभ्य एवाजिति यथाश्रुतसूत्रमनुसृत्य विप्रतिषेध उदाहृतः। यदा तु अजपि सर्वधातुभ्य इति पक्षस्तदा अपवादत्वादेव तस्याण् बाधको बोध्यः। किञ्चेगुपधज्ञाप्रीकिरःकोनुपपदः। तस्यावकाशः विक्षिपः विलिखः। कर्मोपपदस्य स एव। काष्ठभेद इत्यत्र परत्वादण्। तथा अनुपसर्गाल्लिम्पविन्देति अनुपपदः शः। तस्यावकाशः लिम्पतीति लिम्पः। कर्मोपपदस्य स एव। कुड्यलेप इत्यत्र परत्वादण्। तथा आतश्चोपसर्गे इति कः अनुपपदः सुग्लः सुम्ल इत्यत्र सावकाशः। कर्मोपपदस्तत्रैव गोसन्दाय इत्यत्र परत्वादणेव भवति॥

ह्वावामश्च॥ एभ्यः कर्मण्युपपदे अण् स्यात्। कस्यापवादः। ह्वेञ् स्पर्द्धायां शब्दे च। स्वर्गह्वायः। वेञ् तन्तुसन्ताने। तन्तुवायः। वा गतिगन्धनयोरित्ययन्तु नेह गृह्यते। अकर्मकत्वात्। भ्रमणार्थो ह्यसौ। यद्यपि सोपसर्गस्य सकर्मकत्वं दृश्यते सर्वा दिश आवान्ति। वात आवा तु भेषजमिति।तथापि तत्र पूर्वेणैवाण् सिद्धः। दाता वान्ति दिशो दश इति तु प्रयोगश्चिन्त्यः। अथापि क्व चित्कथञ्चित् सकर्मकत्वं निर्वाह्यते। तथापि ह्वेञा सानुबन्धेन साहचर्याद् ह्वेञ एव ग्रहणं न तु वातेः। माङ् माने, मेङ् प्रणिदाने उभयोरपि ग्रहणम्। धान्यमापः। मा मानइत्यस्य तु सम्भावनार्थस्याकर्मकत्वादग्रहणम्॥

आतोनुपसर्गे कः॥ आदन्ताद्धातोरनुपसर्गात् कर्मण्युपपदे कप्रत्ययः स्यात्।अणोपवादः। गोदः पार्ष्णित्रम्। अनुपसर्गे किम्। गोसन्दायः। अत्र वार्त्तिकम्। कविधौ सर्वत्र प्रसारणिभ्यो डः॥ सम्प्रसारणभाजः प्रसारणिनः। ज्या वयोहा-

नौ । ब्रह्म जिनातीति ब्रह्मज्य । सर्वत्रग्रहणान्नेहैव । आतश्चोपसर्गे, आव्ह प्रव्हः । अत्र के सति सम्प्रसारणं स्यात् । आ व्हा अ इति स्थिते सम्प्रसारणे पूर्वत्वे च कृते उवङादेशे आहुव प्रहुव इति प्राप्नोति । एवं ब्राह्मजिय इति प्राप्नोति । न चेरनेकाच इत्यनेन यण् । अङ्गस्य एकाच्त्वात् । ननूभयत्रापि सम्प्रसारणे कृते आतोलोप । तस्य स्थानिवद्भावादियङुवङौ न भविष्यत इति चेत् । स्यादेवम् । यद्यातोलोपो लभ्येत । स तु दुर्लभः । अन्तरङ्गेण पूर्वत्वेन बाधात् । न च वार्णादांग बलीय । व्याश्रयत्वात् । नन्वेवमपि व्यर्थमेव वार्त्तिकम् । प्रागेव सम्प्रसारणादातोलोपे कृते तस्य स्थानिवद्भावादसिद्धत्वाद्वा उवङोऽप्रवृत्तौ यणादेशेन आव्ह प्रव्ह इत्यादेः सिद्धत्वात् । तथाहि । नित्यं सम्प्रसारणम्, आतोलोपे कृते अकृते प्रसङ्गित्वात् । अल्लोपस्तु कृते च सम्प्रसारणे यद्यपि पूर्वत्वेन बाध्यते तथापि यस्य च निमित्त लक्षणान्तरेण विहन्यते न तदपि नित्यमिति नित्य एव । द्वयोर्नित्ययो परत्वादालोपः । ततः सम्प्रसारणं तत इयङुवङौ प्रसक्तौ आतोलोपस्य स्थानिवत्त्वान्न भविष्यतः । न च अनादिष्टादचः पूर्वत्व नास्तीति वाच्यम् । स्थानिद्वारकस्य सत्त्वात् । यत्त्विह कैयटेनोक्तं शास्त्रीयकार्यसिद्धये स्थानिवद्भावो विधीयते न त्वनादिष्टादच पूर्वत्वे लौकिके इति, तदापातत । अचः परस्मिन्नित्यातिदेशस्याधाराश्रयतया तस्यैव स्थानिवत्सूत्रेणातिदेश सम्भवतीति नपदान्तसूत्रोपसवर्णग्रहणानुपष्टम्भेन प्रागेव व र्णितत्वात् । किञ्चाकारलोपस्य आभीयत्वे नासिद्धत्वान्न दोष । न चैवं जुहुवतुः जुहुवु अप्राप्नुवन् न स्यादिति वाच्यम् । स्थानिद्वारकस्य अनादिष्टादच पूर्वत्वस्य आभीयासिद्धत्वस्य

च अनित्यत्वेनेह प्रवृत्तेः। अथ वा सम्प्रसारणाच्च एङः पदान्तादित्यत्र एङ इति योगो विभज्यते। सम्प्रसारणादेङि परे पूर्वपरयोः पूर्व एकादेशो भवतीति सम्प्रसारणाच्चेत्येव सिद्धे ज्ञापनार्थमिदम्। यत्र सम्प्रसारणात्पर एङ् सम्भवति तत्र अनैमित्तिकत्वेनान्तरङ्गमप्यात्वं अकृत्वा सम्प्रसारणं कर्तव्यमिति। तेन जुहुवतुरित्यत्र एङन्तादे लिटि विहिते सम्प्रसारणं पूर्वत्वम्। ततश्च न स्थानिवत्वं नाप्यसिद्धत्वमिति सिद्धमिष्टम्। आह्व मन्ह इत्यत्र तु आकान्तलक्षणः प्रत्ययो असत्यात्वे कर्तुमशक्य। अतः पूर्वमात्वम्। तत. प्रत्यय. अल्लोपः सम्प्रसारणं स्थानिवद्भावादसिद्धत्वाद्वा इयङुवङोरभावः। तस्मान्मास्तु वार्तिकमिति चेत्। सत्यम्। इत्थं प्रत्याख्यातमेव भाष्ये किन्तु अस्ति वार्तिकस्योक्तिसम्भवः। आभात्सूत्रप्रत्याख्यानपक्षे हि स्थानिवत्त्वमेव शरणम्। तत्र च स्थानिद्वारकमनादिष्टादचः पूर्वत्वमाश्रयणीयन्तच्चानित्यमिति ज्ञापयितुमिदं वार्तिकमिति। एतत्प्रत्याख्यातु प्रवृत्तो भाष्यकारोपि स्थानिवद्भावमुपन्यस्य दूषयित्वा असिद्धतां शरणीकुर्वन् स्थानिद्वारिकायाः अनादिष्टादच पूर्वतायाः क्वाचित्कतां ध्वनयति। तत्फलन्तु अचः परस्मिन्निति सूत्रएवावोचामेत्यलं बहुना॥

सुपि स्थः॥ सुबन्ते उपपदे तिष्ठतेर्धातोः कः प्रत्ययः स्यात्। समस्थः। विषमस्थ.। अत्र सुपीति योगो विभज्यते। सुपि आकारान्तेभ्यो धातुभ्यः कप्रत्ययः स्यात्। द्वाभ्यां पिबतीति द्विपः। स्थ॰॥ सुपि तिष्ठते कः स्यात् भावे। आखूनामुत्थानमाखूत्थ। प्रक्रियाकौमुद्यान्तु आखूत्थमिति नपुसकं पठ्यते तस्मामादिकम्। भाष्यादौ सर्वत्र पुल्लिङ्गस्यैवोदाहृतत्वात्। स्यु. कर्त्तरीमनिज्भावे कः किर्वोः प्रादितोन्यत इत्यमरकोशा-

त्रावे कस्य पुंस्त्वविधानाच्च । भावे नणकचिद्रयोन्य इति न-पुंसकविधाने कस्य पर्युदासाच्च । ननु स्थ इति सूत्रे णविधीयमानोपि कः कृत्त्वात्कर्त्तर्येव स्यादिति चेन्न । आत इत्यनेनैव सिद्धे । तथा च स्थ इत्यारम्भसामर्थ्यान्न कर्त्तरि किन्त्वानिर्दिष्टार्थत्वात्स्वार्थे । धातोश्च स्वार्थो भाव एव । नन्वेवं घःर्थे कविधानमित्यनेनैव गतार्थत्वमिति चेन्न । वार्त्तिकं दृष्ट्वा सूत्रकृतो ऽप्रवृत्तेः । किञ्च नित्यसमासार्थमिदम् । अन्यथा हि षष्ठीति सूत्रेण पाक्षिकः समासः स्यात् । इष्यते तु नित्यमुपपदसमासः । तथा च आखूनामुत्थानमिति अस्वपदविग्रहः क्रियते । घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थमित्यत्र स्थाग्रहणन्तु कर्तृवर्जिते कारके यथा स्यादित्येवमर्थम् । इत ऊर्ध्वं कर्मणि सुपीति च द्वयमप्यनुवर्त्तते । तत्र सकर्मकेषु कर्मणीत्युपतिष्ठते । स्पृशोनुदकइति यावत् । अन्यत्र सुपीति सुप्यजातौ-णिनिरिति यावत् । एवञ्च मकृतस्य सुब्ग्रहणस्य उपसर्गेतरपरत्वं सत्सूद्विषेति सूत्रस्थेनोपसर्गेपीत्यनेन ज्ञापितमिति सुप्मात्रपरिग्रहार्थं णिनिविधौ पुनः सुब्ग्रहणमिति वक्ष्यामः ॥

तुन्दशोकयोः परिमृजापनुदो ॥ तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदिभ्यां धातुभ्यां कमत्यय स्यात् । आलस्यसुखाहरणयोरिति वक्तव्यम् ॥ आलस्ये सुखोत्पादने च गम्यमाने प्रत्यय इत्यर्थः । तत्र सामर्थ्यादलसे कर्त्तरि सुखस्य चाहर्त्तरि प्रत्यय इति फलितं भवति । तुन्दं परिमार्ष्टीति तुन्दपरिमृजोलसः । अत्र मृजेरजादाविति वैकल्पिकी वृद्धिर्नेति हरदत्तः । भवतीत्यपरे । एतन्मतद्वयबलाबलं तु क्ङितिचेति सूत्रे प्रतिपादितम् । अलसादन्यत्र तुन्दपरिमार्ज इत्येव भवति । शोकापनुदः सुखस्याहर्त्ता । यस्तु ससारासारत्वाद्युपदेशेन शोक-

मेव केवलमपनुदति न तु सुखमुत्पादयति स शोकापनोदः। कमकरणे मूलविभुजादिभ्य उपसंख्यानम् ॥ तादर्थ्यएषा चतुर्थी। मूलविभुजादिसिध्यर्थमित्यर्थः। मूलानि विभुजतीति मूलविभुजो रथः। नखान्मुञ्चतीति नखमुचानि धनूंषि। कौ मोदते कुमुदं सरोरुहम्। इह यद्यपि काकगुहास्तिला इति भाष्यवृत्त्यादिषु उदाहृतं तथापि काकेभ्यो गूहितव्या इति कर्मार्थावगतेः घञर्थे कविधानमित्यत्रेदं द्रष्टव्यमिति हरदत्तः। आकृतिगणोयम्। तेन महीध्रकुध्रशिरोध्रशिरोरुहादि सिद्धम् ॥

मे दाज्ञः ॥ दारूपाज्जानातेश्च सोपसर्गात्कर्मण्युपपदे कमत्ययः स्यात्। अणोपवादः। सर्वमदः। पथिज्ञः। मइति किम्। गोसन्दायः। अनुपसर्गइत्यनुवृत्तेः मेत्यस्मादन्यस्मिन्नुपसर्गे सति को न भवति। किन्त्वणेव। गोसम्प्रदायः। इह वृत्तौ ददातेरित्युक्तं तत्तु सर्वेषां दारूपाणामुपलक्षणम्। गामादाग्रहणेष्वविशेषादिति हरदत्तः ॥

समि ख्यः ॥ सम्पूर्वात्ख्या इत्यस्मात्कर्मण्युपपदे कमत्ययः स्यात्। गाः सञ्चष्टे गोसंख्यः। चक्षिङः ख्याञादेशः। ख्या प्रकथनइत्यस्य तु सम्पूर्वस्य प्रयोगो नास्तीति न्यासकारः ॥

गापोष्टक् ॥ अभ्यां टक् स्यादनुपसर्गे कर्मण्युपपदे। सामगः। सामगी। अत्र वार्त्तिकम्। सुराशीध्वोः पिबतेरिति ॥ अत्र पिबतेरिति लुग्विकरणपरिभाषाल्भ्यार्थकथनम्। उपपदपरिगणनन्तु वाचनिकमेव। सुरापः। सुरापी। शीधुपः। शीधुपी। सुराशीध्वोः किम्। क्षीरपा ब्राह्मणी। पिबतेरिति किम्। सुरां पाति रक्षतीति सुरापा। अनुपसर्गे किम्। सामसङ्गायः। गामादाग्रहणेष्वविशेषेपि गै शब्दइत्यस्यैवात्र ग्रहणं न तु गाङ् गताविस्यस्य सानुबन्धस्य, नापि गा स्तुताविति जुहोत्यादेः। नि-

रनुबन्धेन अलुप्तविकरणेन च पिबतिना साहचर्यात्। अनभिधानाद्वा। बहुलं तणि॥ या ब्राह्मणी सुरापा भवति नैतां देवाः पतिलोकं नयन्ति॥

हरतेरनुद्यमनेऽच्॥ उत्क्षेपणादन्यस्मिन्नर्थे वर्तमानाद्धरतेर्धातोः कर्मण्युपपदे ऽच् स्यात्। अणोपवादः। अंशहरः। रिक्थहरः। अनुद्यमने किम्। भारहारः। अच्प्रकरणे शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुःषु ग्रहेरुपसंख्यानम्॥ शक्तिग्रहः। लाङ्गलग्रह इत्यादि। लिङ्गविशिष्टपरिभाषया घटग्रहणेनैव सिद्धे घटीग्रहणं परिभाषाया अनित्यत्वज्ञापनार्थम्। तेन मद्राज्ञीत्यत्र टच् न। द्विपतीताप इत्यत्र द्विषत्परयोरिति खच् नेति दिक्। सूत्रे च धार्यर्थे॥ ग्रहेरुपसंख्यानमित्येव। सूत्रग्रहः। धार्यर्थेइति किम्। यः सूत्रं केवलमुपादत्ते न तु धारयति तत्राणेव यथा स्यात्। सूत्रग्राहः॥

वयसि च॥ वयसि गम्यमाने हरतेर्धातोः कर्मण्युपपदे अच् स्यात्। अणोपवादः। उद्यमनार्थ आरम्भः। कवचहरः क्षत्रियकुमारः। इह कवचोद्यमनं क्रियमाणे सम्भाव्यमानं वा वयो गमयति। तेनासत्यपि कवचग्रहणे कवचहर इति भवति॥

आङि ताच्छील्ये॥ आङ्पूर्वाद्धरतेः कर्मण्युपपदे ऽच्प्रत्ययः स्यात्ताच्छील्ये गम्यमाने। पुष्पाण्याहरति तच्छीलः पुष्पाहरः। फलाहरः। ताच्छील्ये किम्। भारमाहरति भाराहारः॥

अर्हः॥ अर्ह पूजायामित्यस्मात्कर्मण्युपपदे ऽच् स्यात्। अणोपवादः। स्त्रियां विशेषः। पूजार्हा ब्राह्मणी॥

स्तम्बकर्णयो रमिजपोः॥ स्तम्बकर्णयोरुपपदयोः यथासंख्य रमिजपिभ्यामच्प्रत्ययः स्यात्। रमिरत्नायदकर्मकः। अ-

पिस्तु शब्दकर्मकः । मन्त्रं जपतीत्यादिदर्शनात् । उभावपि प्रति स्तम्बकर्णयो कर्मत्वासम्भवात् सुपीत्येवात्र सम्बध्यते । हस्तिसूचकयोरिति वक्तव्यम् ॥ स्तम्बे रमते इति स्तम्बेरमो हस्ती । तत्पुरुषेकृति बहुलमित्यलुक्, हलदन्तादिति वा । कर्णेजपः सूचकः । हस्तिसूचकाभ्यामन्यत्र तु स्तम्बेरन्ता । कर्णेजापिता मशकः । उपांशुशब्दायितेत्यर्थः ॥

शमिधातोः संज्ञायाम् ॥ शमि उपपदे धातुमात्रात्संज्ञायां विषये अच् स्यात् । शङ्करः । शम्भव । शवद । धात्वधिकारे पुनर्धातुग्रहणमपशब्दविषयेपि मद्र्न्त्यर्थम् । तथा च वार्त्तिकम् । शमिसंज्ञायां धातुग्रहणं कृञोहेत्वादिषु टप्रतिषेधार्थमिति ॥ असति धातुग्रहणे शमिसंज्ञायामित्यस्यावकाश । शम्भव । शंवद । कृञोहेतुताच्छील्यइत्यस्यावकाशः श्राद्धकर । शङ्कर इत्यत्रोभयमसङ्गे परत्वाट्ट एव स्यात् । धातुग्रहणसामर्थ्यादजेव भवति । शङ्करा नाम परिव्राजिका तच्छीला । कुणरवाडवस्त्वाचार्यो मन्यते गृणाते शब्दकर्मणएतद्रूपम् । पृषोदरादित्वाद्गकारस्य ककार इति । तम्मते धातुग्रहण चिन्त्यप्रयोजनम् ॥

अधिकरणे शेतेः ॥ सुपीति सम्बध्यते । अच् स्यात् । खे शेते खशयः । पार्श्वादिषूपसङ्ख्यानम् ॥ पार्श्वाभ्यां शेते पार्श्वशय । पृष्ठशय । उदरशयः । दिग्धसहपूर्वाच ॥ दिग्धेन सह शेतइतिविग्रहे दिग्धसहशयः । अत्र दिग्धसहशब्दो मयूरव्यंसकादि । तस्य शयशब्देन सह उपपदसमासः । उत्तानादिषु कर्तृषु ॥ उत्तानः शेते उत्तानशयः । अवमूर्धशयः । अवनतो मूर्धा यस्य अवमूर्ध । अधोमुखः शेतइत्यर्थ । गिरौ डश्छन्दसि ॥ गिरौ शेते गिरिशः । तद्धितो वा ॥ गिरिरस्यास्तीति गिरिशः । लोमादित्वाच्छः । इह यत्रापि कृत्तद्धिताभ्यां गिरिश-

शब्दो द्वेधा भाष्यवार्तिकयोर्व्युत्पादितस्तथापि लोके तद्धितान्त एव न तु कृदन्तः । टश्छन्दसीत्युक्तेः । एवञ्च मल्लाहताख्रो गिरिशमभावात्, आरोपितं यद्गिरिशेन पश्चात्, गिरिशमुपचचार मल्लहं सा सुकेशीत्यादि प्रयुञ्जानानां कवीनां न कोऽप्यपराध । गिरौ शेते इति व्याचक्षाणानां तु प्रमाद इत्यवधेयम् ॥

चरेष्ट ॥ अधिकरणे उपपदे चरेष्टः स्यात् । कुरुचरः । कुरुचरी ॥

भिक्षासेनादायेषु च ॥ एषु उपपदेषु चरेष्टः स्यात् । भिक्षां चरतीति भिक्षाचरः । चरतिरत्र चरणपूर्वके अर्जने वर्त्तते । चरणेन भिक्षामर्जयतीत्यर्थः । सेनाञ्चरति प्रविशतीति सेनाचरः । आदायेति ल्यबन्तं आदाय चरति गच्छतीत्यादायचरः । भक्षयतीति वा । कथं प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहमिति । पचादिषु चरडिति पठ्यते । सुप्सुपेति समास । टविधानन्तु नित्यसमासार्थम् ॥

पुरोऽग्रतोऽग्रेषु सर्तेः ॥ टः स्यात् । पुरः सरतीति पुरःसरः । अग्रतःसरः । अग्रमग्रेणाग्रे वा सरतीत्यग्रेसरः । सूत्रे अग्रशब्दस्य एदन्तत्वमपि निपात्यते । कथन्तर्हि यूथं तदग्रसरगर्वितकृष्णसारमिति । बाहुलकादिति हरदत्तः ॥

पूर्वे कर्त्तरि ॥ कर्तृवाचिनि पूर्वशब्दउपपदे सर्त्तेष्टः स्यात् । पूर्वः सरतीति पूर्वसर । कर्त्तरीति किम् । पूर्वं देशं सरतीति पूर्वसारः ॥

कृञो हेतुताच्छील्यानुलोम्येषु ॥ हेत्वादिषु द्योत्येषु करोतेष्टः स्यात् । हेतुरिह लौकिक । यशस्करी विद्या । अतः कृकमीति सः । ताच्छील्ये, श्राद्धकरः । आनुलोम्ये, वचनकरः । एषु कि

म् । कुम्भकारः । इह प्रसिद्धतरत्वात् डुकृञ्‌नवन्धकोपि करोति-रेव गृह्यते न तु कृञ् हिंसायामिति । हेतुः कारणम् । आनुलो-म्यमाराध्यचित्तानुवर्त्तनम् ॥

दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपि-लिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु॥ एषु सुबन्तेषु यथायोगं कर्मसु चोपपदेषु करोतेष्टः स्यात् । अहे-त्वाद्यर्थ आरम्भः । दिवा दिवसे करोति प्राणिनश्चेष्टायुक्तानि-ति दिवाकरः । अत्र दिवाशब्दः अन्हीति सप्तम्यन्तस्यार्थे व-र्त्तत इति तस्य कर्मत्वानुपपत्तेः सुपीत्यनेन सम्बन्धः । शेपा-णान्तु कर्मणीत्येव । यदि तु वृत्तिविषये दोषामन्यमहर्दिवामन्या रात्रिरितिवत् कर्मत्वमभ्युपगम्यते तदा सर्वेषां कर्मणीत्यनेनै-व सम्बन्धो बोध्यः । विभाकरः । निशाकरः । प्रभाकरः । भास्करः । सूत्रे भास्करान्तेति भाःशब्दस्य प्रत्ययसन्नियोगेन सकारो निपात्यते । तेन भास्कर इत्यत्र विसर्जनीयजिव्हामूली-यौ न भवतः । यद्वा कस्कादिषु बोध्यः । कारकरः । कर एव कारः । प्रज्ञादित्वात्स्वार्थे अण् । अन्तकरः । अनन्तकरः । अन्तकरश-ब्देन नञ्समासेप्येतदेव रूपम् । स्वरे तु विशेषः । नञ्समासे हि सतिशिष्टोव्ययपूर्वपदप्रकृतिस्वरः । अनन्तशब्दस्योपपदत्वे तु कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् । आदिकरः । बहुकरः । बहुशब्दोत्र वैपुल्यवचनः । संख्यावचनस्य तु संख्याग्रहणग्रह-णेनैव सिद्धेः । नान्दीकरः । किङ्करः । लिपिलिबिशब्दौ पर्या-यौ । लिपिकरः । लिबिकरः । बलिकरः । भक्तिकरः । कर्तृकरः । चित्रकरः । क्षेत्रकरः । संख्या, एककरः । द्विकरः । जंघाकरः । बाहुकरः । अहस्करः । अहन्, रोसुपीति रेफः । कस्कादित्वा-त्सः । यत्करः । तत्करः । धनुष्करः । अरुष्करः । नित्यंसमा-

सेनुत्तरपदस्थस्येति षत्वम्। किंयत्तद्बहुषु कृञोज्विधानम् ॥ वार्त्तिकमेतदिति कैयटहरदत्तौ । इष्टिरिति माधव । किङ्करा । यत्करा । तत्करा । वार्त्तिकेन सूत्रबाधाट्टस्याभावात् किंकरीत्यसाधुरिति कैयटः। हेत्वादावपि टं बाधित्वा परत्वादजेवेति तस्याशयः । वृत्तौ तु पक्षान्तरमप्युक्तम्। अथवा पचादिपाठः करिष्यतइति । इह किमादिग्रहणमपनीय पचादिष्वेव किंयत्तद्बहुषु कृञिति पठितव्यमिति तस्यार्थः । वार्त्तिकमपीत्थमेव व्याख्येयमित्याशयः । अस्मिन्पक्षे हेत्वादिविवक्षायां परत्वाट्टेन भाव्यम् । तेन किंकरणशीला किंकरीति भवत्येव । पुंयोगविवक्षायान्तु निर्विवादो ङीष् । किंयत्तद्बहुष्वज्वेति प्रक्रियायां विकल्पोक्तिस्तु आकरविरुद्धत्वात्कर्मण्यणोपि पक्षे प्रसङ्गाच्चायुक्तैव । न चाजभावे सौत्रष्टः, सूत्रे किमादिग्रहणापनयनस्य हरदत्तादिभिरुक्तत्वात् । अथ वा सौत्रस्यापनयनं मास्त्विति प्रौढिवादेन नेया, ताच्छील्यादौ व्याख्यानभेदात् फलितं विकल्पमाश्रित्य विषयविशेषाभिप्रायेण कथं चिद्वा नेया ॥

कर्मणि भृतौ ॥ कर्मशब्दे कर्मण्युपपदे करोतेष्ट स्याद्भृतौ गम्यमानायाम् । भृतिर्वेतनम् । कर्मनिर्वेशः क्रियाया निष्क्रयाय देयं भक्तादि द्रव्यमिति यावत् । कर्मकरो भृतकः । कर्मकारोन्यः ॥

न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ एषूपपदेषु करोतेष्टो न स्यात् । हेत्वादिषु प्राप्तः प्रतिषिध्यते । शब्दकारः । श्लोककार इत्यादि ॥

स्तम्बशकृतोरिन् ॥ एतयोः कर्मणोरुपपदयोः करोतेरिन्प्रत्ययः स्यात् । व्रीहिवत्सयोरिति वक्तव्यम् ॥ स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । इनो नित्त्वान्दृत्तरपदप्रकृतिस्वर-

णोत्तरपदमाद्युदात्तम् । व्रीहिवत्सयोः किम् । स्तम्बकारः । शकृत्कारः ॥

हरतेर्दृतिनाथयोः पशौ ॥ दृतिनाथयोः कर्मणोरुपपदयोर्हरतेर्धातोः पशौ कर्तरि इन् प्रत्ययः स्यात् । दृतिं हरतीति दृतिहरिः । नाथं नासारज्जुं हरतीति नाथहरिः । इह प्रत्ययार्थस्य कर्तुः पशुविशेषणं न तु तस्य बाधकः । प्रकृतिप्रत्ययार्थयोरन्वयप्रसङ्गात् । प्रकृत्यर्थो हि प्रत्ययार्थं विशिनष्टि । प्रकृतिश्चेह धातुः । तदर्थश्च क्रिया । सा च साधनेन सम्बन्धार्हा । पशुशब्दस्तु चतुष्पाज्जातीयं वस्तु स्वरूपेणाचष्टे न शक्तिमद्रूपेण नतरां शक्तिरूपेण । अतस्तथैव च प्रत्याय्यमान पशु प्रत्ययार्थो भवितुं नार्हति । अत कर्त्रैव प्रत्ययार्थः । तद्विशेषणं च पशु सूत्रवाक्यजन्ये बोधे पशुरूपे कर्तरि वाच्ये प्रत्ययो भवतीति हि विषयः । उदाहरणे तु पशुरेव विशेष्यः । तत्राभेदेन सम्बन्धेन कर्ता विशेषणम् । तत्र प्रकृत्यर्थः परमविशेष्य । पशुस्तु समुदायशक्त्या उपतिष्ठते । एतेन पंकजप्रभृतयो व्याख्याता । पङ्कजनिकर्तृ पद्ममिति हि तत्रार्थः । एवं विशिरास्येषु अलसमुखाहर्त्रोव्रीहिवत्सयोरित्यादिषु सर्वत्र प्रत्ययार्थविशेषणत्वम् । उदाहरणेषु च विशेषणत्वमलसादीनां द्रष्टव्यम् । पशौ किम् । दृतिहारः । नाथहारः ॥

फले ग्रहिरात्मम्भरिश्च ॥ एतौ निपात्येते । फलानि गृह्णातीति फलेग्रहिर्वृक्षः । स्यादवन्ध्यः फलेग्रहिरित्यमरः । भट्टिकाव्ये तु फलग्राहिमात्रे इन् प्रयुज्यते फलेग्रहीन्हसिवनम्पतीनामिति । उपपदस्यैदन्तत्वं इन्प्रत्ययश्च ग्रहेर्निपात्यते । आत्मानं बिभर्तीत्यात्मम्भरि । आत्मशब्दस्योपपदस्य मुमागमः इन्प्रत्ययश्च भृञो निपात्यते । चकारोनुक्तसमुच्चयार्थ इति वृत्तिः ।

कुक्षिम्भरि । छन्दसि फलशब्दस्यादन्तत्वमपि दृश्यते । यो वनस्पतीनां फलग्रहिरिति । इदमपि कुक्षिम्भरित्वच्चकारेण सङ्ग्राह्यमिति हरदत्त । चान्द्रास्तु आत्मोदरकुक्षिष्विति पठन्ति । तथा च मुरारि । ज्योत्स्नाकरम्भमुदरंभरयश्चकोरा इति । देवापित्रातापिप्रभृतयोप्यनेन सिद्धाः । भाष्ये तु भृञः कुक्ष्यात्मनोर्नुम्चेत्येतावदेव स्थितम् ॥

छन्दसि वनसनरक्षिमथाम् ॥ एभ्यः कर्मण्युपपदे इन्प्रत्ययः स्याच्छन्दसि । वन षण सम्भक्तौ गणे सहनिर्दिष्टौ भौवादिकौ इमावेव गृह्येतेनतु वनु याचने षण दाने इति तानादिकौ निरनुबन्धकत्वात् साहचर्याच्च । ब्रह्मवनि त्वा क्षत्रवनि ब्रह्म वनति क्षत्र वनतीति विवक्षायामिन् प्रत्ययः । तदन्ताद् द्वितीयैकवचनम् । उतनोगोषणिन्धियम् । सुषामादित्वात् षत्वं, गां सनतीति विग्रह । यौतेश्चानौ यमरक्षितरौ चतुरक्षौ पथिरक्षी । ये पथा पथिरक्षयः । पन्थानन्रक्षत रक्षन्ति चेति विग्रहः । हविर्मथीनामभ्याविवासताम् । हविर्मथन्तीति हविर्मथय तेषाम् ॥

एज खश् ॥ एजृ कम्पने । अस्माण्ण्यन्तात् कर्मण्युपपदे खश् स्यात् । जनं एजयतीति जनमेजय । सूत्रे एजेरिति ण्यन्तस्य निर्देश न तु शुद्धस्येका । खशः शित्करणात् । तद्धि सार्वधातुकत्वे सति शप्यथा स्यादिति । न च शुद्धस्य शपि सत्यसति वा विशेषोस्ति । नचोत्तरार्थं शित्त्वमिति वाच्यम् । इहार्थत्वे सम्भवति केवलोत्तरार्थत्वस्यायुक्तत्वात् । खश शित्त्वमुत्तरार्थम् । नुर्णिधय इत्यादौ सुत्तरार्थम् । खश्प्रकरणे वात शुनीतिलशर्धेष्वजधेट्तुदजहातिभ्य उपसंख्यानम् ॥ वातमजा मृगाः । शुनिन्धयः । तिलन्तुदः ।

शर्द्धञ्जहा मृगाः। ओहाक् त्यागे। जुहोत्यादित्वाच्छपः श्लौ द्विर्वचनम्। श्नाभ्यस्तयोरित्यालोपः। शर्द्धो ऽपानशब्दः तञ्जहतीति विग्रहः। माधवस्तु शर्द्धञ्जहा माषा इत्युदाजहार। दुर्गसिंहोऽप्येवम्। तत्र जहातिरन्तर्भावितण्यर्थः। साध्वसिच्छिनत्तीतिवत्। माषाणां करणकर्तृत्वमिति वा ॥

नासिकास्तनयोर्ध्माधेटोः ॥ खश् स्यात्। तत्र यथासंख्यं वारयितुं वार्तिकम्। स्तने धेटः॥नासिकायां ध्मश्च धेटश्च॥स्तनं धयतीति स्तनन्धयः। धेटष्टित्त्वस्य अवयवे अचरितार्थत्वात्स्तनन्धयी। अत्रैव च ङीविष्यते नान्यत्रेत्याहुरिति हरदत्तः। अत्रेवेति खश्प्रत्ययान्तोपलक्षणम्। तथा च क्षीरस्वामी। स्तनन्धयीत्यादौ ङीवर्थ इति। वर्द्धमानोपि शुनिंधयी। स्तनन्धयी। खश्प्रत्ययान्तएव ङीविति। तेन पाघ्राध्माधेट्दृशः श इति शप्रत्यये आतोनुपसर्गे इति कप्रत्यये च टाबेव ॥ अत्र च सम्प्रदाय एव शरणम्। नासिकन्धमः। पाघ्रेति धमादेशः। नासिकन्धयः ॥

नाडीमुष्ट्योश्च ॥ एतयोः कर्मणोरुपपदयोर्ध्माधेटोः खश् स्यात्। अत्र यथासंख्यं नेष्यतइति भाष्ये वृत्तौ च स्थितम्। यथासंख्यमनुदेश इति सूत्रे तु भाष्ये यथासंख्यमस्तीत्युक्तम्। तन्मतभेदेन बोध्यम्। नाडिन्धमः। नाडिन्धयः मुष्टिंधमः। मुष्टिन्धयः। भाष्ये घटीखारीशब्दावप्युपसंख्यातौ। घटी- घटः। घटिन्धमः। घटिंधयः। खारिन्धमः। खारिन्धयः। खारीशब्दः परिमाणवचनः। खरीति पाठान्तरम्। खरी गर्दभी। जातिलक्षणो ङीप्। खरिन्धमः। खरिन्धयः। जयादित्यस्तु वातशब्दमप्युदाजहार। वातन्धमः। वातन्धय इति। तन्न भाष्यादौ न दृश्यते ॥

उदिकूले रुजिवहोः ॥ उत्पूर्वाभ्यां रुजिवहिभ्यां सूत्रे कर्म-

णुपपदे खश् स्यात्। कूलमुद्रुजतीति कूलमुद्रुजः। कूलमुद्वहः। आतूपसर्गयोः कार्यस्यान्तरङ्गत्वात्पूर्वं गतिसमासः पश्चादुपपदसमासः। ननु तत्रोपपदसप्तमीस्थमित्यत्र तत्र सति प्रत्ययः स्यात्। तत्रैव च सप्तमीनिर्दिष्टमुपपदमिति व्याख्यानात्। उपपदमित्यनेन प्रत्यय आक्षिप्यते। ततश्च प्रत्ययेनैव समासः स्यान्न तु तदन्तेन समासः। संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणस्य दुर्लभत्वादिति चेन्न। प्रत्ययमात्रेण सामर्थ्याभावात्संज्ञाविधावपि प्रत्ययग्रहणपरिभाषाप्रवृत्तेः। न चैवमपि तदादितदन्तनियमादुपसर्गविशिष्टेन समासानुपपत्तिः। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्। न चेदं कृद्ग्रहणमिति भ्रमितव्यम्। उपपदसंज्ञामात्रस्य मा भूदित्यादौ माङादिष्वपि प्रवृत्तिसम्भवेन कृत्प्रत्ययव्यभिचारित्वेऽप्युपपदसमासस्य कृत्प्रत्ययाव्यभिचारात्। यत्कार्यं हि कृत्प्रत्ययं न व्यभिचरति तत्र कृद्ग्रहणपरिभाषा प्रवर्त्तते। यथा धातोः स्वरूपग्रहणइत्येषा परिभाषा यत्कार्यं धातुं न व्यभिचरति तत्र प्रवर्त्तते। अत एव घृतस्पृग्भ्यामित्यत्रानुदात्तस्योपदेशस्येत्यमागमो न प्रवर्त्तते। एतेन गोसन्दाय इत्यादि व्याख्यातम्। तत्रापि हि धातुमात्रात्कर्मण्यणि गतिसमासे च सगतिकेनोपपदसमासः। स्यादेतत्। सप्तमीनिर्दिष्टत्वाविशेषात्कूलस्येवोच्छब्दस्याप्युपपदत्वं स्यात्। ततश्चोपपदयोः रुजिवहोश्च यथासंख्यं स्यादिति चेन्मैवम्। यत्र हि प्रत्येकमुपपदत्वमिच्छति तत्र समुदायात्सप्तमीमुच्चारयति लाघवात्। नाडीमुष्ट्योरिति यथा। इह तु विपर्ययः कृतः। तस्मादुदीति पञ्चम्याः स्थाने सप्तमी। रुजिवहोरिति पञ्चम्या स्थाने षष्ठी। तेनोक्तार्थलाभः। एतच्च यथासंख्यसूत्रे कैयटे स्पष्टम्॥

वहाभ्रे लिहः॥ वहाभ्रयो कर्मणोरुपपदयोर्लिहे खश्

स्यात् । वहः स्कन्धः । तं लेढीति वहंलिहो गौः । लिह आस्वादने । अदादित्वाच्छपो लुक् । खशो ङित्त्वान्न गुणः । अभ्रंलिहो वायुः ॥

परिमाणे पचः ॥ परिमाणं प्रस्थादि तस्मिन्कर्मण्युपपदे पचेः खश् स्यात् । प्रस्थं पचतीति प्रस्थम्पचा स्थाली । खारिम्पचः कटाहः । इह सूत्रे परिमाणइति न स्वरूपग्रहणं तस्य पाचिं प्रति कर्मत्वायोगात् । अतस्तद्विशेषाः प्रस्थादयो गृह्यन्ते । तेपि यदि परिमाणनिष्ठा एव स्युस्तर्हि विक्लेदनवाचिना पाचिना सह कर्मत्वासम्भव एव । अतः परिमिते व्रीह्यादौ वर्त्तमाना इह ग्राह्याः ॥

मितनखे च ॥ एतयोः कर्मणोः पचेः खश् स्यात् । मितंपचा ब्राह्मणी । नखंपचा यवागूः । पचिरत्र तापवचनः ॥

विध्वरुषोस्तुदः ॥ एतयोः कर्मणोरुपपदयोस्तुदेर्धातोः खश् स्यात् । विधुन्तुदतीति विधुन्तुदः । अरुन्तुदः । अरुर्द्विषदजन्तस्यमुमित्युकारात्परो मुम् । संयोगान्तस्यलोपः । सैंहिकेयो विधुंतुदः । व्रणोस्त्रियामीर्ममरु । अरुन्तुदं तु मर्मस्पृगित्यमरः ॥

असूर्यललाटयोर्दृशितपोः ॥ एतयोः कर्मणोरुपपदयोर्यथासङ्ख्यं दृशितपिभ्यां खश् स्यात् । असूर्यम्पश्यमर्यम मासः । दृशिना नञः सम्बन्धात् । सूर्यं न पश्यन्तीति असूर्यम्पश्याः राजदाराः । पाघ्राध्मेति पश्यादेशः । गुप्तिपरश्चेदं । एवञ्च नाम गुप्ता यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्तीति । तेन सत्यपि सूर्यदर्शने प्रयोगो न विरुध्यते । [illegible] तु सूर्यदर्शनाभावमात्रं विवक्षितं तदा न [illegible]

नानभिधानादिति न्यासकारः ॥

उग्रम्पश्येरंमदपाणिन्धमाश्च ॥ एते निपात्यन्ते । उग्रमिति क्रियाविशेषणं तस्मिन्नुपपदे दृशेः खश् । उग्रं पश्यतीत्युग्रंपश्यः । इरा उदकन्तेन माद्यति दीप्यते अविन्धनत्वादिति इरंमदो मेघज्योतिः । मदी हर्षे अस्मादेव निपातनाद्दिवादिभ्यः श्यन्न भवति । पाणयो ध्मायन्ते ऽस्मिन्निति पाणिन्धमो ऽध्वा । स पुनरस्मिन् गच्छद्भिः सर्पाद्यपनोदनाय पाणयः शब्द्यन्ते तादृशः । अन्धकाराद्यावृतो मार्गः ॥

प्रियवशे वदः खच् ॥ प्रिय वश इत्येतयोः कर्मणोरुपपदयोर्वदेर्धातोः खच् स्यात् । प्रियंवदः । वशंवदः । खकारो मुमर्थः । चकारस्तु खचिह्रस्व इति विशेषणार्थ इति वृत्तिः । खे ह्रस्व इत्युच्यमान एजेः खश् जनमेजयः । अत्रापि स्यादिति भावः । ननु एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति खशि न भविष्यति । न चैवमपि कुलात्खः कुलीनः यस्येतिलोपाप्रवृत्तये ह्रस्वः स्यादिति वाच्यम् । प्रकरणसाहचर्याद्धातुप्रत्ययस्यैव ग्रहणात् । किञ्च दोषोणाविति सूत्रादत्र णावित्यनुवर्त्य खे परे णौ ह्रस्वो विधीयते । अतः कुलीने न दोषः । जनमेजये तु उक्तैव गतिः । सत्यम् । चिन्त्यप्रयोजन एवायञ्चकारः । प्रत्ययान्तरकरणमुत्तरार्थम् । द्विषन्तप इत्यत्र ह्रस्वणिलोपौ यथा स्यातां शप् च मा भूदिति । नन्वेवमुत्तरत्रैव क्रियतामिति चेत् । सत्यम् । इह करणमन्यतोपि भवतीति ज्ञापनार्थम् । तेनानुपपदमेव वक्ष्यमाणं वार्तिकं गतार्थम् । खच्प्रकरणे गमेः सुपि ॥ असंज्ञार्थमिदं वार्तिकम् । संज्ञायान्तु वक्ष्यमाणेन गमश्चेति सूत्रेणैव सिद्धम् । इदञ्च वार्तिकं ज्ञापकसिद्धार्थमित्युक्तम् । मितङ्गमो हस्ती । विहायसो विह च ॥ विहायसो विह इत्ययमादेशो वक्तव्यः ।

खच डित्वा वक्तव्यः। विहङ्गः। विहङ्गमः। डे च॥ डे परे विहायसो विहादेशो वक्तव्यः। विहगः। अन्यत्रापि दृश्यतइति डप्रकरणे वक्ष्यमाणेनेह डः॥

द्विषत्परयोस्तापेः। एतयोः कर्मणोरुपपदयोस्तापेः खच् स्यात्। तप दाहे चुरादि.। तप सन्तापे भ्वादिः। द्वयोरपि ग्रहणम्। द्विषन्तं तापयतीति द्विषन्तप। अरुर्द्विषदिति मुमि संयोगान्तलोपः। परन्तपः। द्विषत्परयोरिति द्वितकारको निर्देशः। तत्रैकेन द्विषच्छब्दो विशेष्यते तकारान्तो यो द्विषच्छब्दइति। सौत्रत्वान्निर्देशस्य विशेषणस्य परनिपातः। तेन स्त्रियां न भवति। षष्ठीग्रहणेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनाद्वा। द्विषन्तीं तापयतीति द्विषतीतापः। कर्मण्यणेव भवति॥

वाचि यमो व्रते॥ वाक्शब्दे कर्मवाचिन्युपपदे यमेः खच् स्यात् व्रते गम्यमाने। शास्त्रेण बोधितः सङ्कल्पविशेषो व्रतम्। वाचं यच्छतीति वाचंयमः। वाचयमपुरन्दरौचेति पूर्वपदस्यामन्तत्वम्। न चैवं खच्प्रत्ययोपि तत्रैव निपात्यतामिति वाच्यम्। व्रतादन्यत्रापि प्रसङ्गात्। यदि तु निपातनबलादेव व्रतविषयता आश्रीयते तत्रैव वा व्रतग्रहणं क्रियते। वाचंयमो व्रते पुरन्दरश्चेति। तदेह वाचियमोव्रते इति सूत्रं पूः सर्वयोरित्यत्र पुरिदारेरित्यंशश्च शक्यमकर्तुम्। व्रते किम्। यो ह्यशक्त्यादिना वाचं यच्छति तत्त्राणेन यथा स्यात्। वाग्यामः॥

पूः सर्वयोर्दारिसहोः॥ पुरसर्व इत्येतयोः कर्मणोरुपपदयोर्यथासङ्ख्यं दारिसहोर्धात्वोः खच् स्यात्। पुरन्दारयतीति पुरन्दरः। वाचंयमपुरन्दरौचेत्यम्। सर्वंसहो राजा। इह सूत्रे दृ विदारणे इत्यस्य ग्रहणम्। न तु दृ भये दृङ् आदरे इत्येतयोरित्युपदेशः। सहिग्रहणमसंज्ञार्थम्। संज्ञायान्तु भट्ट-

वृजीत्यादि वक्ष्यति । भगे च दारेरिति वक्तव्यमिति काशिका । भाष्यादावदृष्टमपीदं बाहुलकेन लभ्यते । भगं दारयतीति भगन्दरः ॥

सर्वकूलाभ्रकरीषेषु कषः ॥ एषु चतुर्षु कर्मसूपपदेषु कषेः खच् स्यात् । सर्वंकषः खल । कूलङ्कषा नदी । अभ्रंकषो वायुः । करीषंकषा वात्या ॥

मेघर्त्तिभयेषु कृञः ॥ एषु त्रिषु कर्मसूपपदेषु करोतेः खच् स्यात् । मेघङ्कर । ऋतिंकर । भयङ्करः । उपपदविधौ भयादिग्रहण तदन्तविधिं प्रयोजयतीत्युक्तत्वादभयङ्करः ॥

क्षेमप्रियमद्रेण् च ॥ त्रिष्वेषु कर्मसूपपदेषु करोतेरण् स्याात्खच् । क्षेमङ्करः । क्षेमकार । प्रियङ्कर । प्रियकारः । मद्रङ्कर । मद्रकारः । वेति वक्तव्ये अणग्रहणं हेत्वादिषु टप्रतिषेधार्थम् । कथन्तर्हि अल्पारम्भा क्षेमकरा इति । कर्मण शेषत्वविवक्षायां पचाद्यच् भविष्यति । छन्दसि शिवङ्कर इत्यपि दृश्यते । तथा चाथर्वशाखायां शिव एकोध्येय शिवङ्करः सर्वमन्यत्परित्यज्येति । कर्तृव्यत्ययात्सिद्धम् ॥

आशिते भुव करणभावयो ॥ अत्र सुपीत्युपतिष्ठते । न तु कर्मणीति । भवतेरकर्मकत्वात् । यद्यपि सोपसर्गस्य प्राप्त्यर्थस्य च भवते सकर्मकत्वमस्ति तथापि तत्र खचा न भवितव्यमनभिधानादित्याहु । आशितशब्दश्च द्विविधोत्र गृह्यते । अश भोजनइत्यस्मादाङ्पूर्वादविवक्षिते कर्मणि कर्त्तरि क्तप्रत्ययान्त एक । अशेर्ण्यन्तात्प्रयोज्यकर्मणि क्तप्रत्यये कृते अपरः । आशितः कर्त्तेत्याद्युदात्तविधिरप्युभयोरविशिष्टः । तत्र द्वितीये प्रयोज्यएव भूतपूर्वगत्या कर्त्तोच्यते । प्रत्यवसानार्थानामणौ कर्त्तुर्णौ कर्मसंज्ञाविधानात् । कृपणितफालआशित कृणोतीत्य-

त्रापि अयमेव ग्राह्य । अवग्रहादर्शनात् । आद्ये तु साम्प्रतिकमेव कर्तृत्वम् । यस्तु ध्रौव्यगतिप्रत्यवसानार्थेभ्य इति भावकर्माधिकरणेषु क्तः तदन्तो नात्र गृह्यते । अनभिधानात् । सूत्रार्थस्तु, आशितशब्दे सुबन्तउपपदे भवतेर्धातोः करणे भावे चार्थे खच् स्यात् । आशितो भवत्यनेन आशितंभव ओदनः । पचता ओदनेन अतिथ्यादिर्भोजितो भवति स एवमुच्यते । भावे, आशितभवनमाशितम्भवः । इह वासरूपविधिना ल्युडपि भवति । आशितभवनमिति । घञ् तु बाध्यतएव । सरूपत्वादित्याहुः । न चात्र क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नेति निषेधः शङ्क्यः । यत्र हि घञादेरपवादत्वेन ल्युट् प्रसक्तः स उत्सर्गं नित्यं बाधते न तु विकल्पेनेति तदर्थः । इह तु ल्युटोपवादोयं खच् । तत्र वासरूपन्यायो निर्बाध एव । आशितभवनमित्युदाहरतो जयादित्यस्य सम्मतश्चेति दिक् ॥

संज्ञायां भृतॄवृजिधारिसहितपिदमः ॥ भृप्रभृतिभ्योष्टभ्यः यथायोगं कर्मणि सुबन्ते चोपपदे खच् स्यात्संज्ञायाम् । विश्वं बिभर्तीति विश्वम्भरः कैटभजित् । रसा विश्वम्भरा स्थिरा । रथन्तरं साम । रथेन तरतीति व्युत्पत्तिमात्रम् । स्वरसंस्कारावग्रहादिसिद्ध्यर्थम् । न त्ववयवार्थानुगमोस्ति । रथन्तरमाजभारा वमिष्ठ इत्यत्र हि रथमित्यवगृह्णन्ति । अन्तोदात्तं चाधीयते । अखण्डत्वे तु अवग्रहो न स्यात् । नाब्विषयस्येत्याद्युदात्तश्च स्यात् । पतिंवरा कन्या । शत्रुञ्जयो हस्ती । युगन्धरः पर्वतः । शत्रुंसहः । शत्रुन्तप । अरिन्दमः । अन्तर्भावितण्यर्थोत्र दमिः । संज्ञायां किम् । कुटुम्बं बिभर्तीति कुटुम्बभारः ॥

गमश्च ॥ अस्मात् खच् स्यात्कर्मण्युपपदे संज्ञायाम् । सुतङ्गमः । पूर्वसूत्रएव गमिर्नोक्तः । उत्तरसूत्रे गमेरेवानुवृत्तिर्यथा

स्यात् । भृत्रप्रभृतीनां मा भूदिति ॥

अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ॥ संज्ञायामिति निवृत्तम् । सप्तसु कर्मसूपपदेषु गमेर्डः स्यात् । अन्तङ्गच्छतीत्यन्तग । अत्यन्तगः । अध्वगः । दूरगः । पारग । सर्वगः । अनन्तगः । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । सर्वत्रपन्नयोरुपसंख्यानम् ॥ सर्वत्रग ॥ पन्न पतितं यथा स्यात्तथा गच्छतीति पन्नग । पन्नमिति क्रियाविशेषणं पठ्यते क्तान्तम् । उरसो लोपश्च ॥ उरसा गच्छतीत्युरगः । सुदुरोरधिकरणे ॥ सुखेन गच्छत्यत्रेति सुग । दुर्गः । कर्मणि तु खलेव । सुगमः । दुर्गमः । निरो देशे ॥ निर्गो देश । अन्यत्रापि दृश्यतइति वक्तव्यम् । ग्रामगः । गुरुतल्पगः ॥

आशिषि हनः ॥ कर्मण्युपपदे हन्तेर्डः स्यादाशिषि गम्यमानायाम् । शत्रु वध्यात् शत्रुहः । आशिषि किम् । शत्रुघात । अत्र वार्त्तिकानि। दाराचाहनोणन्तस्य च टः संज्ञायाम् ॥ दारौ इति शब्दापेक्षया पुंल्लिङ्गता । दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण्, अन्तस्य च टकारादेशो वक्तव्य इत्यर्थ । टविधानार्थमिदम् । अण् तु कर्मण्यणित्येव सिद्ध । अन्तग्रहणं स्पष्टार्थम् । अलोन्त्यस्येत्येव सिद्धेः । अन्यथा हि ट प्रत्यय सम्भाव्येत । गोधाकालकादार्वाघाटस्तेवनस्पतीनाम् । चारौ वा ॥ चारुशब्दे उपपदे प्रागुक्तं वा वक्तव्यमित्यर्थः । चार्वाघाटः । चार्वाघातः । कर्मणि समि च ॥ कर्मण्युपपदे सम्पूर्वाद्धन्तेरणन्तस्य च टो वा वक्तव्य । वर्णान्सहन्तीति वर्णसंघाटः । वर्णसंघातः । पदसंघातः । पदसंघाटः ॥

अपे क्लेशतमसोः ॥ अपपूर्वाद्धन्तेर्डः स्यात्क्लेशतमसो कर्मणोरुपपदयो । क्लेशापहः पुत्रः । तमोपह सूर्यः । अनाशीर

र्षोपमारम्भः ॥

कुमारशीर्षयोर्णिनिः ॥ एतयोः कर्मणोरुपपदयोर्हन्तेर्णिनिः स्यात्। कुमारघाती। शीर्षघाती। सुप्यजातावित्येवमादिभिः सिद्धे ताच्छील्यावश्यकाधमर्ण्यादिविरहेपि यथा स्यादित्येवमर्थं शिरसः शीर्षभावार्थञ्च वचनम् ॥

लक्षणे जायापत्योष्टक् ॥ हन्तेर्धातोर्जायापत्योः कर्मणोरुपपदयोर्लक्षणवति कर्त्तरि टक्प्रत्ययः स्यात्। जायाघ्नो ब्राह्मणः। पतिघ्नी वृषली। सूत्रे लक्षणशब्दो ऽर्शआद्यच्प्रत्ययान्तो न तु केवलः सूत्रारम्भसामर्थ्यात्। केवले हि लक्षणे तिलकरेखाविशेषादौ कर्तृत्वेन विवक्षिते उत्तरसूत्रेणैव सिद्धः प्रत्ययः। तस्माद्यस्य तिलकादि जायामरणनिमित्तमस्ति स तां हन्तीति गौणो वादः। एवम्पतिघ्नीत्यत्रापि ॥

अमनुष्यकर्तृके च ॥ मनुष्यभिन्नकर्तृकेर्थे वर्त्तमानाद्धातोः कर्मण्युपपदे टक् स्यात्। जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। पित्तघ्नं घृतम्। अमनुष्यकर्तृकइति किम्। आखुघातः शूद्रः। यद्यपि अमनुष्यशब्दो रक्षःपिशाचादिषु रूढस्तथापीह लक्ष्यानुरोधिनो व्याख्यानान्मनुष्यादन्यत्सर्वमेवाह। ननु पूर्वसूत्रे लक्षणग्रहणं यथा प्रत्ययार्थविशेषणम्, तथेहाप्यमनुष्यग्रहणमस्तु, किं कर्तृग्रहणेनेति चे,न्नैवम्। अमनुष्यइत्युच्यमाने उपपदत्वं विज्ञायेत। पूर्वसूत्रे तु उपपदान्तरसत्त्वात्प्रत्ययार्थविशेषणता निर्श्चीयतइति वैषम्यात्। अथ कथं कृतघ्ने नास्ति निष्कृतिः, बलभद्रः प्रलम्बघ्नः, शत्रुघ्न इत्यादि। मूलविभुजादिषु द्रष्टव्याः। कथन्तर्हि चोरघातो नगरघातो हस्तीति। बाहुलकादणिति वृत्तिर्भाष्यञ्च ॥

शक्तौ हस्तिकपाटयोः ॥ शक्तौ गम्यमानायां हस्तिकपाट-

योः कर्मणोरुपपदयोर्हन्तेर्धातोष्टक् स्यात् । मनुष्यकर्तृकार्थ आरम्भः । हस्तिघ्नो मनुष्यः । कपाटघ्नश्चोरः । शक्ताविति किम् । विषेण हस्तिनं हन्तीति हस्तिघातः । यद्यपीह शक्तिरस्ति अशक्तस्य कर्तृत्वानुपपत्तेस्तथापि शक्तिग्रहणसामर्थ्यात्प्रकर्षविज्ञानम् । तेन स्वबलेनैव हन्तुं या शक्तिः सा गृह्यते । एवं चोदाहरणेपि हस्तिनं हन्तुं मा वा वधीत् । सामर्थ्यातिशयमात्रात्तु हस्तिघ्न इत्याद्युच्यते । कं शिरः पाटयति प्रविशतइति कपाटम् । कवाटमिति पाठे तु अटतेः पचाद्यच् । कवञ्चोष्णइत्यत्र योगविभागात्कोः कवादेश इति हरदत्तः ॥

पाणिघताडघौ शिल्पिनि ॥ एतौ निपात्येते शिल्पिनि कर्त्तरि वाच्ये । पाणि ताड इत्येतयोरुपपदयोर्हन्तेर्धातोष्टक्प्रत्ययः तस्मिंश्च टिलोपः घत्वश्च निपात्यते । पाणिघः । ताडघः । शिल्पिनीति किम् । पाणिघातः । ताडघातः । राजघ उपसङ्ख्यानम् ॥ राजानं हन्तीति राजघः ॥

आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ॥ आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु सप्तसु कर्मसूपपदेषु करोतेः ख्युन् स्यात् । करणे च्वेर्वैकल्पिकत्वात् द्विविधाश्च्व्यर्था आढ्यादयः च्व्यन्ता अच्व्यन्ताश्च । तत्र च्व्यन्ता पर्युदस्यन्ते । अनाढ्यमाढ्यं करोत्यनेन आढ्यंकरणम् । सुभगंकरणमित्यादि । च्व्यर्थेष्विति किम् । आढ्यन्तैलेन कुर्वन्ति । अभ्यञ्जयन्तीत्यर्थः । अनेकार्थत्वाद्धातूनाम् । तेन नात्र प्रागनाढ्यः सन् आढ्यः क्रियते इति अभूततद्भावाभावः । अस्तु वा अभूततद्भावः तथापि प्रकृतेरविवक्षायां प्रत्युदाहरणम् । प्रकृतिरेव परिणामिनीत्वेन यदा विवक्ष्यते यथा अपटास्तन्तवः पटीभवन्तीति तदा च्विप्रत्ययः । तथा च तत्र वार्तिकम् । प्र-

कृतिविवक्षाग्रहणं चेति ॥ अच्वाविति किम्। आढ्यीकरोत्यनेन। स्यादेतत्। करणाधिकरणयोश्चेति ल्युडत्र भवितव्यम्। न च ल्युटः ख्युनश्चेह विशेषोस्ति। उभयथापि हि आढ्यीकरणमित्येव रूपम्। खित्यनव्ययस्य, अरुर्द्विषदजन्तस्य मुमिति हि ह्रस्वत्वं मुम् चानव्ययस्य विधीयते। च्व्यन्तश्चाव्ययम्। ऊर्यादिच्विडाचश्चेति निपातत्वात्। न च ख्युनि सति उपपदमतिङिति नित्यसमासो लभ्यते ल्युटि तु नेति वाच्यम्। ल्युट्यपि गतिसमासस्य सम्भवात्। तस्यापि नित्यसमासत्वाविशेषात्। न च स्त्रीप्रत्यये विशेषः। उभयत्रापि ङीबेव भवति। ल्युटि टिड्ढाणञिति सूत्रेण, ख्युनि तु तत्रत्येन ख्युन उपसंख्यानेन। न च स्वरे विशेषः। ल्युटि हि लित्स्वरेण कृञ उदात्तत्वं ख्युन्यपि नित्स्वरेण तथैवेति। तस्मादच्वाविति व्यर्थमिति चेत्। सत्यम्। उत्तरार्थं तदुक्तमिति भाष्यकारा। एवञ्च आढ्यीकरणमित्यादिरूपं ल्युटा भवत्येवेति भाव इति कैयटः। यत्तु जयादित्येनोक्तम्। प्रतिषेधसामर्थ्यात् ख्युन्यसति ल्युडपि न भवति। तेन ल्युटोप्ययमर्थतः प्रतिषेध इति। तस्यायमाशय। केवलोत्तरार्थत्वे तत्रैवाच्वाविति ब्रूयात्। इह करणसामर्थ्यात्तु ल्युडपि न। यथा इकोचिविभक्तावित्यत्रग्रहणस्य उत्तरार्थत्वे सत्यपि इहकरणसामर्थ्यान्नलुमतेत्यस्यानित्यता ज्ञाप्यतइत्यभिप्रायेणाह इह किञ्चित्त्रपो इतीति वक्ष्यते। तथा चोत्तरार्थतापि काममस्तु न तु केवलोत्तरार्थतेति। भाष्यवार्त्तिकस्वरसेन तु केवलोत्तरार्थत्वं लभ्यते। अतस्तद्विरोधाद्वृत्तिकृन्मतमयुक्तमिति कैयटः॥

कर्त्तरि भुव खिष्णुच्खुकञौ॥ आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु सुबन्तेषूपपदेषु भवतेर्धातो कर्त्तरि खिष्णुच् खुकञ् एतौ

स्नः । आढ्यम्भविष्णुः । आढ्यम्भावुकः । सुभगम्भाविष्णुः । सुभगम्भावुक इत्यादि । कर्तृग्रहणं करणाऽनुवृत्त्यर्थमुत्तरार्थञ्च । खकारो मुमर्थः । अकारो वृद्ध्यर्थः । स्यादेतत् । खिष्णुच इकारो मास्तु ख्स्नुरिति स्नुख् इति वोच्यताम् । तत्रायमप्यर्थः । स्वरार्थश्चकारो न कर्त्तव्यः । प्रत्ययस्वरेणैवाभिमतसिद्धेः । कथन्तर्हि इकारादित्वमिति चेत्, इडागमेनेति गृहाण । न चैकाच उपदेश इतीण्निषेधः । भवतेरुदात्तत्वात् । अत्रोत्तरं वार्तिककार आह । नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुच इति ॥ नञ इति पञ्चमी । नञ उत्तरस्य खिष्णुजन्तस्य स्वरसिद्ध्यर्थमित्यर्थः । यद्ययमिकारादिर्न क्रियेत ततः सत्यपीटि कृत्योकेष्णुच्चार्वादयश्चेति सूत्रे अस्य ग्रहणं न स्यात् । अस्य चकारानुबन्धाभावात् । अथोच्येत । अयमपि चित् । ख्स्नुच् इति । एवमपि लाक्षणिकत्वात्षत्वणत्वयोश्चासिद्धत्वादिष्णुजिति रूपाभावात् ग्रहणं न स्यादेव । तत इकारादित्वं क्रियते । अत्रेदं वक्तव्यम् । सत्यपीकारादित्वे तदनुबन्धकग्रहणे नातदनुबन्धकस्येति परिभाषया अलङ्कृञादिष्णुच एव ग्रहणेन भाव्यं, नास्य । अथोच्येत । इकारोच्चारणसामर्थ्यादस्यापि ग्रहणमिति । हन्तैवं ख्ष्णुजयमस्तु तत्रेटि कृते चकारानुबन्धसामर्थ्यादस्यापि ग्रहणमस्त्विति किमिकारेण । तस्माच्चिन्त्यमेतत् । यत्तु हरदत्तेन षत्वणत्वयोः सामर्थ्यादस्य ग्रहणं भवतीत्युक्तम् । तदप्यापाततः । स्नुजपेक्षया ष्णुजुक्तौ प्रत्युत प्रक्रियालाघवेन षत्वणत्वयोः करणस्योचिततया सामर्थ्यायोगादिति दिक् ॥

स्पृशोऽनुदके क्विन् ॥ अनुदके सुबन्तउपपदे स्पृशेः क्विन् स्यात् । यद्यपि स्पृशेः सकर्मकत्वात्कर्मण्युपपदइत्येव प्राप्तस्तथा

पि पूर्वसूत्रात्कर्त्तरीत्यनुवृत्तेः सुपीत्येवोपपदं निर्णीयते। तथाहि। कर्त्तरि कृदित्येव कर्त्तरि क्विनः सिद्धत्वात्कर्त्रनुवृत्तिः कर्तृप्रचयार्था। कर्मण्युपपदे एकः कर्ता करणादौ चापर इत्येवं कर्तृप्रचयः। तथा च सुबन्तउपपदइति फलितं भवति। घृतं स्पृशतीति घृतस्पृक्। मन्त्रेण स्पृशतीति मन्त्रस्पृगिति प्राञ्चः। वस्तुतस्तु पूर्वसूत्रे कर्तृग्रहणं व्यर्थमेव। तद्धि न तत्रैव करणानुवृत्तिनिरासार्थम्। अस्वरितत्वादेव तत्सिद्धेः। नापीह कर्तृप्रचयार्थम्। मन्त्रस्पृगित्यादेः क्विपापि सिद्धेः। न च क्विपि कुत्वं न स्यादिति वाच्यम्। क्विन्प्रत्ययो यस्मात्तस्यान्यत्रापि कुत्वमिति वक्ष्यमाणत्वात्। अन्यथा अस्रगित्याद्यसिद्धेरित्यवधेयम्। अनुदकइति किम्। उदकस्पर्शः। न चेह क्विपा उदकस्पृगिति रूपं दुर्वारमिति वाच्यम्। अनुदकइति पर्युदाससामर्थ्यात्क्विपोप्यप्रवृत्तेः। कथन्तर्हि मन्त्रस्पृगित्यादेः क्विपा सिद्धिरुक्तेति चेत्, उदके क्विपोऽप्रवृत्तावपि मन्त्राद्युपपदे प्रवृत्तौ बाधकाभावादिति दिक्। क्विनः ककारो गुणप्रतिषेधार्थः। इकारो वेरपृक्तस्येति विशेषणार्थः। नकारस्तु यद्यपि नाद्युदात्तार्थः। एकाज्भ्यः क्विनो विधानात्तत्र धातुस्वरेणैव सिद्धेः। यस्त्वनेकाच् दधृगिति, तत्रान्तोदात्तस्य वक्ष्यमाणत्वात्। तथापि क्विन्प्रत्ययस्यकुरिति विशेषणार्थः। क्विप्प्रत्ययस्येत्युच्यमाने सन्देहः स्यात्। क्वेः क्विपो वा निर्देश इति। न च क्वेर्निर्देशे एकः पकारः क्विपस्तु द्वाविति विशेषः। क्वेरपि निर्देशे पकारस्य अनचिचेति द्विर्वचनोपपत्तेः। न चैवं क्विपि पकारत्रयमिति वाच्यम्। झरोझरीति लोपोपपत्तेः। व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषानुपलम्भाच्च॥

ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च॥ आद्याः पञ्च

त्विन्नन्ता निपात्यन्ते । ततस्त्रिभ्यः क्विन्विधीयते । तत्रापि निपातनैः सह निर्देशात्किंचिदलाक्षणिकमस्ति । तद्यथा । अञ्चेः सकर्मकत्वात्कर्मण्येव प्राप्तः सुबन्तमात्रे विधीयते । युजिक्रुञ्चिभ्यान्तु केवलाभ्यामेव । युजेर्विधानसामर्थ्याच्च । न हि सोपपदाद्युजेः क्विनि क्विपि वा विशेषोस्ति कुत्वस्य चोः कुरित्यनेनैव सिद्धत्वात् । अनुपपदे तु युजेरसमासइति नुमि कृते नकारस्य कुत्वार्थं क्विनो विधानं भवति सार्थकम् । क्रुञ्चेर्नलोपाभावश्च निपात्यते । ऋतौ यजति ऋत्विक् । इह ऋतुशब्द उपपदे यजेः क्विन् । ञिधृषा प्रागल्भ्ये, अस्य क्विन् द्विर्वचनमन्तोदात्तत्वञ्च निपात्यते । दधृक् । सृजेः कर्मणि क्विन् अमागमश्च निपात्यते । सृज्यते इति स्रक् । दिशेः कर्मणि क्विन् । दिश्यते इति दिक् । उत्पूर्वात्स्निहे क्विन् । उपसर्गान्तलोपः सस्य षत्वञ्च । उष्णिक् । प्राङ् । प्रत्यङ् । युङ् युञ्जौ । सोपपदात्तु सत्सूद्विषेति क्विप् । अश्वयुक् । यदि तु निपातनसाहचर्यात्सोपपदादनुपपदाच्च युजेः क्विन् भवतीत्युच्येत तदा सत्सूद्विषेति सूत्रे युजिग्रहणं शक्यमकर्तुम् । कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः । नोपधाविमौ । तथा च निक्रुचितिरित्यत्र नलोपो दृश्यते । सन्निपातपरिभाषायाः फलानि पठन् वार्त्तिककारोऽप्याह । उदुपधत्वमकित्वस्य निकुचित इति । ञकारस्तु स्तोः श्चुनेति श्चुत्वेन, तस्यासिद्धत्वाच्चोः कुरिति कुत्वं न । ञकारोपधपठतां तु वरुञ्चौ वरुञ्च इत्यादौ प्राप्तं कुत्वं सडि झलीति वचनाद्वार्यते । सडिति प्रत्याहार । सनः सशब्दादारभ्य आ महिङो डकारात् । अत्र केचित् । क्रुञ्चिरेक एव धातुः । तस्य ककारात्परो रेफोपि क्विन्सन्नियोगेन निपात्यतइत्याहुः । चोः कुरिति सूत्रे वामनकाशिकायां स्पष्टमेतत् ॥

त्यदादिषु दृशो ऽनालोचने कञ् च ॥ अनालोचनार्थाद् दृशेर्धातोस्त्यदादिषु कञ्स्याच्चात्क्विन् । तादृक् । तादृशः । यादृक् । यादृश । कञो ञकारो विशेषणार्थः । ठक्ठञ्कञिति स्वरार्थश्च । अनालोचने किम् । तत्पश्यतीति तद्दर्शः । तादृशादयस्तु रूढिशब्दाः । ते च असताप्यवयवार्थेन व्युत्पाद्यन्ते । अत एव अनालोचनइत्युक्तम् । दृश्यर्थाभावेप्ययं विधि । सति तु दृश्यर्थे अयेव भवतीति भावः । भाष्ये तु कर्मकर्त्तरि व्युत्पत्तिर्दर्शिता । तमिवेमं पश्यन्ति जना । स इवायं पश्यति ज्ञानविषयो भवतीत्यर्थात् । तथा दृग्दृशदृक्षा इवार्थे तद्धितप्रत्यया एवेत्यपि पक्षान्तरं स्थितं भाष्ये । तच्च टिड्ढाणञिति सूत्रे व्युत्पादयिष्यामः । समानान्ययोश्चेति वक्तव्यम् ॥ सदृक् । सदृश । अन्यादृक् । अन्यादृशः । क्सोपि वक्तव्यः ॥ त्यदादिषु समानान्ययोश्च ॥ तादृक्ष । सदृक्ष । अन्यादृक्षः ॥

सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेपि क्विप् ॥ सुपीति वर्त्तते । कर्मग्रहणं तु स्पृशोनुदकइत्यत प्रभृति नानुवर्तते । तत्र ह्यनुवृत्तेन कर्तृप्रचयार्थेन कर्तृग्रहणेन तन्निवृत्तिरित्युक्तम् । कर्तृग्रहणप्रत्याख्याने तु व्याख्यानादेव कर्मग्रहणनिवृत्तिरित्यन्यदेतत् । सदादिभ्यो धातुभ्यः सुप्युपसर्गेष्वनुपसर्गेष्वुपपदे क्विप् स्यात् । उपसर्गग्रहणं ज्ञापनार्थम् । सुपिस्थइत्यतः प्रकृतस्य सुब्ग्रहणस्य उपसर्गेतरपरत्वमिति । युक्तञ्चैतत् । विशेषसन्निधौ आम्नातस्य सामान्यशब्दस्य तदतिरिक्तपरत्वौचित्यात् । तत्फलन्तु स्पृशोनुदकेक्विन्नित्यत्र उपसर्गस्याग्रहणमिति कैयटः । यत्तु सामान्यापेक्षं ज्ञापकमाश्रित्य वदः सुपिक्यप्चेत्यत्रापि उपसर्गेतरपरत्वमुक्तं भाष्यवृत्त्योस्तत्तु मन्दप्रयोजनम् । तत्रत्यभाष्ये गदमदचरयमश्चेति सूत्रादनुपसर्गग्रहणमनुवर्तत-

इति सिद्धान्तितत्वात् । वस्तुतस्तु कैयटोक्तमपि फलं चिन्त्यमेव । स्पृशेरुपसर्गे क्विनभावेपि क्विपो दुर्वारत्वात् । तत्र च क्विन्-क्विपोः स्वरे रूपे वा विशेषस्य दुर्लभत्वात् । अथ वा सत्याभिधाने यद्लुगन्ते अनेकाच्कत्वेन स्वरे विशेषो वर्णनीयः । वस्तुतस्तु अनुदके इति पर्युदासादत्र सत्ववाचकस्यैव ग्रहणेनोपसर्गप्राप्तिरेव नास्ति । यत्तु गापोष्टगित्यत्र फलमित्याहु । तन्न । तत्रापि अनुपसर्गे इत्यनुवृत्तेः । कर्मणीत्यस्य सम्बन्धेपि सुपीत्यस्यासम्बन्धेन ज्ञापकाप्रवृत्तेश्च । तस्मात् सुपिस्थ इत्यत्रैव यथाकथंचित्फलविशेषो वर्णनीय इत्यास्तान्तावत् । हंसः शुचिषत् । पूर्वपदादिति षत्वम् । तत्र च छन्दसीति वर्त्तते । तेन भाषायां शुचिसदित्येव भवति । तथा च माघः । मनस्सु येन द्युसदां न्यधीयतेति । आदितेयादिविषद इत्यत्र तु सुषामादिपाठात् षत्वमिति माधवः । उपनिषत् । सदिरप्रतेरिति षत्वम् । सूइति द्विषा साहचर्यात्सूतेरादादिकस्य ग्रहणम्, न तु सुवतिसूयत्योः । अण्डसूः । प्रसूः । मित्रद्विट् । प्रद्विट् । मित्रध्रुक् । प्रध्रुक् । गोधुक् । प्रधुक् । युजिर् योगे, युज समाधौ द्वयोरपि ग्रहणम् । अश्वयुक् । प्रयुक् । विद ज्ञाने, विद विचारणे, विद सत्तायाम्, त्रयाणामपि ग्रहणम्, न लाभार्थस्य विदेः । अकारस्य विवक्षितत्वात् । वेदवित् । प्रवित् । काष्ठभित् । प्रभित् । रज्जुच्छित् । प्रच्छित् । शत्रुजित् । सेनानीः । प्रणीः । उपसर्गादसमासेपीति णत्वम् । अग्रणीः । ग्रामणीः । अत्र ज्ञापकाण्णत्वम् । स एषां ग्रामणीरिति निर्देशो हि पूर्वपदस्थान्निमित्तादुत्तरस्य नयतेर्नकारस्य असंज्ञायामपि णत्वं ज्ञापयति । नीरूपविषयं चेदं ज्ञापकम् । तेन ग्रामनाय इति कर्मण्यणि णत्वन्न । ज्ञापकस्य सामान्यापेक्षे

त्वादग्रशब्दादपि णत्वम्। नन्वेवं रामादिशब्देभ्योपि प्राप्नोतीति चेत्। इष्टापत्तिरित्येके। अग्रग्रामाभ्यां नयतेरिति वचनाज्ज्ञापनमपि उपपदद्वयमात्रविषयम्। निरूपमात्रविषयता तु वचनस्याप्यवधेयेत्यन्ये। स्वराट्। विराट्। सम्राट्। मोराजीति मत्वम्। इह युजिग्रहणं शक्यमकर्तुमिति ऋत्विग्दधृक्स्रगितिसूत्रएवावोचाम। अत्र जयादित्यः। अन्येभ्योपिदृश्यतइति सामान्येन क्विब्वक्ष्यते तस्यैवायं प्रपञ्च इति। नन्वेतदसङ्गतम्। तस्य ताच्छीलिकत्वादिति चेत्। सत्यम्। क्विप्चेति सूत्रमिह विवक्षितम्। तत्रापि हि विजुपेछन्दसि, आतोमनिन्क्वनिब्वनिपश्च, अन्येभ्योपिदृश्यन्ते इति सन्निहितं दृशिग्रहणमनुवर्त्य वचनविपरिणामेन व्याख्यातुं शक्यतइत्याशयेनोदाहृतजयादित्यग्रन्थप्रवृत्तेः। एतेन स्थःकचेति सूत्रे क्विप् सिद्धो ऽन्येभ्योपिदृश्यतइतीति भाष्यं तत्रत्यवृत्तिश्चेत्युभयमपि व्याख्यातम्। अत्रेदमवधेयम्। सूत्रस्य प्रपञ्चार्थत्वे स्थिते सूविदेत्यत्र धातुविशेषणपरिग्रहे वृत्तिकृतोक्तो यत्नो निष्फलः। सुवतिसूयत्योर्विन्दतेश्च क्विप्चेति क्विपो दुर्वारत्वात्। न चेह धातुविशेषग्रहणं नियमार्थन्तेन सुवत्यादिषु क्विप्चेति सूत्रं न प्रवर्त्ततइति वाच्यम्। प्रपञ्चार्थमिदं सूत्रमिति स्वोक्तिविरोधात्। किञ्च लुग्विकरणालुग्विकरणयोरिति परिभाषया सुवतिसूयत्योरेव ग्रहणं न्याय्यं साहचर्यमात्रपुरस्कारे वा उच्चारणार्थाकारवद्भिः पूर्वोत्तरैः साहचर्यमुपेक्ष्य कथं विदेत्यकारविवक्षोक्ता कथं वा युजेत्युभयग्रहणमवोचत्। न हि युजविदयोरण्वपि वैषम्यमस्ति। तस्मादिह वृत्तिकृतान्तदनुगामिनामन्येषाञ्च धातुविशेषपरिग्रहे अभिनिवेशो निर्मूलो निष्फलश्च। ननु प्रपञ्चत्वोक्त्या सूत्रमर्थात्प्रत्याख्यातम्। तथा च सुग्रहणे उपसर्गनिवृत्तिर्न ज्ञाप्येतेति चेन्

मा ज्ञापि । तत्फलस्य प्रागेव शिथिलीकृतत्वात् । एवञ्च णिनिविधौ सुब्ग्रहणमपि न कर्त्तव्यमिति महदेव लाघवमिति दिक् ॥

भजोण्वि ॥ सुप्युपसर्गे चोपपदे भजेर्ण्वि स्यात् । अर्द्धभाक् । प्रभाक् ॥

छन्दसि सहः ॥ सुप्युपपदे उपसर्गे च सहेर्धातोश्छन्दसि ण्विप्रत्ययः स्यात् । दुश्च्यवन पृतनाषाळ्युध्यः । अभीदमेकमेको ऽस्मिन्नि षाट् । कथन्तर्हि तुरासाहं पुरोधाय । धरा-तुरासाहि मदर्थयाञ्चेत्यादि । छन्दसीत्युक्तेर्भाषायां ण्विप्रत्ययानुपपत्तेरिति चेत् । चिन्त्यमिति हरदत्तः । सहतेरभिभवार्थान्निवृत्तमेषणात्माकृतेर्थे णिचि क्विब्विचोरन्यतर इति वा समाधेयम् ॥

वहश्च ॥ वहतेर्धातोः सुप्युपसर्गे चोपपदे छन्दसि विषये ण्वि स्यात् । दित्यवाट् च मे दित्यौही च मे । योगाविभाग उत्तरार्थः ॥

कव्यपुरीषपुरीष्येषु ञ्युट् ॥ एषूपपदेषु छन्दसि वहेर्ञ्युट्प्रत्ययः स्यात् । कव्यवाहनः पितॄणाम् । पुरीषवाहनः । पुरीष्यवाहनः ॥

हव्येनन्तःपादम् ॥ हव्यशब्दउपपदे छन्दसि वहेर्ञ्युट् स्यात् पादान्ते । अग्निश्च हव्यवाहनः । पादमध्ये तु वहेश्चेति ण्विरेव । हव्यवाळग्निरजर पिता नः ॥

जनसनखनक्रमगमो विट् ॥ उपसर्गे सुपि चोपपदे छन्दसि विट् प्रत्ययः स्यात् । वेरपृक्तस्येत्यादौ सामान्यग्रहणाविघातार्थष्टकारः । विड्वनोरित्यादौ विशेषणार्थश्च । जन जनने, जनी प्रादुर्भावे द्वयोरपि ग्रहणम् । अब्जाः । गोजाः । षणु दान, षण सम्भक्तौ, द्वयोरपि ग्रहणम् । गोषा इन्द्रो नृषा

अस्य सावाजसा उत । इयं शुष्मेभिर्बिसखा इवारुजत् । आदधिक्राः शवसा पञ्च कृष्टीः । अग्निमुपसमदिरनाद्यभिक्रान्ताः मूर्धा अग्रे शुक्रोऽग्रेगाः । उदाहरणेषु विदनोरनुनासिकस्यादित्यात्वम् । गोपा नृपा इत्यत्र सनोतेरन इति षत्वम् । अग्रेगा इति सप्तम्या अलुक् ॥

अदोनन्ने ॥ छन्दसीति निवृत्तम् । अदाभिने सुप्युपपदे अदेर्विट् स्यात् । आममत्ति आमात् । सस्यात् । अनन्ने किम् । अन्नाद । भाषायां कर्मण्यण् । छन्दसि तु कृद्ग्रहणेन पचाद्यजित्युक्तम् । तेन अन्नाद इत्यत्र अन्नअद इत्यवग्रहः सिध्यति ॥

क्रव्ये च ॥ क्रव्योपपदे अदेर्वोतोविट् मत्ययः स्यात् । क्रव्यमत्ति क्रव्यात् । पूर्वेणैव सिद्धे वचनमसरूपबाधनार्थम् । तेनाण् न भवति । कथन्तर्हि क्रव्यादो अप आसर इत्यमरः । अत्राहुः । कृत्तविकृत्तपक्वमांसशब्द उपपदे अण् । तस्य च पृषोदरादित्वात्क्रव्यभाव इति । अस्यार्थ । कृत्त छिन्नं तदेव पुनर्विशेषतः कृत्तं, पूर्वकालेति समासः । तस्य पक्वशब्देन पुनः स एव समास । ततो मांसशब्देन पुनर्विशेषणसमासः । तस्य क्रव्यादेश । नन्वेव क्रव्याद इति रूपस्यावर्जनीयतया किं वासरूपबाधनार्थेनानेन वचनेन । वार्तिकविरोधश्च । यदाह । अदोनन्ने क्रव्यग्रहणं वासरूपनिवृत्त्यर्थमिति चेन्नैवम् । अर्थभेदादुभयसाधुत्वोपपत्तेः । आममांसभक्षको हि क्रव्यात् । विशिष्टपक्वभक्षकस्तु क्रव्याद इति ॥

दुहः कब्घश्च ॥ दुहेः सुप्युपपदे कप् स्याद्घश्चान्तादेश । कामदुघा धेनुः ॥

मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥ श्वेतादिपूर्वेभ्यो वहादिभ्यो धातुभ्यो ण्विन्प्रत्यय स्यान्मन्त्रे । धातूपपदसमुदायाच्चेद

निपात्यन्ते। अलाक्षणिककार्यार्थं प्रत्ययस्तु विधीयते। श्वेतशब्दे कर्तृवाचिन्युपपदे वहेर्धातोः कर्मणि कारके ण्विन्प्रत्ययो भवति। श्वेता एन वहन्ति श्वेतवा इन्द्रः। तं श्वेतवाहम्। उक्थे कर्मणि करणे वोपपदे शंसतेः प्रत्ययो नलोपश्च। उक्थानि उक्थैर्वा शंसति उक्थशा यजमानः। उक्थशासौ। उक्थशासः। दाशृ दाने अस्य पुरस्पूर्वस्य आदेर्डत्वं कर्मणि च प्रत्ययः। पुरो दाश्यते पुरोडाशः। श्वेतवाहादीनां डस् पदस्येति वक्तव्यम्॥ यत्र डसन्तस्य पदत्वं भविष्यति तत्र ण्विनोपवादो डस्प्रत्ययो वक्तव्य इत्यर्थः। ततश्च श्वेतवाहावित्यादावपदान्तविषयएव सूत्रोक्तो ण्विनुदाहार्यः। श्वेतवा इत्यादि तु सौत्रस्य ण्विनोपवादेन औपसंख्यानिकेन डस्प्रत्ययेनैव सिध्यतीत्यवधेयम्। वृत्तौ ण्विन प्रकृम्य श्वेतवा, इत्याद्युदाहरणन्तु डस्विषये ण्विनोपि प्राप्तिः स्थितेत्येतावन्मात्राभिप्रायकतया कथञ्चिन्नेयम्। न च डस विनापि अवयाःश्वेतवा इत्यनेन रुत्वं निपात्यतामिति वाच्यम्। अविशेषेण निपातने श्वेतवाहावित्यादावतिप्रसक्ते। पदान्तविषयत्वेपि श्वेतवोभ्यामित्यादावुत्वं न सिध्येत्। तस्माड्डस् वाच्य एव। नन्वेवं श्वेतवा इत्यादिनिपातनं व्यर्थमिति चेन्न। तस्य सम्बुद्ध्यर्थत्वात्। एवञ्चोक्थशा इत्यपि सम्बुद्ध्यर्थं निपातनं कर्त्तव्यं यदि मन्त्रे दर्शनमस्तीति कैयटादयः। एवं स्थिते मन्त्रमात्रविषयाणामेषां शब्दानां प्रक्रियाकौमुद्यां लौकिकेपूदाहरणमनुचितम्। वैदिकप्रक्रियायान्तु युज्यते। डसन्तत्वेन सान्तप्रातिपदिकेष्वेवोदाहर्त्तुमुचिता अप्यंते ऽपदान्तविषये इकारान्तत्वादिकं पुरस्कृत्य यथायथं तत्तत्प्रघट्टकेपूक्ता इति बोध्यम्॥

अवे यज॥ ण्विन् स्यान्मन्त्रे। त्वं यज्ञे वरुणस्यावया

असीति काशिका। इह अवया इति प्रतीकमुपादाय पूर्वसूत्रेपि श्वेतवा इत्याद्युदिश्य अवयाश्वेतवाः पुरोडाश्चेति निपातनाद्रुत्वमिति हरदत्तः। एतच्च सर्वं प्रामादिकम्। ण्विनपवादो डसिति भाष्यकैयटादौ स्वग्रन्थे च निर्णीतत्वात्। तस्मादुक्त्युदाहृतं डस एवोदाहरणम्। सूत्रस्य स्वपदान्तविषयं मन्त्रान्तरमन्वेषणीयमिति दिक्। पूर्वसूत्रएवावयजिर्न पठित। उत्तरत्र हि श्वेतवाहादयोप्यनुवर्तेरन्। यजिश्चावपूर्व एवानुवर्तेत। केवल एव तु सिद्धान्तेनुवर्त्यते॥

विजुपे छन्दसि॥ उपे उपपदे यजेर्विच् स्याच्छन्दसि। उपयड्भिरूर्ध्वं यजन्ति तदुपयजामुपयट्त्वम्। मन्त्रइत्यनुवृत्त्यैव भाषाव्यावृत्तौ सत्यां छन्दोग्रहणं ब्राह्मणसङ्ग्रहार्थम्। उत्तरसूत्रएव विड्ग्रहणे छन्दोग्रहणे च क्रियमाणे यद्यपि सर्वं सिध्यति तथापि नियमार्थमिदम्। उपयनेश्छन्दस्येव न भाषायामिति वृत्तिकारः। ननु दृष्टिग्रहणादेव भाषायां न भविष्यतीति चेत्। सत्यम्। तस्यैवायं प्रपञ्च इति हरदत्तः॥

आतो मनिन्क्वनिब्वनिपश्च॥ सुप्युपसर्गे चोपपदे आकारान्तेभ्यो धातुभ्यश्छन्दसि विषये मनिनादयस्त्रयः प्रत्ययाः स्युः। चकाराद्विच्। सुदामा। अश्वइव निघृतोल्लसन्न्यामा। पृषोदरादित्वात्सकारस्य तकारः। सुधीवा। सुपीवा। घुमास्थादिसूत्रेणेत्वम्। भूरिदावा। घृतपावा। विचि तु कीलालपाः॥

अन्येभ्योपि दृश्यन्ते॥ छन्दसीति निवृत्तम्। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। अनाकारान्तेभ्योपि धातुभ्यो मनिन् क्वनिप् वनिप् विच् एते प्रत्ययाः स्युरुपपदे सत्यसति च। सुशर्मा। मातरिश्वा। विजावा। रेडसि पर्णं नवेः॥

क्विप् च ॥ धातोः क्विप्स्यात्कर्त्तरि । उखास्रत् । पर्णध्वत् । वाहाद् भ्रश्यति वाहभ्रद् । वृत्तौ तु वहाभ्रडिति पाठः। तत्र वहाद् भ्रश्यतीति विग्रहः । अन्येषामपि दृश्यतेइति दीर्घ इति हरदत्तः ॥

स्थः क च ॥ तिष्ठते सुप्युपपदे कः स्यात्क्विप्च । सूत्रे केत्यविभक्तिको निर्देशः । शंस्थः । शंस्थाः । इह सुपिस्थ इति कः प्राप्तः । तिष्ठतेरन्तर्भावितण्यर्थतया शमित्यस्य कर्मत्वे तु आतोनुपसर्गेक इति कः प्राप्तः क्विप्चेति क्विबपि । न च विशेषविहितेन कप्रत्ययेन क्विपो बाध शङ्क्य । वासरूप इत्युक्तेः । तदित्थम् । कक्विपोः पर्याये प्राप्ते तदुभयबाधेन शमिधातोः संज्ञायामिति अच् प्राप्तः । स हि धातुग्रहणसामर्थ्यात्कृञो हेत्वादिषु ट यथा बाधते तथा तिष्ठते कक्विपावपि बाधेत । अतस्तमप्यचं बाधितुं कक्विपाविह पुनर्विधीयेते । ननु शंस्था इत्यत्र क्विपि लुप्ते प्रत्ययलक्षणेन घुमास्थेतीत्वं स्यादिति चेन्न । स्थानिवद्भावस्यानल्विधाविति निषेधात् । प्रत्ययलोपइति सूत्रन्तु नियमार्थमिति सिद्धान्तात् । यत्त्विह कैयटेनोक्तमीत्वमवकारादाविति वचनाद् भाष्यकारवचनप्रामाण्याद्वा प्रत्ययलक्षणेनेत्वाभाव इति । तदल्विध्यर्थं प्रत्ययलोपइति सूत्रमिति पूर्वपक्षमभिप्रेत्य, तत्राप्यवकारादाविति वचनस्वीकारे सुधीवेति न सिध्येदित्यपरितोषेण द्वितीयपक्षस्वीकार इति बोध्यम् । स्यादेतत् । शमिधातोरित्यस्यानन्तरमेव स्थःकचेति सूत्र्यताञ्चकारेणाच् समुच्चीयताम् । तत्र सवर्णदीर्घे शंस्था इति भविष्यति । एवञ्चोत्सर्गापवादयोः समानदेशतया सन्दर्भशुद्धिरपि लभ्यते । ईत्वाभावार्थं च न यतनीयमिति । मैवम् । अशंस्था इत्यत्र अच्कावशक्ताविन्युत्तरपदान्तोदात्तत्वा-

पत्तेः । कृद्ग्रहणेगतिकारकपूर्वस्यापीति शंस्था इत्यस्याजन्तत्वात् । क्विबन्तेन नञ्समासे तु नञ्पूर्वपदप्रकृतिस्वर एव सिध्यति ॥

सुप्यजातौ णिनिस्ताच्छील्ये ॥ अजातिवाचिनि सुबन्त उपपदे ताच्छील्ये द्योत्ये धातोः कर्त्तरि णिनिः स्यात् । उष्णभोजी । शीतभोजी । अजाताविति किम् । ब्राह्मणानामन्त्रयिता । ताच्छील्यस्य निवक्षितत्वान्नलोकेति षष्ठीप्रतिषेधः । ताच्छील्ये किम् । उष्णं भुंक्ते कदाचित् । अत्र भाष्यम् । सुपीति वर्त्तमाने पुनः सुब्ग्रहण किमर्थम् । अनुपसर्ग इत्येवं तदभूत् । इद तु सुब्मात्रे यथा स्यात् । उदासारिण्यः मत्यासारिण्य इति । अस्यायमाशयः । सत्सूद्विषेति सूत्रे सुपिस्थ इत्यत सुपीत्यनुवर्त्तते तच्चोपसर्गेतरपरम् । उपसर्गेपीति पृथगुक्तेः । तदिहानुवर्तमानमर्थाधिकारादुपसर्गेतरपरमेव स्यात् । न चोपसर्गेपीत्यंशोपीहानुवर्त्तयितुं शक्यः । केवलमज्ञाधनार्थत्वेन निर्णीते स्थःकचेति पूर्वसूत्रे उपसर्गेपीत्यंशस्य फलाभावेन निच्छिन्नत्वादिति । यद्यप्युत्तरार्थतया पूर्वत्राप्यनुवृत्तिरिति वा मण्डूकप्लुतिन्यायेनैव सम्बन्ध इति वा सुब्ग्रहणस्यैव शब्दाधिकार इति वा सत्सूद्विषेति सूत्रे वर्णितरीत्या तस्यानावश्यकतेति वा सुवचं तथापि सूत्रकाराशयवर्णनमात्रमेतत् । निष्कर्षे तु मा भूदिह सुब्ग्रहणमनुवृत्त्यैव निर्वाहात् । सर्वथापि सुब्मात्रे उपपदे णिनिः न त्वनुपसर्गएवेति सिद्धान्तः । तथा च प्रयुज्यते । स बभूवोपजीविनाम् । न्यषेधि शेषोप्यनुयायिवर्गः । आरिष्टशय्यां परितो विसारिणा । पतत्यधो धाम विसारि सर्वतः । विसारिभिः सौधमिवांशुजालैः । प्रभाविनं भाविनमन्तमात्मनः ।

न वञ्चनीया' प्रभवोनुजीविभिरित्यादि । यत्त्विह वृत्तिकृतोक्तं सुपीति वर्त्तमाने पुनः सुब्ग्रहणमुपसर्गनिवृत्त्यर्थमिति । तन्न । भाष्यविरोधात् । उदाहृतप्रयोगविरोधाच्च । न चैते प्रयोगा आवश्यकादिणिनिना कथं चिन्निर्वाह्या इति वाच्यम् । यथाश्रुते बाधकाभावात् । यद्यपि वृत्तिकृतोक्तमुत्प्रतिभ्यामाङि सर्त्तेरुपसंख्यानमिति, तदपि न । भाष्ये तादृशवार्त्तिकाभावात् । एतेन उत्प्रतिभ्यामिति प्रतीकमुपादाय सुबित्यस्योपसर्गनिवृत्त्यर्थत्वादयमारम्भ इति वदन् हरदत्तोपि प्रत्युक्तः । भाष्यविरोधात् । आघ्रमिकसकलग्रन्थविरोधाच्च । तथाहि । कृत्यच इति सूत्रे अनप्रानानीयानीनिनिष्ठादेशाः प्रयोजयन्तीत्येतद्वार्त्तिकान्तर्गतेनिग्रहणव्याख्यानावसरे सुप्यजातौणिनिः । आवश्यके चेति व्याख्यातम् । सुप्यजातावित्यस्योपसर्गे प्रवृत्त्यभावे असङ्गतमेव तत्स्यात् । कृत्यच इत्यत्रोपसर्गादित्यनुवृत्तेः । यदप्यनुणादिनष्ठगित्यत्रास्मादेव निपातनाण्णिनिरिति विसारिणोमत्स्यइत्यत्र च पूर्ववण्णिनिरिति तदप्येतेनापास्तम् । यदपि माधवेनोक्तम्, अस्मादेव विसारिण इति निर्देशादण्सन्नियोगेनैव णिनिरित्युक्त्वा निषिद्धञ्च पदमञ्जर्याम् । विसारीति पृथक् प्रयोग । पृथक्प्रयोगमसहमानेनैव न्यासकारेणापि ग्रहादित्वाण्णिनिरित्युक्त्वा अत एव निपातनादित्युक्तम् । निपातनञ्च प्रत्ययसन्नियोगेनेति सिद्धान्तितम् । तदपि न । विसारिणोमत्स्यइत्यत्र मत्स्य इति किम् । विसारी देवदत्त इति प्रत्युदाहरता वृत्तिकृता सह विरोधात् । भाष्यविरोधस्तवस्थैव । एतेनोपसर्गनिवृत्त्यर्थमिति वृत्तिकृद्वचनं केवलोपसर्गनिवृत्त्यर्थमिति प्रसादकारोक्तिरपि प्रत्युक्ता । यत्तु सजात्यर्थाद्विरापां स्थाधीत्यादप्रक्रियायाद्दासारिण्यः प्रस्था-

सारिण्य इतिवत्साधुरित्युक्तम् । तदपि उदाहृतमसादकारवाक्ये केवलपदस्य असहायपरतया अनेकोपसर्गे णिनिर्भवत्येवेत्यर्थं गृहीत्वा रभसादेवोक्तमिति सर्वमिदं भाष्यतत्त्वज्ञैरुपेक्ष्यमेवेति दिक् । अत्र वार्त्तिकद्वय, ण्विन्विधौ साधुकारिण्युपसंख्यानम् ॥ अताच्छील्यार्थमिदम् । एतच्च ज्ञापकात्सिद्धम् । यदयमाक्वेरिति सूत्रे तच्छीलतद्धर्मइत्यभिधाय साधुकारिग्रहणं करोति तज् ज्ञापयति साधुकारिणि अताच्छील्येपि णिनिर्भवतीति । साधुकारी । साधुदायी । ब्रह्मणि वद उपसंख्यानम् ॥ ब्रह्मवादिनो वदन्ति । ब्रह्म वेदः । इदमपि वार्त्तिकमताच्छील्यार्थमिति कैयटहरदत्तौ । यत्तु भट्टवार्त्तिके ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारिपरतया व्याख्यानं कृतं तस्यायमाशयः । सुप्यजाताविति सूत्रेण ताच्छील्ये समनन्तरोक्तवार्त्तिकेन साधुकारिणि च णिनिः । आवश्यकाधमर्ण्ययोर्णिनिरिति आवश्यके णिनिस्तु तद्धर्मे पर्यवस्यति । न त्विहाक्वेरिति सूत्रस्य व्यापारोस्तीति दिक् ॥

कर्त्तर्युपमाने ॥ कर्तृवाचिन्युपमाने उपपदे धातोर्णिनिः स्यात् । उपपदं कर्त्ता प्रत्ययार्थस्य कर्तुरुपमानम् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । ध्वाङ्क्षरावी । अताच्छील्यार्थं जात्यर्थञ्च वचनम् । कर्तरि किम् । अपूपानिव भक्षयति माषान् । उपमाने किम् । उष्ट्रः क्रोशति ॥

व्रते ॥ सुप्युपपदे धातोर्णिनिः स्याद्व्रते गम्यमाने । समुदायोपाधिरयम् । धातूपपदप्रत्ययसमुदायाच्चेद् व्रतं गम्यत इत्यर्थः । स्थण्डिलशायी । अश्राद्धभोजी । यद्यपि द्विधा निरपसम्भवति स्थण्डिले शेतएव अश्राद्धं भुङ्क्तएव वा । स्थण्डिलएव शेते अश्राद्धमेव भुङ्क्ते इति च । तथापि ...

त्ययो न भवति व्रते इत्युक्तेः । शास्त्रसिद्धो नियमो हि व्रतं न च शयितव्यमेव भोक्तव्यमेवेत्येवंरूपं शास्त्रमस्ति । अस्ति तु स्थण्डिले एव शयितव्यम्, अश्राद्धमेव भोक्तव्यमिति । तस्मात्तत्रैव प्रत्ययः । अताच्छील्यार्थमजात्यर्थं वा आरम्भः ॥

बहुलमाभीक्ष्ण्ये ॥ सुप्युपपदे धातोर्बहुलं णिनिः स्यात् पौनःपुन्ये द्योत्ये । क्षीरपायिण उशीनराः ॥

मनः ॥ सुप्युपपदे मन्यतेर्णिनिः स्यात् । दर्शनीयमानी । बहुलग्रहणादिह दैवादिकस्यैव ग्रहणं न तु तानादिकस्य । तेनोत्तरसूत्रे खशि श्यनेव भवति ॥

आत्ममाने खश्च ॥ मननं मानः । आत्मशब्दः स्वपरः । कर्मणि षष्ठ्या समासः । प्रत्ययार्थत्वेन सन्निहितः कर्ता स्वपदार्थः आत्मकर्मकमनने वर्तमानान्मन्यतेर्धातोः सुप्युपपदे खश् स्यात् । चाण्णिनिः । यद्यपि वासरूपविधिना सिद्धोऽसौ तथाप्यविच्छेदाय समुच्चीयते । तेन करणेयज इत्यादौ णिनिरेवानुवर्तते न तु खश् । दर्शनीयमात्मानं मन्यते दर्शनीयंमन्यः । दर्शनीयमानी । पण्डितम्मन्यः । पण्डितमानी । आत्ममानइति किम् । दर्शनीयमानी देवदत्तो यज्ञदत्तस्य । खशः खकारो मुमर्थः । दर्शनीयम्मन्या कुमारीत्यादौ ह्रस्वार्थश्च । शकारः सार्वधातुकसंज्ञार्थः । दिवादित्वाच्छ्यन् । स्वरस्तु 'सतिशिष्टोपि विकरणस्वरः सार्वधातुकस्वरं न बाधत' इति खश एव भवति न तु नित्स्वर इति भाष्यकैयटपदमञ्जर्यादिषु स्थितम् । यच्च सतिशिष्टोपि विकरणस्वरो लसार्वधातुकस्वरं न बाधतइति यत्नतस्तत्रतत्र प्राचां ग्रन्थेषूक्तम् । तत्र लादेशग्रहणमविचारितरमणीयमित्यवधेयम् । अत एव दिवादिभ्यश्शानचि श्यनि निघातस्वरेण आद्युदात्तत्वमित्येवंपरः कैयटग्रन्थ आपाततो न तु भद्रेय इति स्पष्टितमस्माभिः स्या-

निवत्सूते ॥

इति श्रीशब्दकौस्तुभे तृतीयाध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ॥

भूते ॥ अधिकारोयम् । वर्तमानेलडिति यावत् ॥

करणे यजः ॥ करणे उपपदे भूतार्थवृत्तेर्यजेर्णिनिः स्यात्कर्तरि । सोमेनेष्टवान्सोमयाजी । स्वादेतत् । अग्निष्टोमयाजीत्यादौ यागसमानाधिकरणे उपपदे कथं णिनिरिति चेत् । अत्र काशिका । अग्निष्टोमः फलभावनायां करणमिति । अयमाशय । अस्ति हि सर्वधातूनां धातुत्वेन व्यापारे भावनापरपर्याये शक्तिः। पचियजित्वादिविशेषरूपेण तु पाकयागादिविशेषेष्विति भूवादिसूत्रएवोक्तम् । तत्र यागस्य समानप्रकृत्युपात्तभावनां प्रति करणत्वे कर्तोपि कर्मेति न्यायेन ज्योतिष्टोमोपि करणमेव । अग्निष्टोमादिशब्दास्तु यद्यपि संस्थावचनाः तथापि तद्वति लक्षणया यागसमानाधिकरणा एवेति दिक् । इह प्रघट्टके हरदत्तग्रन्थे अग्निष्टोमशब्दः कर्मनामधेयमिति । दीक्षणीयादिरुदवसानीयान्तो ज्योतिष्टोमाख्यो याग एव स्वर्गभावनेति । द्विविधो यजमानस्य व्यापारः सामान्यरूपो विशेषरूपश्च । तत्र सामान्यरूप आभ्यन्तर औदासीन्यमच्युतिरूपः कृतिप्रयत्नादिपदाभिलप्यः । बाह्यस्तु दीक्षणीयादिरुदवसानीयान्तः प्रसिद्ध एवेत्यादि व्यवहृतम् । एतच्च यद्यपि मीमांसाविरुद्धमग्निष्टोमशब्दस्य संस्थावाचित्वात् । न च संस्थैवेह कर्मशब्दार्थो विवक्षितः तत्कथमग्निष्टोमस्य यागं प्रति करणत्वं न हि तदेव तत्र करणं भवतीति तद्वचरतद्ग्रन्थविरोधात् । दीक्षणीयादेरुदवसानीयाया ज्योतिष्टोमाङ्गत्वेपि ज्योतिष्टोमाख्ययागशरीरामवेशात् दीक्षणीयादीनां यागत्वोपवर्णनविरोधाच्च । देवतोद्देशेन द्रव्य

स्यागरूपाणान्तेपामाभ्यन्तरत्वात् । प्रक्षेपो हि बाह्यः न तु यागोपीति स्पष्टमेव । तथापि गौण्या लक्षणया वा कथाञ्चिन्मीमांसासिद्धान्ताविरोधेन हरदत्तग्रन्थो व्याख्येय इति दिक् ॥

कर्मणि हनः ॥ कर्मण्युपपदे भूतार्थाद्धन्तेर्णिनिः स्यात् । इदं कर्मग्रहणं सहेचेति यावदनुवर्तते । पितृव्यघाती । मातुलघाती । अत्र काशिका । कुत्सितग्रहणं कर्तव्यम् । इह मा भूच्चोरं हतवानिति । यद्यपि इदं भाष्ये नास्ति तथापि शक्तिस्वाभाव्याल्लभ्यतइति भावः ॥

ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ब्रह्मादिषु कर्मसूपपदेषु हन्तेर्भूते क्विप् स्यात् । ब्रह्महा । भ्रूणहा । वृत्रहा । क्विप्चेत्यनेन सिद्धे नियमार्थमिदम् । नियमश्चेह चतुर्विधोपीष्यतइति वृत्तिकारः । तस्यायमाशयः । इह सूत्रे श्रुतत्वात्पूर्वं ब्रह्मादय उद्देश्याः । ततोनन्तरं प्रकृतित्वाद्धन्तिः ततः परिशेषाद्भूतइति । क्विप् तु सर्वान्ते निर्देष्टव्यः । विधेयत्वात् । तदेवं वचनव्यक्तिः । ब्रह्मादिषूपपदेषु हन्तेर्भूते क्विबेवेति । एवं स्थिते यत्रैवकारस्ततोन्यत्र नियम इति न्यायेन नियमोन्यत्र भवन् अनन्तरे भवति । ततश्च ब्रह्मादिष्वेवेत्यवधारणे हन्तेस्तदनन्तरनिर्दिष्टत्वादुपपदान्तरसम्बन्धनिवृत्तिफलो नियमो भवति । ब्रह्मादिषु हन्तेरेव । भूतइति तु अनन्तरत्वाविशेषेपि प्राथम्यादुपपदनियमः । ब्रह्मादिषु हन्तेर्भूतएव । क्विबेवेति तु आनन्तर्ये क्विब्धात्वोरविशिष्टेपि प्राधान्यात्प्रत्ययनियमः । ब्रह्मादिषु हन्तेर्भूते क्विबेवेति वचनव्यक्तौ कालनियमः । सोयं प्रकृत्युपपदप्रत्ययकालनियमानां विवेकः । अगृह्यमाणविशेषत्वात्तु चतुर्विधस्यापीह ग्रहणम् । तत्र ब्रह्मादिष्वेव हन्तेरिति प्रकृतिनियमे भूतइत्याश्रयणात्कालान्तरे उपपदान्तरेपि भवत्येव । पुरुषं हन्ति हनिष्यति वा पुरुषहा । हरिहयोरि-

इयोगविचक्षणः। ब्रह्मादिषु हन्तेरेवेत्युपपदनियमेपि भूतइत्या-श्रयणात्कालान्तरे धात्वन्तरादपि भवत्येव। वृत्रं जयति जेष्य-ति वा वृत्रजिदिति। भूतएव क्विविति प्रत्ययनियमेपि ब्रह्मा-दिष्वित्युक्तेः पुरुषहा अरिहेति प्राग्वत्। भूतएव क्विबेवेति कालनियमेपि उपपदान्तरे भूतेपि प्रत्ययान्तरं भवत्येव। पितृव्यं हतवान् पितृव्यघातीति। सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते। निष्ठा तु भवत्येव। वृत्रं हतवानिति। भाष्यका-रस्तु प्रकृतिकालनियमावेव अशिश्रियत्। तस्यायमाशयः। धा-तुकालौ हि नेह सूत्रे श्रुतौ किन्तु प्रकरणलक्षणजघन्यप्रमाणेनो-पस्थितौ। अतस्तयोरेवोपरोधो न्याय्यः न तूपपदप्रत्यययो। श्रुत्युपस्थापितत्वात्। एवं न्यायोपष्टम्भेन भाष्येण सह वि-रोधात् वृत्तिमतमुपेक्ष्यमेवेति कैयटे स्थितम्। यत्त्विह हरदत्तेनो-क्तं धातूपपदविषयं नियमद्वयं भाष्ये प्रदर्शितमिति। तत्र धा-तुकालविषयमिति वक्तव्ये उपपदग्रहणं प्रामादिकमित्यवधेयम्॥

बहुलं छन्दसि॥ पूर्वेण नियमादप्राप्तः क्विप् प्रतिप्रसूयते। उपपदान्तरेपि हन्तेर्बहुलं क्विप् स्यात्। यो मातृहा पितृहा। क्व चिन्न। पितृघातः॥

सुकर्मपापमन्त्रपुण्येषु कृञः॥ सुकर्मादिषु च कर्मसूपपदेषु कृञः क्विप् स्यात्। त्रिविधोत्र नियमः धातुनियमं वर्जयित्वेति वृत्तिः। सुकृत्। कर्मकृत्। पापकृत्। मन्त्रकृत्। पुण्यकृत्। कालनियमात्कर्मकृतवानित्यत्राण् न भवति। उपपदानियमात् मन्त्रमधीतवान्मन्त्राध्याय इत्यणेव भवति न क्विप्। प्रत्यय-नियमात् मन्त्रं करोति करिष्यति वेति विवक्षायामणेव भव-ति न क्विप्। धातोरनियतत्वादन्यस्मिन्नप्युपपदे क्विप्चोदि क्विप् भवत्येव। शास्त्रकृत्। भाष्यकृत्॥

सोमे सुञः ॥ सोमे कर्मण्युपपदे सुनोतेः क्विप् स्यात् । सोमसुत् । चतुर्विधोत्र नियम इति वृत्तिः ॥

अग्नौ चेः ॥ अग्नौ कर्मण्युपपदे चिनोतेः क्विप् स्यात् । अग्निचित् । अत्रापि चतुर्विधो नियम इति वृत्तिः ॥

कर्मण्यग्न्याख्यायाम् ॥ कर्मण्युपपदे चिनोतेर्धातोः कर्मण्येव कारके क्विप् स्यादग्न्याख्यायाम् । श्येन इव चीयते श्येनचित् । अग्निशब्द आहवनीयधारणार्थमिष्टकानिर्मितस्थलविशेषे वेदे बहुशः प्रयुज्यते । य एवं विद्वानग्निं चिनुते । अग्निञ्चेष्यमाण इति । स तत्र मुख्यो जघन्यो वास्तु इह त्वसत्याख्याग्रहणे लोकप्रसिद्धिवशेन ज्वलनएव गृह्येत । समाम्राहि स्थलविशेषएव च गृह्यतामित्येतदर्थमाख्याग्रहणम् । एवं धातूपपदप्रत्ययसमुदायेन स्थलविशेषे गम्यमाने अयं प्रत्यय इति स्थितम् ॥

कर्मणीनिर्विक्रियः ॥ कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः स्यात् । अत्र वार्त्तिकम् । कर्मणि कुत्सितग्रहणमिति ॥ एतच्च पुनः कर्मग्रहणसामर्थ्याल्लभ्यते । यत्कर्म क्रियया सम्बध्यमानं कर्त्तुः कुत्सामावहति तत्रेत्यर्थः । सोमादयश्च विक्रीयमाणाः शास्त्रे प्रतिषेधात्कुत्सावहाः । सोमविक्रयी । घृतविक्रयी । तैलविक्रयी । कुत्सितग्रहणान्नेह । धान्यविक्रायः ॥

दृशेः क्वनिप् ॥ कर्मण्युपपदे भूतार्थाद् दृशेः क्वनिप्स्यात् । अन्येभ्योपि दृश्यतइति सिद्धे नियमार्थमिदं क्वनिबेव यथा स्यात् तत्सहनिर्दिष्टं मनिनादि सोपपदञ्चाणादि मा भूदिति । निष्ठा तु भवत्येव । परलोकं दृष्टवानिति । एवं स्थिते विश्वदृश्वनयना वयमेवेत्यादौ विश्वं पश्यन्तीति वर्त्तमानविग्रहेपि न क्षतिः । प्रत्ययान्तरनिवृत्त्यर्थं सूत्रमिति वृत्तिकारा-

दिभिर्व्याख्यातत्वात्। कालान्तरनिवृत्त्यर्थस्य चाभियुक्तैरनुक्तत्वादिति दिक्॥

राजनि युधिकृञः॥ राजशब्दे कर्मवाचिन्युपपदे युध्यतेः करोतेश्च क्वनिप्स्यात्। युध्यतेरकर्मकत्वेप्यन्तर्भावितण्यर्थत्वात्सकर्मकत्वम्। राजानं योधितवान् राजयुध्वा। राजकृत्वा॥

सहे च॥ कर्मणीति निवृत्तम्। असत्ववचनत्वेन इहानन्वयात् उत्तरत्राप्यनुपयोगात्। सहशब्दे उपपदे युधेः कृञश्च क्वनिप्स्यात्। सहयुध्वा। सहकृत्वा। दृशेः क्वनिविति वदिदमपि सूत्रद्वयं नियमार्थमिति न्याय्यम्। वस्तुतस्तु दृशिग्रहणेन निर्वाहस्यागतिकगतित्वादियन्त्रिसूत्री विधात्रीत्यपि सुवचम्। प्राचां ग्रन्थास्त्विह उदासीना एवेति बोध्यम्॥

सप्तम्यां जनेर्डः॥ सप्तम्यन्ते उपपदे जनेर्डप्रत्ययः स्यात्। सरसिजम्। मन्दुरजः। वाजिशाला तु मन्दुरा। ङ्यापोस्संज्ञाछन्दसोर्बहुलमिति ह्रस्वः॥

पञ्चम्यामजातौ॥ जातिशब्दवर्जिते पञ्चम्यन्तउपपदे जनेर्डः स्यात्। बुद्धिजः। संस्कारजः। गुणशब्दोयम्। यद्यपि बुद्धित्वं जातिरिति वहवस्तथापि गुणगतजात्यनभ्युपगममतेनेदम्। मतान्तरे त्वन्येष्वपीत्यनेन सिद्धम्। प्रकृतसूत्रोदाहरणन्त्वदृष्टजम्, इन्द्रियजम्। शरीरजमित्यादि बोध्यम्॥

उपसर्गे च संज्ञायाम्॥ जनेर्डः स्यात्। प्रजा स्यात्सन्ततौ जने॥

अनौ कर्मणि॥ अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात्। पुमांसमनुरुध्य जाता पुमनुजा। इह जनिः सकर्मकः॥

अन्येष्वपि दृश्यते॥ उपपदान्तरेष्वपि जनेर्डः स्यात्।

अजः । द्विजः । ब्राह्मणजः । अपिः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि कारकान्तरेष्वपि यथादर्शनं भवति । परितः खाता परिखा । उखा । क्रोडादिगणे निपातनाड्डुदोन्तलोप इति वर्धमानः । यत्त्वन्तात्यन्ताध्वेति प्रकरणे अन्यत्रापि दृश्यतइत्युपसङ्ख्यातं तद्भूतकालं विनापि यथा स्यादित्येवमर्थम् । वस्तुतस्तु प्रकृतसूत्रस्थस्यापिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वाद्वार्त्तिकमनेनैव गतार्थम् । विभावितं चेदमिकोगुणवृद्धी इतिसूत्रे जनेर्डे प्रक्रम्य गमेरप्ययण्डो वक्तव्य इति वदता भाष्यकारेण । एवञ्च प्रकृतसूत्रस्थमन्येभ्योपिदृश्यतइति वार्त्तिकमपि गतार्थम् ॥

निष्ठा ॥ धातोर्भूते निष्ठा स्यात् । तयोरेवेति क्तः कर्मणि क्तवतुस्तु कर्त्तरि । कृतः कटः । कटं कृतवान् । आदिकर्मणि निष्ठा वक्तव्या ॥ कृतः कटः । कर्त्तुमारब्ध इत्यर्थः । न्याय्यं त्वाद्यपवर्गात् । उपसङ्ख्यानप्रत्याख्यानमेतत् । आदिभूतो यः क्रियाक्षणः अपवृक्तः तस्मिन्नेव अवयवे समूहरूपारोपात्सिद्धः प्रत्यय इति भावः । अत एव लुङादयोपि प्रयुज्यन्ते । उक्तञ्च । समूहः स तथाभूतः प्रतिभेदं समूहिषु । समाप्यते ततो भेदे कालभेदस्य सम्भव इति ॥

सुयजोर्ङ्वनिप् ॥ सुनोतेर्यजेश्च ङ्वनिप् स्यात् । सुत्वा । सुत्वानौ । सुत्वानः । यज्वा । यज्वानौ । यज्वानः । इह तु सु गतौ, षु प्रसवैश्वर्ययोरित्यनयोरेव निरनुबन्धकयोर्ग्रहणं माष्टम् । अनभिधानादुभयपदिना साहचर्याद्वा न भवति । ङकारः सुनोतेर्गुणप्रतिषेधार्थः । पकारः स्वरार्थस्तुगर्थश्च ॥

जीर्यतेरतृन् ॥ स्पष्टम् । जरन् । जरन्तौ । जरन्तः । वासरूपेण निष्ठा । जीनो जीर्णो जरन्नपीत्यमरः ॥

छन्दसि लिट् ॥ स्पष्टम् । अहं द्यावापृथिवी आततान । ननु छन्दसि लुङ्लङ्लिट इति सिद्धमिति चेन्न । धातुसम्बन्धे-मत्यया इत्यधिकृत्य तद्विधेः । इह त्वविशेषेणेति भेदात् । लिट इ-कारटकारावनुबन्धौ ॥

लिटः कानज्वा ॥ लिट्यभ्यासस्येत्यादौ विशेषणार्थः ट-कारएत्वार्थोऽपि ॥

लिटः कानज्वा ॥ क्वसुश्च ॥ छन्दसि लिटः कानच्क्वसू वा स्तः । योगविभाग उत्तरार्थः । योग्निश्चिक्यानः । मन्दानः । सोमम्पपिवान् । अनन्तरस्यैव लिट इमावादेशौ, लिङ्ग्रहणन्तु प्रत्ययान्तरत्वशङ्कानिरासार्थम् । वावचनमुत्तरार्थम् । कानचश्चित्करणं स्वरार्थम् । क्वसोरुकार उगित्कार्यार्थं । जक्षितानित्यादावुगिदचामिति नुम् । उपेयुषीत्यादावुगितश्चेति ङीप् । वसोः संप्रसारणमित्यत्र सामान्यग्रहणमप्युकारस्य प्रयोजनम् । अथ किमर्थं कित्करणम्, ईजानः सस्रजानस्तेषा इत्यादौ सम्प्रसारणं गुणनिषेध एत्वाभ्यासलोपश्चासंयोगाल्लिटः कित्त्वादेव सिद्धम् । अस्तु तर्हि संयोगान्तार्थम् । बन्ध बन्धने । वृत्रस्य यद्बद्धानस्य रोदसी, त्वमर्णवान् बद्धधानां अरणारम्णाः । अत्रानिदितामिति नलोपः । अभ्यासबकारस्य हलादिशेषेण निवृत्तिः प्राप्ता छान्दसत्वान्न भवति । झलाम्जश्झशीति जश्त्वं दकारः । एवमञ्जेः, आजिवान् । उपधालोपः । मैवम् । छान्दसौ हि क्वसुकानचौ । लिट् च छन्दसि सार्वधातुकमपि भवति । छन्दस्युभयथेति वचनात् । तत्र सार्वधातुकमपिदिति ङित्त्वम् । न च संयोगान्तेषु कित्त्वङित्त्वयोर्विशेषोस्ति । तस्मादर्थानयोः किन्त्वमिति चेत् । अत्राहुः । ऋच्छत्यृतामिति ऋकारान्तानां प्रतिषेधविषये गुण आरभ्यते स यथेह भवति पारतस्थेर तेरत्रु-

स्तेरुरिति, एवमिहापि स्यात्। यतः सुचार्थाहितितिस्तिराणाः तथा तिर्तीर्वानिति। तद्व्यावृत्तये कित्करणम्। नचैवम् आरिवान् सर्वाभूणान्यारुपी इत्यत्रापि गुणो न स्यादिति वाच्यम् । ऋकारान्तरप्रश्लेषेण ऋधातौ पुनर्विधानादिति दिक्। यन्तु के चित् कित्करणसामर्थ्याद्भाषायामपि क्वसुकानचौ स्त इत्याहुः। तद्भाष्याविरुद्धम्। भाषायां सदेत्यादिसूत्रविरुद्धञ्चेत्युपेक्ष्यम् ॥

भाषायां सदवसश्रुवः ॥ एभ्यो भूतसामान्ये लिड् वा स्यात्तस्य च नित्य क्वसुः स्यात्। पक्षे यथास्वं प्रत्ययाः। सेदिवान्। असदत्। असीदत्। ससाद। उपिवान्। अवात्सीत्। अवसत्। उवास। शुश्रुवान्। अश्रौषीत्। अशृणोत् शुश्राव। लङ्लिड्विषयेपि भवति। परस्तादनुवृत्तेः ॥

उपेयिवाननाश्वाननूचानश्च ॥ उपेत्यविवक्षितम्। व्याख्यानात्। ईयिवांसमतिस्रिध इति दर्शनाच्च। इणो नञ्पूर्वादश्नातेरनुपूर्वाद्वचेश्च भूतसामान्ये वा लिट् तस्य नित्य क्वसुकानचौ। पक्षे तु लङादयः। अगात्। ऐत्। इयाय। अनाश्वान्। इडभावोपि निपात्यते। नाशीत्। नाश्नात्। नाश। वचेः कर्त्तर्येव कानच् न तु भावकर्मणो। निपातनसामर्थ्यात्। अन्वयोचत्। अन्वब्रवीत्। अनूवाच। अत्रेदमवधेयम्। भाषायां सदवसेति सूत्रएवेण् ग्राह्य, उपेयिवानिति तु न निपात्यम्। द्वित्वात्प्रागेव परत्वादिट्। नन्वेव विभिद्वानित्यादावपीट्प्रसङ्गः। तत्र द्वित्वस्य नित्यत्वात्। इणस्तु इडपि नित्यः। द्वयोर्नित्ययोः परत्वादिट्। न च कृते द्वित्वे ऽनेकाच्त्वादिण् न लभ्यतइति वाच्यम्। ईयतुरित्यादाविव सवर्णदीर्घे सत्येकाच्त्वात्। न च दीर्घइणःकितीति दीर्घसामर्थ्यादेकादेशबाधः। इणोयणिति यणि कृते दीर्घस्य चरितार्थत्वात्। न च याणि कृतेपि स्थानि-

वद्भावेनैकादेशः स्यादिति वाच्यम् । पूर्वमात्रस्य विधौ स्थानिवद्भावः न तु पूर्वपरविधौ । विधिग्रहणसामर्थ्यादित्युक्तत्वादिति दिक् ॥

लुङ् ॥ भूतार्थवृत्तेर्धातोर्लुङ् स्यात् । अभूत् । वसेर्लुङ् रात्रिशेषे जागरणसन्ततावितिं वाच्यम् ॥ रात्रेश्चतुर्थे यामे यदा वाक्यं प्रयुङ्क्ते तदा अनद्यतनत्वाल्लङि प्राप्ते तन्निवृत्तये लुङुपसंख्यायते । क्व भवानुषितः । अमुत्रावात्सम् । जागरणसन्ततावि-ति किम् । यदा सुप्त्वा प्रबुध्य प्रयुङ्क्ते तदा लङो निवृत्तिर्मा भूत् । अमुत्रावसमिति ॥

अनद्यतने लङ् ॥ नास्त्यद्यतनो यस्मिन् भूते तद्वृत्तेर्धातोर्लङ् । अभवत् । बहुव्रीहिव्याख्यानान्नेह । अद्य ह्यश्चाभुञ्ज्महि । परोक्षेपि लोकविज्ञाते सम्भावितप्रयोक्तृकर्तृकदर्शने लङ् वक्तव्यः ॥ लिटोपवादः । अरुणद्यवनः साकेतम् । लोकविज्ञाते किम् । चकार कटं देवदत्तः । सम्भावितेत्यादि किम् । कृष्णः कंसं जघान । नात्रेदानीन्तनस्य प्रयोक्तुर्दर्शनं सम्भाव्यते चिरातीतत्वात् । यस्तु कृष्णावतारसमकालः प्रयोक्ता स लङं प्रयुक्तवानेव । अहन् कंसमिति ॥

अभिज्ञावचने लृट् ॥ स्मृतिबोधके उपपदे लङ्विषये लृट् स्यात् । अभिजानासि स्मरसि बुध्यसे चेतयसे वा प्रयागे वत्स्यामः ॥

न यदि ॥ यच्छब्दयोगे पूर्वेण प्राप्तो निषिध्यते । अभिजानासि यत्काश्यामवसाम ॥

विभाषा साकाङ्क्षे ॥ उभयत्रविभाषेयम् । यच्छब्दयोगे पूर्वेण निषेधादप्राप्ते अन्यत्र नित्यं प्राप्ते । अभिजानासि देवदत्त प्रयागे वत्स्यामः । तत्र माघ स्नास्याम । अवसाम । अस्नाम

ति वा। एवं यच्छब्दप्रयोगेपि बोध्यम्। इह वासस्नानयोः लक्ष्यलक्षणभावस्य विवक्षितत्वात्साकांक्षता बोध्या॥

परोक्षे लिट्॥ भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात्। बभूव। अथ कथम्, अभून्नृपो विबुधसख इति भट्टिः। अभूद्भूमिः प्रतिपक्षजन्मनामिति माघश्चेति चेत्। शृणु। वस्तुतो लिड्विषयस्यापि भूतत्वसामान्यांशमात्रविवक्षायां लुङ्। अत्यन्तापन्हवे लिड्वक्तव्यः॥ नाहं कलिङ्गान् जगाम। अपरोक्षार्थमुपसङ्ख्यानम्। कलिङ्गाख्ये कुत्सिते देशविशेषे त्वया चिरं स्थितमित्यभियोगे कृते नावस्थानमात्रं निषिध्यते किन्तु तत्प्रयोजकं गमनमपीति सोयमत्यन्तापह्नवः॥

हशश्वतोर्लङ् च॥ लिड्विषये लङ् चाल्लिट्। इति हाकरोच्चकार वा। शश्वदकरोच्चकार वा॥

प्रश्ने चासन्नकाले॥ पृच्छ्यते इति प्रश्नः। कर्मणि नङ्। पञ्चवर्षाभ्यन्तरमासन्नकालः। प्रश्नविषयीभूतासन्नकालभूतानद्यतनपरोक्षार्थाद्धातोर्लङ्लिटौ स्तः। अगच्छत्किं देवदत्तः, जगाम वा॥

लट् स्मे॥ लिटोपवादः। यजति स्म युधिष्ठिरः। इयाज किलेत्यर्थः॥

अपरोक्षे च॥ स्मे लट् स्यात्। लङोपवादः। एवं स्म पिता ब्रवीति॥

ननौ पृष्टप्रतिवचने॥ अनद्यतनपरोक्षइति निवृत्तम्। भूतसामान्ये लट् स्यात्। अकार्षीः किम्। ननु करोमि भोः॥

नन्वोर्विभाषा॥ भूतसामान्ये पृष्टप्रतिवचने लड्वा। अकार्षीः किम्। न करोमि नाकार्षम्। अहं नु करोम्यकार्षं वा॥

पुरि लुङ् चास्मे ॥ अनद्यतनग्रहणं मण्डूकप्लुत्यानुवर्तते। स्मवर्जिते पुराशब्दे भूतानद्यतने लुङ्लटौ वा स्तः। तयोरभावे यथाप्राप्तम्। वसन्तीह पुरा छात्राः। अवात्सुः। अवसन्। ऊषुर्वा। अस्मे किम्। नडेन स्म पुराधीयते। नडाख्यं तृणविशेषं हस्ते गृहीत्वेत्यर्थः॥

वर्तमाने लट्॥ वर्तमानार्थधातोर्लट् स्यात्। पचति। अधिश्रयणाधिरधःश्रयणान्त एकफलावच्छिन्नो विततरूपो व्यापारकलापः पचेरर्थः। तस्य च वर्तमानत्वमारब्धापरिसमाप्तत्वम्। तच्च लटो द्योत्यम्। स्यादेतत्। आत्मा अस्तीत्यादौ आरम्भाभावात्कथं लट्। आत्मा वा इदमेक एवाग्रआसीदित्यादौ भूतप्रत्ययाः। आत्मा भाविकल्पेपि भविष्यतीत्यादिभविष्यत्प्रत्ययाश्च कथमिति चेत्। एकस्या अप्यात्मसत्तायास्तत्तत्क्रियोपहितायाः औपाधिकं भेदं पुरस्कृत्य सर्वनिर्वाहात्॥

इति श्रीशब्दकौस्तुभे तृतीयस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्॥

लटः शतृशानचावप्रथमासमानाधिकरणे ॥ द्वितीयाद्यन्तेन समानाधिकरणे लटि सति तस्य लटः स्थाने शतृशानचौ स्तः। पचन्तं पचमानं पश्य। पचता पचमानेन कृतम्। यद्यपि तिङन्तोपस्थाप्ययोः कर्तृकर्मणोरप्रथमान्तेन सामानाधिकरण्यं नास्त्येव तथापि कृदन्तोपस्थाप्ययोः सामानाधिकरण्यदर्शनात्कृत्स्थानितया प्रक्रियावस्थायां कल्प्यमानो लकारः प्रकृत्यर्थं प्रति प्रधानभूते कर्तृकर्मणी अभिदधानः कल्प्यते। लकारवाच्यांशस्य तिङ्कृतोरविशेषेपि गुणप्रधानभावे वैलक्षण्यमस्तीति फलितोर्थः। अप्रथमेत्यादि किम्। देवदत्तः पचति। कथन्तर्हि सन् ब्राह्मण इत्यादि। अत्राहुः। लटः शतृशानचाविति योगो विभज्यते

नन्वोर्विभाषेत्यतो विभाषानुवर्तते । व्यवस्थितविभाषेयम् । तेन यथादर्शनं प्रयोगोप्यत्रातिष्ठते । अप्रथमेत्यादि तु योगान्तरं विषयविशेषे शतृशानचोर्नित्यतायाः स्पष्टीकरणाय । एवं सम्बोधनेचेत्याद्यपि बोध्यम् । माङ्याक्रोशे इति वक्तव्यम् ॥ मा जीवन् । मा पचमानः । माङिलुङोपवादोत एव लट् ॥

सम्बोधने च ॥ हे पचन् । हे पचमान ॥

लक्षणहेत्वोः क्रियायाः ॥ लक्षणं चिन्हम् । हेतुः फलं साधनञ्च । क्रियाया लक्षणे हेतौ च यो धातुस्तस्माल्लटः शतृशानचौ स्तः । शयाना भुञ्जते यवनाः । इह शयनं भुजिक्रियायाः परिचायकम् । अर्जयन्वसति । अर्जनं वासस्य फलम् । विद्वान्मुच्यते । ज्ञानं मोक्षसाधनम् । इह लक्षणत्वादिकं द्योत्यम् । लडर्थस्तु कर्त्रादिरेवेति बोध्यम् । परिचायकशयनाश्रययवनरूपानेकाश्रयनिष्ठा वर्तमाना भुजिक्रिया । फलीभूतार्जनाश्रयकर्तृको वासः । जनकज्ञानाश्रयनिष्ठो मोक्षश्च वाक्यार्थ इति दिक् ॥

तौ सत् ॥ शतृशानचौ सत्संज्ञौ स्तः । संज्ञाप्रदेशाः पूरणगुणेत्यादयः । तौग्रहणसामर्थ्यादिह शतृशानचोरानुपूर्वीमात्र गृह्यते । अन्यथा प्रकृतयोर्वर्त्तमानार्थयोरेव संज्ञा स्यात् । लृडादेशयोस्तु न स्यात् । तेन तद्योगे पूरणगुणेति न प्रवर्तेत । लृटः सद्वेति सूत्र तु सत्सदृशौ स्त इत्येवंपरं स्यात् । यथा अमी विष्टपिण्डाः सिंहाः क्रियन्तामित्युक्ते सिंहशब्देन तदाकारतामात्र लक्ष्यते मुख्यार्थस्य बाधात्तथेहापीति दिक् ॥

पूङ्यजोः शानन् ॥ पवमानः । यजमानः । नन्वेते शानन्नादयः किन्त्वजादिवत्स्वतन्त्रा उत लादेशा । नाद्यः । सोमं पवमान इत्यादौ कयोगलक्षणषष्ठ्यापत्तेः । न द्वितीयो नलो-

केति निषेधोस्ति । अलादेशत्वात् । न द्वितीयः । भावकर्मणोरपि प्रसङ्गात् । पचमान इत्यत्र ताच्छील्यादौ चानशो लसार्वधातुकस्वरापत्तेश्च । आत्मनेपदसंज्ञाप्रसङ्गेन परस्मैपदिभ्यश्चानशोनुत्पत्तिप्रसङ्गाच्चेति चेत् । अत्राहुः । स्वतन्त्रा एवैते । नलोकेति सूत्रे तृन्निति प्रत्याहारः शतृशब्देन तृनो नकारेणेत्युक्तम् । अतो न षष्ठीति ॥

ताच्छील्यवयोवचनशक्तिषु चानश् ॥ ताच्छील्यादिषु द्योत्येषु कर्तरि चानश् स्यात् । मण्डयमानः । शिखण्डं वहमानः । शत्रुं निघ्नानः ॥

इङ्धार्योः शत्रकृच्छ्रिणि ॥ इङ्धारिभ्यां शतृप्रत्ययः स्यादनायासेन क्रियां निर्वर्तयति कर्तरि । अधीयन्पारायणम् । धारयन्नुपनिषदम् । अकृच्छ्रिणीति किम् । कृच्छ्रेणाधीते धारयति वा ॥

द्विषोऽमित्रे ॥ शत्रौ कर्तरि द्विषेः शतृप्रत्ययः स्यात् । द्विषन् शत्रुः । अमित्रे किम् । द्वेष्टि पतिं भार्या ॥

सुञो यज्ञसंयोगे ॥ सुनोतेः शता स्याद्यज्ञाधिकारिणि कर्तरि । ता अश्वदा अश्वत्सोमसुत्वा । सर्वे सुन्वन्तः सत्रे यजमाना इत्युच्यन्ते । संयोगे किम् । अयजमानेषु ऋत्विक्षु मा भूत् ॥

अर्हः प्रशंसायाम् ॥ पूजामर्हन् । प्रशंसायां किम् । अर्हति वधं चोरः ॥

आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥ भ्राजभासेति वक्ष्यमाणं क्विपमभिव्याप्य तच्छीलादिष्वित्यधिक्रियते । प्रत्ययार्थस्य कर्तुर्विशेषणञ्चेदम् । शीलादीनां त्रयाणां विशेषणं सामर्थ्यात् निर्दिष्टस्तच्छब्दैः प्रकृतिभूतधात्वर्थो निर्दिश्यन्ते ॥

तृन् ॥ धातोस्तृन्स्यात्तच्छीलादिषु कर्तृषु। याता सुतमिन्द्रो अस्तु सोमम्। योद्धारः क्षत्रिया। कर्ता कटम्। तृन्विधौ ऋत्विक्षु चानुपसर्गस्येति वक्तव्यम् ॥ अताच्छील्याद्यर्थ आरम्भः। होता पोता। अनुपसर्गस्येति किम्। उद्गाता प्रतिहर्ता। अत्र तृन्तृचौ शासिक्षदादिभ्यः संज्ञायां चानिटावित्युणादिसूत्रेण तृजेव भवति। तत्र तृन्तृचौ शसीति पाठान्तरम्। स्वरे विशेषः। तृनि हि सति तादौ चनितिकृत्यताविति गतेः प्रकृतिस्वरः स्यात्। तृचि तु कृत्स्वरो भवति। तृन्तृचावित्युणादिसूत्रस्यैव विषयव्यवस्थार्थमिदम्। अनुपसर्गेभ्यस्तृन् सोपसर्गेभ्यस्तु तृजिति। नयतेः पुक्च ॥ अयं गुणे कृते बोध्यः। नेष्टा नेषतिः। प्रकृत्यन्तरमितिवा। त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वञ्च ॥ त्वष्टा। अत्रानिट्त्वमित्युक्तं वक्ष्यमाणसर्वोपसंख्यानशेषो बोध्यः। त्विषेः स्वत एवानिट्त्वात्। तेन पोता क्षत्तेति सिद्धम्। क्षदेश्च युक्ते ॥ धातुष्वपठितोपि क्षदिरत एव वाक्यात्स्वीकार्यः। आत्मनेपदी चायम्। उक्षाणंवावेहतं वाक्षदन्त इति बह्वृचब्राह्मणप्रयोगात्। शतंमेषान्वृक्येचक्षदानमिति मन्त्राच्च। क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायाञ्च शूद्रजे इत्यमरः ॥

अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ॥ अलङ्करिष्णुः। निराकरिष्णुरित्यादि। इह पचत्यादयस्त्रय उत्पूर्वा उपात्ताः। तत्र उदः पच पत मद इत्येव वक्तव्ये प्रत्येकमुत्पूर्वपाठ उपसर्गान्तरनिवृत्त्यर्थः। तेन समुत्पतिष्णुरित्यादि न भवतीत्याहुः। पचेरनन्तर पतिस्तान्तः पठ्यते। उत्पतिष्णुसहिष्णू च चेरतुः खरदूषणाविति भट्टिः। एलानामुत्पतिष्णव इति रघुकाव्यम्। केचित्तु तत्स्थाने दान्तं पठित्वा पद गतावस्मात्प्रत्ययमाहु ॥

णेश्छन्दसि ॥ इष्णुच् स्यात् । वीरुधः पारयिष्णवः । अथामन्तेत्यायः ॥

भुवश्च ॥ छन्दसीत्येव । भाविष्णुः । योगविभाग उत्तरार्थः॥ 'कथन्तर्हि जगत्प्रभोरप्रभविष्णु वैष्णवमिति माघ', विष्णवे प्रभविष्णवइत्यादि च । निरंकुशाः कवय इति हरदत्तः । चकारोनुक्तसमुच्चयार्थः । तेन भ्राजिष्णुरिति काशिका । एवञ्च क्षयिष्णुरित्यपि केषाञ्चित्प्रयोगः सङ्गच्छते । किन्तु चकारस्यानुक्तसमुच्चयार्थत्वं भाष्ये नोक्तमतो बहवो न पुरस्कुर्वन्ति ॥

ग्लाजिस्थश्च क्स्नुः ॥ चाद्भुवोपि । गिदयम् । कत्वन्तु सांहितिकचर्त्वेन बोध्यम् । यदत्र वक्तव्यं तत् क्ङिति चेति सूत्रेवोचाम । ग्लास्नुः । जिष्णुः । स्थास्नुः । भूष्णु । दंशेश्छन्दस्युपसङ्ख्यानम् ॥ दंक्ष्णवः पशवः ॥

त्रसिगृधिधृषिक्षिपेः क्नुः ॥ त्रस्नु । गृध्नुः । धृष्णुः । क्षिप्नुः ॥

शमित्यष्टाभ्यो घिनुण् ॥ घकार उत्तरत्र कुत्वार्थः । उकार उगितश्चेति ह्रस्वविकल्पार्थः । शमिनितरा । शमिनीतरा । शमिनितमा । शमिनीतमा । न चैवं शमिनौ शमिन इत्यत्रोगिदचामिति नुम्प्रसङ्गः । नुम्विधौ झल्ग्रहणस्यापकर्षात् । इह च झलन्तत्वाभावादिति भाष्ये स्थितम् । हरिकारस्तु उकार उच्चारणार्थः नानुबन्ध इत्याह । शमिनितरादौ घरूपेति नित्यमेव ह्रस्वत्वमिष्यतइति तस्याशयो न्यासकृतोक्तः । तदेतत्सर्वं भाष्यविरोधादप्रमाणमिति प्रामाणिकाः । शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । इह सर्वत्र नोदात्तोपदेशस्येति वृद्धिनिषेधः । प्रमादी । कथन्तर्हि उन्मादीति । अलंकृञा-

असूयतिभिन्नानामिह ग्रहणं व्यर्थम् । ण्वुलैव रूपसिद्धेः । असूयतेस्तु ण्वुलि प्रत्ययात्पूर्वमुदात्तं वुञि तु ञ्नित्यादिरिति स्वरे विशेषः । इतरेषां त्वेकाच्त्वान्न स्वरे भेदः । न च वुना ण्वुलो बाधः । वासरूपन्यायस्य जागरूकत्वादिति चेत्, सत्यम् । ताच्छीलिकेषु वासरूपन्यायेन ण्वुलतृजादयो न भवतीति ज्ञापनार्थमेतत् ॥

देविक्रुशोश्चोपसर्गे ॥ आदेवकः । परिक्रोशकः । उपसर्गे किम् । देवयिता । क्रोष्टा । दीव्यतेर्हेतुमण्णिजन्तस्य दिवु कूजन इत्यस्य चुरादिण्यन्तस्य च ग्रहणमित्याहुः ॥

चलनशब्दार्थादकर्मकाद्युच् ॥ चलनः । चोपनः । शब्द शब्दने, चुरादि । शब्दनः । रवणः । अकर्मकात्किम् । पठिता विद्याम् ॥

अनुदात्तेतश्च हलादेः ॥ अकर्मकाद्युजित्यनुवर्तते । वर्तनः । अनुदात्तेत किम् । भविता । हलादेः किम् । एधिता । आदिग्रहणं किम् । हलन्तादित्यर्थो मा भूत् । तथाहि सति एधितेत्यादावतिप्रसङ्गः । जुगुप्सनो मीमांसन इत्यत्राव्याप्तिश्च स्यात् । गुपादिष्वनुबन्ध समुदायस्य विशेषक इत्युक्तत्वादस्तीहानुदात्तेत्वम् । न चार्द्धधातुके विवक्षिते ऽतोलोपे सति हलन्तत्वमस्त्येव । ततश्च व्यावर्त्यालाभात् तदन्तविधिबाधे हलादेरित्येवार्थोऽस्त्विति चेत्, न्नैवम् । आर्धधातुके परे लोपाभ्युपगमात् । अत्र चेदमेवादिग्रहणं ज्ञापकम् । अत एव परनिमित्तत्वादल्लोपस्य स्थानिवत्त्वे घटयतीत्यादौ न वृद्धिः । नपदान्तसूत्रे वरेग्रहणमपीह लिङ्गमित्युक्तम् । यत्तु चोयदिति सूत्रे दित्स्यान्धित्स्यमित्यादावजन्तभूतपूर्वादपि प्रत्ययार्थमनग्रहणमित्युक्तं तदार्धधातुकत्वस्य विषयसप्तमीत्वमभ्युपेत्य । वस्तुतस्तु तत्राज्ग्रहणं व्यर्थमेवेत

दिक् । अकर्मकात्किम् । वसिता वस्त्रम् ॥

जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ॥ जु इति सौत्रो धातुः । जवनः । चङ्क्रमणः । दन्द्रमणः । सरणः । गर्द्धनः । ज्वलन । शोचन । लषणः । पतनः । पदनः । ननु पदिग्रहणं व्यर्थम् । पूर्वसूत्रेण युचः सिद्धत्वादिति चेत् । सकर्मकार्थमिति वृत्तिकारः । भाष्ये त्वनभिधानादेव सकर्मकान्न भविष्यतीत्यभिमेत्य पदिग्रहणं ज्ञापनार्थमित्युक्तम् । तथाहि । लषपतेति सूत्रेण पदेरुकञ् विशेषविहितः युचं बाधेत । वासरूपन्यायेन युजपीति चेत् । ताच्छीलिकेषु परस्पर वासरूपविधिर्नास्तीति ज्ञापनार्थमिदमिति । तेनालङ्कृञादिभ्यस्तृन्न । प्रायिकञ्चेदमिति सूददीपेत्यत्र वक्ष्यते ॥

क्रुधमण्डार्थेभ्यश्च ॥ क्रोधनः । रोषणः । मण्डन । भूषणः ॥

न यः ॥ यकारान्ताद्धातोर्युच् न । क्नूयिता । क्ष्मायिता ॥

सूददीपदीक्षश्च ॥ युच् न । सूदिता । दीपिता । दीक्षिता । ननु दीपिग्रहण व्यर्थम् । नमिकम्पीतिरेणैव युचो बाधात् । ताच्छीलिकेषु वासरूपविधिर्नास्तीति पदिग्रहणेन ज्ञापितत्वादिति चेत्सत्यम् । तस्यानित्यत्वमनेन ज्ञाप्यते । तेन कम्रा कमना । इह युज्रयोरेव सामावेशो ज्ञाप्यतइति भाष्यस्वरसः । यदाह, भवति युचो रेण समावेश इति । वृत्तिकारस्तु उपलक्षणमिदं मन्यते । तेन वौकपलसेतिघिनुणो विषयेपि अनुदात्तलक्षणो युच् भवति । विकत्थन इति यथा ॥

लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ॥ अभिलाषुकः । पातुकः । पादुक । स्थायुक इत्याद ॥

जल्पभिक्षकुट्टलुण्टवृङः षाकन् ॥ जल्पाकः । जल्पाकी । भिक्षाकः । भिक्षाकीत्यादि ॥

प्रजोरिनिः ॥ प्रजवी ॥

जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ॥ जयी। दरी। क्षयी। विश्रयी। अत्ययी। वमी। व्यथ भयसञ्चलनयोः। नञ्पूर्वः। सूत्रे निपातनादेव नञो धातुना समासः। ततो नलोपः ततः प्रत्ययः। अव्यथी। परिभवी। प्रसवी। इह क्षि क्षये, क्षि निवासगत्योः, षू प्रेरणे, एते गृह्यन्ते। निरनुबन्धकत्वात्। क्षिपु हिंसायाम्। पूङ् प्राणिगर्भविमोचने। षूङ् प्राणिप्रसवे, एते न गृह्यन्ते। सानुबन्धकत्वात्। प्रजोरप्यत्रैव ग्रहणं कृत्वा सूत्रभेदश्चकारश्च सुत्यजः ॥

स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ॥ स्पृह ईप्सायाम्। गृह ग्रहणे। पत गतौ। एते चुरादावदन्ताः। अयामन्तेत्ययादेशः। स्पृहयालुः। गृहयालुः। पतयालुः। निद्रालुः। तत्पूर्वको द्रा। अत्र समासस्तदो दान्तत्वञ्च निपात्यते। तन्द्रालुः। श्रद्धालुः। शीङो वाच्यः ॥ शयालुः। कथं कृपालुः स्पर्धालुरिति। कृपां स्पर्धां च लातीति विग्रहे मृगय्वादित्वात्कुः।

दाधेट्सिशदसदो रुः ॥ दारुः। धारुः। सेरुः शद्रुः। सद्रुः ॥

सृघस्यदः क्मरच् ॥ घासि· प्रकृत्यन्तरम्। सृमरः। घस्मरः। अद्मरः ॥

भञ्जभासमिदो घुरच् ॥ भङ्गुरम्। भासुरम्। मेदुरम् ॥

विदिभिदिच्छिदेः कुरच् ॥ वेत्तेरेव ग्रहणं व्याख्यानात्। विदुरः। भिदुरः। छिदुरः। भञ्जेर्भिदिच्छिदिभ्याञ्च कर्मकर्त्तरि प्रत्ययाविति वृत्तिकाराः। न त्वेतद्भाष्ये दृष्टम्। तथा च माघः शुद्धे कर्तरि प्रायुङ्क्त, प्रियतमाय वपुर्गुरुमत्सरच्छिदुरपादुरयाचितमङ्गना इति। कथन्तर्हि संमुग्धकान्तास्तनसङ्गभङ्गुरैरिति

माघ इति चेत् । न हि वयं कर्मकर्तरि नेति ब्रूम । तस्यापि कर्तृतया तत्र प्रत्ययस्याप्रत्यूहत्वात् । किन्तु शुद्धेपि कर्तरि यथासम्भवं भवत्येवेति । स्यादेतत् । प्रकृतस्यैव घुरचो ङित्वमतिदिश्यतां विदिभिदिच्छिदेर्ङिदिति, किं प्रत्ययान्तरेणेति चेत् । अत्र केचिदाहुः । आतिदेशिकं ङित्त्वमनित्यमिति ज्ञापनायेदम् । तेन धावित्रं सिद्धम् । धू विधूनने, कुटादिः । इत्रस्य ङित्वाभावाद् गुण इति । अन्ये तु धुवित्रमित्येवेच्छन्ति ॥

इण्नशजिसर्तिभ्यः क्वरप् ॥ इत्वरः । नश्वरः । जित्वरः । सृत्वरः । टिड्ढेति ङीप् । इत्वरी ॥

गत्वरश्च ॥ गमेरनुनासिकलोपोपि निपात्यते ॥

जागुरूकः ॥ जागुरिति पञ्चम्यन्तम् । जागरूक इत्येव तु न निपातितम् । उत्तरसूत्रे ऊक इत्यस्यानुवृत्तये ॥

यजजपदशां यङः ॥ दंशेर्भाविना नलोपेन निर्देशो लाघवार्थः । यायजूकः । जञ्जपूक । दन्दशूक ॥

नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥ नम्रः । कम्प्र । स्मेरः । जसु मोक्षणे, नञ्पूर्वः क्रियासातत्ये वर्तते । ततो निपातनात्समासे कृते र । अजस्रम् । कथमजस्रा अग्रय इति । अजस्रधारणादजस्रा ॥

सनाशंसभिक्ष उः ॥ सन्प्रत्ययो गृह्यते न तु षणु दाने षण सम्भक्ताविति धातू । गर्गादिषु जिगीषुशब्दस्य पाठात् । आङः शंसुइ च्छायामित्ययं गृह्यते न तु शंसु स्तुताविति । आङा सह निर्देशात् । चिकीर्षु । आशंसु । भिक्षुः ॥

विन्दुरिच्छुः ॥ विद ज्ञाने । इष इच्छायाम् । आभ्यामुप्रत्ययः विदेर्नुमिष्येश्छत्वञ्च निपात्यते । बिन्दुशब्दस्तु पवर्गीयादिः । बिदि अवयवे अस्मान्मृगय्वादित्वात्कुप्रत्ययो

बोध्यः ॥

क्याच्छन्दसि ॥ उः स्यात् । अदेवयुं विदथेदेवयुभि. । किन्नः क्य इति व्याख्यानात्कण्ड्वादियगन्तादपि भवति । यमस्य योनौ शकुनं भुरण्युम् । तुरण्यवोङ्गिरसो नक्षन्त । सपर्येम सपर्यवः । अथ कथं सन्तः प्रणयि वाक्यानि गृह्णन्ति ह्यनसूयव इति भट्टपादाः । मृगय्वादिषु द्रष्टव्य इति हरदत्तः ॥

आदृगमहनजनः किकिनौ लिट् च ॥ आकारान्तेभ्य ऋवर्णान्तेभ्य. गमादिभ्यश्च किकिनौ स्तश्छन्दसि तौ च लिड्वत् । आदिति नायं तकारः कस्तर्हि दकार, ऋदोरवितिवत् । तेन तादपि परस्तपर इत्येतन्न । बभ्रिर्वज्रम् । पपिः सोमम् । ददिर्गा । ततुरि । जगुरिः । जग्मिर्युवा नृपदनम् । जघ्निर्वृत्रमिमित्रियम् । जज्ञिः । स्वरूपाबाधेनातिदेशप्रवृत्तेस्तिबादयो न । यद्यप्यसंयोगाल्लिडिति किन्त्वं लभ्यतएव तथापि ऋच्छत्यृतामिति प्रतिप्रसूतमपि गुणं निषेद्धुं किकिनोः कित्करणम् । तेन तॄ, एतयोर्गुणाभावादित्वे प्राप्ते बहुलछन्दसीत्युत्वे ततुरिरित्यादि सिद्धम् । छन्दसि सर्वेभ्यः किकिनौ वाच्यौ ॥ सेदि । नेमिरित्यादि । भाषायां धाञ्कृसृजनिनमिभ्यो वाच्यौ । दधि । चक्रि । सस्रि । जज्ञिः । नेमिः । इह काशिकायां धातुवृत्तौ च गमिरपि पठ्यते । जग्मिः । सासहिवावहिचाचलिपापतीनामिति वार्त्तिकम् ॥ सहिवहिचलिपतिभ्यो यङन्तेभ्य किकिनौ निपात्येते । नीग्वञ्चीत्यादिना पतेरभ्यासस्य नीग्प्राप्तस्तदभावश्च । अत्र भाषायामित्यपेक्षते इति हरदत्तन्यासकाराद्य । ननु वार्तिकद्वयेपि भाषायामिति निष्फलम् । अहिमहीसासहिरस्तिकोन्य इति श्रीहर्षादिप्रयोगाणां निर्वाहः फलमिति चेन्न । छन्दसीत्यस्यानुवृत्तिमात्रेण तन्निर्वाहात् । प्र-

माघ इति चेत्। न हि वयं कर्मकर्तरि नेति ब्रूमः। तस्यापि कर्तृतया तत्र प्रत्ययस्याप्रत्यूहत्वात्। किन्तु शुद्धेपि कर्तरि यथासम्भवं भवत्येवेति। स्यादेतत्। प्रकृतस्यैव घुरचो ङित्त्वमतिदिश्यतां विदिभिदिच्छिदेर्कुरजिति, किं प्रत्ययान्तरेणेति चेत्। अत्र केचिदाहुः। आतिदेशिकं ङित्त्वमनित्यमिति ज्ञापनायेदम्। तेन धवित्रं सिद्धम्। धू विधूनने, कुटादिः। इत्रस्य ङित्त्वाभावाद् गुण इति। अन्ये तु धुवित्रमित्येवेच्छन्ति ॥

इण्नशजिसर्तिभ्यः क्वरप् ॥ इत्वरः। नश्वरः। जित्वरः। सृत्वरः। टिड्ढेति ङीप्। इत्वरी ॥

गत्वरश्च ॥ गमेरनुनासिकलोपोपि निपात्यते ॥

जागुरूकः ॥ जागुरिति पञ्चम्यन्तम्। जागरूक इत्येव तु न निपातितम्। उत्तरसूत्रे ऊक इत्यस्यानुवृत्तये ॥

यजजपदशां यङः ॥ दंशेर्भाविना नलोपेन निर्देशो लाघवार्थः। यायजूकः। जञ्जपूकः। दन्दशूकः ॥

नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥ नम्रः। कम्रः। स्मेरः। जसु मोक्षणे, नञ्पूर्वः क्रियासातत्ये वर्तते। ततो निपातनात्समासे कृते रः। अजस्रम्। कथमजस्रा अव्यय इति। अजस्रधारणादजस्रा ॥

सनाशंसभिक्ष उः ॥ सन्प्रत्ययो गृह्यते न तु षणु दाने षण सम्भक्ताविति धातू। गर्गादिषु जिगीषुशब्दस्य पाठात्। आङः शंसु इच्छायामित्ययं गृह्यते न तु शंसु स्तुताविति। आङा सह निर्देशात्। चिकीर्षुः। आशंसुः। भिक्षुः॥

विन्दुरिच्छुः ॥ विद ज्ञाने। इष इच्छायाम्। आभ्यामुप्रत्ययः विदेर्नुमिषेश्छत्वञ्च निपात्यते। बिन्दुशब्दस्तु पवर्गादिः। बिदि अवयवे अस्मान्मृगय्वादित्वात्कुप्रत्ययो

बोध्यः ॥

क्याच्छन्दसि ॥ उः स्यात् । अदेवयुं विदथेदेवयुभिः । क्यः क्य इति व्याख्यानात्कण्ड्वादियगन्तादपि भवति । यमस्य योनौ शकुनं भुरण्युम् । तुरण्यवोङ्गिरसो नक्षन्त । सपर्येम सपर्यवः । अथ कथं सन्तः प्रणयि वाक्यानि गृह्णन्ति ह्यनसूयव इति भट्टपादाः । मृगय्वादिषु द्रष्टव्य इति हरदत्तः ॥

आदृगमहनजनः किकिनौ लिट् च ॥ आकारान्तेभ्य ऋवर्णान्तेभ्यः गमादिभ्यश्च किकिनौ स्तश्छन्दसि तौ च लिड्वत् । आदिति नायं तकारः कस्तर्हि दकार, ऋदोरबितिवत् । तेन तादपि परस्तपर इत्येतन्न । बभ्रिर्वज्रम् । पपिः सोमम् । दादिर्गाः । ततुरिः । जगुरिः । जग्मिर्युवा नृषदनम् । जघ्निर्वृत्रममित्रियम् । जज्ञिः । स्वरूपाबाधेनातिदेशप्रवृत्तेस्तिबादयो न । यद्यप्यसंयोगाल्लिडिति कित्त्वं लभ्यतएव तथापि ऋच्छत्यृतामिति प्रतिप्रसूतमपि गुणं निषेद्धुं किकिनोः कित्करणम् । तेन तॄ, एतयोर्गुणाभावादित्त्वे प्राप्ते बहुलंछन्दसीत्युत्वे ततुरिरित्यादि सिद्धम् । छन्दसि सर्वेभ्यः किकिनौ वाच्यौ ॥ सेदिः । नेमिरित्यादि । भाषायां धाञ्कृसृजनिनमिभ्यो वाच्यौ । दधिः । चक्रिः । सस्रिः । जज्ञिः । नेमिः । इह काशिकायां धातुवृत्तौ च गमिरपि पठ्यते । जग्मिः । सासहिवावहिचाचलिपापतीनामिति वार्त्तिकम् ॥ सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ निपात्येते । नीग्वञ्चीत्यादिना पतेरभ्यासस्य नीगागमः प्राप्तस्तदभावश्च । अत्र भाषायामित्यपेक्षते इति हरदत्तन्यासकारादय । ननु वार्तिकद्वयेपि भाषायामिति निष्फलम् । अहिमहीसासहिरस्तिकोन्य इति श्रीहर्षादिप्रयोगाणां निर्वाहः फलमिति चेन्न । छन्दसीत्यस्यानन्तर[illegible]

त्युत भाषायामित्यनुवृत्तौ वेदे एषां किकिनौ नेति लभ्येत । तच्चायुक्तम् । अपीलहमुग्रं पृतनासुसासहिम् । घ्नुवस्तिष्ठाविचाचलिरित्यादिप्रयोगविरोधादितिचे, त्सत्यम् । छन्दसीत्यस्येहासम्बन्धस्फोरणमात्रं फलम् ॥

स्वपितृषोर्नजिङ् ॥ स्वप्नक् । तृष्णक् । धृषेश्चेति काशिका । धृष्णक् ॥

शॄवन्द्योरारुः ॥ शरारुः । वन्दारु ॥

भियः क्रुक्लुकनौ ॥ भीरुः । भीलुकः । क्रुकन्नपि वक्तव्यः ॥ भीरुकः ॥

स्थेशभासपिसकसो वरच् ॥ स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ॥

यश्च यङः ॥ यातेर्यङन्ताद्वरच् । यायावरः ॥

भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ॥ व्रश्चेति षत्वम् । विभ्राट् । विभ्राजौ । भाः । भासौ । राल्लोप इति वलोपः । धूः । धुरौ । विद्युत् । ऊर्क् । पूः पुरौ । दृशिग्रहणाज्जवतेर्दीर्घः । जूः । जुवौ । जुवः । ग्रावस्तुत् ॥

अन्येभ्योपि दृश्यते ॥ दृशिग्रहणं विध्यन्तरोपसङ्ग्रहार्थम् । तच्च वार्तिककारः स्फुटीचकार । आह हि । वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च ॥ द्युतिगमिजुहोतीनां द्वे च ॥ दृणातेर्ह्रस्वश्च ॥ ध्यायतेः सम्प्रसारणञ्चेति ॥ वक्तीति वाक् । शब्दप्राट् । आयतस्तूः । कटप्रूः । जूः । श्रीः । वचिप्रच्छ्योः सम्प्रसारणन्तु न । दीर्घवचनसामर्थ्यात् । अपर आह । दृशिग्रहणादेव वचिप्रच्छ्योः सम्प्रसारणन्नेति । द्युतिगमीति वार्त्तिके चकारेण दीर्घः समुच्चीयते स च जुहोतेरेव । दीर्घश्रुत्युपस्थितेनाचा तदन्तविधिविज्ञापनात् । दिद्युत् । द्युतिस्वाप्योरित्य-

भ्यासस्य सम्प्रसारणम्। जगत्। जुहूः। नन्विहाभ्याससंज्ञैव दुर्लभा। प्रत्यासत्त्या षाष्ठद्वित्वे एव तत्प्रवृत्तेः। अत एवाण्णिके सा नेति चे, त्सत्यम्। दृशिग्रहणादेवाभ्याससंज्ञेति हरदत्तः। वस्तुतस्तु लिटिधातोरित्यतो धातोरित्यनुवृत्त्या,धातोरिति द्वित्वेऽभ्याससंज्ञा। एवञ्च न कोपि दोष इत्यवधेयम्। दद्रृत्। दृणातेर्द्रयतेर्वा। ध्यायतीति धीः। इह जुहूधीरित्यनयोः करणस्य कर्तृत्वविवक्षायां प्रत्यय इति हरदत्तः॥

भुवः संज्ञान्तरयोः॥ भवतेः क्विप्स्यात्संज्ञायामन्तरे च गम्यमाने। मित्रभूर्नाम कश्चित्। धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थे स प्रतिभूः। यस्तु ग्रामयोरन्तरे तिष्ठति तत्र न। दृशिग्रहणस्यानुवृत्तेः॥

विप्रसंभ्यो ड्वसंज्ञायाम्॥ एभ्यो भुवो डु स्यात् न तु संज्ञायाम्। विभुः सर्वगतः। प्रभुः स्वामी। सम्भुर्जनिता। असंज्ञायां किम्। विभूर्नाम कश्चित्। मितद्र्वादिभ्य उपसंख्यानम्॥ मितं द्रवतीति मितद्रुः। शम्भुः। अन्तर्भावितण्यर्थोत्र भवतिः। सुखं भावयतीत्यर्थात्॥

धः कर्मणि ष्ट्रन्॥ धयतेर्दधातेश्च कर्मणि कारके ष्ट्रन् स्यात्। धीयते पीयते धात्री स्तनदायिनी। धीयते धार्यते भैषज्यार्थमिति धात्री आमलकी॥

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे॥ एभ्यः करणे ष्ट्रन्स्यात्। दात्यनेन दात्रम्। नेत्रम्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्रम्। अजादित्वाद्दंष्ट्रा। नद्ध्री। दंशेर्नलोपेन निर्देशो ज्ञापकः क्वचिदक्ङित्यपि नलोप इति। तेन स्युटि दशनाः। अनिदितामिति सूत्रस्थभाष्यस्वरसस्तु शवन्तोयन्निर्देशः॥

स्युत भाषायामित्यनुवृत्तौ वेदे एषां किकिनौ नेति लभ्येत । तच्चायुक्तम् । अषीलहमुग्रं पृतनासुसासहिम्। ध्रुवस्तिष्ठाविचाचलिरित्यादिप्रयोगविरोधादितिचे, त्सत्यम्। छन्दसीत्यस्येहासम्बन्धस्फोरणमात्रं फलम् ॥

स्वपितृषोर्नजिङ् ॥ स्वप्नक् । तृष्णक् । धृषेश्चेति काशिका । धृष्णक् ॥

शृवन्द्योरारुः ॥ शरारुः । वन्दारुः ॥

भियः क्रुक्लुकनौ ॥ भीरुः । भीलुकः । क्रुकन्नपि वक्तव्यः ॥ भीरुकः ॥

स्थेशभासपिसकसो वरच् ॥ स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ॥

यश्च यङः ॥ यातेर्यङन्ताद्वरच् । यायावरः ॥

भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ॥ व्रश्चेति षत्वम् । विभ्राट् । विभ्राजौ । भाः । भासौ । राल्लोप इति वलोपः । धूः । धुरौ । विद्युत् । ऊर्क् । पूः पुरौ । दृशिग्रहणाज्जवतेर्दीर्घः । जूः । जुवौ । जुवः । ग्रावस्तुत् ॥

अन्येभ्योपि दृश्यते ॥ दृशिग्रहणं विध्यन्तरोपसङ्ग्रहार्थम् । तच्च वार्तिककारः स्फुटीचकार । आह हि । वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च ॥ द्युतिगमिजुहोतीनां द्वे च ॥ दृणातेर्ह्रस्वश्च ॥ ध्यायतेः सम्प्रसारणञ्चेति ॥ वक्तीति वाक् । शब्दप्राट् । आयतस्तूः । कटप्रूः । जूः । श्रीः । वचिप्रच्छ्योः सम्प्रसारणन्तु न । दीर्घवचनसामर्थ्यात् । अपर आह । दृशिग्रहणादेव वचिप्रच्छ्योः सम्प्रसारणन्नेति । द्युतिगमीति वार्तिके चकारेण दीर्घः समुच्चीयते स च जुहोतेरेव । दीर्घश्रुत्युपस्थितेनाचा तदन्तविधिविज्ञापनात् । दिद्युत् । द्युतिस्वाप्योरित्य-

भ्यासस्य सम्प्रसारणम्। जगत्। जुहूः। नन्विहाभ्याससंज्ञैव दुर्लभा। प्रत्यासत्त्या पाष्ठद्वित्वे एव तत्प्रवृत्तेः। अत एवाष्टमिके सा नेति चे,त्सत्यम्। दृशिग्रहणादेवाभ्याससंज्ञेति हरदत्तः। वस्तुतस्तु लिटिधातोरित्यतो धातोरित्यनुवृत्त्या,धातोरिति द्वित्वेऽभ्याससंज्ञा। एवञ्च न कोपि दोष इत्यवधेयम्। दद्रृत्। दृणातेर्दीर्यतेर्वा। ध्यायतीति धीः। इह जुहूधीरित्यनयोः करणस्य कर्तृत्वविवक्षायां प्रत्यय इति हरदत्तः॥

भुवः संज्ञान्तरयोः॥ भवतेः क्विप्स्यात्संज्ञायामन्तरे च गम्यमाने। मित्रभूर्नाम कश्चित्। धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थे स प्रतिभूः। यस्तु ग्रामयोरन्तरे तिष्ठति तत्र न। दृशिग्रहणस्यानुवृत्तेः॥

विप्रसंभ्यो ड्वसंज्ञायाम्॥ एभ्यो भुवो डुः स्यात् न तु संज्ञायाम्। विभुः सर्वगतः। प्रभुः स्वामी। सम्भुर्जनिता। असंज्ञायां किम्। विभूर्नाम कश्चित्। मितद्र्वादिभ्य उपसंख्यानम्॥ मितं द्रवतीति मितद्रुः। शम्भुः। अन्तर्भावितण्यर्थोत्र भवतिः। सुखं भावयतीत्यर्थात्॥

धः कर्मणि ष्ट्रन्॥ धयतेर्दधातेश्च कर्मणि कारके ष्ट्रन् स्यात्। धीयते पीयते धात्री स्तनदायिनी। धीयते धार्यते भैषज्यार्थमिति धात्री आमलकी॥

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे॥ एभ्यः करणे ष्ट्रन्स्यात्। दात्यनेन दात्रम्। नेत्रम्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्रम्। अजादित्वाद्दंष्ट्रा। नद्ध्री। दंशेर्नलोपेन निर्देशो ज्ञापकः। क्वचिदक्ङित्यपि नलोप इति। तेन ल्युटि दशना। अनिदितामिति सूत्रस्थभाष्यस्वरसस्तु शवन्तोयन्निर्देशः॥

हलसूकरयोः पुवः ॥ पूङ्पूञोः करणे ष्ट्रन् स्याद्धलसूकरयोरवयवश्चेत्सः । पोत्रम् । हलस्य सूकरस्य च मुखम् ॥

अर्तिलूधूसूखनसहचरइत्रः ॥ करणइत्येव । अरित्रं मूलम् । लवित्रम् । धुवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ॥

पुवः संज्ञायाम् ॥ पूङ्पूञ्भ्यां करणे इत्रः स्यात् । दर्भपवित्रम् । येनाज्यमुत्पूयते तत्पवित्रम् । जपादिष्वनामिकांगुल्यवेष्टनश्च ॥

कर्तरि चर्षिदेवतयोः ॥ कर्तरिकरणे च पुव इत्रः स्यात् । यथासंख्यसम्बन्धादृषौ करणे देवतायां कर्त्तरीति काशिका । कर्तरिकृदिति सूत्रस्थभाष्यकैयटयोस्तु यथासंख्यं नेति गम्यते । ऋषिर्मन्त्रः । तदुक्तमृषिणेति दर्शनात् । पूयतेनेनेति पवित्रम्पावमान्यादि । देवतायान्तु अग्निः पवित्रं स मा पुनातु ॥

ञीतः क्तः ॥ ञीतो धातोर्वर्तमाने क्तः स्यात् । अनेन विशेषविधानात् ञीतः क्तस्य भूतविषयता बाध्यते । एवमुत्तरसूत्रे बोध्यम् । ञिधृषा । धृष्टः ॥

मतिबुद्धिपूजार्थेभ्यश्च ॥ मतिरिच्छा न तु बुद्धिस्तस्याः पृथगुपात्तत्वात् । राज्ञां मत इष्टः । बुद्धो विदितः । पूजितोऽर्चित इत्यादि । कथन्तर्हि जनैरविदितविभवो भवानीपतिरिति भारविः । तेनेत्यधिकारे उपज्ञातइति सूत्रितत्वाज्ज्ञानार्थेभ्यो भूतेपि क्तः । पूजितो यः सुरासुरैरित्यादि तु चिन्त्यमिति हरदत्तः । सामान्यापेक्षं ज्ञापकमित्यनुन्यासादयः । चकारोनुक्तसमुच्चयार्थः । तथा च भाष्यम् । शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि । रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥ हृष्टतुष्टौ तथाकान्तस्तथोभौ संयतोद्यतौ । कष्टम्भविष्यतीत्याहुरमृताः

पूर्ववत्स्मृता इति ॥ रुष रोषे। रुष्यमत्वरेतीड्विकल्प। कष्टश-ब्दो भविष्यत्काले। अमृतास्तु पूर्ववत्। वर्तमानइत्यर्थ। न भ्नि-यन्ते अमृताः ॥

इति श्रीशब्दकौस्तुभे तृतीयाध्यायस्य द्वितीये पादे तृतीयमान्हिक, समाप्तश्च द्वितीयपाद ॥



# स्फोटचन्द्रिका

श्रीमन्मौन्युपाह्वश्रीकृष्णभट्टविरचिता

काशीस्थराजकीयसंस्कृतप्रधानपाठशालाध्यापक-
पटवर्धनोपनामकतात्याशास्त्र्यपराभिधान-
पण्डितरामकृष्णशास्त्रिणा संस्कृता

चौखम्बासंस्कृतपुस्तकालयाध्यक्षेण
श्रीमता हरिदासगुप्तेन


काश्यां

राजराजेश्वरी मुद्रायन्त्रालये संमुद्य
प्रकाशिता ।

सं० १९५५

*To be had of the Manager Choukhamba-*

# अथ स्फोटचन्द्रिका प्रारभ्यते ॥

## पित्रोः पादयुगं नत्वा जानकीरघुनाथयो. ॥
## मौनिश्रीकृष्णभट्टेन तन्यते स्फोटचन्द्रिका ॥ १ ॥

शाब्दिकाना वाच्यलक्ष्यव्यङ्ग्यार्थप्रतिपादकाना वाचकलाक्षणिकव्यञ्जकाना शब्दानां समिष्ठजातेर्वा स्फोट इति व्यवहार.। स्फुटति अर्थो यस्मादिति व्युत्पत्त्या पङ्कजादिपदवद्योगरूढ स्फोटशब्द । केवलयोगस्वाकारे वाच्यलक्ष्यव्यङ्ग्याना चेष्टायाश्च व्यङ्ग्यार्थप्रतिपादकत्वेन तत्रातिव्याप्ते । न च वाचकादिपर्याय स्फोटशब्दो ऽप्रसिद्ध । अक्षराणामकारस्त्व स्फोटस्त्व वर्णसश्रय इति हरिवशे दृष्टत्वात् । तथा च वर्णपदवाक्याखण्डपदाखण्डवाक्येति पञ्च व्यक्तिस्फोटा । शक्यतावच्छेदिकाया जातेर्वाच्यत्ववत् शक्ततावच्छेदिकाया जातेर्वाचकत्वमिति मते वर्णपदवाक्यभेदेन त्रिविधो जातिस्फोट । एव चाष्टौ स्फोटा । यथानन्दवल्ल्या शुद्धब्रह्मज्ञानार्थमन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेति पञ्चसु कोशेषु अपारमार्थिकब्रह्मत्वप्रतिपादनमुपाय । यथा वारुन्धतीज्ञानार्थं स्थूलनक्षत्रे अपारमार्थिकारुन्धतीत्वबोधनम् । तथा पारमार्थिकाखण्डवाक्यबोधार्थमेते वर्णपदवाक्याखण्डपदस्फोटा उपाया । तदुक्तम् । उपाया शिक्षमाणानां बालानामुपलालना. । असत्ये वर्त्मनि स्थित्वा तत सत्य समीहते इति । सुप्तिडन्त पदमिति एकतिडन्तार्थमुख्यविशेष्यक वाक्यमिति पदवाक्यलक्षणानाक्रान्तवर्णसमूहस्य वर्णस्य वा प्रकृतिप्रत्ययरूपस्य व्याकरणेन गृहीतशक्तिकस्य पचु तिप् इत्यादिकस्य वाचकत्वे वर्णस्फोट । ते च प्रयोगसमवायिन विसर्गतिवादय । न तु तत्स्थानित्वेन कल्पिता सकारलकारादय । तेषामनियतत्वात् । तथाहि। विसर्गेण रो स्मरण तेन सो । एव णला तिप स्मरण तेन लकारस्य, एव च गौरव स्पष्टमेव। किं च स्थान्यादेशज्ञानशून्यस्यावैयाकरणस्यादेशमात्रादवोधापत्तेश्च । एव च स्थान्येव वाचको लाघवात् न त्वादेशो गौरवादिति तार्किकोक्तमपास्तम् । विपरीतगौरवापत्ते । अथ तार्किकाणा पदस्फोटत्वेनाभिमत. । शक्त पदमिति तै स्वीकृतत्वात् । तच्च मानाभावात् फलाभावात्स्वमन्यविरोधाच्चायुक्तमिति शाब्दिका । तथाहि । शक्त पद चतुर्धा रूढ यौगिक योगरूढ यौगिकरूढ चेति । गौ. पाचक पङ्कजमश्वकर्ण इति क्रमेणोदाहरणानि । तत्र पाचक इति यौगिकोदाहरणे यच्छक्त पद पचु अक इति न तद्यौगिक, समुदायस्तु यद्यपि यौगिकस्तथापि न शक्त । एव च शक्त पद यौगिकमित्यविचारिताभिधानम् । विशिष्टशक्त्यभावे सति व्याकरणबोधितार्थप्रकृतिप्रत्ययसमुदायरूपसुबन्ततिडन्तपदत्व

भावात् । यथा पुण्यपापोभयजनितकार्यसृष्टिरीश्वरकर्तृका तथैव साध्वसाधूभयविधशब्दसृष्टिरपीश्वरकर्तृकैव । तथा च भ्रम इति अयुक्तमेव । न च तटस्थपालस्यानुमितिभ्रम साधुशब्दे सा वासाधुशब्देष्वपि । शक्त्यनुमापकसामग्रीसत्वेन बाधकाभावेन च भ्रमत्वायोगात् । नन्वसाधुष्वपि शक्तिस्वीकारे शक्तिमत्व साधुत्वमिति तार्किकलक्षणाक्रान्तत्वात्साधुत्वापात्ति । तथा च न म्लेच्छितवै नापभाषितवै इति निषेधानवकाश इति चेन्न । लाक्षणिकानामसाधुतापत्ते । न च वृतिमत्व तत् । शक्तिलक्षणान्यतरत्वनिवेशे गौरवात् । तस्मात्पुण्यजनकतावच्छेदकजातिविशेष साधुत्व प्रत्यवायजनकतावच्छेदकश्चासाधुत्वम् । यद्वा व्याकरणबोध्यत्व साधुत्व तद्भिन्नत्वमसाधुत्वम् । तथा चैक शब्द सम्यग् ज्ञात सुप्रयुक्त. स्वर्गे लोके कामधुग् भवतीति व्याकरणेनार्थविशेषे प्रकृतिप्रत्ययेन व्युत्पादित इति ज्ञात: । तादृशार्थविशेषे प्रयुक्त: । तेन गोणीशब्दस्य गोण्यामेव साधुत्व न गवि । विनिगमनाविरह इत्यपि न युक्तम् । अन्यतरपक्षपातिनी युक्तिर्हि विनिगमना । सा च ज्ञानस्य पूर्वाभिव्यक्तिरूपा प्रकृतेस्ति । अत एवेश्वरज्ञान शक्तिरिति वर्द्धमानोपाध्याया. । शाब्दिकास्तु बोधजनकत्व शक्ति । तच्चानादिबोधजनकतावच्छेदकधर्मवत्त्वम् । तदुक्त हरिणा । इन्द्रियाणा स्वविषयेष्वनादिर्योग्यता यथा । अनादिरर्थै सम्बन्ध. शब्दाना योग्यता तथेति । तज्जनकतावच्छेदकधर्मवत्त्वमेवा योग्यता । न चागृहीतशक्तिकस्य शाब्दबाधानुदयाच्छाब्दबोधे शक्तिग्रहस्य हेतुत्वाद् बोधोत्तर शक्तिग्रह. शक्तिग्रहोत्तर बाध इति अन्योन्याश्रय । व्याकरणकोशादिना शक्तिग्रहात् । अन्यथेश्वरेच्छाशक्तिरिति पक्षेपि शक्तिग्रहोतर बोध बोधोत्तर शक्तिग्रह इति अन्योन्याश्रयस्य तुल्यत्वात् । यद्वा शब्दार्थयोरनादिसम्बन्ध. शक्ति मम तु प्रतिभाति । शक्ति सामर्थ्य यथा दीपादौ तेजसि ग्राह्यत्वग्राहकत्वसामर्थ्य वन्ह्यादौ दाहकत्वसामर्थ्यमिन्द्रियादौ विषयप्रकाशन, तत्स्वरूपसदेवोपयुज्यते न तु ज्ञातम् । एव शब्देपि ग्राह्यत्वग्राहकत्वसामर्थ्य स्वरूपसदेवोपयुक्त न तु ज्ञातम् । न चागृहीतशक्तिकस्यापि बोधापत्ति । सन्निकर्षादिवत् बोधाभावप्रयोजकीभूताभावप्रतियोगितात्पर्यग्रहाभावात् । न च नानार्थेष्वेव तात्पर्यग्रहस्य कारणत्वमिति चेत् । सत्यम् । शाब्दिकमते सर्वस्य नानार्थत्वात् । अत एव वृद्धिरादैजिति सूत्रे भाष्ये इनेक शक्ते:शब्दस्येत्युक्तम् । अनेकेष्वनेका वा शक्तिरस्येति विग्रह । अवच्छेदकभेदे शक्तिभेद इति तार्किकादिसिद्धान्त । लाघवाच्छक्तिरेकैवेति शाब्दिकराद्धान्त. । न चान्यायश्चानेकार्थत्वमिति वाच्यम् । भवन्मतेपि तुल्यत्वात् । एतावान् पर भेद त्वन्मते वृतिभेदेन मन्मते तु एकया वृत्त्या । न च लक्षणाच्छेदापत्ति । इष्टत्वात् । यथा भर्तृहरि' सर्वानुभवसिद्धापि व्यञ्जना लाघवात् स्वीक्रियते । तत्र च व्यञ्जनोच्छेदापत्ते

दृद्रकत्वकल्पनेऽपि लाघवाच्छक्त्यैव निर्वाहे लक्षणोच्छेदापत्तेरदूषकत्वात् । वस्तुत एकशक्त्यैव निर्वाहे अनेकशक्तिकल्पनमन्याय्यमित्येव तदर्थ. । अर्थपदस्य शक्तिपरत्वात् । अन्यायश्चेत्यस्य लाघवमूलत्वात् । न चानन्यलभ्य शब्दार्थ इति वाच्यम् । तस्य लक्षणया लभ्ये शक्तिकल्पनमन्याय्यमिति नार्थ. । किन्तु संसर्गमर्यादया सिद्धे शक्तिकल्पनमयुक्तमिति तदर्थात् । एवं च शाब्दिकाना शब्दवह्नौ अतिरिक्तशक्तिस्वीकार. । तार्किकाणा तु शब्दे शक्तिस्वीकार. वह्नौ तु नेत्यर्द्धजरतीयस्वीकारोऽनुचित: । न चोत्तेजकाभावविशिष्टमण्यभावेनोपपत्तौ तत्स्वीकारो व्यर्थ इति वाच्यम् । गुरुभूतविशिष्टस्य कारणतावच्छेदकत्वस्वीकारापेक्षया लघुभूतस्वीकृतातिरिक्तशक्तिसम्बन्धस्यैवोचितत्वात् । किञ्च शाब्दिकमते भेदसहिष्णुरभेदस्तादात्म्यम् । गुणत्वद्रव्यत्वादिना भेदेऽपि गुणं विना द्रव्यानुपलम्भाद् द्रव्य विना गुणानुपलम्भाच्च तयोस्तादात्म्यम् । एवं च समवायो यत्र तत्र तादात्म्यमिति व्यवहार. । तथा च तै. गुणं प्रति घटस्य पूर्ववर्त्तित्वासम्भवेन कारणत्वाभावादन्यथानुपपत्त्या विशिष्टस्यैव कारणतावच्छेदकत्वमङ्गीकृत्य गुणविशिष्टघटं प्रति गुणविशिष्टकपालस्य कारणत्वमिति स्वीकृतम् । तार्किकैस्तु विशिष्टस्य कारणतानवच्छेदकत्वाद्विशिष्टस्य कारणत्वासम्भवान्निर्गुणघटोत्पत्ति. स्वीकृता, तत्र च गुणाश्रयत्वरूपद्रव्यत्वलक्षणानाक्रान्तत्वाद् गुणसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमिति निष्कर्षं कृत सोऽयुक्त इति मम भाति । तथाहि । प्रतिबन्धकोत्तेजकाभ्यां वह्नौ ज्ञातापि शक्तिरुत्तेजकाभावविशिष्टमण्यभावस्य कारणत्वस्वीकृत्यातिरिक्ता शक्ति खण्डिता शब्दे च सा स्वीकृता । एवं विशिष्टस्य तत्र अवच्छेदकत्वं स्वीकृत्येह नेत्युक्त्वा क्षणमात्रनिर्गुणघटोत्पत्ति: स्वीकृता । सर्वेषामनुभ-

चलगुणस्यासत्वेन च केवलगुणसाक्षात्कारासम्भवः । तस्माद् द्रव्यविशिष्टगुणसाक्षात्कारजनकत्वं तयो; । न तु गुणविशिष्टद्रव्यसाक्षात्कारजनकत्वम् । अनुभवेन तथैव शक्त्युन्नयनात् । चक्षुरिन्द्रियत्वगिन्द्रिययोस्तु गुणविशिष्टद्रव्यं द्रव्यविशिष्टो वा गुण इत्युभयविधसाक्षात्कारजनकत्वम् । विस्तरस्तु मत्कृतशब्दार्थयतर्कामृते द्रष्टव्यः गौरवभयान्नेह तन्यतइति दिक् । प्रकृतमनुसरामः । असाधुशब्दस्य वाचकत्वेपि व्याकरणप्रतिपाद्यत्वाभावात्स्फोटत्वाभावः । तदन्तर्गतवर्णानां तु एकाक्षरकोशावधृतशक्तिकानामर्थान्तरप्रकाशकत्वे पदस्फोट इति पदस्फोटे विवेचयिष्यते । अनुकरणशब्दानां तु अनुकार्यानुकरणयोर्भेदविवक्षया ऽनुकार्यरूपार्थप्रतिपादकत्वात् स्फोटत्वम् । ननु साध्वनुकरणस्य साधुत्वेन स्फोटत्वेप्यसाध्वनुकरणस्यासाधुत्वात्कथ स्फोटव्यवहार इति चेन्न । असाध्वनुकरणस्यापि साधुत्वस्वीकारात् । दैत्यैर्हे ऽरय इति प्रयोक्तव्ये हे ऽलय इति प्रयुक्त, तदनुकरण हेलयो हेलय इति कुर्वन्तो न पराबभूवुरिति न वाक्येपि तस्यासाधुत्वम् । तथा यद्वानः तद्वानः भवतु इत्यर्थे यर्वाणस्तर्वाण. भवतु इति प्रयुक्त तदनुकरण कुर्वन्तो यर्वाणस्तर्वाणो नाम ऋषयो बभूवुरिति न वाक्येपि तस्यासाधुत्व कस्यापि सम्मतम् । तस्माद्द्वयोरनुकरणस्य साधुत्व सर्वसम्मतम् । तत्र यदा तयोरभेदविवक्षा तदार्थप्रकाशकत्वाभावान्न स्फोटत्वम् । शुद्धब्रह्मज्ञानाय सर्वबहिर्भूतान्नमयकोशवदखण्डवाक्ययोधनाय वर्णस्फोट इति दिक् । इति वर्णस्फोट. ॥ अथ पदस्फोटो वर्णस्फोटापेक्षया अन्नमयकोशापेक्षयान्तरङ्गप्राणमयकोशवदन्तरङ्गो निरूप्यते । अन्तरङ्गत्व तु साक्षाद्वाक्यघटकत्वेन । वर्णस्य बहिरङ्गत्व पदनिष्पत्तिद्वारा तद्घटकत्वम् । पदस्फोटो द्विधा सखण्डो ऽखण्डश्च । व्यवहारादिना पदे एव शक्तिग्रहात् । तत्र यो ऽस्माकं सखण्डपदस्फोट. पचति राम इत्यादिसुबन्ततिङन्तरूप', शक्त पदमिति मते स एव वाक्यस्फोटस्तार्किकाणाम् ॥ अथाखण्डपदस्फोटो निरूप्यते ॥ स च सर्वैः पदस्थितवर्णैर्व्यज्यते । स चार्थप्रत्यायक इति शाब्दिकसिद्धान्तः । न च प्रतीतस्य प्रत्यायकत्वनास्ति अन्यथा शब्द वेत्तीत्यनर्थं वेत्तीति प्रत्ययापत्तेरिति अणुदित्सूत्रस्थभाष्यविरोधः । तस्य सामान्यत: प्रतीतस्य प्रत्यायकत्व नास्तीति नार्थ. । किन्तु शब्दशङ्कया प्रतीतस्य शब्दस्येति । प्रकरणानुरोधेन तस्य सङ्कोचात् । एवञ्च रहसि पुस्तकमीक्षमाणस्यार्थप्रत्ययानापत्तिमाशङ्क्य तत्रापि सूक्ष्मोच्चारणमस्त्येवेति नव्योक्तमपास्तम् । अनुभवविरोधाच्च । यत्त्वत्र तार्किकवेदान्तिनः । यावद्वर्णव्यङ्ग्यो वा यत्किञ्चिद्वर्णव्यङ्ग्यो वा चरमवर्णव्यङ्ग्यो वा सः । न तावदाद्यः । आशुविनाशिनां मेलनासम्भवात् । न द्वितीय. । प्रथमवर्णेनैव व्यञ्जिते स्फोटे इतरवर्णवैयर्थ्यम् । न तृतीयः । पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहितच-

रमवर्णेनैवार्थप्रतीतिसिद्धौ किं स्फोटेनेति । तत्र । वर्णानामाशुविनाशित्वे मानाभावात् । न चोत्पन्नो गकार नष्टो गकार इति प्रतीतिर्मानम् । तस्माच्चाकाश सम्भूत इतिवदाविर्भावतिरोभावेनाप्युपपत्तेः । अनन्तप्रागभावध्वंसकल्पने गौरवाच्च । अनित्यत्वेपि वर्णानुभवजन्यसंस्कारजन्यस्मृतौ मेलनसम्भवात् । द्वितीयपि न द्वितीयादिवर्णवैयर्थ्यम् । पशब्दोच्चारणे किं पस्फोट उत पटस्फोट उत पट स्फोट इति सन्देहनिवर्त्तकत्वेन सार्थक्यात् । तृतीये यथा पटपदशक्यः विजातीयतन्तुसंयोगविशिष्टचरमसंयोगस्यैव पटकार्यकारित्वेपि अतिरिक्तो ऽवयवी स्वीक्रियते तथा मयापि स्वीक्रियते । न च तथानुभवादतिरिक्तः । पटस्फोटेपि तुल्यत्वात् । गौरवाच्च । स्फोटे तु लाघवं कथमिति चेच्छृणु । ध्वनिभिरेव स्फोटो व्यज्यते । एवञ्चानन्तवर्णतत्प्रागभावध्वंसकल्पना नदी दीन सरो रस जरा राजेत्यादौ भिन्नार्थप्रतीत्यर्थमानुपूर्व्या पूर्ववर्णानुभवजन्यसंस्कारसहितचरमवर्णस्य कारणता च न वाच्येत्यतिलाघवम् । त्वया तु तद्वाच्यमिति गौरवम् । एतावत्प्रघट्टकेन वर्णातिरिक्तः वर्णव्यङ्ग्यः चैतन्ये सर्वभूतानां शब्दब्रह्मेति मे मतिरिति शब्दब्रह्मरूपोतिरिक्त स्फोटस्तार्किकादिदूषणाभासानिरसनपूर्वकं व्याख्यातः । प्रकारान्तरेणाप्युच्यते । अखण्डपदस्फोटो नातिरिक्तः । यत्र तार्किकादिभिर्यौगिकं योगरूढं च पदमित्युच्यते पाचकः पङ्कजमित्यादि तदेवास्माभिः सखण्डपदस्फोटत्वेन व्यवह्रियते । खण्डशक्त्यनुसन्धानपूर्वककोशादिना समुदायशक्तिग्रहात् । यस्य तु व्याकरणज्ञानशून्यस्य केवलव्यवहारेण समुदायशक्तिग्रहस्तस्य स एवाखण्डपदस्फोटः । यत्तु रूढं पदं मणिनूपुरादि च न इत्यादि तत्सर्वेषामपि अखण्डपदस्फोटत्वेनाभिमतम् । तत्र सर्वेषामपि अवयवार्थज्ञानाभावविशिष्टव्यवहारेण समुदाये शक्तिग्रहात् । एवञ्च रूढयौगिकपदयोः सखण्डाखण्डस्फोटयोश्च पर्यायत्वे नाममात्र विवाद इति दिक् । एवञ्च तार्किकादीनां दूषणाभासा गर्भस्रावेणैव पराहता इति दिक् । नहि तार्किकादितर्का एव सत्तर्का इति नियमः । तत्रापि बहुशो ऽनुभवाविषयासत्तर्कादर्शनात् । तथाहि। विशिष्टस्य कार्यत्वकारणत्वेनैव सिद्धौ निर्गुणघटोत्पत्तिरयुक्तेति पूर्वमुक्तम् । तथा रूपस्य व्याप्यवृत्तित्वनियमाद् घटस्य प्रत्यक्षान्यथानुपपत्त्या स्वीक्रियमाणातिरिक्तञ्चित्ररूपमिति कल्पनाप्ययुक्तैव । तादृशनियमे प्रमाणाभावात् । अस्तु वा नियमः । तथापि तत्तद्द्रव्यावच्छिन्नतत्तदवयवसन्निकर्षसहितचरमरूपावच्छिन्नचरमावयवसन्निकर्षेणैव घटसाक्षात्कारसिद्धौ अतिरिक्तचित्ररूपस्वीकारे गौरवात् । एवं विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्तस्य चायं घट इत्यादावसम्भवात् घटघटत्वयोः सम्बन्धानवगाहिनिर्विकल्पकज्ञानकल्पनाप्ययोग्यत्वादयुक्तैव । नित्यसम्बन्धाति-

रिक्तसयोगसम्बन्धदावेव तत्कल्पना दण्डीपुरुष इत्यादौ, न तु अयं घट इत्यादौ । तत्र विशिष्टज्ञानस्यैव जायमानत्वात् । एवञ्च निर्विकल्पकज्ञान न स्वकार्यमिति महल्लाघवम् । एवमखण्डसखण्डभेदेन कालद्वैविध्यकल्पनमप्ययुक्तमेव । अखण्डस्य व्यवहारानाधायकत्वात् । न च जन्यानां जनक. कालो जगतामाश्रयो मत इति जगदाधारत्वेन जनकत्वेन च तत् स्वीकार. । ईश्वरस्यैव तत्प्रसिद्धत्वात् । न च पदार्थखण्डने दिक्कालौ नेश्वरादतिरिच्येते इत्यादिना ऽस्माभिस्तदुक्तमिति वाच्यम् । तत्र दिक्कालयोरेव विशिष्येश्वराभेद उक्त । स च सर्वं खल्विदं ब्रह्मेति श्रुतिविरुद्धः । तथा यतो वा इमानि भूतानि जायन्ते, तस्मिन्सर्वं प्रतिष्ठितमित्यादिश्रुतिभिर्जगत्कर्तृत्व जदाधारकत्वं चेश्वरस्यैव न तु कालस्य । तेन जन्याना जनक काल इत्यस्य पृथिव्यादिसप्तपदार्थानामपीश्वराभेदेन विशिष्योभयोरेव तदभेदप्रतिपादनस्य चायुक्तत्वात् । एव खण्डकालोऽप्ययुक्त. । सूर्यगतिविशेषरूपोपाधिभेदेन हि खण्डकाल. । एवञ्च सूर्यगतिविशेषस्यैवास्तु खण्डकालत्व किन्तदतिरेकेण । तथा च खण्डकालस्य कियात्वम् । एवं पीलुपाकवादिभिः परमाणौ पाक स्वीकृत्य श्यामघटनाशे रक्तघटोत्पत्तिः स्वीकृता, तत्र चक्रदण्डादिनिमित्तकारणाभावात्कथमुत्पत्ति. । निमित्तकारण विनापि तत्स्वीकारे दण्डचक्रादीनां निमित्तकारणतैवोच्छिद्येत । एव विधानेकानुभवानाद्दगुरुभूततर्काश्रयेण लाघवमूलातिरिक्ताखण्डस्फोटखण्डन दूषणाभासैरनुचितमिति दिक् । वाक्यार्थज्ञान प्रति पदार्थज्ञानस्य कारणत्वात्पदस्फोट निरूप्य वाक्यस्फोटो निरूप्यते । स चाखण्डसखण्डभेदेन द्विधा । तत्राखण्ड पदातिरिक्तो ऽखण्डपदव्यङ्ग्यो लाघवात्स्वीक्रियते । तच्चाखण्डपदस्फोटे निरूपितम् । अन्यच्चाकाङ्क्षायोग्यतासत्तीनां कारणता न वाच्येति महल्लाघवम् । सखण्डस्तु प्रसिद्ध एव । यद्वा । हरेवेत्यादौ एकादेशे कृते पदविभागे दुर्वारस्तत्राखण्डवाक्यस्फोटोऽन्यत्र सखण्ड इति विवेकः । एवञ्च दूषणानां गर्भस्राव एव । तत्र वाक्य नामकतिङन्तार्थमुख्यविशेष्यकम् । यथा पचति भवतीति । तत्रापि पचतीत्यस्य विशेष्यत्वेपि मुख्यविशेष्यत्वाभावान्नाव्याप्तिः । तार्किकास्तु पूर्वापरग्रन्थैकवाक्यताप्रतिपत्तये ऽर्थैकत्वादेक वाक्य साकांक्ष चेद्विभागे स्यादिति मीमांसासूत्रमुपन्यस्य विशेष्यभूतभावनैकत्वादिति अर्थैकत्वादित्यस्य तेषामर्थ त्यक्त्वा तात्पर्यविषयैक्यमिति स्वय तदर्थं व्याख्याय प्रत्यक्षानुमानयोरेकवाक्यत्वमुक्तम् । स्वातन्त्र्येण यत्सङ्गतिमत्तदेक वाक्यमिति वक्तव्य न तु यत्किंचिदर्थकल्पनमुचित दोषदुष्टञ्च । तथाहि । पठनतात्पर्ये यथैव देवदत्त. पठति तव पुत्रस्तथैव पठतीत्यत्राप्येकवाक्यत्वापत्ति । न चेष्टापत्ति । समानवाक्यत्वात्तत्रादेशापत्ते. । तथा स्योनन्ते सदनं करोमि घृतस्य धारया सुशेव कल्पयामीति सदनप्रतिपादकोमन्त्र. ।

रमवर्णेनैवार्थप्रतीतिसिद्धौ किं स्फोटेनेति । तन्न । वर्णानामाशुविनाशित्वे मानाभावात् । न चोत्पन्नो गकारः नष्टो गकार इति प्रतीतिर्मानम् । तस्माच्चाकाश. सम्भूत इतिवदाविर्भावतिरोभावेनाप्युपपत्तेः । अनन्तप्रागभावध्वंसकल्पने गौरवाच्च । अनित्यत्वेपि वर्णानुभवजन्यसंस्कारजन्यस्मृतौ मेलनसम्भवात् । द्वितीयपि न द्वितीयादिवर्णवैयर्थ्यम् । पशब्दोच्चारणे किं पस्फोट उत पटस्फोट उत पट स्फोट इति सन्देहनिवर्त्तकत्वेन सार्थक्यात् । तृतीये यथा पटपदशाक्यः विजातीयतन्तुसंयोगविशिष्टचरमसंयोगस्यैव पटकार्यकारित्वेपि अतिरिक्तो ऽवयवी स्वीक्रियते तथा मयापि स्वीक्रियते । न च तथानुभवादतिरिक्त. । पटस्फोटेपि तुल्यत्वात् । गौरवाच्च । स्फोटे तु लाघवं कथमिति चेच्छृणु । ध्वनिभिरेव स्फोटो व्यज्यते । एवञ्चानन्तवर्णतत्प्रागभावध्वंसकल्पना नदी दीन सरो रस जरा राजेत्यादौ भिन्नार्थप्रतीत्यर्थमानुपूर्व्या पूर्ववर्णानुभवजन्यसंस्कारसहितचरमवर्णस्य कारणता च न वाच्येत्यतिलाघवम् । त्वया तु तद्वाच्यमिति गौरवम् । एतावत्प्रघट्टकेन वर्णातिरिक्त. वर्णव्यङ्ग्यः चैतन्ये सर्वभूतानां शब्दब्रह्मोति मे मतिरिति शब्दब्रह्मरूपोतीरिक्त स्फोटस्तार्किकादिदूषणाभासानिरसनपूर्वको व्याख्यात' । प्रकारान्तरेणाप्युच्यते । अखण्डपदस्फोटो नातिरिक्तः । यत्र तार्किकादिभिर्यौगिक योगरूढ च पदमित्युच्यते पाचकः पङ्कजमित्यादि तदेवास्माभि सखण्डपदस्फोटत्वेन व्यवह्रियते । खण्डशक्त्यनुसन्धानपूर्वककोशादिना समुदायशक्तिग्रहात् । यस्य तु व्याकरणज्ञानशून्यस्य केवलव्यवहारेण समुदायशक्तिग्रहस्तस्य स एवाखण्डपदस्फोट. । यन्तु रूढं पदं मणिनूपुरादि व. न इत्यादि तत्सर्वेषामपि अखण्डपदस्फोटत्वेनाभिमतम् । तत्र सर्वेषामपि अवयवार्थज्ञानाभावविशिष्टव्यवहारेण समुदाये शक्तिग्रहात् । एवञ्च रूढयौगिकपदयो. सखण्डाखण्डस्फोटयोश्च पर्यायत्वे नाममात्र विवाद इति दिक् । एवञ्च तार्किकादीनां दूषणाभासा गर्भस्रावेणैव पराहता इति दिक् । नहि तार्किकादितर्का एव सत्तर्का इति नियम । तत्रापि बहुशो ऽनुभवाविषयासत्तर्कादर्शनात् । तथाहि। विशिष्टस्य कार्यत्वकारणत्वेनैव सिद्धौ निर्गुणघटोत्पत्तिरयुक्तेति पूर्वमुक्तम् । तथा रूपस्य व्याप्यवृत्तित्वनियमाद् घटस्य प्रत्यक्षान्यथानुपपत्त्या स्वीक्रियमाणातिरिक्तञ्चित्ररूपमिति कल्पनाप्ययुक्तैव । तादृशनियमे प्रमाणाभावात् । अस्तु वा नियमः । तथापि तत्तद्द्रव्यावच्छिन्नतत्तदवयवसन्निकर्षसहितचरमरूपावच्छिन्नचरमावयवसन्निकर्षेणैव घटसाक्षात्कारसिद्धौ अतिरिक्तचित्ररूपस्वीकारे गौरवात् । एवं विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्तस्य चायं घट इत्यादावसम्भवात् घटघटत्वयो सम्बन्धानवगाहिनिर्विकल्पकज्ञानकल्पनाप्ययोग्यत्वादयुक्तैव । नित्यसम्बन्धाति-

रिक्तसयोगसम्बन्धदावेव तत्कल्पना दण्डीपुरुष इत्यादौ, न तु अय घट इत्यादौ। तत्र विशिष्टज्ञानस्यैव जायमानत्वात्। एवञ्च निर्विकल्पकज्ञान न स्वकार्यमिति महल्लाघवम्। एवमखण्डखण्डभेदेन कालद्वैविध्यकल्पनमप्ययुक्तमेव। अखण्डस्य व्यवहारानाधायकत्वात्। न च जन्यानां जनक कालो जगतामाश्रयो मत इति जगदाधारत्वेन जनकत्वेन च तत् स्वीकार। ईश्वरस्यैव तत्प्रसिद्धत्वात्। न च पदार्थखण्डने दिक्कालौ नेश्वरादतिरिच्येते इत्यादिना ऽस्माभिस्तदुक्तमिति वाच्यम्। तत्र दिक्कालयोरेव विशिष्येश्वराभेद उक्त। स च सर्व खल्विद ब्रह्मेति श्रुतिविरुद्ध। तथा यतो वा इमानि भूतानि जायन्ते, तस्मिन्सर्व प्रतिष्ठितमित्यादिश्रुतिभिर्जगत्कर्तृत्व जदाधारकत्व चेश्वरस्यैव न तु कालस्य। तेन जन्याना जनक काल इत्यस्य पृथिव्यादिसप्तपदार्थानामपीश्वराभेदेन विशिष्योभयोरेव तदभेदप्रतिपादनस्य चायुक्तत्वात्। एव खण्डकालोऽप्ययुक्त। सूर्यगतिविशेषरूपोपाधिभेदेन हि खण्डकाल। एवञ्च सूर्यगतिविशेषस्यैवास्तु खण्डकालत्व किन्तदतिरेकेण। तथा च खण्डकालस्य क्रियात्वम्। एव पीलुपाकवादिभि परमाणौ पाक स्वीकृत्य श्यामघटनाश रक्तघटोत्पत्ति स्वीकृता, तत्र चक्रदण्डादिनिमित्तकारणाभावात्कथमुत्पत्ति.। निमित्तकारण विनापि तत्स्वीकारे दण्डचक्रादीनां निमित्तकारणतैवोच्छिद्येत। एव विधानेकानुभवानारूढगुरुभूततत्काश्रयण लाघवमूलातिरिक्ताखण्डस्फोटखण्डन दूषणाभासैरनुचितमिति दिक्। वाक्यार्थज्ञान प्रति पदार्थज्ञानस्य कारणत्वात्पदस्फोट निरूप्य वाक्यस्फोटो निरूप्यते। स चाखण्डसखण्डभेदेन द्विधा। तत्राखण्ड पदातिरिक्तो ऽखण्डपदव्यङ्ग्यो लाघवात्स्वीक्रियते। तच्चाखण्डपदस्फोटे निरूपितम्। अन्यच्चाकाङ्क्षायोग्यतासत्तीना कारणता न धार्येति महल्लाघवम्। सखण्डस्तु प्रसिद्ध एव। यद्वा। हरेवत्यादौ एकादेशे कृते पदविभागो दुर्वारस्तत्राखण्डवाक्यस्फोटोऽन्यत्र सखण्ड इति विवेक। एवञ्च दूषणानां गर्भस्राव एव। तत वाक्य नामैकतिङन्तार्थमुख्यविशेष्यकम्। यथा पचति भवतीति। तत्रापि पचतात्यस्य विशेष्यत्वेपि मुख्यविशेष्यत्वाभावान्नाव्याप्ति। तार्किकास्तु पूर्वापरग्रन्थैकवाक्यताप्रतिपत्तये ऽर्थैकत्वादेक वाक्य साकाङ्क्ष चेद्विभागे स्यादिति मिमांसासूत्रमुपन्यस्य विशेष्यभूतभावनैकत्वादिति अर्थैकत्वादित्यस्य तेषामर्थ त्यक्त्वा तात्पर्यविषयैक्यमिति स्वय तदर्थ व्याख्याय प्रत्यक्षानुमानयोरेकवाक्यत्वमुक्तम्। स्वातन्त्र्ये यत्पदज्ञतिमत्तदेक वाक्यमिति वक्तव्य न तु यत्किंचिदर्थकल्पनमुचित दोषदुष्टञ्च। तथाहि। पठनतात्पर्ये यथैव देवदत्त पठति तथ पुस्तत्थैव पठतीत्यनाप्येकवाक्यत्वापत्ति। न चेष्टापत्ति। समानवाक्यत्वात्तआदेशापत्ते। तथा स्योनन्ते सदन करोमि घृतस्य धारया सुषेव कल्पयामीति सदनप्रतिपादकोमन्त्र.।

प्रत्यक्षप्रन्थवत्तत्तस्मिन्सीदामृतेप्रीतितिष्ठमीढीनां मेधसुमनस्यमान इति सादनप्रतिपादकोमन्त्रः । अनुमानवत् । प्रमाणनिरूपणवयागाङ्गनिरूपण तात्पर्यविषयः । एवमनुमानस्य प्रत्यक्षापेक्षत्वेपि प्रत्यक्षस्य तदनपेक्षत्ववत् सादनप्रतिपादकमन्त्रस्य सदनप्रतिपादकापेक्षत्वेपि सदनप्रतिपादकस्य न तदपेक्षत्वम् । एव चानयोरप्येकवाक्यत्वापत्तिः । न चेष्टापत्तिः । अर्थैक्यादित्यस्य भवदुक्तप्रत्युदाहरणविरोधात् । किं चेयं पदैकवाक्यता उत वाक्यैकवाक्यता उत मन्थैकवाक्यता । नाद्यः । क्रियाकारकाणामेव तत्सम्भवात् । तयोरेव परस्परमाकाङ्क्षासम्भवात् । उभयाकाङ्क्षायामेव तत्सम्भवेनान्यतराकाङ्क्षाया तदसम्भवाच्च । न द्वितीयः । इतरनिरपेक्षतया सिद्धेनैकवाक्येन सापेक्षेतरवाक्यस्यान्वयो हि सा । प्रकृते च वाक्यसदर्भरूपग्रन्थयोरेव सा । न तु वाक्ययोः । अनुमानस्थितवाक्यानां परामर्शजन्य ज्ञानमनुमितिरित्यादिवाक्यानां प्रत्यक्षवाक्याकाङ्क्षाभावात् । आसत्त्यभावाच्च । किं च वाक्यैकवाक्यता हि प्रकरणम् । अन्यतराकाङ्क्षाप्रकरणमिति तल्लक्षणात् । तस्याप्येकवाक्यत्वस्वीकारे वाक्यात्प्रकरणस्य दुर्बलत्वप्रतिपादकश्रुतिलिङ्गवाक्यप्रकरणेत्यादिबलाबलाधिकरणविरोधः । न तृतीयः । प्रत्यक्षानुमानयोराकाङ्क्षा आर्थी न तु शाब्दी । तस्मादत्र सूत्रलिखन यत्किंचिदर्थकल्पनमनुचितम् । शिरोमणिग्रन्थस्तु यथात्सङ्गतिमत्तदेकवाक्यमिलनेनैव सिद्धत्वादिति दिक् । प्रकृतमनुसरामः । व्यवहारेण वाक्ये शक्तिग्रहाद्वाक्यस्यैव वाचकत्वाद्वाक्यस्फोटः । न च पूर्वं गृहीतापि वाक्ये शक्तिरावापोद्वापाभ्यां लब्धा पदे गृह्यतइति वाच्यम् । एव सति पदार्थज्ञानम्प्रति वाक्यार्थज्ञानस्य हेतुतापत्तौ वाक्यार्थज्ञानम्प्रति पदार्थज्ञानस्य हेतुत्वमिति सर्वसिद्धान्तभङ्गापत्ते. । वाक्यस्फोटो द्विधा । सखण्डो ऽखण्डश्च । अखण्डो द्विधा । वर्णातिरिक्तो ऽनतिरिक्तश्च । यदा वर्णा न स्वीक्रियन्ते गौरवात्, लाघवात् ध्वनिभिरेवाखण्डो वाक्यस्फोटो व्यज्यते इति मत, तदातिरिक्त । अस्मिन्पक्षे वर्णाभावेन यावद्वर्णव्यङ्ग्य इत्यादिदूषणाभासा गर्भस्रावेणेव पराहताः । यदा तु ध्वनिभिर्वर्णा व्यज्यन्तइति मत तदा घटमानयेति सखण्डवाक्यस्फोट. । क्रियाकारकयोर्विभागस्य कर्तुं शक्यत्वात् । हरेव विष्णोवेत्यादौ एकादेशे कृते प्रातिपदिकाख्यातयोर्विभागाशक्यतयानातिरिक्तवाक्यस्फोटः क्रियाकारकज्ञानशून्यस्यावैयाकरणस्य घटमानयेत्ययमपि अनतिरिक्ताखण्डवाक्यस्फोट एव । पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च । वाक्यात्पदानामसन्त प्रविवेको न कश्चनेत्ययमखण्डातिरिक्तवाक्यस्फोटप्रकाश । यथा वर्णे अवयवा न सन्ति तथेत्यर्थः । पश्य मृगो धावति पचति भवतीत्यादावपि अखण्डसखण्डातिरिक्तानतिरिक्तत्व पूर्ववदेव बो-

द्रव्यम् । मृगकर्तृकवर्त्तमानधावनक्रियाया दृशिक्रियायां कर्मतासम्बन्धेनान्वयः । देवदत्तकर्तृकपचिक्रियाया वर्त्तमानभवनक्रियायामन्वयः । तदुक्तम् । सुबन्त हि यथानेक तिङन्तस्य विशेषणम् । तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणमिति ॥ यत्तु धावनानुकूलकृतिमान् मृग इति प्रथमान्तविशेष्यकशाब्दबोध इतिपक्षे मृगस्य दृशिधात्वर्थनिरूपितकर्मत्वात् द्वितीयापत्ति । तामित्यध्याहारे च वाक्यभेदापत्तिरित्याशङ्क्य पश्य लक्ष्मणपम्पायां बक' परमधार्मिक इत्यादाविव वाक्यार्थस्य कर्मत्वान्न वाक्यभेद इति कैश्चित्समाहितम् । तन्मुधैव । अन्तरङ्गधावनक्रियानिरूपितमृगस्य कर्तृत्वात्तस्य चाख्यातेनोक्तत्वात्प्रथमोत्पत्तौ बहिर्भूतदृशिधात्वर्थनिरूपितकर्मत्वेपि अन्तरङ्गत्वाज्जातसंस्कारबाधे मानाभावेनैव शक्यञ्च श्वमांसादिभ क्षुद्रुपहन्तुमितवदुपपत्त । एवञ्चात्र प्रथमान्तविशेष्यकपक्षेपि शाब्दिकदूषणाभावेपि एकदेवदत्तकर्तृकपचिक्रियाकर्तृक भवनमित्यर्थे पचतिभवतीत्येकवाक्यतानापत्त । न च पाकानुकूलकृतिमान्देवदत्तो भवतीत्यर्थ निष्पन्ने सविशेषणे विधिनिषधौ विशेषणमुपसङ्क्रामत सति विशेष्य बाध इति न्यायेन क्रियाया एव कर्तृत्व भविष्यति । एकवाक्यतायां फलाभावाच्च । न च समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या इति निघात फलम् । तिङ्ङतिङ इति अतिङ्ग्रहणेन तदभावात् । सत्यम् । त्वत्सम्बन्धिनी देवदत्तकर्तृका पचिक्रिया भवतीत्यर्थे देवदत्तः पचति ते भवतीति प्रयोगे समानवाक्यत्वाभावेनादेशानापत्ते । अनेकदेवदत्तकर्तृकैका पचिक्रियेत्यर्थे देवदत्ता पचन्ति भवतीति प्रयोगोपि न स्यात् । अनेककर्तृत्वेन भवतीत्यत्र बहुवचनापत्ते । पश्य मृगो धावतीत्यत्र निघातरूपप्रयोजनसत्वाच्च । किञ्चात्र वाक्यार्थस्य कर्मत्वमिति ताकिकोक्त न युक्तिमत् । तथाहि । वाक्यार्थोतिरिक्तोनतिरिक्तो वा । नाद्य । तस्य वृत्त्यनुपस्थापितत्वेन दृशिक्रियाया कर्मतयान्वयानुपपत्ते । वृत्त्युपस्थापितस्यैव शाब्दबोधविषयत्वनियमात् । अन्यथा घटपदात्समवायेनोपस्थिताकाशस्यापि शाब्दबोधविषयत्वापत्ते । न द्वितीय । विभक्त्यर्थमद्वारीकृत्य नामार्थस्य धात्वर्थेन समभेदसम्बन्धेनान्वयो ऽव्युत्पन्न । अन्यथौदन पचतीत्यापत्ते । न चतत्र वाक्यार्थस्य कर्मत्व न नामार्थस्येति वाच्यम् । रमणीय ओदन' पचतीत्यस्यानापत्ते । पश्यल्लक्ष्मणपम्पायामित्यादौ तामिति पदाध्याहारेण वाक्यभेद एव । एवञ्च वाक्यार्थस्य कर्मत्वमित्यपि चरिताभिधानम् । एव नीलो घटो भवतीति वाक्ये नीलकर्तृकभवनाश्रयो घट इति व्युत्पत्तिवादोक्तमपि न युक्तिमत् । नामार्थस्येत्यादिव्युत्पत्तिबाधे मानाभावात् । नीलो घटो भवनाश्रय इति बोधसम्भवाच्च । सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामत सति विशेष्ये बाधे इति विशेषणे नीले एव भवनस्यान्वयो म-

विष्यतीति दिक् । एवं तत्त्वमसि, सोयं देवदत्त इत्यादौ सखण्डावणे- बोध्यम् । तत्त्वमसीत्यत्र तत्पदवाच्यसर्वज्ञत्वादिविशिष्टचैतन्यस्य त्वंपदवा- करणविशिष्टचैतन्येनैक्यासम्भवादैक्यसिद्ध्यर्थं स्वरूपे जहदजहल्लक्षणेति- यिका । तन्वनयोरैक्ये किं मानम् । न च नामार्थेति व्युत्पत्तिः । तस्या- मार्थयोरेवाभेदान्वयः, उत नामार्थयोरभेद एवेति । नाद्य । स्तोकं पचति देवी आमिक्षेत्यादौ व्यभिचारात् । नान्त्य । घटपटौ इत्यादौ व्यभिचारात् स्यात्सम्भवति सामानाधिकरण्यं वैयधिकरण्यमन्याय्यमिति लाघवमूलको हि सख्यम् । मृत्योः समृत्युमाप्नोति य इह नानेव पश्यतीति भेदनिन्दापूर्वकाभेदप्रतिपादकश्रुतिमानम् । न च तत्रापि य नाना इव पश्यति समृत्योर्मृत्युमाप्नोति यः वस्तुतः नानात्वं पश्यति स नैतावताशब्दात्प्रतीयमानार्थेन भेदस्यैव प्रतीतः किञ्च राजपुरुष इत्यनेव तस्य स्वामिति षष्ठीसमासेनापि भेदस्यैव प्रतीतेरिति वा- च्यम् । छान्दोग्येपि सदेव सोम्येदमग्र आसीदित्यारभ्य तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्युपसंहारेणोपक्रमोपसंहारयोरेकरूपेण वेदतात्पर्यनिर्णायकेनैक्यस्य निर्णीतत्वात् । ब्रह्मतम्परादाद्यान्यनात्मनो ब्रह्म वदेति श्रुत्यापि ऐक्यावधारणात् । अस्मिन्पक्षे लाक्षणिकवाक्यस्फोटः । वस्तुतस्तु अयं वाचकवाक्यस्फोट एव । तथाहि । विशिष्टशक्त्युपस्थापितयोस्तत्त्वंपदार्थयोरभेदान्वयानुपपत्तावपि विशे- ष्ययोः शक्त्युपस्थापितयोरभेदान्वये बाधकाभावः । यथा घटो नित्य इत्यत्र घट- पदवाच्यैकदेशघटत्वस्यायोग्यत्वेपि योग्यघटव्यक्त्या सहानित्यत्वान्वयः । यद्वा विशेष्य एव शक्तिः, विशेषणं तूपलक्षणम् । अस्मिन्पक्षे न कोपि दोषः । यद्वा यथा नानार्थस्थले संयोगादिनाभिधानियमनं तथाभेदान्वयानुरोधाद्विशेष्ये एवाभिधा- नियमनम् । अस्तु वा लक्षणा सा च जहल्लक्षणा । तथा च विशेषणांशत्याग- मात्रं न तु विशेष्येपि तस्याः उपयोगः । शक्त्यैव तदुपस्थितिसम्भवात् । एवं सोयं देवदत्त इत्यत्रापि । तथा च जहदजहल्लक्षणोदाहरणमसङ्गतमिति दिक् । एवमेको वृक्षः पञ्च नौका भवन्तीति वाक्ये सखण्डाखण्डत्वे पूर्ववदेव बाध्ये । अत्र तार्किकाः । गृह्णाति वाचकः सङ्ख्यां प्रकृतौ विकृतौ नहीति वचनात्प्रकृत्यपक्षगतमेकवचनमेव भूपान्तरं भवतीत्याहुः । तदयुक्तम् । गृह्णातीत्यस्य च्व्यन्तविषयत्वात् । यथा सर्पीभवन्ति ब्राह्मणाः स्थण्डिलाभ्यः मद्भवति स्वामित्यादौ वचनपुरुषयोः प्रकृतिगतयो- रेव दर्शनात् । ननु सङ्कोचे किं मानम् । सुवर्णपिण्डः खदिराङ्गारसदृशौ कु- ण्डले भवत इति भाष्यप्रयोग एव । उद्देश्यविधेयभावस्थले तु उद्देश्यगता सङ्- ख्याऽऽख्यातप्रत्यये "शास्त्राणि चेत्प्रमाणं स्युः" इत्यादिषु । पुनरपि वाक्यं द्विधा । खण्डात्मकमखण्डात्मकं च । द्वितीयं सूक्ष्मम् । आद्यन्तु तद्द्वारा शब्दार्थौ स-

भावात् । न हि स्वरूपसती अन्वयानुपपत्तिर्लक्षणाबीजम् । किन्तु ज्ञाता । न च पूर्वमयोग्यतानिश्चयसत्वेन तज्ज्ञानमप्यस्त्येवेति वाच्यम् । वाक्यार्थबोधजन्यान्वयानुपपत्तिज्ञानस्य पूर्वमभावात् । गङ्गा घोषाधिकरण नेति लौकिकज्ञानसत्वे गङ्गायां घोष इति वाक्याद्गङ्गाधिकरणको घोष इति बोधोत्तरमन्वयानुपपत्तिर्हि अनुभवसिद्धा । न च तस्याः पूर्वं ज्ञान सम्भवति । न च भ्रमात्मको बोध इति तार्किकोक्तयुक्तिमत् । अयोग्यतानिश्चयस्य प्रतिबन्धकत्व योग्यताज्ञानस्य कारणत्व प्रवल्पनायम् । भ्रमात्मको बोधश्च कल्पनीय इति महद्गौरवम् । स्फोटवादिना नित्यमपि न कल्प्यमिति लाघवम् । वाक्यार्थबोधजन्यप्रवृत्तावेव तत्स्वीकारात् । किञ्च नाद परमेश्वर इति बाधनिश्चये सति तत्वमसीति वाक्याद्बोधाभावे भ्रमात्मकबोधे वा न प्रमात्मक ज्ञान सम्भवति भ्रमात्मकबोधस्य प्रमात्मकबोधजननायोग्यत्वात् । एव दशमस्त्वमसीत्यनापि । ननु अनेकवर्णातिरिक्तानेकध्वनिव्यङ्ग्यः अखण्डवाक्यस्फोटः क पदार्थ इति चेत्, शृणु । यथा तार्किके पूर्वोक्तमर्दीला गत्यन्तरसम्भवेपि चित्ररूपमातिरिक्त स्वीक्रियते यथा शाब्दिके रेफद्वयाज्भागविशिष्ट एको वर्ण ऋतिकृत्वा ऌति ऌत्वलत यातके स्वीक्रियते यथा वा सिद्धमेतत् सस्थानत्वादेचोश्चात्तरभूयस्त्वादितिवार्तिके ऽनेकाचामेकवर्णात्मकत्वमुक्तन्तथा मयाप्यनेकध्वनिव्यङ्ग्य वाक्यात्मक एको वर्ण इति स्वीक्रियते । स च शब्दब्रह्मरूप । तन मतत्वय, शब्दब्रह्मेति शब्दार्थ शब्दमित्यपरे जगु । चैतन्ये सर्वभूताना शब्दब्रह्मेति मे मतिरिति ॥ शब्दब्रह्मेतिनिर्वचनेनापि तस्य वर्णत्व सिद्धम् । अनुमानादपि । तथाहि । अखण्डवाक्यस्फोट एकवर्णरूप श्रावणत्वात् । ध्वनिव्यङ्ग्यत्वाद्वा । यथैव, तन्नैव यथापृथिव्यादि । अन्वयदृष्टान्तस्तु मतान्तरसिद्धवर्णादि । व्यस्तुस्तु श्रवयव्यतिरेक्यनुमान व्यर्थम् उपनीतभानेनैव गतार्थत्वात् । तथाहि । यथा चन्दनखण्डस्य लौकिकप्रत्यक्ष सौरभ्यस्यालौकिक तथा धूमस्य लौकिक वह्नेरलौकिकमिति अस्मिन्पक्षे उपनीतभानेनोत तत्वक । यद्वा लाघवादाधाभावा ध्वनिव्यङ्ग्यस्यान्यस्याभावाच्च वर्णत्वस्वीकार । न च ध्वनिव्यङ्ग्यत्वस्य गुणीभूतव्यङ्ग्यप्रभेद काकाक्षिप्तस्यापि अन्यस्य सम्भव इति वाच्यम् । तस्य ध्वनिविकारकाकुव्यङ्ग्यत्वेप ध्वनिव्यङ्ग्यत्वाभावात् । किञ्च काम सङ्कल्पो विचिकित्सा श्रद्धा ऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति श्रुत्या कामादीना मनो धर्मत्व प्रतिपादिते पि तार्किकैरात्मधर्मत्वमुक्त तत्र सर्वथप्यङ्गीकृत, तत्तु भ्रमात्मक, तद्बीज तु यथा जपाकुसुमसन्निधाने स्फटिको लोहित इति ज्ञानम् । प्रकृत तु मन सान्निध्यम आत्मभ्रम बीज श्रुतियाधश्च । स्फोटे तु न तथा । तस्मादेकवर्णात्मकाखण्डवाक्यस्फोटो वाचक इति सिद्धम् ॥

इति श्रीमन्मौनिकुलतिलकायमानगोवर्द्धनभट्टात्मजलक्ष्मीजानि रघुनाथभट्टात्मजश्रीकृष्णकृतस्फोटचन्द्रिका समाप्ता ॥